* विद्याऽमृतमश्नुते *

प्रथमे वर्षे | १९७० विक्रमाब्दाः कार्तिकः | प्रथम संख्या

## मङ्गलाचरणम् ।

जयति सा रसभासुरविग्रहा
भगवती वचसामधिदेवता ।
करुणपूर्णदृगन्तविलोकनै-
रवति या तमसा मलिनं जगत् ।१।

सा शारदा शारदचन्द्रशुभ्रा
मनोहराभा स्थिरसम्प्रसादा ।
विनाशयन्ती जगदन्धकारम्
मनःप्रमोदाय मनीषिणां स्यात् ।२।

## ईश्वरः

चराचरजगत्स्फारस्फुरत्तामात्रधर्मिणे।
दुर्विज्ञेयरहस्याय युक्तेऽप्यात्मने नमः॥

शक्यं यन्नविशेषतो निगदितुं–
प्रेम्णैव यच्चिन्तितम्।
मृद्वङ्गीवदनेन्दुमण्डलमिव
स्वान्ते विधत्ते मुदम्॥

यन्मुग्धानयनान्तचेष्टितमिवाऽ–
ध्यक्षेऽपि नो लक्षितम्।
तत्तेजो विनयादमन्दहृदया–
नन्दाय वन्दामहे॥

यईशेशितव्यवैषम्यनिम्नोन्नतमिदं जगत्, यः सर्वज्ञः सर्वविदित्यादिश्रुतिभिः सत्यज्ञानानन्तादिविशेषणैःसौशील्यवात्सल्यचातुर्य्यस्थैर्यगाम्भीर्याद्यनन्तकल्याणगुणाकरःप्रतिपाद्यते। यस्य स्वभाविकी ज्ञानबलक्रियादिशक्तिः परा श्रूयते। सर्वोपनिषदः सर्वेशतया यमेव प्रतिपादयन्ति। यः सर्वद्रष्टा सर्वकर्त्ता, यः सर्वः सर्वस्येशानश्च, यं केऽपि नैव विन्दन्ति, योऽखिलान् वेद। यः सर्वेषां नियन्ता सर्वशक्तिमान्, यस्य भासा सर्वं जगद्विभाति तमहमजं ज्योतिः स्वरूपमगुणं निगुणत्त्वादिषु नेतिनेतीत्यादिभिस्सम्यक् सुगीतं शुद्धेन हृदा चिन्तयामि। यो नो धियं प्रचोदयितुं समर्थतरः य एव वेदान्तादिशास्त्रैर्बहुधा गीयते। यदर्थमेव यतयः प्रयन्ते च।

यः शास्त्रेषु विविधैर्वर्णैः स्तुतः स्वकीयाऽचिन्त्यापरिमित शक्त्याऽनन्तोऽपि, प्रधानतया वर्णत्रयविश्लिष्टस्तुरीयस्वरूपेण व्याप्य निखिलं पदार्थजातंतिष्ठति। यदादेशमुपदिशति गीतायाम्। "ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥

तमेवोङ्काररूपिणमरूपिणं बहुरूपिणं वा विश्वस्याधिष्ठातारं "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादिश्रुतिभिरुक्तान्तर्यामित्वमविस्मरन् चिन्तयामि।

अस्ति कश्चिदीश्वरः इति जनानां विश्वासश्चनान्यथा भवितुमर्हति। कर्मादिकमीश्वरत्वेन केचित्कालं वचश्च प्रकृतिमीश्वरत्वेनापरे प्रतिपादयन्ति किन्तुनास्य याथातथ्यं तत्कृपांविना ज्ञातुं समर्थाः प्रभवन्ति। यस्मिन् अजस्रचित्यात्मनिकेवलपरे विचार्य्यमाणे भवबन्धमोक्षावज्ञानसंज्ञौस्तःतरणौयथाऽहनी। यश्चद्रविणजातिविकल्पपथैरनुमीयते,तदनुमानमपिमृषा भवति।

यदि विविधविधिभिर्गीयमानं महात्म्यं सत्यं, यदिसोऽपिसत्यस्तर्हि सत्यं सत्यतयाऽहत्य चिन्तयामि।

सत्यव्रतं सत्यपरंत्रिसत्यं, सत्यस्य योनिं
निहितश्च सत्ये।
सत्यस्य सत्यं ऋतसत्यनेत्रं–
सत्यात्मकं त्वां शरणंप्रपन्नाः॥

भा० स्कं० १० गर्भस्तुति।

अहमपि गर्भस्तुतिं विदधामि सः सानुकम्पो भवतु स्वीयाऽनुकम्पयैव च समीक्षतु नः॥ इति शम

प० श्री निवासाचार्य, शास्त्री

---

## निवेदनम्

अभिनववस्तुसम्पादनात्मिका प्रवृत्तिर्विज्ञानाम्, विदितार्थे वस्तुनि न कस्यापि समादरो भवति। सर्वएवमचेतनस्तथाविधं कर्मानुतिष्ठति, तथा वाचरति, येनाभिनवं किञ्चिद्वस्तु सम्पद्येत। प्रत्यन्तःकरणमनिशं प्रज्वलितो ज्ञानबुभुक्षानलएव निमित्तमत्र। सहि ज्ञानबुभुक्षानलो

न तावत्तृप्तिमेति, यावद्ज्ञातव्यानां पारं नगच्छति। अतएव ज्ञानसम्पादनायानिशं प्रयत्नो मानवानां दृश्यते। तत्प्रयुक्ता एव मानवा अभिनववस्तुसम्पादने प्रवर्त्तन्तइतिप्रतीमः।

शान्तबुभुक्षानलस्य चित्तं स्थिरभवति, चित्तस्थैर्ये समुदयति विवेकांकुरः, विवेकाच्चसमुद्भवति सुखपरम्परा। सएवसुखी, यस्यबुभुक्षानलो न प्रज्वलति। सएवसत्क्रियतेऽनुक्रियते, सस्पृहया दृष्ट्या निरीक्ष्यते च। तस्याचरितं प्रमाणंभवति, तस्यवचनंप्रमाणंभवति, तस्यवचनं वेद–वचनमिवसद्धर्मोपदिशति। सहि शान्तबुभुक्षानलो धनीतिव्यपदिश्यते। धनीति, गुणीति, पुमानिति चोपसर्पन्ति तं निखिलाः। न तथाविधः कोऽपिदेशो, नापितथाविधः कोऽपि समजोनाम, यत्रशान्तबुभुक्षाणां धनिनामादरो न भवति।

केचन मात्सर्यानलप्लुष्टहृदया धनिनांसमाज आदरातिशयं विलोकयन्तः कूणितनेत्रप्रान्तभागाः सावहेलम्—अयोग्यजनानुरागिणी लक्ष्मीःस्वार्थप्रवणालोकस्तिमिराकुलितलोचनश्च समाज— इतिकालकूटनिभंवचनजालमुद्गिरन्तआत्मनोहृदयतापमुपशयन्ति, परंमन्येनैगरोपितः समाजस्य, लोकस्य लक्ष्म्याश्च शिरसि कलङ्को नव्वस्थानएव। यद्यङ्क्षणं मात्सर्यं दूरमुत्सार्य सावधानं विचिन्तयेयुः श्रीमन्तस्तदैतद्नायासमवगन्तुं पारयेयुर्यदस्ति तेषुकोऽपि गुणविशेषोनामेति। यत्प्रभावाद्धि तेषांबुभुक्षा शान्तिंगता, भवति च तेषां धानित्वेन व्यपदेश इति। अन्तरा गुणं यदिधनं सम्पद्येत विनोपायं यदि बुभुक्षातृप्ति मधिगच्छेत्तदाकथं नसर्वे धनिनः, कथंवानसर्वे शान्तबुभुक्षानला इतिशंसयः पदात्पदमपि पुरोगन्तुमवसरं न दास्यति। किञ्चप्रत्यक्षेण परोक्षेण वा हेतुना निखिलं कार्यजातं संबद्धमिति जागर्त्येव प्रज्ञैर्व्यवस्थापितः सिद्धान्तः। इत्थं धनिकेषु कस्यापि गुणस्यसत्ता स्वीकर्त्तव्यैव। तस्माद्गुणप्रवणोलोक इतिवक्तव्ये स्वार्थप्रवणो लोक इति वदन्तस्ते न श्रद्धेयवचना भवितुं शक्नुयुरिति नोबुद्धिः।

निखिलव्यवहारक्षमाणां पदार्थानां धनशब्देनाभिधानं भवति। तेच पदार्था न नियताः। तथाविधानां समवेतानां पदार्थानां संज्ञा धनमिति। धनशब्देन नात्र रजतसुवर्णादय एव ग्राह्याः, अपितु येन मानवानां निखिलो व्यवहारः सिध्यति, तद्धनम्। ज्ञानतो धनस्य समुद्भवो निरूपितः पूर्वैः। धनंहि सुखप्रभवमिति प्रत्यक्षएव सर्वेषाम। अतोहि यो ज्ञानी स एव सुखीति प्रत्यक्षीक्रियत एव सर्वैः। तस्मात् सुखार्थिभिर्ज्ञानमर्जनीयं प्रयत्नेन।

बहोः कालादिदं भारतं कामपि सुखासिकामधिशय्यान्यैर्विबुद्धिर्महता श्रमेणाविष्कृतानां विद्युत्तत्वादीनां सम्पातभयादिवनोन्मीलयति विलोचनयुगलमद्यापि। न चेष्टते, नापि विचिन्तयति न च किञ्चिदनुतिष्ठति। निद्राप्रवणतयाऽन्धस्तमसि निमग्नं सत्करतलगमतपि विज्ञानं नानुशीलयति, केवलं निःसारैर्बाह्याडम्बरैर्मुधा कालमतिवाहयदिदमद्यापि तिष्ठति। प्रत्यप्य निवापाञ्जलिं प्रलायात्मगौरवाय, विस्मृत्य ताः सकलाः कला, अपहाय नवनवाविद्या गजनिमीलिकामवलम्ब्य साम्प्रतं तिष्ठति।

पुरा यस्या दिव्यगिरो विश्वजनीनः प्रचार आसीत्। यद्विदश्च जगद्गुरुत्वव्यदेशिनो दर्शनकलेतिहासादिविषयकान् ग्रन्थान्विरच्य च मानवानां हार्दमन्धं तमो दूरमुत्सार्य सर्वविद्याचार्यो, जगद्विज्ञानप्रसविनीमार्यविद्यां, कल्पलतिकामिव समीहितसिद्धिदां मानवस्य, जगन्मण्डले प्रकाशितवन्तः, हन्त भोः कालवशादसद्भाग्यविपर्यासाद्वा तामेव ह्रसीयसींदशामधिगच्छन्तीं विलोक्य किन्न

दूयते श्रीमतां चेतः ? साम्प्रतं भारतीयानां क तत्सकलकलाभिज्ञत्वं क वातद्विज्ञानपाटवं, क वा साविवेकिता, क वातद्गौरवं, क वातज् जगन्मान्याया विद्याया उपदेष्टृत्वम्, क वा ते प्रत्नैः प्रणीतपूर्वा गभीरार्थाः प्रबन्धाः, कवा स दिव्यगिरस्तादृशः प्रचारः, हा, "सर्वं तदेक पद एवविलुप्यते स्म।"

येषां पूर्वसूरिणः शिल्पे, कलायां, धर्मे, निरुक्ते पदे, वाक्ये, प्रमाणे, आन्वीक्षिक्याम्, मीमांसायाम्, अर्थशास्त्रे, ज्योतिषे, आयुर्वेदे, धनुर्वेदे, सङ्गीते, न्याये, शिल्पे, साहित्ये, भूमिरत्नपरीक्षायाम्, तन्त्रे रसायने, कल्पे, दर्शने पदार्थविद्यायाम्, पुराणे, दुर्गनिर्माणे, तादृशान्; प्रबन्धान्, व्यरचयन्त, येऽद्यापितेषां कीर्तिमुद्घोषयन्ति द्वीपान्तरेषु। परंपामरकरतलगतं, हीरकखण्डिमिव साम्प्रतं ते प्रबन्धा नाद्रियन्ते भारतीयैरीति विलोक्य प्रेक्षावन्तो दुर्वहमन्तस्तापमुद्वहन्ति।

अस्ति कश्चिदुपायो येनवयं पुनरस्तद्गौरव मासादयेम, पुनस्ता कला विस्तारयेम, भूयस्तादृशान् प्रबन्धान् प्रख्यापयेम, सुधारससहोदरां दिव्यगिरं प्रचारयेम; भाषान्तर नैरपेक्ष्येण सकलं पदार्थजातममरभाषायामेवानुशीलयेम, विभावयेम नवनवाविद्या। साम्प्रतंसर्वमस्माभिः कर्तुशक्यम् यतो, दयालवः सत्यपरा न्यायधना अस्मत्शासका, सर्वथाये, धर्मविद्यादिविषयमस्मदायत्तमेवा भिरक्षन्ति, प्रोत्साहयन्तिचास्मानेतादृशेषुकार्येषु।

सम्प्रत्यपिदर्शनेषु शिल्पेषु कलास्वितिहासेषुच, प्रबन्धान् प्रणीय, शिल्पाद्युपदेशैर्निजप्रातिवेशिकान् कृतार्थयन्तो, यथापुरं भारतीया, यथाऋणान्यपाकृत्यपूर्वजानां मुखान्युज्ज्वल येयुरात्मनश्चकलङ्कं क्षालयेयुरित्यभिनवः समारम्भो ऽस्माकम्। अत्रसौराज्ये निःशङ्कं सावधानश्चभारतीयाः सर्वाविद्या अनुशीलयन्त्वीति प्रकाशमेति शारदा। यथा ज्ञानबुभुक्षानलस्तृप्तिमीयात् तथेयं प्रयतिष्यते। किञ्च विज्ञानविनोदानुपहरन्ती स्फुटालापै, सचेतसां मनोविनोदयन्ती, बालिकेव स्खलत्पदन्यासेयं शारदा प्रेक्षावद्भिः श्रीमद्भिरवलोकनेन कृतार्थ्यतामिति सादरं प्राथ्यते।

---

## महाकविर्भासः

प्रायो बहूनां कविवराणां नामशेषाणां प्रबन्धाः साम्प्रतं नोपलभ्यन्ते। तद्यथा–गुणाढ्यस्य बृहत्कथा साम्प्रतं कथाशेषा, पणिनेः पातालविजयकाव्यं जाम्बवतीविजयापराख्यं तामेव गतिं गतम्। वररुचेः काण्ठाभरणस्य सैव दशा। मेण्ठस्य हयग्रीववधकाव्यं तदेव भागधेयं वहति। उमापतिधरादीनामर्वाचीनतरकवीनां प्रबन्धा अपि कालकवलिताः साम्प्रतं न दृग्गोचरोभवन्ति। शीलाभट्टारिका–विकटनितम्बा– विज्जकाफल्गुहस्तिनी-मारुला सुभद्रा-मोरिकेन्दुलेखा-प्रभृतीनां स्त्रीकवीनां प्रबन्धा अपि न दृग्विषयीभवन्ति। केवलं सूक्तकृद्भिरुद्धृतानि लुप्तप्रबन्धानामीदृशानां कवीनां कानिचित् सूक्तानि साम्प्रतं स्वादं स्वादं सहृदया हृदयं विनोदन्ति।

एषां कवीनां मध्याद्भासस्य कालिदासेन मालविकाग्निमित्रप्रस्तावनायां सौमिल्लकवि पुत्रादिभिः सहैव स्तुतस्य बाणेन च हर्षचरितो पक्रमे—

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिवेति–

कृतश्लाघस्य स्वप्नवासवदत्तं विहाय सर्वे प्रबन्धाश्चिराद्विलुप्ता इति "भासनाटक चक्रेपि च्छेकैः क्षिप्ते परीक्षितुम्। स्वप्नवासवदत्तस्य दाहकोभून्न पावकः" इति सूक्तिमुक्तावलिस्थात् पद्यादवगम्यते। गतवर्षे तु त्रिवंकुरीयो

गणपतिशास्त्री स्वप्ननाटकं प्रतिज्ञानाटिकां पञ्चरात्रं, चारुदत्तं, दूतघटोत्कचमविमारकं बालचरितं मध्यमव्यायोगः कर्णभारमुरुभङ्गमिति दशरूपकाणि क्वापि केरलीये ग्रन्थसम्पुटे प्राप्तवान् । तस्माद्रूपकनिकराच्च स्वप्ननाटकं पञ्चरात्रं प्रतिज्ञायौगन्धरायणञ्चाद्यावधि मुद्रयित्वा प्रकाशितम् । रूपकत्रयमिदमधुनास्मत्समीपे वर्त्तते । शास्त्रिणा लब्धेषु रूपकेषु कवेर्नामादि नास्तीति स एव प्रतिपादयति । तथापि भासकवेरेव एतानि रूपकाणीति तस्यानुमानम् ।

कस्येमानि रूपकाणि? भासस्यान्यस्यवेति सम्प्रति परीक्ष्यते । यत्र तत्र महाकवीनामन्येषां सच्छायानि पद्यानि वाक्यानि वा रूपकेष्वेषु समुपलभ्यन्ते । चारुदत्तरूपकन्तु समस्तमेव मृच्छकटिकसमच्छायम् । तत्र किं सर्वेपि शूद्रककालिदासादयः रूपकाणामेषां प्रणेतुरनुकरणेन स्वात्मानं कृतार्थितवन्तः,एषांरूपकाणां प्रणेतैव वा बहूनां कवीनां छायां ग्रहीतवानित्यनयोः पक्षयोः पर एव ज्यायान् प्रतिभाति । तथाहि स्वप्ननाटके, यौगन्धरायणादौ च व्यक्तमयं रत्नावलीच्छायामङ्गीचकार । चारुदत्ते च मृच्छकटिकच्छायामेवमन्येष्वपि रूपकेषु तत्तच्छायामङ्गीकृत्यैवायं प्रावर्त्तत ।

उदयनवेन्दुसवर्णावासवदत्ताबलौबलस्यत्वाम।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम्
इति स्वप्न नाटकस्य नान्दी ।

पातु वासवदत्तायो महासेनातिवीर्यवान् ।
वत्सराजस्तु नाम्ना स शक्तियौगन्धरायणः

इति यौगन्धरायणस्य नान्दी । ईदृशानां पद्यानां रचयिता पद्यरचनायां नातिप्रवीण इव कश्चित्कविः प्रतिभाति ।

कोसौ कविस्तर्हि कश्चास्य समय इति अपेक्षायां प्रायो बहुषु रूपकेषु "इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् । महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः" इतिदर्शनात् कस्यचित्केरलप्रान्तीयस्य राजसिंहस्य सदस्याय भासकृतं स्वप्नवासवदत्तं, शूद्रककृतं मृच्छकटिकमन्येषां कवीनाञ्च प्रबन्धानवलम्ब्य बहूनि नातिप्रौढानि रूपकाणि प्रणिनायेति प्रतिभाति । नातिरम्यत्वाच्च केरलान्विहाय परत्रैतानि रूपकाणि न प्रचारमलभन्तेत्यवगम्यते । सूत्रधारकृतारम्भैरिति बाणोक्त्या रूपकान्तराणीव भासनाटकानि न नान्द्यकृतोपक्रमाणि, किन्तु नान्द्यतः प्रथममेव सूत्रधारेण कृतप्रवेशानीति व्यक्तम् । इमामेव भासीयां प्रथामवलम्ब्य केरलीयःकविरपि रूपकाणि तथाविधोपक्रमाण्येव प्रणिनाय । रूपकेष्वेषु तेषां पद्यानामेकमपि नोपलभ्यते यानि सूक्तिसंग्राहकैर्भासीयत्वेनोद्धृतानि । सर्वेषु प्रबन्धेषु दग्धेष्वपि यत्स्वप्नवासवदत्तमवातिष्ठत, प्रायस्तस्मादेव भासीयानि पद्यानि संग्रहीतृभिरुद्धृतानीत्यनुमीयते । ततश्च केरलीयं स्वप्ननाटकं, भासीयं स्वप्नवासवदत्तञ्च यद्येकमेवाभविष्यदवश्यंलुप्तशेषाणां भासपद्यानां संग्रहीतृभिरुद्धृतानां केषाञ्चित्तत्र दर्शनमभविष्यत् । वामनेन—

शरच्छशांकगौरेण वाताविद्धेन भामिनी
काशपुष्पलवेनेदं साश्रुपातं मुखं ममेति पद्यमुद्धृतम् । तच्चस्वप्ननाटकेपिदृश्यते । नचैतावता स्वप्नवासवदत्तीयमेतत्पद्यमिति निर्णेतुं शक्यते । केरलीयादेव नाटकात्तत्पद्यमुद्धृतं भवेत् प्राचीनतरं वा तदेव पद्यं केरलीयः कविः स्वनाटके प्रावेशयदित्यपि संभाव्यते । स हि "लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः । यासां बलिर्भवति मद्गृहदेहलीनां हंसैश्च सारसगणैश्च विलुप्तपूर्वः । तास्वेव सम्प्रति विरूढयवांकुरासु बीजाञ्जलिः पतति कीटमुखावलीढः" इत्यादीनि शूद्रकादीनां पद्यानि स्वरूपकेषु प्रवेशयन्पद्यचौर्यं नातिदोषकरमिव मन्यमानः प्रतिभाति । ध्वन्यालोकलोचने "सञ्चित-

पक्ष्मकपाटं नयनद्वारं स्वरूपफलनेन। उद्धाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजेति पद्यं दृश्यते। तदेव स्वप्ननाटकेपिस्थितम्। अस्यापि पद्यस्य सैव दशा, या पद्यान्तराणां वामनाद्युद्धृतानाम्। वामनाभिनवगुप्तादिभिर्भासोयात् स्वप्नवासवदत्तात् शूद्रकीयान्मृच्छकटिकादन्येभ्यश्च प्राचीनप्रबन्धेभ्यः पद्यानि संगृहीतानि न पुनः केरलीयात्कवेरिति संभाव्यते। स्वप्नवासवदत्तमृच्छकटिकादीनि प्राचीनतराण्येव प्रबन्धान्तराणि विचूर्ण्य स्वरूपकाणि नातिप्रौढानि केरलकविः केवलमभ्यासार्थं व्यलिखदित्यपि प्रतीयते। साहित्यदर्पणे धृतस्य "उत्साहातिशयं वत्स तव बाल्यश्च पश्यतः। मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः" इति बालचरितपद्यस्य केरलीये बालचरिते न दर्शनमिति तु शास्त्रिण एव प्रतिपादयन्ति। भामहादिप्रबन्धेषु किलिञ्जहस्तिप्रयोगादेरुद्धारो बृहत्कथादितोपि संभाव्यते। यथा च केरलकविः प्रबन्धान्तरेभ्यः पद्यान्तराणि स्वरूपकेषु संजग्राह, तथैव स कौटिल्यकृतादर्थशास्त्रात् "नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्। तत्तस्य मा भून्नरकञ्च गच्छेद्यो भर्तृपिण्डस्य कृते न युध्येत" इति पद्यमपि प्रतिज्ञायौगन्धरायणे संजग्राहेति प्रतिभाति, "भोः काश्यपगोत्रोस्मि साङ्गोपाङ्गं वेदमधीये, मानवीयं धर्मशास्त्रं, माहेश्वरं योगशास्त्रं बार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसंश्राद्धकल्पश्चेत्यादीनि प्रतिमानाटकादिषु शास्त्रिणा दृष्टानि प्राचीनच्छायकानि वाक्यान्यपिनूनं प्राचीनतरप्रबन्धेभ्य एव केरलकविना संगृहीतानीति प्रतिभाति।

अयं केरलकविः राजसिंहनाम्नः कस्यापि राज्ञः समकालिक इति दर्शितम्। कोसौ राजसिंह इति समीक्षायामितिहासेषु बहून् राजसिंहान् पश्यामः। तेषां प्राचीनतमः पांड्यनृपतिस्तन्नामेत्युपलभामहे। अयंराजसिंहः शकानां नवमशतकस्य प्रथमे चरणे वीरनारायणापराख्येण परकेसरिवर्मविरुदशालिना चोलेश्वरेण परान्तकेन व्याघ्राग्रहारे स्वर्णमयं शिवमन्दिरं निर्मितवता केरलराजकन्यका परिणयन-कृतिना बाणराजलंकेश्वरादिविजयप्रथितमहिम्ना विनिर्जित इति प्रशस्तिभ्यो वगम्यते। परान्तको राजसिंहश्च बालरामायणादिप्रणेतुर्महाकवेः राजशेखरस्य तच्छिष्यस्य महेन्द्रपालनृपस्य कान्यकुब्जेश्वरस्य च समकालिकौ। अस्यैव राजसिंहस्य परस्य वा कस्यचित्पांड्यकेरलप्रान्तीयनृपस्य समकालिकः कोपि कविर्नातिप्रौढः स्वाभ्यासार्थं भासशूद्रककालिदासादिप्रबन्धेभ्यः पद्यादि संगृह्य कानिचिद्रूपकाणि संगृहीतवानिति प्रतिभाति। येषां मध्याद्दशरूपकाणि गणपतिशास्त्रिणा प्राप्तानि। महाकवीनां छायाः केरलकविप्रबन्धेषु यथा—कालक्रमेण जगतः परिवर्त्तमाना चक्रारपंक्तिरिव गच्छतिभाग्यपंक्तिः स्वप्ननाटके—नीचैर्गच्छत्युपरिचदशा चक्रनेमिक्रमेण, मेघदूते—यस्याः प्रियमण्डनापि महिषी देवस्य मन्दोदरी, स्नेहाल्लुम्पति पल्लवान्न च पुनर्विजन्ति यस्या भयात्॥ वीजन्तो मलयानिला अपिकरैरस्पृष्टबालद्रुमाः सेयं शक्रारिपोरशोकवनिका भग्नेति विज्ञाप्यताम् इत्यादीन्यभिषेकनाटकादिषु बहूनि पद्यानि शाकुन्तलादिपद्यैः समच्छायकानि दृश्यन्ते। दरिद्रचारुदत्तन्तु सर्वथा मृच्छकटिकमेव चूर्णीकृतमिति प्रतिपादितमेव।

हन्त भोः शूद्रककालिदासादयः सर्वेपि महाकवयः एकस्य भासस्य कस्यचित्केरलकवेर्वा छायां च पद्यानि च चोरयन्तिस्म, केरलरूपकाणां प्रणेतैव वा नातिप्रौढो महाकवीनां छायाश्च पद्यानि च चोरयति स्मेति विकल्पे कः पक्षः परीक्षकेभ्यो रोचताम्। यदि तावद्वामनाद्याः "शूद्रकादिरचितेषु प्रबन्धेष्व-

स्य भूयान्प्रपञ्चो दृश्यते" इत्यादि वदन्तःशू-द्रकादिप्रबन्धान्दृष्टवन्त एव, कथं तदा तदुधृतवाक्यानां केषाञ्चिच्छूद्रकीयत्वं परिहृत्य केरलीयत्वं कल्पयेम।

अयञ्च केरलकविर्नवमशतकीयत्वेन सम्भाव्यमानोनूनं सूक्तिसंग्रहेषु भासपद्यानि न दृष्टवान् सूक्तिसंग्रहाणामर्वाचीनतरत्वात्। अस्माभिस्तु यावत्सूक्तिसंग्रहेषु दृष्टानि कानिचिद्भासपद्यानि भासीयत्वेन सम्भाव्यमानेषु रूपकेषु नोपलभ्यन्ते, तावत्तेषामेकस्यापि भासीयत्वं सम्भावयितुं नोत्सह्यते। भासीयानि पद्यानि सूक्तिसंग्रहेषु धूनान्यद्यावधि मयोपलब्धानि यथा—

दग्धे मनोभवतरौ बाला कुचकुम्भसंभृतैरमृतैः
त्रिवलीकृतालवाला जाता रोमावलीवल्ली॥
पेया सुरा प्रियतमामुखमीक्षणीय,
ग्राह्यः स्वभावललितो विकटश्च वेषः।
येनेदमीदृशमदृश्यत मोक्षवर्त्म,
दीर्घायुरस्तु भगवान्स पिनाकपाणिः *॥
तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः,
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः।
तोयं प्रसीदति मुनेरिव चित्तमन्तः,
कामी दरिद्र इव शोषमुपैति पङ्कः॥
बाला च सा विदितपञ्चशरप्रपञ्चा,
तन्वी च सा स्तनभरोपचिताङ्गयष्टिः।
लज्जां समुद्वहति सा सुरतावसाने,
हा कापि सा किमिव किं कथयामि तस्याः॥
कपाले मार्जारः पय इति करांल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्विसमिति करी संकलयति।
रतान्ते तल्पस्थान्हरति वनिताप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति॥
कठिनहृदये मुञ्च क्रोधं सुखप्रतिघातक,
लिखति दिवसं यातं यातं यमः किल मानिनि।
वयसि तरुणे नैतद्युक्तं चले च समागमे,
भवति कलहो यावत्तावद्वरं सुभगे रतम्॥
कृतककुतकैर्मायासख्यैस्त्वयास्म्यतिवञ्चिता,
निभृतनिभृतैः कार्यालापैर्मयाप्युपलक्षितम्।
भवतु विदितं नेष्टाहं ते वृथाकिमु खिद्यसे,
ह्यहमसहना त्वं निःस्नेहः समेन समं गतम्॥
विरहिवनितावक्त्रौपम्यं विभर्त्ति निशापति-
र्गलितविभावस्याद्यैवाद्य द्युतिर्मसृणा रवेः।
अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः॥
यदपि विबुधैः सिन्धोरन्तः कथंचिदुपार्जितं,
तदपि सकलं चारुस्त्रीणां मुखेषु विलोक्यते।
सुरसुमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने॥
दुःखार्त्ते मयि दुःखिता भवति या हृष्टे प्रहृष्टातथा
दीने दैन्यमुपैति रोषपरुषे पथ्यं वचो भाषते।
कालं वेत्ति कथाः करोति निपुणा मत्संस्तवे रज्यति
भार्या मन्त्रिवरः सखा परिजनः सैकाबहुत्वंगता॥
प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया,
दृष्ट्वाग्रे परिणेतुरर्धलिखितां गङ्गाधरस्याकृतिम्।
उन्मादस्मितरोषलज्जितरसैर्गौर्या कथंचिच्चिरा-
द्धद्धर्त्रीवचनात्प्रिये विनिहितःपुष्पाञ्जलिःपातुवः

पाण्डेय रामावतार शर्मा, एम्० ए०, साहित्याचार्यः।

---

* अस्मात्पद्याद्भासस्य शैवत्वं स्फुटम्। शास्त्रिप्रकाशितेषु रूपकेषु तु तत्कवेर्वैष्णवत्वमिव प्रतिभाति।

## शुक्रग्रहः

पर्याह शुक्रश्चिरपरिचितोऽस्माकम्। शुक्रेण सहास्माकं बहुविधः सम्बन्धः। शुक्रोहि शास्त्रेषु वर्णितो दृश्यते। कुत्रचित् शुक्रो दैत्यगुरुत्वेनोपवर्णितो व्यथयति हृदयं देवानाम्, कुत्रचिच्च शुक्रो नीतिशास्त्रमुपदिशन्नात्मनो नीतिमत्तां प्रकाशयति, कुहचन मृतसञ्जीविन्याविद्यया देवासुरसमरे गतासूनसुरान् सञ्जीव्य प्रोत्साहयति तान्। कुहचिदुपदिशति बृहस्पतिसूनवेकचाय विद्यांताम्। कुहचन

शुक्रोग्रहोस्तकतः प्रतिषेधति माङ्गलिकं कृत्यमास्तिकानाम्। अतएव शुक्रोऽस्माकं चिरपरिचित इति युक्तमुक्तंभवति।

शुक्रोह्येको ग्रहोऽस्माकं पृथिवीव, भगवन्तं मार्त्तण्डं केन्द्रीकृत्य पश्चिमतः पूर्वं गच्छति। सूर्य्यशुक्रयोरेतयोर्ग्रहयोरशीतिलक्षयोजननोप्यधिकमन्तरं वर्त्तते। एषहि साद्ध चतुर्विंशत्यधिकशतद्वयदिवसेषु वारमेकं सूर्य्यं प्रदक्षिणीकर्तुं शक्नोति, एतस्य परिणाह ऊनैकादशकोटियोजनमितः

शुक्रः सूर्य्यपृथिव्योरन्तराले तिष्ठितीति मत्वा यदि पर्यवेक्षेत, तदायं सूर्यसहचर इव दृश्यते। अतएव प्रातः सूर्योदयतः किञ्चित् पूर्वं, सायंहि सूर्योदयतः परमेष दृग्गोचरी भवति निखिलानाम्।

सूक्ष्ममिति (Micromater) यन्त्रेणावलोक्य शुक्रीयो व्यासः (Apparent) ६॥ कलातः (सेकेन्ड) ६२ कला निर्धारितो विद्वद्भिः। अस्मिन् भेदे पृथिवीतः शुक्रस्य दूरतातारतम्यमेव कारणम्। यदा हि स पृथिवीसमीपमागच्छति, तदातस्य पञ्चाशल्लक्षयोजनतः किञ्चिदधिकं दूरत्वं भवति, दूरं गतेहि तस्मिन् किञ्चिदूनं चतुष्कोटिमितमेतयोरन्तरं भवति प्रज्ञानां ज्योतिर्विदामासीद् विश्वासो यच्छुक्रपरिणाहः पृथिवीतोऽधिक इति, परं साम्प्रतमेतस्यासत्यता स्फुटं प्रमाणीभूता। शुक्रमण्डलमतीव भासुरमिति तत्स्वरूपनिरूपणे मुह्यन्ति विपश्चितः। द्वितीयायां तृतीयायां वा चन्द्रमण्डलं पश्यतामनुज्ज्वलचन्द्रमण्डलतो बृहत्तरमिव भाति, शुक्र मण्डलंहि ततोऽप्यधिकत्तरमुज्ज्वमिति तस्य बृहत्ता प्रज्ञैर्विद्वद्भिर्निर्धारिता। अतएव च पण्डितः फर्गुशन महोदयः एतस्य व्यासं ७८०६ क्रोश (माइल) मितं निरधारयत् हार्सेलाचार्यश्च ८१०० क्रोशमितं स्थिरकरोत्। परं साम्प्रतं बहुभिः प्रमाणैः १५१० क्रोशमितमेतस्य व्यासं स्थिरीकुर्वन्ति विपश्चितः। भासुरतानिबन्धनमेव पूर्वे भ्रेमुरत्रेति स्फुटमेवावगम्यते।

शुक्रमण्डलपर्यवेक्षणे बहुविधं काठिन्यमनुभूयते विद्वद्भिः, एतस्य प्रकाशमयत्वमेवात्र प्रधानं कारणम्। अतएव शुक्रमण्डलं विशिष्यावलोकयितुं न शक्यते। यद्येकस्मिन्नारोहपरिणाहवति पर्वते सूर्य्यकिरणं तिर्यङ्निपतेत् सपर्वतश्च शुभ्रबालुकामयो भवेत्, तत्प्रकाशापेक्षयाऽपि शुक्रमण्डलस्याधिकः प्रकाशः, प्रकाशाधिक्येनैव शुक्रमण्डलस्य याथार्थ्यनिर्णयो दुःशकः।

अपरं काठिन्यमेतस्य दूरत्वमेव, परंयदायं पृथिवीसान्निध्यमभ्येति, तदा पर्य्यवेक्षणोपयुक्तो भवति, परंहन्त तदास्य पश्चाद्भागएव दृष्टिगोचरो भवति। यतस्तदा न तन्मण्डलं सूर्यालोकेन प्रकाशितं भवति।

पृथिवी यावन्मितं सूर्य्यतस्तापमालोकञ्च परिगृह्णाति, शुक्रस्ततो द्विगुणतरं परिगृह्णाति।

शुक्रप्रकाशोऽतीवाधिकतरः, येनहि स कादाचिन्मध्यान्हेपि दृग्गोचरी भवति मानवानम्, महाप्राणस्तेजस्वी नयपालो वाहिनीसमेतो यदा युद्धयात्रामकरोत् तदापश्यद्यत् बहवःसमेता आकाशमण्डलस्थं ज्योतिष्कमेकं पश्यन्तीति। आसीत् स शुक्रग्रहः। परमेतस्यस्वरूपमजानन्तो विजयिनो नयपालस्य विजयाचिन्हमेव स्थिरमकुर्वस्ते।

यथाचन्द्रमसः कलोपचयापचयावास्माभिरभिलक्ष्येते, तथा शुक्रग्रहेऽपि दूरवीक्षणयन्त्रेण ह्रासवृद्धी प्रत्यक्षीक्रियेते। १६१० खृष्टाब्दे ग्यलिलिओ महाशयस्तत्त्वमिदमाविश्चकार, आविष्कृत्य साश्चर्य्यमघोषञ्च स—

हन्त, नाद्य कोपर्निकसमहोदयो जीवति, अन्यथा स्वोपज्ञं ज्योतिस्तत्वं प्रमाणीभूतमवलोक्यावश्यं प्रहृष्येत्तदन्तरात्मा। अनयोरेषएव भेदो यत् कलाया ह्रासे वृद्धावपि चन्द्रमण्डलं परिचेतुं शक्यते, परं शुक्रमण्डलं हिर्स्वीयमाकारमेव परिवर्तयति। शुक्रः प्रतिपत्तः यथा यथा पूर्णिमाभ्यासमधिगच्छति तथा तथैतस्य कला क्षीयते। चन्द्रमसः प्रतिपत्पूर्णिमयोः पञ्चदशदिनान्यन्तरं भवति, परं शुक्रस्य प्रतिपत्पूर्णिमयोः ११२ दिनानि व्यवधानं भवति, शुक्रमण्डले बहुविधकृष्णवर्णं लक्ष्मावलोक्यते। वृहन्ति तानि चिन्हानि समसमुद्रा इति १७२६ खृष्टाब्दे ज्योतिस्तत्वज्ञो वाञ्चनिमहोदयः स्थिरीचकार। ते च समुद्राः कुल्याभिः परस्परं सम्बद्धा इत्यपि प्रामाण्यत स महोदयः। शुक्रमण्डलस्य मध्ये किञ्चित् कृष्णवर्णं यद्विलोक्यते, तत्र हि ज्योतिस्तत्ववेदिनो विवदन्ते। मा भवतु तस्य यथार्थ्यनिर्णयः, परं तस्याविष्कृत्या शुक्रग्रहसम्पृक्तं बहुविधं रहस्यं प्रत्यक्षीभूतमिति नात्र लेशतोऽपि सन्देहः। एतैः कृष्णवर्णचिन्हैरेव सहकृतः शुक्र आत्मनोऽक्षं परितो परिभ्रमति, किञ्चैषामेव साहाय्यादक्षाणां स्थितिरपि विज्ञायते, अक्षा एव शुक्रायनमपि प्रकाशयन्ति। कासनिनामकः कश्चन ज्योतिर्वित गणनया निर्द्धारितवान् यदक्षप्रदक्षिणीकरणे त्रयोविंशतिघण्टामितः समयोऽपेक्षत इति।

शुक्रग्रहतः कदाचिदीषदुज्ज्वल ज्योतिः प्रकाशते। अत्र पण्डिता बहुविधानि कारणानि निरूपयन्ति। केचन वदन्ति शुक्रमण्डलीयवायुमण्डलतः शुक्रमण्डलतो वा कोप्यालोकविशेषः प्रकाशते, अपरे वदन्ति पृथिवीमण्डले सम्मूर्च्छितः सूर्यरश्मिःशुक्रमण्डले निपतति, तत एव प्रकाशो दृश्यते। अन्ये तु पृथिव्या मेरुप्रकाश इव शुक्रस्य, वायुमण्डले कोऽप्यालोकः प्रकाशत इति वदन्ति।

शुक्रस्योपरितनो भाग उच्चावच इति विद्वांसो निरूपयन्ति, शुक्रमण्डल आलोकान्धकारयोर्व्यवच्छेदिका रेखा वक्रेति दूरवीक्षणयन्त्रेण प्रत्यक्षीकृतं पाश्चात्यपण्डितैः, तत एव शुक्रमण्डलस्य बन्धुरताऽनुमातुं शक्या, शर्मण्यदेशीयः स्क्रेटर पण्डितोऽनेकाभिर्युक्तिभिः शुक्रग्रहविषयकं सिद्धान्तमिमं प्रचारितवान्, यदि शुक्रग्रहः समोच्चः समतलश्च स्यात्, तदा शुक्रकलाया द्वेऽपि कले समान्तरे, सदृशे, सूक्ष्माग्रे च विलोक्येत, परं दूरवीक्षणयन्त्रेण तथा न दृश्यते। अतो निश्चितमेतद्वक्तुं शक्यते, यत् शुक्रमण्डलीयैः पर्वतैरवरुद्धाः सूर्यरश्मय इति तस्य बन्धुरता व्यपदिश्यते। स्क्रेटरपण्डितात् पुराभवनं ज्योतिर्विदा लाहापरमहोदयेन शुक्रमण्डलीयाःपर्वता दूरवीक्षण साहाय्यादाविष्कृताः, परं न तन्मतं सर्वसम्मतमभवत्। परमष्टादशशताब्द्यारन्तभागे पण्डितस्क्रेटर महोदयः पर्वतानामस्तित्वं बहुविधैः प्रमाणैः प्रामाण्यत्, यदा हार्सेलमहोदयो दूरवीक्षणयन्त्रेण पर्वतानवलोकयितुं प्रायतत, तदा न तस्य महोदयस्य दृष्टिपथमवतीर्णास्त इति स तेषामभावमेव स्थिरीचकार। इत्थमुभयोर्विवादः समभवत्, परं साम्प्रतं स्क्रेटरसिद्धान्त एव प्रामाणिकतया गण्यते।

प्रकृरपण्डितो वदति शुक्रपृथिव्योरस्ति समानता। शुक्रस्य पृथिव्याश्चाकारः प्रायः समान एव, उभयोर्घनत्वे न विशेषो भेदः, उभयोर्मध्याकर्षणं प्रायः सदृशम्, शुक्रपृथिव्योदिनमानेऽपि न विशेषमन्तरम्, अन्यग्रहापेक्षया एतयोर्वर्षमानमपि प्रायोऽल्पभेदवत, पृथिव्या वर्षो ३६५ दिनात्मकः, शुक्रस्य च २४४ दिनात्मकः।

शुक्रपृथिव्योरेषु विषयेषु सादृश्यसत्त्वेऽपि महान् भेद एकस्मिन् विषये दृश्यते, नहि शुक्रः पृथिवीवोपग्रहः । दूरवीक्षणयन्त्रसाहाय्यात् शुक्रस्योपग्रहो विद्वद्भिर्दृष्टः, तदीय आकारो व्यासश्चापि निर्द्धारितः । परं साम्प्रतिका ज्योतिर्विदस्तैर्व्यवस्थापितं सिद्धान्तमपर्याप्तमिश्रान्त इति प्रमाणयन्ति ।

हेलिनामकः कश्चन ज्योतिस्तत्त्ववेत्ता शुक्रस्य भगमणनुसृत्यकिमपिज्योतिस्तत्वमाविश्चकार, येन हि सूर्यस्याक्षवृत्तं निर्णेतुं शक्यते। सूर्यस्य दूरत्वनिर्णयमन्तरा ज्योतिस्तत्त्वं प्रायः साकल्पेन ज्ञातुमशक्यम् । एतेन ग्रहोपग्रहतारकादीनामपि दूरत्वं निर्णीयते । शुक्रः प्रत्यब्दं सूर्यस्य पृथिव्याश्च मध्यमागच्छति, परमेतेन प्रतिवर्षमेषां समानान्तरेऽवस्थानं न भवति। यदा पृथिव्यास्तलद्वयसमीप एषां योगो भवति, तदैषां समानान्तरे स्थितिरपि भवति। तदा दूरवीक्षणयन्त्रेण यदि शुक्रमण्डलं निरीक्ष्येत, तदा शुक्रमण्डलं कृष्णवर्णं सूर्यमण्डलमुपरि गच्छद् दृश्येत, सूर्य्यालोकप्रतिरोधात् तत् कृष्णवर्णमिव भाति ।

बुधः शुक्रश्चाधिकं सूर्यमण्डलतस्तापं गृह्णाति, अतस्तन्मण्डलं न मनुष्याणामवस्थानयोग्यम् । प्रकृरपण्डितो वदति, यत् सूर्यतो दूरत्वनिबन्धनो ग्रहाणां जलवायुप्रभेदो भवतीति न सम्यक् । पाण्डतटिण्डलप्रभृतयो वैज्ञानिकास्तु सूर्यस्य दूरत्वहेतुना ग्रहाणां जलवायुप्रभेदनिर्णयः प्रायो दुस्साध इति प्रमाणयन्ति, ग्रहाणां बाष्पीयपरिवेषस्य विस्तार उपादानञ्च ग्रहाणां जलवायुप्रभेदनिर्णये समर्थौ। यदा ग्रहमण्डले सूर्योत्तापः प्रतिफलति, तदैव तस्मात्तापः प्रतिनिर्गच्छति, तस्मिन् अन्तर्धत्ते वा। यदा वायुमण्डलं जलबाष्पयुक्तं भवति, तदा सूर्यात्तापोऽनायासमेव वायुपरिवेषं विभिद्य ग्रहमण्डले प्रविशति, परं ततो निर्वाधमेव बहिर्गन्तुं न प्रभवति। परं यदा वायौ जलीयबाष्पस्याल्पताऽभावो वा भवति, तदा प्रतिफलितोऽप्युत्तापस्ततास्त्वरितं निर्गच्छति। एतेन जलीयो बाष्प एव जलवायुपरिवर्तक इति प्रमाणीभवति । टिण्डलपण्डितानामयमाशयः, जलीयबाष्पापेक्षयाऽपि बहुविधा अन्ये बाष्पाः कार्योपयुक्ता इति। एतेन बाष्पानुसारमेव जले वायौ च भिन्नता भवतीति ननु प्रमाणितमेव। प्रकृरपण्डितः किल प्राह स्म, यत् बुधमण्डले शुक्रमण्डले च पार्थिवजलवायुसमौ जलवायू सुखकरौ भवितुं शक्नुयाताम् ।

शुक्रमण्डलं मानववासोपयुक्तं नवेति निर्णयः पदार्थान्तरनिर्णयसापेक्षः। पृथिव्या अक्षदण्डं न क्रान्तिमण्डलमभिलम्बते, किन्त्ववदं तत्र किञ्चिदवनमति, शुक्रो हि पृथिव्यपेक्षयाऽपि त्रिगुणमधिकमवनमति । इत्थं शुक्रीयमुष्णमण्डलं प्रायो मेरुपर्यन्तं विस्तृतम्, मेरुमण्डलं हि शुक्रस्य विषुवरेखां यावद्विस्तृतम्। एतेन शुक्रमण्डलस्यैकस्मिन्नंशे मेरुमण्डलोष्णमण्डलयोर्योगो भवति, अस्यांशस्य मेरुमण्डलत्वेनोष्णमण्डलत्वेन च व्यपदेशो भवितुं शक्यः। एतेन शुक्रमण्डलेऽतिशीतोष्णभागः प्रायो न तिष्ठति । साम्प्रतं मेरुमण्डलोष्णमण्डलयोः को भेद इति विवेचयितुमुपक्रम्यते, उष्णमण्डलीयप्रदेशे प्रतिवर्षं वारद्वयं खमध्यमतिक्रामति सूर्यः। मेरुमण्डले च वर्षमध्ये कदाचिन्नोदयति सूर्यः, कदाचिच्चास्माकं दिनरात्रिमिते समये व्यतीतेऽपि नास्तं याति । इत्थं शुक्रमण्डलस्य तथाविधे प्रदेशे भवत्याश्चर्यमयो ऋतुव्यतिकरः। कदाचित्सूर्योदय एव न भवति, कदाचित् सूर्यास्त एव दुर्लभः । प्रदेशमिमममपहायान्यस्य प्रदेशस्य मेरुमण्डलत्वेन व्यपदेशो भवति। अतः शुक्रमण्डलं नास्माकं वासोपयुक्तमिति शिवम् ।　　श्रीचन्द्रचूडशर्मा।

# भारतीया विद्यार्थिनः ।

अस्मिन्भारतवर्षे चिरकालाद्विद्यार्थिनःपठने कृतश्रमाः विद्यालाभं कुर्वन्त आसते। भारतीयाः प्रागेव विद्याध्ययनस्य लाभमविदु.। तस्मात्सर्वतोभावेन सांसारिकाणि वस्त्वन्तराण्यपहाय ऋषयो राजानश्च ज्ञानलिप्सया महता प्रयत्नेनाध्ययनं चक्रुः। विद्याशिक्षकस्तावद्गुरुरिति स्मर्यते। स गुरुः सर्वेभ्यो महानिति परमया भक्त्या प्रतिष्ठया च पूज्यते स्म। विद्याभ्यासस्य ईश्वरज्ञानमात्मसन्तुष्टिश्च प्रधानं फलं निर्धारितमासीत्। न तदा कदाचित् कोऽपि प्रचुरद्रव्यलाभार्थं प्रतिष्ठाप्राप्त्यै वा विद्याध्ययनं चकारेत्यनुमीयते। विद्यार्थिनः गुरून्परमेश्वरादप्यधिकान् मन्यमानास्तानुपासांचक्रुर्यतो गुरुरेव परमेश्वरस्य दर्शक आसीदिति। गुरुरपि कश्चित् प्राप्तात्मसन्तोषः कृतविद्यो विज्ञातपरमात्मभावः स्वीयान् विद्यार्थिनोऽपि स्वसदृशान् कर्त्तुमैच्छत्। तस्माद्गुरुशिष्यपरम्परया विद्याभ्यासोऽस्मिन्संसारे प्रववृते। क्रमेण गुरुशिष्यपरम्परया विद्यालाभस्य साफल्यमवलोक्य विद्याध्ययनस्य रुचिर्जीवेषु समुत्पन्नाभवत्। अथालब्धविद्यस्तावदात्मानं दुःखिनं मेने। क्रमेण सर्व एव पुरुषाः विद्यालाभार्थं गुरुमुपसेदुस्तमुपासांचक्रुश्च। स च गुरुर्विद्यादाने नाधिकारिणाम् शिष्याणां चक्षूंष्युदमीलयत्। प्रयोजनानुसारेण एक एव गुरुः बहूनां विद्यार्थिनां विद्यादाने कृतसङ्कल्पो बभूव, विद्यार्थिनश्च तस्य सेवामुपचर्याश्चात्मधर्मं मेनिरे। गुरोरेव प्रसादाद्विद्यालाभस्य साफल्यं भविष्यतीति तेषामासीद्विश्वासः। यथासमयं गुरुः कुलपतिरजायत। स एव गुरुः न केवलं विद्यादातैव, किन्तु विद्यार्थिनामन्नदाता चरणोपदेष्टा चाभवत्। एवं देशस्यानेकेषु स्थानेषु महती शिष्यसंहतिर्वर्त्तुलीबभूव, तत्र काचित् पाठशालापि जन्मग्रहणमकरोत्। तत्रस्थो गुरुश्च विद्यार्थिनां साहाय्याय धनिनो राज्ञश्च सकाशाद् यथाप्रयोजनं धनमाददे। प्रतिष्ठालाभेच्छया धर्मविधानस्य वा विचारेण राजानो धनिनश्च तस्मै गुरवे यथाशक्ति धनानि ददुः। शिष्या अपि यथाकालं समाप्तविद्याः शक्त्यनुसारं गुरुदक्षिणां दत्त्वाऽस्यमनस्तोषं चक्रुः। लब्धवित्तो गुरुस्तैस्तैर्द्रव्यैः शिष्याणामेव पालनार्थं यत्नमकरोत्, तस्य जीविकानिर्वाहस्तु स्वल्पेनैव द्रव्येणाभवत्। शेषस्य लोभं त्यक्त्वाऽसौ शिष्यसौभाग्यार्थं यत्नवानभूत्। वसिष्ठवाल्मीक्यगस्त्ययाज्ञवल्क्यभरद्वाजादयः प्राचीनभारतवर्षीयदृशाः कुलपतयः श्रूयन्ते। तेषां शिष्यैः शिष्याणां च शिष्यैः समस्ता भारतभूमिर्व्याप्तेति प्राचीनादितिहासादवगम्यते। इमे कुलपतयः स्व विद्यार्थिनः वेदान्वैदिकान्धर्मानाचारांश्च शिक्षयामासुः। एतेषां गुरूणां, तेषां शिष्याणां चतिहासाञ्छ्रुत्वास्माकं कर्णौ पवित्रतां यात इति।

सैव प्राचीना पाठनपद्धतिरिदानीमपि भारतवर्षस्य प्राचीनब्राह्मणेषु पण्डितेषु च संस्कृतविद्याप्रचारेऽनुसृता दृश्यते। एको गुरुरिदानीमपि शिष्यसमूहान्पाठयति, यथाशक्ति तेषां भोजनवस्त्रादीनामपि प्रबन्धकर्ता च भवति। समर्थेभ्यः शिष्येभ्यश्च यथाश्रद्धं धनञ्चादत्ते। यवनादीनामुपद्रवैर्लब्धाघातापीयं सरणिर्यथाकथञ्चिदस्मिन्भारते वर्त्तत एव। अनयैवरात्येदानीमपि संस्कृतविद्याया अध्ययनं वाराणसीप्रभृतिषु नगरेषु दृश्यत एव। किन्तु प्रायेण राज्ञां सहायताविरहेणैषा सरणिः न यथोचितं लाभमुत्पादयितुं समर्थेत्यस्त्यवेदानीमियं रीतिः कृशा शिथिला च।

विद्याध्ययनस्य प्रधानं फलमात्मसन्तोष एव, न तु धनादीनां लाभ इति विदुषां निर्णयः। किन्तु धनेन विना न संसारयात्रा संभवतीति

संसारिणां धनलाभायापि प्रयत्नः कर्त्तव्य एव। यदि विद्यालाभेन धनप्राप्तिरपि भवेत्तदोभयफलं सम्भवति । तस्मादिदानीन्तनाः प्रायेण धनलाभायैव विद्याध्ययनं कुर्वन्ति। परन्तु तेषु न सर्वे यथोचिता विद्यामधीत्यात्मसन्तोषं प्राप्नुवन्ति। केचित्तु विद्याप्राप्तिद्वारेण लब्धधना एव आत्मनः सफलान्मन्यन्ते। तस्मादस्तीदानीं विद्याध्ययनं प्राप्तं चिन्तनीयामवस्थाम् । अधुना संस्कृतभाषाध्यायिनः संसारयात्रार्थं यथेष्टं धनमुपार्जयितुमसमर्था इति संस्कृतप्रचारस्य शिथिलत्वं दृश्यते । भारतवर्षीयाणां संस्कृतविद्ययैव विशेषलाभसम्भावना वर्त्तत इत्यस्ति केषाञ्चिन्मतम्, तस्मात्सर्वैरेव धनिभी राजभिश्च संस्कृतविद्याप्रचारार्थं प्रचुरः प्रयत्नः कर्त्तव्य इति नो बुद्धिः।

यद्यपि भारतीया इदानीं विद्याप्राप्तिमेव पुरुषार्थं न मन्यते किन्तु धनमेव प्रधानं दैवतमनुमन्यन्ते, तथापि कतिपयमहोदयाः विद्याप्राप्त्यर्थं प्रयतमाना दृश्यन्ते । वर्त्ततां तावत् संस्कृतविद्याप्रचारः, आङ्गलभाषायास्तु यथेष्टः प्रचारो दृश्यत एव। राजपुरुषाः आङ्गलभाषाप्रचारे कृतबहूद्यमाः साम्प्रतं विद्यालाभेनास्मान्कृतार्थीकुर्वन्तश्चासते। किन्तु दुःखस्य विषयोऽयं यदधुनापि आङ्गलभाषापाठशालासु अल्पा विद्यार्थिनः पठनार्थमुपस्थिता भवन्ति पाठशालासु च कीदृशो लाभः सम्भवति । प्रायेण तु धर्मसम्बन्धिन्याः शिक्षाया लाभो नैव वर्त्तत । शिक्षकाश्च विद्यार्थिनामाचरणेषु नितान्तमुदासीना दृश्यन्ते इदानींतनीषु पाठशालासु शिक्षकाः धनलाभायैव उपस्थिता भवन्ति भृतकाध्यापनतां च कुर्वन्ति। नियतसमयेन यत्किञ्चित्पाठयित्वा स्वभवनं यान्ति। विद्यार्थिनश्च तानात्मनो भृत्यान्कल्पयन्ति । तस्माच्छिक्षका अपि शिष्येभ्य उचितां प्रतिष्ठां न लभन्ते । शिक्षका लब्धमासिकवेतनाः सन्तोषं प्राप्नुवन्ति, नान्यत् किञ्चित्फलं मृगयन्ति । नवीनेयमाङ्गलभाषापाठनरीतिः प्राचीनसरण्यनितान्तं भिन्ना । आसु पाठशालासु पाठिता विद्यार्थिनः धर्मे वा सदाचारे वा अज्ञा अल्पज्ञा वा भवन्ति। न ते गुरुषु श्रद्दधते न तेषां प्रतिष्ठां सेवां वा विदधति। एतासु पाठशालासु लब्धविद्या विद्यार्थिनः यथासमयं परीक्ष्यन्ते । परीक्षाफलेनैव तेषां योग्यताया निर्णयो जायते। परीक्षा च बहुधा दैवायत्तैव, कदाचित्तीव्रा अपि विद्यार्थिनः अस्यां परीक्षायामसफलाः, कदाचिन्मूर्खा अपि सफला भवन्तीति योग्यतानिर्णयः प्रामादिक एव सञ्जायते। एतेन कीदृशीयं पाठशालासु पाठनरीतिरिति विद्वद्भिःस्वयमेव विचारणीयमिति।

केचिद्विद्यार्थिनस्तु गुरूपदेशं विनैव विद्यालाभार्थं प्रयतन्ते, तेषां तु मात्र एव श्रम इति फलेन ज्ञातं भवति । वस्तुतस्तु विद्यालाभो गुरोरेव प्रसादाद्भवति, तस्मात्सर्वैः निश्छलतया विद्याप्राप्त्यर्थं गुरुरेवोपास्यः । फलं चात्मसन्तोषोऽवश्यमेव भविष्यति । कदाचिद्धनस्य प्रतिष्ठायाश्च लाभः स्यादेव ।

यदि कश्चित् पृच्छेत्, कोऽयं विद्यालाभ इति तं प्रति वयं ब्रूमः, विद्यालाभस्तुज्ञानमिति। अज्ञानाज्जन्तवः सदैव भ्रान्ताः मूर्खाश्च दुःखमनुभवन्ति। एतद्दुःखं लघयिष्यञ्जनो विद्यालाभार्थं यतते। विद्या तावत्सुखोत्पादिकेति। विद्या तु सर्वेषु द्रव्येष्वनुत्तमा, लब्धा विद्या लब्धधनवन्न क्षीयते, नापह्रियते वा चौरै राजभिश्च। तस्मादिदं विद्यारूपं धनं सर्वप्रयत्नेनोपार्जनीयम्। एतया विद्यया न केवलं त्रयः पुरुषार्थाः लभ्यन्ते, किन्तु चतुर्थोऽपि पुरुषार्थो मोक्षो विद्ययैव ज्ञानेन च लभ्यते। प्रधानं फलमुद्दिश्य प्रयतमानाः लोकाः धनप्रतिष्ठादिकं फलान्तरमपि लब्धुं समर्था भवन्त्येव, इयं

सुखोत्पादिका विद्या न सुखेन लभ्यते। अस्यार्थं श्रमः कर्त्तव्य एव, यथोक्तम्—

"सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम्। सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ॥" इति

एतत्सर्वमवधार्य साम्प्रतिकैर्भारतवर्षीय विद्यार्थिभिः गुरूपासनया विद्यालाभः स्वान्तरात्मसन्तोषाय कर्त्तव्य इति।

पं० हरिमङ्गल मिश्र. एम्. ए.

---

# वाङ्मयार्णवे ज्योतिर्विद्या

## गोलाध्यायः।

अनन्तमाकाशमिदं पयोधे-
र्द्वीपैरिवाम्भो निचितं च विश्वैः।
एकस्य तत्रास्मदुपाश्रयस्य
प्रस्तूयते वर्णनमत्र किञ्चित् ॥ १ ॥

ताराग्रहोपग्रहकेतुजातैः
परस्पराकर्षणनिघ्नचारैः।
विचित्रवर्णाकृतिभिः समन्ताद्
व्याप्तं विशालं किल विश्वमेतत् ॥ २ ॥

धराभितो वर्तुलकल्परूपा
कदम्बकिञ्जल्कनिभाश्च तस्याम्।
देशेष्वनेकेषु कृताधिवासाः
सर्वत्र खं मूर्ध्नि विलोकयन्ति ॥ ३ ॥

आकृष्टिशक्त्याखिललोकभाजा
धरातलाद् गच्छति खं न किञ्चित्।
आधार्यमाणं सलिलानिलाद्य-
स्तस्मान्न कस्यापि निपातशङ्का ॥ ४ ॥

भूकेन्द्रपातित्वमधोनिपातः
खसंमुखीना गतिरूर्ध्वगत्वम्।
अतो धरार्धान्तरचारजानां
निपातशङ्कोर्ध्वगतित्वबुद्धिः ॥ ५ ॥

प्रकाशधर्मण्यवकाशमात्र-
व्यापिन्यथाकाश उदीक्ष्यमाणे।
दृष्ट्या स्वया यन्त्रसहायया वा
यद्दृश्यते तस्य विचारणात्र ॥ ६ ॥

मानानुलोमा किल विप्रकर्ष-
प्रतीपगाकर्षणशक्तिरत्र।
स सर्वगा सर्वगतिस्थितीनां
निमित्तमेषेति वदन्ति तज्ज्ञाः ॥ ७ ॥

स्फुरत्पयःफेनचयावभास-
श्छायापथो दूरतमः पृथिव्याः।
दृश्यः क्वचित्तारकितः परत्र
सिताभ्रसंघातनिभः प्रसिद्धः ॥ ८ ॥

शुभ्राभ्रकाश्चीप्रतिम प्रवेष्ट्य
तारादिकं व्योम्नि विभासमानं।
छायापथोऽयं विपुलोऽस्ति वाष्पा-
वस्थास्थितो द्रव्यचयश्चिरन्तः ॥ ९ ॥

घनोभवद्वाष्पचयादमुष्मात्
कालेन तारानिकरो विजज्ञे।
ततो ग्रहोपग्रहवर्ग आसी-
दुत्प्रेक्षितं कैश्चिदिदं सुधीभिः ॥ १० ॥

स्वय प्रकाशा निरपेक्षचाराः
सूर्या असंख्या निजमण्डलस्य।
केन्द्रस्वरूपा विचरन्ति तेषां
ताराख्यया सर्वजने प्रसिद्धिः ॥ ११ ॥

जवाच्चरन्तोपि विहायसीमे
तापप्रकर्षात् प्रचुरप्रकाशाः।
स्थिरा इवेक्ष्यन्त उदीर्णवेगाः
पोता इवाम्भस्यतिविप्रकर्षात् ॥ १२ ॥

तेषां धरायाः अतिसंनिकृष्ट-
स्तापप्रदोऽयं किल सूर्य एकः।
अन्ये तु सूर्या अतिविप्रकृष्टाः
स्फुरन्ति रात्रौ दिवसे त्वदृश्याः ॥ १३ ॥

श्वेतारुणश्यामलपीतधूम्र-
नीलादिवर्णा बहुशोत्र ताराः।
काश्चित्पृथक्चारभृतः परास्तु
संबद्धचाराः सुधियां प्रसिद्धाः ॥ १४ ॥

विद्वत्सु तारानिकरस्य वर्गाः
सप्तर्षिमुख्याः प्रथिता अनेके।
वर्गक्रमेणैव सुखेन तासां
विशेषविज्ञानविधिः सुसाधः ॥ १५ ॥

तत्तकशिशुमारशिफाः
सुमेरुसविधेऽत्तगतिवृत्ते-
वीणाजानुगमुकुटं कृषक-
श्वयुगर्षयो वनोतुश्च ॥ १६ ॥

चित्रक्रमेलकश्यप-
गोधाहंसाः शिवा परे वृत्ते ।
गरुडनरेन्द्रभुजंगाः
करिमुण्डः सिंहशावकः सूतः ॥ १७ ॥

पर्शुत्रिकोणदोला वाज्यश्वतरौ तिमिर्बाणः।
एते तृतीयवृत्ते चतुर्थवृत्ते तु राशयः प्रथिताः १८

सरटहृदाहिघटिकाः सुवर्णयष्टिः कपोतश्च।
पोतशलाकाष्टास्त्रं कुमेरुसविधेत्तगतिवृत्ते १९॥

वृत्तत्र्यस्त्रमयूराश्चतुरस्त्रं
श्येनिका सरिच्च शशः।
शुनकस्त्रिशङ्कुमुष्कौ सुपर्ण
इति च द्वितीयवृत्ते तु ॥ २० ॥

महिषवृकवेदिदूरेक्षण-
कोटीराणि सिन्धुश्च ।
सूक्ष्मेक्षणमपि सारसशकुलौ
टंकस्तिमिंगिलो व्याधः ॥ २१ ॥

शृंगी श्वशिशुः शेषश्चमम्सः
काकस्तृतीयवृत्तगताः ।
ज्योतिर्गणिताभिज्ञैरिति
तारावर्गसंग्रहो विहितः ॥ २२ ॥

सांघ्र्यष्टिलक्षान्वितकोटिमानो
रवेर्भुवो मध्यमविप्रकर्षः।
ततः प्रभायाति धरां कलाभि-
रष्टात्मिकाभिर्महनीयवेगा ॥ २३ ॥

सांघ्रित्रयोविंशतिसंमितानि
प्रभासहस्राणि तु योजनानाम्।
कालेन सैषा विकलात्मकेन
चरत्युदग्रेण जवेन युक्ता ॥ २४ ॥

शंकुद्वयादप्यतिविप्रकृष्टा-
स्ताराभुवो या अतिसंनिकृष्टाः।
लक्षार्धवर्षैरतिविप्रकृष्टा
त्प्रभैति तारानिकरादिहास्मान् ॥ २५ ॥

तद्विप्रकर्षातिशयाच्च तापः
प्रभा परं भूमिमुपैति ताभ्यः।
ज्ञातश्च सूर्यस्य ततो ग्रहाद्यां
न तारकाणामतिविप्रकर्षात् ॥ २६ ॥

सूर्यः प्रसिद्धो निरपेक्षचार-
स्तन्निघ्नचारा ग्रहनामभाजः।
उपग्रहास्तु ग्रहनिघ्नचारा
ग्रहाः सपुच्छा इह केतुसंज्ञाः ॥ २७ ॥

बुधकविक्षितिभौमबृहस्पती-
न्शनिमथाप्युरणं वरुणं तथा।
विदुरिहाष्ट रवेर्महतो ग्रहा-
नुपसहस्रलघुग्रहसंयुतान् ॥ २८ ॥

शून्ये त्रये तद्द्विगुणेषु चैवं
चतुर्युतेषु ग्रहविप्रकर्षः।
ते प्रायिकं केचिदुदाहरन्ति
न विप्रकर्षो नियमेन बद्धः ॥ २९ ॥

द्वासप्तत्या युक्ता त्रिशती-
व्यासो बुधस्य संकलितः।
योजनचतुष्टयं कियदूनं
कक्षागतेर्वेगः ॥ ३० ॥

सार्धं लक्षचतुष्टयमस्य
रवेर्मध्यमन्तरं प्रोक्तम् ।
प्रायोष्टाशीत्याहनां सूर्यं
परितः परिभ्रमणम् ॥ ३१ ॥

शुक्रस्यार्धशतोनं सार्धं
त्रियुतं सहस्रकं व्यासः ।
अंघ्र्यूनयोजनत्रयमस्य च
कक्षागते र्वेगः ॥ ३२ ॥

सचतुर्लक्षं प्रयुताष्टकं
पुनः साष्टसाहस्रम् ।
सांघ्रितषट्कयुक्तं रवितः
शुक्रस्य मध्यमन्तरं प्रोक्तम् ॥ ३३ ॥

प्रायः सपंचविंशति-
दिनशतयुग्मेन तु भ्रमणम् ।
शुक्रस्य तत्त्वमित्थं
ज्योतिर्विद्भिर्विनिर्णीतम् ॥ ३४ ॥

सार्धदशोनसहस्रं भूमेर्व्यासोत्र संकलितः ।
प्रायः शुक्रसमनस्तस्याः कक्षागतेर्वेगः ॥ ३३ ॥

सांघ्र्यष्टिलक्षयुक्ता कोटिर्मध्यान्तरं रवितः ।
प्रायः सपंचषष्टि-त्रिशतदिनैस्तत्परिभ्रमणम ३६

अर्धसहस्रमिहार्धोन्वितचत्वारिंशदन्वितंव्यासः
भौमस्य किंचिदूनं द्वितयं कक्षा गतेर्वेगः ३७॥

कोटिः सप्तप्रयुतानि
सप्तलक्षाण्ययुतमेकम ।
सांघ्रिशतषट्कसहितं
सहस्रयुग्मं च मध्यमन्तरं रवितः॥ ३८ ॥

सप्तशीतिसमन्वितदिनशतषट्-
केन तत्परिभ्रमणम् ।
भौमग्रहस्य तत्त्वं
तदिदं ज्योतिर्विदामिष्टम् ॥ ३९ ॥

सार्धद्व्यशीतयुक्तं सप्तशताद्वयं
किलायुतं व्यासः ।
जीवस्य योजनमितः
कलितः कक्षागतेर्वेगः ॥ ४० ॥

सचतुर्लक्षं साष्टायुत-
सहस्रान्वितं शतैः षड्भिः ।
सांघ्रिभिरुपेतमन्तरमस्य
चतुर्भिः सहस्रैस्तु ॥ ४१ ॥

सार्धद्वात्रिंशद्युत-शत-त्रयार्धै-
दिनैः परिभ्रमणम् ।
जीवग्रहस्य तत्वं ग्रहवेदि-
भिरिति विनिर्णीतम् ॥ ४२ ॥

शतनवकनवसहितं व्यासस्तु
शनिग्रहस्य संकलितः ।
योजनचरणत्रितयं
कक्षागतिर्वेगएतस्य ॥ ४३ ॥

एकादशकोट्यष्टभिरात्या
लक्षैस्तथाष्टभिस्त्वयुतैः ।
सचरणसहस्रसप्तोपेतो
मध्यान्तरंरविः ॥ ४४ ॥

षण्णवाद्व्यसप्तशतयुतमयुतं
भ्रमणस्य कालो ह्नाम ।
इतिशनितत्त्वंगणिताचार्यै-
र्निरणीयतस्पष्टम् ॥ ४५ ॥

उरणस्यनवाढ्यशतोपेतो
व्यासश्चतुःसहस्र मितः ।
प्रायोर्धयोजनमितः
कलितः कक्षागतेर्वेगः ॥ ४६ ॥

सत्रिप्रयुता द्वाविशतिकोट्यो
युतनवकप्रयुक्ताः ।
सार्धसहस्रोपेता रविता
मध्यान्तरं तस्य ॥ ४७ ॥

अयंशान्वितिषडशीत्यायुक्तैः
शतपञ्चकाब्दैश्च ।

त्रिंशत्सहस्रदिवसै सूर्यं
परितः परिभ्रमणम् ॥ ४८ ॥

अष्टाविंशत्यन्वितसप्तशनाढ्ये
सहस्रकत्रितयम् ।
सत्र्यंशं वरुणस्य व्यासो
वेगस्तु योजनत्र्यंशः ॥ ४९ ॥

कोट्यस्तु चतुस्त्रिंशत्प्रयुतानि
नवैव पंचलक्षाणि ।
षट्साहस्रसमेतायुतषट्-
काढ्यानि चान्तरं रवितः ॥ ५० ॥

सत्र्यंशद्वयसमाशीतियुतैः
षट्सहस्रदिनैः ।
सूर्यं परितो भ्रमणं वरुणास्योक्तं
विपश्चिद्भिः —॥ ५१ ॥

ग्रहाः प्रभापुच्छभृतोतिदीर्घ-
वृत्तैर्भ्रमन्तः परितः स्वसूर्यम् ।
उल्काः सृजन्तः पथि केतु
संज्ञाः परःसहस्रा गगने चरन्ति ॥ ५२ ॥

सूर्यान्तर केपिपरिभ्रमन्तः
सौरेत्र लोके विरलोपलम्भा ।
परिभ्रमन्तो रविमेतमेव
प्रायस्त्वनेकेव भवन्ति दृश्या ॥ ५३ ॥

एको भुवो द्वौ च कुजस्य
चन्द्रौ बृहस्पतेरष्ट शनेर्दशैव ।
चत्वार एवोरणकस्य दृष्टा
एकोद्य यावद्वरुणग्रहस्य ॥ ५४ ॥

पाण्डेय रामावतारशर्मा एम् ए,

---

# वेदान्तदर्शनम् ।

यत्सत्तया जगत्सत्यं भाति यज्ज्ञानतोऽखिलम् ।
तदेकं शाश्वतं ब्रह्म सच्चिदानन्दमाश्रये ॥

इहखलु परमकारुणिको मुनिर्बादरायणः कर्म्मकाण्डादितो यज्ञदानतपःस्वाध्यायादिकर्म्मभिर्विशुद्धाशयानां शमदमादिनिष्ठानां नित्यानित्य वस्तुविवेकेनेहामुत्रफलभोगविरागिणां मुमुक्षूणां मोक्षोपायमध्यात्मविद्यामुपदिदिक्षुः 'अथातो ब्रह्मजिज्ञासे' त्यादिभिर्ब्रह्मसूत्रैरखिलवेदान्तश्रुतिवाक्यानि संग्रथयामास । सोयं सूत्रग्रंथश्चतुर्भिरध्यायैर्ग्रथितो वेदान्तशास्त्रमिति ब्रह्ममीमांसेति वा व्यपदिश्यते । तत्र सर्वेषामेव वेदान्तवाक्यानां साक्षात्परंपरया वा प्रत्यगभिन्नाद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्यायेन दर्शितः। तत्र प्रथमे पादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारतानि ।द्वितीये पादे त्वस्पष्टब्रह्मलिङ्गानि ज्ञेयविषयाणि, एवं पादत्रयेण ब्रह्मविचारः समापितः । चतुर्थपादे तु प्रधानविषयत्वेन संदिह्यमानान्यव्यक्तादिपदानि चिन्तितानि । एवं वेदान्तानामद्वये ब्रह्मणि सिद्ध समन्वये तत्र संभावितस्मृतितर्कादिविरोधमाशंक्य तत्परिहारः कृत इति अविरोधो द्वितीयाध्यायेन दर्शितः तत्राद्यपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैश्च तर्कैर्विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीये पादे सांख्यादि मतानामल्पत्वम्प्रतिपादितम् । स्वपक्षस्थापनपूर्वकपरपक्ष निराकरणपुरः सरपर्वद्वयात्मकत्वाद्विचारस्य। तृतीयपादे महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः पूर्वभागेन परिहृतः उत्तरभागेन च जीवविषयाणाम् ।

चतुर्थपादेनेन्द्रियविषयकश्रुतीनाञ्च विरोधो निराकृतः, तृतीयाध्याये च साधननिरूपणम् तत्र प्रथमे पादे जीवस्य परलोकगमनागमनेन वैराग्यन्निरूपितम्। द्वितीयपादे पूर्वभागेनत्वम्पदार्थो निरूपितः उत्तरभागेन च तत्पदार्थः। तृतीयेपादे निर्गुणे ब्रह्मणि नानाशाखापठित एव गुणोपसंहारः कृतः प्रसङ्गात्सगुणाविद्यासु शाखान्तरीयगुणोपसंहारश्चोपपादितः। चतु-

र्थपादे निर्गुणब्रह्मविद्यायां बहिरङ्गसाधनान्याश्रमयज्ञादीन्यन्तरङ्गसाधनानि शमदमनिदिध्यासनादीनि च प्रतिपादितानि, चतुर्थाध्याये सगुणनिर्गुणविद्ययोः फलनिर्णयश्च समुपपादितः। तत्र च प्रथमे पादे श्रवणाद्यावृत्त्या उपासनावृत्त्या च निर्गुणं ब्रह्म साक्षात्कृत्य जीवस्य पुण्यपापालेपलक्षणा जीवन्मुक्तिरभिहिता। द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः। तृतीयपादे सगुणब्रह्मविदो मृतस्योत्तममार्गो भिहितः। चतुर्थपादे पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता, उत्तरभागेन च सगुणब्रह्मविदो ब्रह्मलोकगमनास्थितिः प्रतिपादिताः। इदमेव सर्वशास्त्राणां मूर्द्धन्यं शास्त्रं, शास्त्रान्तरन्तु सर्वमस्यैव शेषीभूतमिति। इदमेव च मुमुक्षुभिरादरणीयं श्रीशंकरश्रीमध्वश्रीरामानुजश्रीवल्लभादिमुनिदर्शितमार्गेण यथारुचिरिति।

तत्रश्रीमद्भगवत्पूज्य पादाःश्रीशङ्कराचार्याः श्रीकृष्णद्वैपायन श्रीगोविन्दपादादिमतमनुसृत्यैवाहुः चोदनालक्षणात्मकधर्म्मानुष्ठानानन्तरसञ्जातान्तः करणशुद्धौ समुदेति प्राणिनाम्मुमुक्षाविषयकविमर्शविचारः। स च लौकिको ऽलौकिकश्चेति तत्रलौकिकस्तु प्राकृतिकपदार्थसाक्षाद्धेतुर्विषयोऽलौकिकस्तु ब्रह्मसाक्षात्काकारणरूपस्तद्यथा "तरति शोकमात्मविद्" 'आत्मविदाप्नोत्येव भवति' 'ज्ञानादेव तु कैवल्यम्' "ऋतेज्ञानान्नमुक्तिः" इत्यादिश्रुतिवाक्यैर्बोधितस्यसफलस्य ब्रह्मज्ञानस्य साधनं श्रवणमिति "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इतिश्रुतिर्बोधयति। श्रवणञ्च वेदान्तवाक्यानां ब्रह्मणि तात्पर्यावधारणानुकूलविचाररूपम्। तेन निर्विचिकित्सं ब्रह्मज्ञानं सम्पद्यते। तदेव च समस्तदुःखोपशामकमानन्दैकरसस्य परमप्रयोजनं सूचितमस्यशास्त्रस्याथातोब्रह्मजिज्ञासेति प्रथमसूत्रेण। ब्रह्मजिज्ञासापदोपस्थाप्यस्य ब्रह्मज्ञानस्यैव साक्षादिच्छाव्याप्यत्वाऽवगमात् कर्मज्ञानोत्तरमनुष्ठानस्येव ब्रह्मज्ञानोत्तरभाविनः कस्यचिदवशिष्टार्थस्याभावाच्च। तदेतद्ब्रह्मज्ञानं वस्तुतः प्राप्तमप्यनाद्यविद्यावशादप्राप्तकल्पमतः प्रेप्सितं भवति। यथा स्वग्रीवागतमणिग्रैवेयकं कुतश्चिद् भ्रमान्नास्तीति मन्यमानः परेण प्रतिबोधितोऽप्राप्तमिव प्राप्नोति।

ब्रह्मज्ञानं न ब्रह्मसाक्षात्कारकारणम्। लोके कृतश्रवणस्यापि बहुशस्तदनुत्पत्तिदर्शनात्, अकृतश्रवणस्यापि वामदेवादेर्गर्भवास एव तदुत्पत्तिदर्शनाच्चान्वयव्यतिरेक व्यभिचारादिति-मन्यन्ते केचन तन्न विचारसहम्। सहकारिवैकल्येनान्वयव्यभिचारस्य दोषत्वाभावात् जातिस्मरस्य वामदेवादेर्जन्मान्तरीयश्रवणसिद्धत्वात्फलसम्भवेन व्यतिरेकव्यभिचारायोगाच्च किञ्च कृतश्रवणस्य प्रथमतः शाब्दं परोक्षज्ञानमेवोपजायत इत्यपि केषाञ्चिन्मतन्न समीचीनम् यतः शब्दस्य परोक्षज्ञानजननस्वाभाव्यात्। ततो मननिदिध्यासनाभ्यामेवापरोक्षज्ञानं भवति। तथा च समुदितानामेषां त्रयाणां ब्रह्मसाक्षात्कारकारणत्वमुदाहृताः श्रुतयो बोधयन्ति, न तु प्रत्येकमिति, तत्कथमेकस्यैव

श्रवणस्य ब्रह्मसाक्षात्कारकारणत्वमङ्गीक्रियत इत्यपि न सुष्ठुतरम्। यतः सन्निकृष्टयोग्यवस्तुविषयकस्य यावत्प्रमाणजन्यज्ञानस्य प्रत्यक्षत्वाभ्युपगमात्। चक्षुःसन्निकृष्टस्य वन्हेः सत्यामनुमित्सायामनुमानजन्यज्ञानस्य प्रत्यक्षत्वादव्यभिचार इति। केनचिन्निमित्तेन व्याधकुलसंवर्द्धितस्य राजकुमारस्य स्वीयं यथार्थस्वरूपमजानतः कदाचित्प्राप्तावसरे राजकुमारस्त्वमसीत्याप्तवाक्यात् स्वरूपसाक्षात्कारोदयदर्शनाच्च। शब्दानामप्यपरोक्षज्ञानजननक्षमत्वमस्त्येवेतिच्छ्रुतिविहितानां श्रवणादीनां तृणारणिमणिन्यायेनास्ति प्रत्येकस्य ब्रह्मसाक्षात्कारहेतुत्वमिति।

श्रुतिबोधितश्चायं श्रवणविधिर्नियमविधिः, दृष्टार्थत्वात्। तथाचोक्तं "आवृत्तिरसकृदुपदेशादि" तिसूत्रभाष्ये दर्शनपर्यवसानानि हि श्रवणादीनि, आवर्त्तमानानि दृष्टार्थानि भवन्ति यथाऽवघातादीनि, तण्डुलनिष्पत्तिपर्यवसानानीति श्रवणस्य ब्रह्मापरोक्षानुभवार्थस्य दृष्टार्थतया दर्शपौर्णमासिकावघातन्यायप्राप्त्यावृत्त्युपदेशः। अपूर्वविधित्वे तु स नोपयुज्यतेति बोध्यम्॥

संदिग्धं हि वस्तु विचारविषयंभवति ब्रह्म तु न संदिग्धं। बृहत्वाद् बृंहणत्वाद्वा आत्मैव ब्रह्मेति गीयते। स चायमात्मा सर्वेषां प्राणिनामहमस्मीत्यहंप्रत्ययेनासंदिग्धापरोक्षानुभवसिद्ध एवेति विफलोयमुपक्रम इति वदन्तोऽवधारयन्तु। यद्यहंप्रत्ययेनानुभूयमानमात्मवस्तु नियताकारं स्यात्तदात्वसंदिग्धं स्यात्, नचैतदस्ति। तथाहि "स्थूलोहं कृशोहं" इत्यहंप्रत्ययोदेहाकारेणात्मानं गृह्णाति, स्थूलत्वादेर्देहधर्मत्वात्। तथाबधिरोहमन्धोहमित्यहंप्रत्यय इन्द्रियाकारेणात्मानं गृह्णाति वधिरत्वादेरिन्द्रियधर्म्मत्वात्। तस्मादनियताकारस्यैव वस्तुनोऽहंप्रत्ययेनावगतत्वात्सन्दिग्धता सुस्थैव, किञ्च एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्म्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलोनिर्गुणश्च" इति। अयमात्मा ब्रह्मेति चैवमाद्याः श्रुतयः समस्तोपाधिशून्यमद्वितीयं ब्रह्म वस्त्वात्मत्वेनोपदिशन्ति। अहंप्रत्ययस्तुप्रादेशिकमनेकविधदुःखशोकादिप्रपञ्चोपप्लुत मात्मानम्प्रत्याययति, तथाचात्मवस्तु संदिग्धमेवेति भवत्येव विचारस्य विषय इति। तत्रापौरुषेयतया निरस्तसमस्तदोषाशङ्केन स्वतः सिद्धप्रमाण्येन श्रुतिवचनेन विरुद्धत्वादप्रामाण्यमुमनुष्योहमित्यादिरूपस्याहंप्रत्ययस्येत्यवसीते। एवं च देहादितादात्म्याध्यासेन स्थूलोहमित्यादिरूपोहं प्रत्ययो भ्रांतिविलसितः सोपप्लवमात्मानमव्यवस्थितमवगमयतीतिभावनीयम्।

केचित्त्वपुरोवर्त्तिनि निरवयवे नीरूपे च चिदात्मनि देहादिविषयस्य तद्धर्म्माणाञ्चाध्यासो न घटते: सर्वो हि पुरोवर्त्तिनि सावयवे रूपवति च विषये विषयान्तरमध्यवस्यतीत्याहुः, तन्न समीचीनम् यतोऽध्यासहेतोर्दोषस्य निरर्गलत्वात्। नचायमस्ति नियमः पुरोवर्तित्वादिविशिष्ट एव विषये विषयान्तरमध्यवसितव्यमिति। अतादृशेप्याकाशे यतो बालास्तल

मलिनताद्यध्यवस्यन्ति, एवमविरुद्धः प्रत्यगात्मन्यप्यनात्मदेहादितादात्म्याध्यासइति।

किमेतस्य लक्षणं निर्वचनमितिचानेकविधवादिविप्रतिपत्तिभिरध्यासलक्षणनिर्णयस्य संदेहसागरे निमग्नत्वान्न शक्यते तन्निर्वक्तुम्। तथाहि मिहिरमरीचिनिकरे मिथ्याज्ञानेन प्रतीतं सलिलं न सत्, यतः सद्वस्तुनो ज्ञानान्तरसहस्रेणापि निवर्तयितुमशक्यत्वेन निवृत्यभावप्रसंगात्, तथा सति गङ्गासलिलस्येवाध्यस्तसलिलस्यापि पिपासोपशामकत्वमापद्येत। अनुभवविरोधाच्चाङ्गीकर्तुमुचितमध्यस्ता सलिलस्य पिपासोपशामकत्वम। नहि कश्चिल्लोके गंगासलिलमिव मरीचिसलिलं निपीय वीततृष्णो दृश्यते। असदपि न संभवति यथा निरस्तसमस्तस्वरूपस्यात्यन्तासतो वन्ध्या पुत्रस्येवाध्यस्तसलिलादेरनुभवविषयत्वाऽनुपपत्तेः।

परस्परविरोधादुभयात्मकमपि न, तस्मान्न मरीचिसलिलादिकं सदसदुभयात्मकं वेतिनिर्वक्तुं शक्यते। किन्तु परमार्थ सलिलादेर्भिन्नं किमप्यनिर्वचनीयमपूर्वमेव तदिति स्थिरी क्रियते। तथाचोक्तं वार्तिककारैः "शुक्तिज्ञान प्रकाशत्वान्न भ्रान्तेरस्ति लक्षणम। यदि स्याल्लक्षणं किञ्चिद् भ्रान्तिरेव न सिध्यति"।

आरोप्यस्य च न सत्वमध्यासेऽपेक्षितं, किन्त्वप्रतीतस्यारोपायोगात्प्रतीतिमात्रम। एवं च कूटकार्षापणादिना व्यवहारदर्शनात् पूर्वपूर्वमिथ्याज्ञानोपस्थापिता देहादिप्रपञ्चस्य प्रतीतिरुत्तरोत्तराध्यास उपेक्ष्यते। यद्यपि देहादि प्रपञ्चस्य प्रतीतिरित्यन्योन्याश्रय आपतति, तथापि नायं दोषः। बीजाङ्कुरवत् संसार प्रवाहस्यानादित्वेन तत्कारणस्याध्यासस्याप्यनादित्वात्। तदेवमपरिच्छिन्ने चैतन्यैकरसेऽद्वितीये प्रत्यगात्मन्यध्यस्तो निखिलोऽन्तःकरणादिजडवर्गश्चेतनवत्सद्रूपेणावभासते, प्रत्यगात्मा चान्तःकरणादिष्वध्यस्तोऽन्तःकरणाद्यवच्छिन्नः प्रादेशिको जडवदवभासमानः सन् कर्ता च भोक्ता चाहङ्कारास्पद उपजायते। सोयमनिर्वचनीयो मिथ्याज्ञानविलासोऽनादिरपार इतरेतराध्यासः सर्वानर्थमूलकारणं न शक्यते तत्वज्ञानमन्तरा समूलघातं हन्तुम्। तस्मादपरैरनन्तर्यदीर्घकालाभ्यासजन्मना तत्वज्ञानसंस्कारेणानन्तजन्मान्तरप्रणालिकागतः सुदृढोऽपि मिथ्याज्ञानसंस्कारः समूलघातं हन्यत इत्युपदिशति मातेव हितकारिणी श्रुतिः "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्सर्वमात्मनि पश्यतीति च।

अथ विचारणीयस्य ब्रह्मणो जगत्कारणत्वरूपं लक्षणं श्रुतिराचष्टे, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति"। तत्र ब्रह्मणो जगत्कारणत्वं, न परमाणूनामिवारम्भकत्वरूपं, नवा प्रकृतेरिव परिणामित्वरूपं, किन्तु मायया व्योमादिरूपेण विवर्त्तमानत्वलक्षणम। तथाचेन्द्रजालस्येव जगतो मायिकत्वेन तात्विकसत्ताशून्यत्वान्नेयं श्रुतिर्जगद्ब्रह्म-

णोर्वास्तविकं कार्यकारणभावमभिधत्ते किन्त्वौपचारिकमेव । अत एव श्वेताश्वतरोपनिषदि "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्ये मायया सन्निरुद्धा, इति, न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचे" तिसमाम्नातं संगच्छते । यथा हि लोकप्रसिद्ध ऐन्द्रजालिको मायावी मणिमन्त्रादिप्रयोगसंलभ्यमानया मायया प्रेक्षकाणां विस्मयकरमिन्द्रजालं सृजति तथामायावी महेश्वरोऽनन्तशक्तिर्निर्व्यापार एव स्वेच्छामात्रेणाखिलं जगत्सृजति । तदुक्तं मानसोल्लासे सुरेश्वराचार्यैः । "ईश्वरोऽनन्तशक्तित्वात् स्वतन्त्रोऽन्यानपेक्षकः । स्वेच्छामात्रेण सकलं सृजत्यवति हन्ति च । न कारकाणां व्यापारात्कर्त्ता स्यान्नित्य ईश्वरः । नापि प्रमाणव्यापाराज् ज्ञाताऽसौ स्वप्रकाशकः । ज्ञातृत्वमपि कर्तृत्वं स्वातन्त्र्यं तस्य केवलम ।

या चेच्छाशक्ति वैचित्री सास्य स्वच्छन्दकारिता
यथा कर्त्तुंञ्च वा कर्त्तुमन्यथाकर्त्तुमर्हति,
स्वतन्त्रामीश्वरेच्छां के परिच्छेत्तुमिहेशते ॥

अथ सकलस्य विश्वस्य मायाविलसितत्वाऽविशेषे जीवेश्वरविभागो न संभवतीति कथनन्तु न युक्तम् । यत एकापि गुणत्रयवतीच्छाशक्ती रजस्तमोऽनभिभूतशुद्धसत्वगुणप्रधाना सती मायेति, रजस्तमोऽभिभूतमलिनसत्त्वप्रधाना च सत्यविद्येत्यभिधीयते । ततश्च मायोपाधिकं चैतन्यमीश्वर. अविद्योपाधिकं चैतन्यं जीव इत्यभिधीयते । विशुद्धेरेकविधत्वाच्छुद्धसत्वप्रधानमायाया एकत्वेन मायाविन ईश्वरस्याप्येकविधत्त्वम् । मालिन्यस्य तारतम्येन मलिनसत्त्वप्रधानाया अविद्याया नानात्त्वात् तदुपाधिकस्य जीवस्यापि देवमनुष्यतिर्यगादिप्रभेदेन नानात्त्वं । तत्रेश्वरः सर्वज्ञः स्वतन्त्रः सर्वस्य नियन्तास्ति । तदुपाधेर्मायायाः शुद्धसत्त्वप्रधानत्वात् । जीवस्तु न तथा मलिनसत्त्वप्रधानयाऽविद्ययोपहितत्वात् ।

एवञ्च कौन्तेयस्येव राधेयवदविकृतस्यैवात्मनः स्वाविद्ययाजीवभावः । तथा च राजकुलवर्द्धितराजकुमारदृष्टान्तेन जीवः स्वाविद्यया संसरति स्वविद्यया च मुच्यत इति बृहदारण्यकभाष्ये निर्णीतमाचार्यवर्यैः । अविकृतस्यैव चात्मनो मायाकल्पितैरेव सर्वनियन्तृत्वादिधर्मविशेषैरीश्वरभाव इति तत्वम् । ततश्च सदसद्भ्यामनिर्वचनीय ज्ञानविरोधि भावरूपं मूलाज्ञानमेवमूलप्रकृतिरितिमायेत्याविद्येतिमिथ्याज्ञानमित्यादिशब्दैरभिलप्यते, तदेवच मूलाज्ञानं सकलद्वैतप्रपञ्चस्य मूलं जीवेश्वरभेदऽपिकारणं भवति । तद्यथा स्वभावेनानवच्छिन्न आकाशे घटमुपाधिं निमित्तीकृत्य तत् क्रोड़ाकृतत्वेनांशं कल्पयित्वा घटाकाशइत्येको विभागः, घटाद्बहिरिति शब्दमात्रनिबन्धनो महाकाश इत्यपरो विभागः। परमार्थतस्तु नासौ विभागः संभवति । अमूर्त्तस्याकाशस्य केनचित्परिच्छेदायोगात् । तथा देहे नाहं मनुष्य इत्यादिप्रकारेण विशेष्यमाणो यो जीवात्मेत्युच्यते, स एव तेनाविशेष्यमाणः परमात्मे-

तीश्वरइति च गीयते । निरंशे चिदात्मन्यन्यावच्छेदस्य परमार्थतोऽनुपपत्तेर्जीवेश्वरयोर्न वास्तविको विद्यते भेदः । तथा चोक्तं विद्यारण्यस्वामिभिः ।

मायाख्यायाः कामधेनो,
र्वत्सौ जीवेश्वरावुभौ ।
यथेच्छं पिवतां द्वैत,
तत्वं त्वद्वैतमेव हि ॥

अथ घटोस्ति घटः स्फुरतीत्यादिना घटादिसत्वस्फुरणग्राहकेण प्रत्यक्षानुभवेन विरोधादागमशतैरपि गतं द्वैतप्रपञ्चस्य मिथ्यात्वमवधारयितुं शक्यते । ज्येष्ठत्वाच्च प्रत्यक्षस्य प्रमाणान्तरेभ्यः । अत एव दीर्घकालं देशान्तरे गुरुकुले च वसतः पुत्रादेः परोक्षस्य विद्यानैपुण्यं जनाच्छृण्वन्नपि पित्रादिर्न यावत् तत्साक्षात्करोति तावन्न श्रद्दधाति । नोचितमिदं वक्तुं, प्रत्यक्षदृष्टस्यापि वस्तुस्वरूपस्य बहुशो व्यभिचारदर्शनात् । तथा चोक्तम् ।

तलवद् दृश्यते व्योम,
खद्योतो हव्यवाडिव ॥
न तलं विद्यते व्योम्नि,
न खद्योतो हुताशनः ॥
वितस्तिमात्रं गगने,
प्रत्यक्षेणेन्दुमण्डलम् ॥
दृश्यतां बालिशैस्तत्र,
प्रमाणं शास्त्रदर्शितः ॥

किञ्च नभसि निलिमा सोमतेजसि शैत्यमित्येवंविधा प्रतीतिस्तु तत्र पार्थिवगुणारोपेण भवति नभस्तु शब्दमात्रगुणकं शैत्यमपां गुणस्तेजस्तूष्णस्पर्शगुणकमित्येवं व्यवस्थाया आगमं विना केवलं प्रत्यक्षमवलंब्यास्मदादिभिः कर्त्तुमशक्यत्वादागमस्यैव निर्विशङ्कं प्राबल्यमास्थेयम् । पृथिव्यादिभूतानां प्रायः परस्परं संसृष्टतयाऽन्यगुणस्यान्यत्राप्यवभासः सम्भवतीति शङ्कितदोषं प्रत्यक्षं तत्रागमेन बाध्यतामिति केषाञ्चिदुक्तिर्नसमीचीना, यतः प्रकृतेऽपि ब्रह्मप्रपञ्चयोरुपादानोपादेयभावेन परस्परं संसृष्टत्वाद् ब्रह्मसत्यत्वस्य प्रपञ्चेऽवभासः सम्भाव्यत एवेति शङ्कितदोषं घटादिसत्यत्वग्राहकं प्रत्यक्षं "सत्यंज्ञानमनन्तं ब्रह्म "सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन" इत्याद्यागमैर्बाध्यत एवेति तुल्यम् यत्तु घटादेः सत्वं प्रकाशमानत्वं वा प्रत्यक्षेण गृह्यते, तत्तु सच्चिदात्मब्रह्मनिष्ठमित्यवधारयितुं शक्यते । आगमसिद्धेऽस्मिन्नर्थे प्रमाणमनुमानमपि वरीवर्त्ति । तथाहि घटादयो भावा न स्वतः सत्तावन्तः कदाचिदेवोपलभ्यमानत्वात् मृगजलादिवत् । तथा घटादयो न स्वतः प्रकाशमाना अन्याधीनसत्ताकत्वात् शुक्तिरजतवत् इति । एवञ्चारोपितस्य मृगजलादेरधिष्ठानभूतमरीचिव्यतिरेकेण स्वरूपाभावाद् यथा नातिरिक्तौ सत्ताप्रकाशौ तथैवारोपितस्य द्वैतप्रपञ्चस्याधिष्ठानभूतब्रह्मव्यतिरेकेण स्वरूपाभावान्नातिरिक्तौ सत्वप्रकाशौ, किंतु सच्चिदात्मन्यध्यस्तात्त करणमस्वच्छेन्द्रियप्रणालिकया सच्चिदात्मन एवसत्ताप्रकाशौ जडान् विषयान् व्याप्नुतः यदि मन्यसे विषयाः

स्वयमेव सन्तः प्रकाशन्त इति तदाह जाना-मीति ज्ञानाश्रयत्वेन विषयानुसंधान स्फुरण-मनर्थकं स्यात्। माभूत्स्फुरणमित्यपि न, सुषु-प्ताविव जागृतावपि जगदस्फुरणम्भवेत्। तथा सति सर्वव्यवहारलोपः प्रसज्येतेति दुर्निवारं विषममुपस्थितं संभाव्येत। तस्माज्जगतः स्फु-रणमन्याधीनमित्यनिच्छताप्यच्छमतिना त्व-याऽभ्युपगन्तव्यम्। ततश्च यद्यदधीनसत्तास्फु-र्त्तिकं, तत् तस्मिन् कल्पितं, यथा जलाधीनस-त्तास्फूर्त्तिकं तरङ्गबुद्बुदादिकं जले परिकल्पि-तं तथेदंविश्वमपि सच्चिदात्मन्येवकल्पितमिति विदाङ्कुर्वन्तु कृतबुद्धयो विद्वांसः।

क्रमशः

स्वामी श्री रामकृष्णानन्द गिरिर्विधिवरा।

## भाषातत्वम्

हृद्गतभावव्यञ्जका ध्वनिविशेषो भाषा नाम। प्राणिना येन साधनेनात्मना मनागतं सुखदुः-खादिकं प्रकाशयन्ति सैव भाषेति व्यपदिश्यते। यथा सृष्टेराद्यन्तशून्यता तथा भाषाया अपीति निर्विशङ्कं वक्तव्यम्। नादमूला भाषेति प्राच्य-शास्त्रविदां समयः। ब्रह्म, नादश्चेत्यनर्थान्तम्। सच्चिदानन्दविभवात् सकलात् परमेश्वरात् आसीच्छक्तिस्ततो नादस्तस्माद्बिन्दुसमुद्भवः। नादो विन्दुश्चवीजश्च स एव त्रिविधो मतः, भि-द्यमानात् परात् विन्दोरुभयात्मा रवोऽभवत्। सरवः श्रुति सम्पन्नः शब्दो ब्रह्मा भवत् पुनः।

नादात्मनो ब्रह्मणो द्विविधं रूपमाम्नायते। अव्यक्तश्च व्यक्तश्च। प्रणवात्मको नादोऽव्यक्तः, वैखरीति प्रसिद्धा अर्थबोधनक्षमा वाक्यरूपा भाषा व्यक्ता प्रणवपरब्रह्मणारभेदतां सिद्धान्त-यन्ति शास्त्रकृत। येन ध्वनिनात्मनो हृद्गतो भावः परेभ्यः प्रत्याययितुं शक्यते, सैव भाषेति फलितोऽर्थः। इत्थं यथा मानवानां भवति भाषा, तथा पशुपक्ष्यादीनां कीटादीनामपि भाषा भवत्येव। पाश्चात्यवैज्ञानिकास्तु उद्भिज्जाना-मपि भाषा भवतीति निरूपयन्ति।

अशेषाणामेव प्राणिनामात्मनः सुखदुःखादि प्रकाशनौपयिकी अस्ति नैसर्गिकी शक्तिः। यथा तथा वा भवतु, यः कोऽपि वा प्रकारो भवतु, परं सर्वे स्वस्वबन्धूनां समीप आत्मनो हृद्गतं भावं प्रकाशयन्त्येव। निखिलानां प्राणिनां स्वरयन्त्रस्यास्ति तथाविधा रचना, यया ते निखिला अप्यात्मनो भावं प्रकाशयितु क्षमेरन्। वत्सस्य हम्बारवं निशम्य तमनुधा-वति तस्य स्नेहमयी जननी। कोटरस्थितानां मध्ये मध्ये स्खलच्छिरोधरामुन्नमय्य पित्रोरा-गमनं प्रतीक्षमाणानां शावकानां चूङ्कृतं नि-शम्य किं तदीयः पिता वा जननी वा स्थिरौ क्षणमपिस्थातुं पारयतः? न केवलं समान-जातीयेष्वेव प्राणिनां भाषया हृद्गतभावप्रका-शनप्रयासो दृश्यते, किन्त्वेकजातीयो जन्तुरप-रान् जन्तून् स्वीयं भावं प्रत्याययितुं स्वीयां भाषा-मेव प्रयुङ्क्ते। पशवोऽपि मानवान् प्रति शत्रुत्वं मित्रत्वं वात्मनो भाषयैव प्रकाशयन्ति, किमुत मनुष्याः। मदमत्तस्य केशरिणो गर्जनं निशम्य भवन्तिभीता वन्या पशवः, तदा त आत्मनो भीतिमपि शब्देनैव प्रकाशयन्ति। स्वजातीयस्य

कस्यचिदानन्दध्वनिं श्रुत्वातेऽप्यानन्दध्वनिना तं स्वागतीकर्तुं न विरमन्ति। निखिलेष्वपि प्राणिष्वेतत् सर्वैरवानिशं प्रत्यक्षीक्रियत एव। एतेन निखिलानां प्राणिनामस्ति भाषेति शक्यत एष सिद्धान्तो व्यवस्थापयितुम्। अतः सन्ति बह्व्यो भाषा इति फलितम्। यावन्तः प्राणिनस्तावत्यो भाषा इति युक्तमुक्तं भवति, तास्वेकैकासु भाषासु दृश्यन्ते बहवो भेदाः. अन्यप्राणिनां भाषा मानवभाषातो भिन्ना एव। मानवभाषाऽपि पुनर्देशभेदात् सम्प्रदायभेदाद् वृत्तिभेदाच्च भिद्यते बहुधा, परमन्यप्राणिभाषापेक्षया मानवीया भाषा निखिलैर्गुणैः पूर्णा इति सर्वैः प्रतिपद्यते। यथा मानवः स्वीयं भावं प्रकाशयितुं शक्नोति, न तथाऽपरे प्राणिनः। ग्रीकदार्शनिक पण्डित अरिष्टटलो विलिखति—"भाषयैव मानवो न्याय्यमन्याय्यञ्च, सत्यञ्चार्थमपरान् प्रत्याययति। हिताहिते विवेक्तुं प्रभवति, अन्यप्राणिभ्यो बुद्ध्या ज्ञानेनचायं श्रेष्ठ इति मानव उच्चां भाषां व्यवहरति"।

कथं भाषासमुत्पन्नेति प्राच्याः पाश्चात्याश्च पण्डिता अत्र भिन्नभिन्नं मतं प्रकाशयन्ति। प्राच्या वदन्ति दैवीशक्तिसमुत्पन्ना भाषा, केचन मानवसृष्टा भाषेत्यात्मनो मतं व्यवस्थापयितुं प्रयतन्ते। इत्थमात्मनो मतमभिव्यञ्जयन्ति ते—सृष्ट्यनन्तरं निखिला वाक्शक्तिविरहिता आसन्, तदा तेऽङ्गभङ्ग्या सङ्केतेन च मनोभावं प्रकाशयन्तिस्म, यदाङ्गभङ्ग्या सङ्केतेन चात्मनो निखिलं भावं प्रकाशयितुं नाशकंस्तदा तेषां हृदि समुत्पन्नो मनोभावव्यञ्जनक्षमः कोऽपि ध्वनिर्नाम तेनैव ध्वनिना यथा कथञ्चिन्मनोगतभावप्रकाशनाय तदा ते प्रायतन्त। तदानीं तैः प्रयुज्यमानाः शब्दाः परस्परम सबद्धा आसन्। तदा दुःखप्रकाशनाय "अः, उः, इत्यादय शब्दाः प्रयुज्यन्ते स्म, सुखबोधकाश्च "वाः अहा, इत्यादीनां प्रयोगः साधु गण्यते स्म। त एव शब्दाः साम्प्रतं निपाता अव्ययमिति च व्यपदिश्यन्ते। अनयाऽपि प्रणाल्या यदा ते साकल्येन स्वीयं मनोगतं भाव प्रकाशयितुं नाशकंस्तदा द्वौ त्रयो वा तथाविधाः शब्दा एकत्रीकृत्य भावव्यक्तये प्रयत्नमन्वतिष्ठन्। इत्थं क्रमशः पूर्तिमासाद्यन्ती रूपपरिस्कृतिमनुभवन्ती च काले मानवानां कापि मनोरमा भाषा समजायत। इत्थमेव पाश्चात्या भाषातत्वविदो भाषाया उत्पत्तिमुपवर्णयन्ति, सन्ति तत्रतत्रत्यास्तन्मतसमर्थका बहवो विद्वांसः। परं तद्देशीया एव तत्वविदो विद्वांसो मतस्यास्य सत्यत्वमङ्गीकर्तुं न पारयन्ति। तेवदन्ति ईश्वरसृष्टा भाषेति। तेनैव निखिलानां पदार्थानां नाम निहितम्। तेषां मते "आदम" (पाश्चात्यानां मनुः) एव प्रथमं भाषामधीतवान्। इदं मतमनुहरति प्राच्यभाषातत्वविदां मतमिति सुस्पष्ट एव। अन्येत्वनयोःपक्षयोरसारतां प्रदर्शयन्तोऽन्यमेवभाषोत्पत्तिप्रकारमुपवर्णयन्ति तेषामयमाशयः—"निसर्गत एव समुत्पन्नेयं मानवानां भाषा। नहि भाषोत्पत्तौ कदाचिदपिमानवप्रयत्नोऽपेक्षितोऽभवत् नापीश्वरो मानवान् भाषामशि-

त्ययत्। मानवानां मनःशरीरयोर्गठनमनुसृत्य स्वत एव भाषा समुद्भवति। मनुष्यो यथा स्वत एव परिभ्रमणं शिक्षते भुङ्क्ते, स्वपिति तथैव भाषाऽपि स्वत एव तेषां वदनकुहाराद्विनिःसरति यथा मानवः शरीरावस्थाः परिवर्तयितुं न शक्नोति, किन्तु स्वत्व एव बाल्यात् परं यौवनं प्रादुर्भवति, तथैव भाषापि स्वभावत एव समुद्भवति; किञ्च सामाजिकी अवस्था एव मानवानां हृदि भाषाङ्कुरं विकाशयति। स्वजनानां पुर आत्मनो मनोगतभावप्रकाशनाय समुत्कंभवति निखिलानां चेतः। इदमेव भाषाया उत्पत्तौ प्रथमं कारणम्। आत्मा शरीरेण तथासंबद्धो, येनात्मनीषदपि विकारे जाते शरीरे स्वरयन्त्रे वागयन्त्रे च तत्प्रतिफलति यथा परस्परसंबद्धासु तन्त्रीष्वेकापि तन्त्री यदाहन्यते, तदापराः स्वतः क्रमान्त्यः कम्पन्ते—प्राह च यथा पाणिनिः शिक्षायाम्—

"आत्मा बुद्ध्या समेत्यार्थान मनो युङ्क्ते विवक्षया, मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। मारुतस्तूरसि चरन मन्द्रं जनयति स्वरम्" इति ॥

आत्मसमुन्मेषान मनसोऽभिघातवशाद् वागयन्त्राभिघातनिष्पन्नो ध्वनिर्भाषेति निष्कृष्टोऽर्थः।

पृथिव्याः निखिला भाषाः साकल्येन गणयितुः कःशक्नोति, केवलं भारते या भाषा व्यवह्रियन्ते, तासामपिसंख्यानिर्धारणं प्रायो दुःशकम्। तथापि प्राधान्येन द्विधा विभज्यते भाषा, एकया लिख्यते, तस्या न बहवो भेदाः सम्भवन्ति, परं कथनभाषा प्रतियोजनानन्तरमेव नवनवां मूर्तिमासादयन्ती दुर्बोधितामधिगच्छति। अत्र तावद्बहूनि निमित्तानि, यानि कथनभाषां परिवर्त्तयन्ति। कालभेदात् सामाजिकावस्थानभेदात्कालात्ययाच्च भिद्यते भाषा। या भाषा भारते पुरा व्यवह्रियते स्म, न तस्याः साम्प्रतं व्यवहारो दृग्गोचरी भवति। न सा भाषा लुप्ता, परं सा साम्प्रतं परिवर्तितस्वरूपाऽपरैव कापि भाषा संवृत्ता अद्यया भाषा व्यवह्रियते सापि रूपान्यत्वमासाद्य विलयमेष्यति कालान्तर इत्यत्रापि नास्ति नः स्तोकोऽपि सन्देहः। अतः कथनभाषाणामितिहासः साम्प्रतं लब्धुं न शक्यते, कथं वा ताः पर्यालोच्येरन्। अतो लेखनभाषास्वरूपनिरुपणायैव किञ्चित् प्रयतामहे। तथाहि बृहद्धर्मपुराणे—

"अतो वाचः ससर्जादौ ब्रह्मरूपा न संसयः, अकारादिस्वरांश्चैव ककारादिहलांस्तथा। परस्परञ्च मिलितान् वर्णानेतान् समासृजत् ततो भाषाश्च ससृजे पञ्चाशत् षट् च संख्यया तज्ज्ञानाय च बालानां तत्तद्व्याकरणानिच पदज्ञानं व्याकरणैरर्थज्ञानञ्च दर्शनैः"।

आसां भाषाणां लक्षणोदाहरणे तत्रैव निरूपिते, अतस्ते तत्रएवावसेये। प्राकृतलङ्केश्वर व्याकरणे व्याकरणनियमिता अष्टादश भाषाः समुल्लिखिता दृश्यन्ते। ता यथा—संस्कृतप्राकृते, औदीची महाराष्ट्री, मागधी, मिश्रार्द्धमागधी, शाकभीरी, श्रावस्ती द्राविडी, ओड़िया पञ्चाली, प्राच्या वाल्हीका, रन्तिका

दाक्षिणात्या, पैशाची, आवन्ती, शौरसेनी च, आसां लक्षणोदाहरणे लङ्केश्वरस्य प्राकृतव्याकरणे प्रदर्शिते।

"ललितविस्तर" नामको निबन्धो बौद्धानां मान्यतमः। तत्र हि बुद्धदेवसम्पृक्ताः बह्व्यः कथाः समुपवर्णिताः। बुद्धदेवं शिक्षयितुमाचार्यविश्वामित्रो यावत् तत् समीपमागच्छति, ततः प्रागेव तेन चतुःषष्ठीः वर्णमालाः शिक्षिताः। ललितविस्तरनामको ग्रन्थः खृष्टजन्मतः पूर्वमेव निर्मितोऽभवत्। खृष्टजन्मतः सहस्रद्वयवत्सरेभ्यः पूर्वं ग्रन्थोऽयं निर्मित इति पाश्चात्यपण्डितानां सिद्धान्तः। तस्य दशमेऽध्याये बुद्धदेवाधीता लिपय इत्थं प्रदर्शिताः।

"ब्राह्मीं, खरोष्ट्रीं, पुष्करसारीम्, अङ्गलिपिम्, मागधलिपि, माङ्गल्यलिपिं, मनुष्यलिपिं, अङ्गुलीयलिपिम्, शकारिलिपिम् ब्रह्मवल्लीलिपिम्, किनारिलिपिम्, दक्षिणलिपिमुग्रलिपिमनुलोमलिपिं अर्द्धधनुलिपिं, दरद लिपि, खास्यलिपिं, चीनलिपिं, हूणलिपिं, मध्याक्षरविस्तरलिपिं, पुष्पलिपिं, नागलिपिं यक्षलिपिं, किन्नरलिपिं, महोरगलिपिं, असुरलिपिं, गरुडलिपिं, मृगचक्रलिपिं, वायुमरुल्लिपिं, भौमदेवलिपिं उत्तरकुरुद्वीपलिपिम् अपरगोडादिलिपिं पूर्वविदेहलिपिमुत्क्षेपलिपिं निक्षेपलिपिं, विक्षेपलिपिं, प्रक्षेपलिपिं, सागरलिपिं, वज्रलिपिं लेखप्रतिलेखलिपिम्, अनुद्रुतलिपिं, शास्त्रावर्तलिपिं, गणनावर्तलिपिमुत्क्षेपावर्तलिपिम्, निक्षेपावर्तलिपिं पादलिखितलिपिं, द्विरुत्तरपदसन्धिलिपिम्, यावद्देशोत्तरपदसन्धिलिपिं, अध्याहारिणीलिपिम्, सर्वरुतसंग्रहणीलिपिं, विद्यानुलोमलिपिं, विमिश्रितलिपिं, ऋषितपस्तप्तां रोचमानन्धरणीप्रेक्षणलिपिं, सर्वौषधिनिष्यन्दां, सर्व सारसंग्रहणीम्, आसां भो उपाध्याय, चतुष्षष्ठिलिपीनां कतमां लिपिं मां त्वं शिक्षयिष्यसि" एतेन लिपिभेदेन शक्यन्ते भाषाणां भेदा विज्ञातुम। जैनानां प्रज्ञापनासूत्रे समवायसूत्रे चाष्टादशविधा लिपयः समुपवर्णिता। ता यथा—"बम्भी, यवनालीया, दासउड़िया, खरोष्ट्रिया, पुक्खरसरिया, पहाडाइया, उच्चतरिया, अक्षरप्रतिथया, भोगवयत्ता देवणतिया, निगहइया अङ्कलिपि, गन्धव्वलिपि, आदस्सलिपि, माहेसरलिवि, दामिलिवि, पोलिदिलिवि।

(समवायसूत्रम)

"बम्भी, जवनालीया, दासपुरीया, खरोट्ठी, पुक्खरसारिया, भोगवइया, उपअन्तर कारिया, अक्खरपुट्ठिया, वेनगिया, निहइया अङ्कलिपि गणितलिपि, गन्धर्वलिवि, आदस्सलिवि, माहेसरी, दामिली, पोलिन्दा

(प्रज्ञापनासूत्रम्)

अत्र प्रयुक्तो बम्भी शब्दो ब्राह्मीं, दामिल शब्दश्च द्राविडीमवगमयति। साम्प्रतमासां लिपीनां बुद्धदेवनिर्दिष्टानाञ्च कीदृश्यवस्थेति निर्णयोपयिकं न कमप्युपायमुत्पश्यामः। नान्दीसूत्र नाम जैनानामपरोग्रन्थस्तत्र हि षटत्रिंशल्लिपयः समुपवर्णिताः। तासां नामानि यथा—हंसलिपि, यक्षलिपि, राक्षसी-

लिपि, उड्डूलिपि, यावनीलिपि, तुरक्कीलिपि, कीरीलिपि, द्राविडीलिपि, सैन्धवीलिपि, मालवीलिपि, नाडलिपि, नागरीलिपि, पारसीलिपि, लाटीलिपि, अनमित्रलिपि, चाणक्की लिपि, मौलदेवीलिपि, लाटी, चौडी, डाहली, कामड़ी गुज्जरी, सौरठी, मरहठी, कोङ्कणी, खुरासानी, मागधी, सैहली, हाड़ी, हाम्बीरी परतिरि, मसी, मालवी, महायोधी, इत्थमपरेष्वपि ग्रन्थेषु बहुविधा भाषा उपवर्णिता दृश्यन्ते, दाक्षिणात्ये संस्कृतलिखितपुस्तकेभ्यः षड्भाषाः, सप्तविंशतिरुपभाषाश्चासन्नित्यवसीयते। यथा प्राकृतचन्द्रिकायाम्।

महाराष्ट्री तथावन्ती शौरसेन्यर्द्धमागधी,
बाल्हीकी मागधीचैव षडेता दाक्षिणात्यजाः।
व्राचडो लाटवैदर्भावुपनागरनागरौ
वर्वरावन्त्यपाञ्चालटाक्कमालवकैकयाः।
गौडोड्रदेवपाश्चात्यपाण्ड्यकौन्तलसिंहला,
कालिङ्ग्यप्राच्यकर्णाटाःकाञ्च्यद्राविडगौर्ज्जराः
अभीरो मध्यदेशीयः सूक्ष्मभेदव्यवस्थिताः
सप्तविंशत्यपभ्रंशा वैडालादिप्रभेदतः। इति।

भारतीया भाषा कथमुत्पन्ना, कथं वा तस्या भेदाः समभवन्निति विषयोऽयं न मतद्वैधरहितः अत्र हि बहूनां भाषातत्वविदां विविधानि मतानि श्रूयन्ते। तत्र हि संस्कृत भाषैव जननी विविधानां भाषाणामिति प्रधान मतम्। भाषातत्वमालोचयद्भिरेतद् यत्नेन प्रतिपाद्यते यन्निखिला भाषाः संस्कृतभाषात एव समुत्पन्ना इति संस्कृतनाम्ना परिचिता बह्व्यो भाषा दृश्यन्ते वैदिकसंस्कृतम् ब्राह्मणारण्यकसंस्कृतम्, उपनिषत्संस्कृतम्, सूत्रसंस्कृतम् पुराणोपपुराण संस्कृतमित्यादयो बहवो भेदाः केवलं संस्कृत एव दृश्यन्ते। साम्प्रतं यया सरण्या भाषाभेदो व्यवस्थाप्यते, तया संस्कृतभाषाया एकैकः स्तरो मिश्रभाषात्वेन निर्देष्टुं शक्यः। प्राकृतपालिहिन्दी बङ्गाली महाराष्ट्री गुर्जरीद्राविड़ीप्रभृतीनां भाषाणामालोच्यमानेऽप्युत्पत्तिविषये संस्कृतभाषात एताः कथमुत्पन्ना इति सम्यङ्निर्धारयितुं न शक्यते। अध्यापकमोक्षमूलरमहोदयो "भाषाविज्ञान" नामके ग्रन्थे लिखति– संस्कृतभाषात एव प्राकृतभाषा समुत्पन्ना, प्राकृताच्चापरा इति। यूरोपीयभाषाणामुत्पत्ति तत्वं सम्याग्विवेच्य तदुपमानेन भारतीयभाषाणामप्युत्पत्तितत्व प्रादर्शयद् भट्टमोक्षमूलरमहोदयः। स वदति–स्त्रियो लैटिनभाषामवगन्तु न शक्नुवन्ति इति, इटलीप्रदेशेऽन्यभाषा आत्मलाभमधिगता। सैव तत्र निखिलानां साधरणी भाषा ऽभवत्। इयमभिनवा भाषा सर्वेषां सुवोधा इति ग्रन्थरचनादिकमपि तयैव भाषया भवितु मारेभे। इटालीयभाषोपमिता भारतीया प्राकृतभाषेति वक्तुं शक्यते। साहित्यभाषारूपासादनतः पूर्वमिटालीयभाषा रूपसममेव, भारते प्राकृतभाषाया रूपमासीदिति तयोरनुशीलनेन सम्यग्विज्ञायते। नाटकप्रकरणादिषु प्रथमं स्थानमासादयति स्म प्राकृतभाषा। नाटकेराजामात्य पुरोहितादयश्च संस्कृतमेवाश्रयन्ति। स्त्रियश्चप्राकृतभाषां व्यवहरन्ति, अन्ये भृत्यादयश्च प्राकृतभाषयैव कथोपकथनादिकं कुर्वन्ति सैव भाषा काले संस्कृत

गाथास्थानमासादितवती पुनस्ततोऽपि बह्व्यो भाषाः समभवन् याः साम्प्रतमपि भारतीय प्रान्तेषु विकृतरूपा व्यवह्रियन्ते । एकस्या अपि भाषाया भवति द्विविधः स्वभावः, कठिनः कोमलश्च, एका व्यञ्जनरचितविग्रहा, अपरा-स्वरप्रचुरा । एका व्याकरणनियमनियन्त्रिता, अपरा समुपेक्षितव्याकरणनियमा केवलमर्थ-बोधनौपयिकी । ग्रीकजर्मनप्रभृतीनां भाषाणां विभागा अत्रोदाहर्तुं शक्यन्ते । ग्रीकभाषाया द्वौविभागौ आपलिकआपोनिक इति च, अन-योरपि पुनर्द्वौ द्वौ विभागौ भवतः । जर्मन-भाषाया अपि द्वौ विभागौ । उच्चतमो, नीच-श्च । भारतेऽपि भाषायाः संस्कृतभाषा प्राकृत-भाषाचेति द्वौ विभागा स्तः प्रथमाः आपलि-कोक्तजर्मनसंस्कृताद्याः भाषाः कठिना, इमा पितृपितामहादीनां पुरुषाणां भाषाः । द्वितीया स्तु कोमला । अतस्ता मातृभाषा । संस्कृतात् प्राकृतभाषा, प्रकृताश्च भारतीया विविधा भाषाः समभवन्निति भारतीयभाषाविषयकं प्रधानं मतम् । मोक्षमूलरभट्टोऽपि समर्थयत्य-मुमेव मतम् ।

केचन प्रकृतेर्मूलादुत्पन्नंप्राकृतम् । संस्कारा ज्जातं संस्कृतमितिमुधैव भ्राम्यन्ति । इयं दैवी वाक् संस्कारादेवोत्पन्नेति नास्ति सन्देहः । परं नैतस्या मूलं नाटकादिषु विलोक्यमानं प्राकृतं नाम । वैदिकभाषतः संस्कृत्य समुत्प न्नेयमस्माकं दैवी वाक् । "प्राकृतस्तु पृथ-ग्जन इत्याभियुक्तोक्त्या प्राकृतानां साधारणानां भाषैव प्राकृतभाषेत्युच्यते । अतःसंस्कृतभाषात एव प्राकृतभाषा समुत्पन्नेति मतं ज्यायः ।

क्रमशः

---

# दार्शनिकानामुपदेशसरणिः

विभेति निखिलोऽपि जन्तुरायासकराद् व्यापारात् । समीहते किलैतत् सकलोऽपि जनो यदल्पायासेनैव प्रयासो जनयतु महत् फलमिति । यथा शारीर आयासो न रोचतेमानवानाम् तथा मानासिकोऽप्यायासो न प्रियो भवति । अतः काव्यनाटकादीनामध्ययनाय यथा स्पृहयन्ते, न तथा दर्शनविज्ञानादीनाम् । दर्शनविज्ञानाद्य-नुशीलने परिणतबुद्धय एव रमन्ते । एतन्निब-न्धनैव काव्यादीनां सृष्टिः । एतदालोच्य दार्श-निका अप्यात्मनोऽभिनवामुपदेशसरणिं निर-दीधरन् ।

लोकान् समुन्निनीषुः सचेता तथा प्रयतते तथा चोपदिशति यथा तत्र विनेयानामुन्मुखी-कारः सम्भवेत् । अत उपनिषत्स्वपि कथाच्छ-लेन दार्शनिकरहस्यगर्भा उपदेशा उपनिबद्धाः । इत्थमपरेऽपि धर्माचार्या महात्मानस्तामेव सरणिमनुसृत्य लोकानुपदिदिशुः । साकार निराकारवादो विवर्तवादाद्या गूढा अध्यात्म-विषयाश्चोपाख्यानात्मना समुपदिष्टा दर्शनेषु । साम्प्रतं सांख्यदर्शनात् महर्षिणा कपिलेनोप निबद्धान्युपाख्यानानि पाठकानां मनोविनो-दायोपह्रियन्ते तेभ्यः ।

सांख्यदर्शनस्य चतुर्थाध्याये सन्ति द्वात्रिंशत् सूत्राणि । तानि प्रायः सर्वाण्येवोपाख्यान-

सम्वलितानि। तत एवोपाख्यानवन्ति सूत्राणि समुद्ध्रियन्ते।

राजपुत्रवत् तत्त्वोपदेशात्। १।

उपदेशेनाविद्यान्धकारो निवर्तयितुं शक्यः। यथा कस्यचिद्राजपुत्रस्य भ्रम उपदेशेन निवृत्तः ॥१॥

अस्यायं विशकलितोऽर्थः—कश्चन राजपुत्रः केनापि कारणेन बाल्य एव पित्रा परित्यक्तोऽरण्यमाससाद। स हि तत्र केनापि व्याधेन पालितोऽतिक्रान्तबाल्यो यौवने पदं निदधे। स हि व्याधतनयमेवात्मानं मन्यते स्म। इत्थं दिवं गते राजनि राज्याधिकारिणमपरमनवलोकयद्भिर्मन्त्रिमुख्यैः स एव नृपत्वे वृतः। तदा मन्त्रिणामुपदेशादात्मानं राजपुत्रमभिजज्ञे सः। इत्थमेवोपदेशादिभिर्यदा मानवानां तत्वोन्मेषः समुद्भवति तदा स्वत एवाविद्यान्धकारो निवर्तत इति।

पिशाचवदन्यार्थोपदेशेऽपि। २।

अन्यार्थं विहितोऽप्युपदेशः फलं जनयत्येव, यथा कश्चन पिशाचोऽन्यार्थं विहितमुपदेशं निशम्य मुक्तिमध्यगच्छत्।

कश्चन गुरुः शिष्यं रहस्युपदिशति स्म, तत्रैव वृक्षान्तराले स्थितः पिशाचो तमुपदेशं निशम्य ज्ञानं मुक्तिञ्च प्रापेति।

पितापुत्रवदुभयोर्दृष्टत्वात्। ३।

अत्रेदमुपाख्यानमवर्णयदनिरुद्धः, कश्चन दरिद्रो ब्राह्मणः सगर्भां भार्यां गृहे परित्यज्य धनाय विदेशं प्रातिष्ठत्। तत्र बहूनब्दानतिहा यदा स गृहमागच्छति तदा न परिचिनोत्यात्मनः पुत्रम्। ततो भार्यया प्रतिबोधितः पुत्रं विजानाति स्म। इत्थं गुरुशिष्ययोरुभयोरपि जननि धनादिकमवलोकयतोस्तत्वज्ञानमुत्पद्यत इति।

श्येनवत्सुखीत्यागवियोगाभ्याम्। ४।

श्येनो यदा मांसखण्डं परिगृह्णाति, तदाऽपरैः पक्षिभिः स परिभूयत इति, यदा च स मांसखण्डं परित्यजति तदा सुखी। इत्थं संसारवासनापरित्यागात् सुखमितरथा दुःखमेवेति विज्ञानभिक्षुः।

केनचित्पुरुषेण समुपलब्ध एकः श्येनशिशुः। स हि तं महतायत्नेनावर्द्धयत्। कदाचिद् वृथैव कष्टमेत्ययमिति विचिन्त्य तेन परित्यक्तः स श्येनशावकः। यद्यपि साम्प्रतं स स्वाधीनतासुखमनुभवति, तथापि पालकविरहाद्दुःखमपि तं न परित्यजति। इत्थं जगति सर्वं सुखं दुःखेनानुविद्धम्, नहि किञ्चिदेकान्ततः सुखमिति, हेय एवायं संसारो धीमद्भिरिति व्याचख्यावनिरुद्धः।

अहिनिर्ल्वयनीवत्। ५।

यथाहिर्निर्मोकं परित्यजति, तथैव मुमुक्षुभिरपि मायाजनिताः पदार्था हेयाः। अत्र दर्शने प्रकृतिपुरुषयोर्विवेक एव मुक्तिरिति विज्ञानभिक्षुः।

कश्चित्सर्पो निर्मोकं परित्यज्य तत्स्नेहात्तत्रैव तस्थौ। तदैव तत्रागतेन व्यालग्राहिणा धृतः

स निनरामखिद्यत । तस्मात् परित्याज्याः संसारस्नेहा इत्याशय इत्यनिरुद्धः ।

छिन्नहस्तवद्वा । ६ ।

यथा छिन्नो हस्तः पुनर्न गृह्यते तथा दूरीभूतो मोहो नापसर्पेदात्मानं तदर्थं यत्नो ऽनुष्ठेय इति विज्ञानभिक्षुः

कश्चन मुनिरात्मनो भ्रातुराश्रमात् फलानि जगृहे चौरस्त्वमिति भ्रात्रा भर्त्सितः स प्रायश्चित्तं निर्दिशेति व्याजहार, हस्तच्छेदमन्तरा नान्यत्प्रायश्चित्तमिति भ्रातुर्वचनं निशम्य स हस्तच्छेदमकारयत् निषिद्धनि कर्माणि नानुष्ठेयानि यदि प्रमादात्तान्यनुष्ठितानि स्युस्तदा प्रायश्चित्तेन तेषां शुद्धिर्विधेया, इत्याशय इत्यनिरुद्धः ।

असाधनानुचिन्तनं वन्धाय भरतवत् । ७ ।

अनिष्टस्य चिन्तनं कदापि न विधेयं, तेनहि वन्धो भवति, यथाऽनिष्ट चिन्तया भरतो वन्धनमाससाद ।

पुरा कश्चन राजर्षिर्भरतोऽधिगतयाथातथ्योऽपि कृपया कमपि हरिणशावकं पालयति स्म । तस्मिन् हरिणशावके बद्धस्नेहो भरतो राजर्षिर्निजमनुष्ठेयम् कार्यजातं विसर्जयांबभूव । अन्ते तमेव स्मरन स प्राणानत्याक्षीदतो हरिणयोनिमेवाससाद । अतो मोक्षार्थिभिर्नानिष्टचिन्ता विधेया, तया हि न श्रेय आसादयति कोपि ।

बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत् । ८ ।

एकान्त एव योगोऽनुष्ठेयः, बहूनां समवाये कलहो भवति यथा कुमारीभिर्धृतानि शङ्खवलयानि परस्परमाहतानि झणत्कारं कुर्वन्ति तस्माज्जनसमवायो योगविघ्नकर इति फलति

द्वाभ्यामपि तथैव । ६ ।

द्वाभ्यां मिलिताभ्यामपि योगोऽनुष्ठातुं न शक्यः तत्रापि कलहभयस्य सत्वात् । द्वेऽपि वलये झणत्कारं कुरुत एव ।

निराशः सुखी पिङ्गलावत् । १० ।

येनाशा परित्यक्ता स एव सुखी भवति, यथा पिङ्गलानाम्नी वारवधू । तस्मात् सुखार्थिभिराशा परित्याज्या ।

पुरा पिङ्गलानाम कापि वराङ्गना आसीत् । साहि प्रणयिनागमनं प्रतीक्षमाणा प्रबुद्धा एव रात्रिमतिवाहयति स्म । इत्थं बहुपरिश्रम्यन्ती सा प्रणयिनामागमनाशां परित्याज, तत आरभ्यैवतस्या निखिलं दुःखं विलीनमभवत्

अनारम्भेऽपि परगृहे सुखी सर्पवत् । ११ ।

स्वयमुद्योगमकृत्वापि जनः सुखमासादयितुं प्रभवति । यथासपः, सर्पो न गृहं निर्मिमीते, परमन्यैः कृतेषु गृहेषु वासं विधाय सुखी भवति । तस्मादन्यकृतोद्योगेन सुखप्राप्तौ सत्यां न सुखार्थं चेष्टेत इति ।

बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् । १२ ।

यथा भ्रमरो विविधेभ्यः पुष्पेभ्यः सारमादत्ते, तथा मुमुक्षुभिरपि शास्त्राणामनुशीलनेन गुरूणाञ्चोपसत्या सारो ग्राह्य इति ।

इषुकारवन्नैकचित्तस्य समाधिहानिः ।१३।

कस्मिन्नपि विषयेऽभिनिविष्टस्य चित्तं विषयान्तरे नासज्यते, यथा शरनिर्मातुः। इत्थमनुश्रूयते विपणिस्थः कश्चत् शरनिर्माता शरान् विदधातिस्म। तेन पथा कश्चिन राजा गच्छति स्म। परं स राजानं नापश्यत्। अतो मोक्षार्थिभिविषयान्तरानभिनिविष्टचित्तं ज्ञानानुशीलने प्रयतितव्यम्।

कृतनियमलङ्घनादानर्थक्यं लाकवत्।१४।

शास्त्रैर्व्यवस्थापिता नियमाःनोल्लङ्घ्याः कल्याणार्थिभिः, यदि कश्चन लोके सामाजिकान् राजकीयाश्च नियमानुल्लङ्घ्य प्रवर्तेत, तदा स हानिमृच्छाति इत्थं शास्त्रीया नियमा नोल्लङ्घ्या इति।

तद्विस्मरणेऽपि भेकीवत्। १५।

नियमानां विस्मृतिरपि न श्रेयसे भवति यथा भेकी। कश्चन राजा मृगयाकृष्टो वनंगतः तत्र कामपि सुन्दरीकन्यामपश्यत् तामवोचच्च, भद्रे, का त्वम् कथमिमां दुर्गमां भूमिमासादितवती भवती। राजकन्यास्मीति सा समाचष्ट। तस्याः पाणिग्रहणाभिलाषे प्रकाशितवति राजनि सा प्रावोचत् नात्रकमपि दोषमुत्पश्यामि। परं यावज्जलं न पश्यामि तावदेव तव समीपं स्थास्यामीत्यपि समयस्त्वयास्वीकर्तव्यः। राजा समयमिमं स्वीचकार। संवृत्तश्चोभयोविवाहमहोत्सवः। इत्थमतिक्रान्ते बहुतिथे समये कदाचित् परिश्रान्ता राजपत्नी जलमयाचत। पुरा विहितं समयं विस्मृत्य राजा तस्यै जलं ददौ, जलदर्शनानन्तरं सा भेकीरूपे परिणता, ततोऽपचक्राम। सा हि भेकराजदुहिता आसीत्। राजा बहु प्रयस्य तामन्विष्यन् यदा, नाससाद, तदा नितरां खिन्नो गृहे प्रतिजगाम। तस्मान्नियमा न विस्मर्तव्या इतिदृढमवधेयम्।

नोपदेशश्रवणेऽपि कृतकृत्यता, परामर्शादृते विरोचनवत्।१६।

केवलमुपदेशश्रवणमात्रेण न कश्चित् कृतकृत्यो भवितु मर्हति, उपदेशं श्रुत्वा तस्य पुनर्विचारो विधेयः, अन्यथा सिद्धिर्दुरासदा स्यात्। यथा विरोचनस्य। इन्द्रविरोचनौ हि ब्रह्मणः समीपं तत्वज्ञानोपलब्धये गतौ, ब्रह्मणा विहितमुपदेशं भूयो विचारयितुं प्रायतत महेन्द्रस्तेन स याथार्थ्यमधिगन्तुं शशाक। विरोचनश्च यथोपदेशमाचचार, तस्मात् विरोचनेन न तत्वज्ञानमुपलब्धम्। अतो मोक्षार्थिभिरुपदेशश्रवणानन्तरं पुनर्विचारो विधेय इति।

दृष्टस्तयोरिन्द्रस्य। १७।

इन्द्रविरोचनयोर्मध्ये इन्द्रस्यैव फलसिद्धिर्दृष्टा।

प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात्तद्वत्। १८।

बहुकालं प्रणतिब्रह्मचर्योपसर्पणादिभिः सिद्धिरधिगन्तुं शक्यते यथेन्द्रः प्रणतिब्रह्मचर्योपसर्पणादिभिः सिद्धिमधिगतवान्। अनयैव पथा सिद्धिरधिगन्तुं शक्या।

न कालनियमो वामदेववत् । १६ ।

आराधनादाविव न तत्वज्ञाने कालस्य नियमो दृष्टः । पूर्वजन्मार्जितसाधनो गर्भ एव वामदेवस्तत्वज्ञानमाससाद ।

अध्यस्तरूपोपासनात् पारम्पर्येण यज्ञोपास्यकानमिव । २० ।

अध्यस्तरूपोपासकानां परम्परया तत्वज्ञानं समुदेति, यथा यज्ञोपासकानां पारम्पर्येण तत्वज्ञानं भवति ।

इतरलाभतोऽप्यावृत्तिः पञ्चाग्नियोगतो जन्म श्रुतेः । २१ ।

स्वर्गादीनां प्राप्तावपि पुनरावृत्तिर्भवति । यज्ञादीनां फलं विनाशीत्यर्थः । पञ्चाग्नियोगतोऽपि जन्म भवतीति श्रुतयः प्रतिपादयन्ति । तस्माज् ज्ञानमेव सर्वश्रेष्ठमिति फलितम् ।

विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् । २२ ।

अम्बुमध्याद्धंसो क्षीरमिव विरक्तो हेयं जहाति, उपादेयञ्चोपादत्त इति ।

लब्धातिशययोगाद्वा तद्वत् । २३ ।

प्रवृद्धज्ञानानां संसर्गादेव जनो हेय जहात्युपादेयञ्चोपादत्ते । दत्तात्रेयदर्शनादेवालर्को विरज्यति स्म ।

न कामचरित्वं रागोपहते शुकवत् । २४ ।

रागोपहतात्मभिः सह न कामचारो विधेयः, तपोभ्रंशभयात् । शुकः सुन्दर इति स न यथेच्छं भ्रमति, बन्धनभयात् । तस्मान्मुक्तिमभीप्सद्भीरागिणो दूरत एव हेयाः इति विज्ञानभिक्षुः ।

रागिणो न मुक्तिमधिगच्छन्ति । रागादेव व्यासो मुक्तिं नासादयतिस्म । शुकस्तु रागहीन इति तेन मुक्तिरप्यधिगतेत्यनिरुद्धः ।

गुणयोगाद्बन्धः शुकवत् । २५ ।

गुणानां सत्वादीनां योगाद्बन्धोभवति, यथा शुकाः पाशैर्बध्यन्ते ।

न भोगाद्रागशान्तिर्मुनिवत् । २६ ।

भोगाद्रागशान्तिर्भवतीति विचिन्तयन्तो भ्राम्यन्ति सौभरिर्मुनिर्हि भोगं भुञ्जानोऽपि तृप्तिं नाससाद । तस्माद्भुक्तभोगा विरज्यन्त इति वदन्तो मुधा भ्रम्यन्ति ।

न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ।२७।

मलिने चित्ते विहिता उपदेशा न फलाय जायन्ते । दिवंगतायामिन्दुमत्यां विलपतोऽजस्य चेतसि वसिष्ठोपदेशा न स्थानमलभन । तस्मादुपदेशग्रहणार्थं चित्तनैर्मल्यं विधेयम् ।

नाभासमात्रमपि मलिन दर्पणवत् । २८ ।

मलिने चित्त उपदेशा नावभासन्ते, यथा मलिनो दर्पणः प्रतिबिम्बं न गृह्णाति । तस्मान्मलिनचेतसो नोपदेष्टव्याः ।

न तज्जस्यापि तद्रूपता पङ्कजादिवत् । २९ ।

उपदेशानुरूपमेव ज्ञानं भवतीति वक्तुं न शक्यते, यथा पङ्कादुत्पन्नमपि पङ्कजं न पङ्कमनुहरतीति विज्ञानभिक्षुः ।

नहि महदात्मनोरैक्यं व्यवस्थापयितुं शक्यते, कार्यकारणयोर्भेदात्। महत्कारणमात्मा च कार्यमिति नैतयोरभेदः। पङ्कपद्मयोर्भेदः स्फुटं दृश्यत इत्यनिरुद्धः।

न भूतियोगेऽपि कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत्। ३०।

अणिमादिसिद्धीनां प्राप्तावपि न चरमा सिद्धिरधिगतेति मन्तव्यम्। अणिमादिसिद्धिमतां पुनरावृत्तिदर्शनात् तस्मात् तत्वज्ञानार्थमेव प्रयतितव्यं सर्वैः।

एषां सूत्राणामवलोकनेनाभिज्ञा दार्शनिकानामुपदेशसरणिमवगन्तुं पारयेयुः।

श्री रामेश्वर प्रसाद शर्मा।

---

# पाटलिपुरम्

आसीत् पुरैतन्नाम्ना प्रसिद्धं किमपि नगरं नाम मगधेषु। इदं नगरं हि समृद्धिमदपरैश्च शोभननगरगुणैरुपेतं विलोभयति स्म विलोचनं प्रेक्षकाणाम्। काणादपाणिन्यार्यभटप्रभृतयो विद्वांसो जन्मनाऽमुमेव नगरं सनाथितवन्तः। चन्द्रगुप्ताशोकप्रभृतयो राजानोऽस्यैव समृद्धिमतो नगरस्य महिमानं प्रथयाञ्चक्रुः। नगरमिदं भगवतो बुद्धस्यातिप्रियमभवत्। विदेशीया अपि नगरस्यास्य दिदृक्षयेदं भारतं समागच्छन्। परमदृष्टं दर्शयन् अश्रुतञ्च श्रावयन्निपुणं प्रदर्शयत्यात्मनो विभवं कालहतकः। बहूनि नगराणि साम्प्रतं नामशेषाणि नास्माकं दृग्गोचरी भवन्ति। पाटलिपुरस्यापि न सा पुरातनी शोभा, न वा तादृग्गौरवं साम्प्रतं विलोक्यते। परं पुरा पाटलिपुत्र नाम्ना प्रसिद्धं नगरं साम्प्रतमपि पुराभवं ज्ञानं स्मारयितुं स्थितमिति वयमेतावतैव सन्तुष्यामः।

केनेदं नगरं स्थापितमिति विवदन्तेऽत्र पुराविदः। दयादर्शी (डायडोरस) नामकः कश्चन ग्रीकेतिहासवेत्ता हिरोक्लेसनाम्ना प्रसिद्धेन केनापि महावीरेण स्थापितमिदं नगरमिति विश्वसीति। श्रीकृष्णाग्रजस्य बलरामस्यैव हिरोक्लेस इति ग्रीकैरुच्चारितं नामान्तरम्। ग्रीकैतिहासिकस्य वचने आस्थामारोपयितुं नोत्सहते जनोऽयम्, प्रमाणाभावात्, भारतीयपुराणादिष्वपि विषयोऽयमालोचितो दृश्यते। वायुपुराणे भविष्यतां राज्ञां वंशवर्णनप्रसङ्ग उक्तम् क्षेमवर्मणः परमजातशत्रुर्नाम राजा पञ्चविंशतिवर्षाणि महीमिमां पालयिष्यति ततश्चत्वारिंशत् वर्षाणि क्षत्रौजाः महीं भोक्ष्यति राज्ञो विंविसारस्याष्टाविंशतिवर्षाणि राज्यकालो भविष्यति ततो दर्शको नाम राजा भविष्यति, यस्य पञ्चविंशति वर्षाणि राज्यसमय इति तत उदायि नाम्ना प्रसिद्धो नरपति स्त्रयस्त्रिंशद्वर्षाणि महींपालयिष्यति। तेनैव च कुसुमपुरं नाम नगरं प्रतिष्ठापयिष्यते। एतत्पुरं गङ्गाया दक्षिणेकूले प्रतिष्ठितं भविष्यति। बौद्धानां महावंशनामके ग्रन्थे लिखितं वर्तते —अजातशत्रोस्तनयेन राज्ञाउदयेन कुसुमपुरं वा पाटलिपुरं वा नगरं स्थापितमभवदिति। बौद्धग्रन्थतो विज्ञायते—अस्मिन् समये तुराणवंशीया भज्जियान इतिप्रसिद्धा मदोद्धता

हिमालयपर्वतमतिक्रम्य विहारप्रदेशाधिकृतये प्रायतन्त । आत्मनो राज्यं रिरक्षयिषुस्तान् दिदमयिषुश्चाजातशत्रू राजगृहं परित्यज्य पाटलिपुरे नियतावासमकल्पयत् । विदेहस्य राज्ञोऽयं दौहित्रो महामतिरजातशत्रुः। एतस्य भाषाकरः सुनिधिश्चेति द्वौ मन्त्रिणौ, तौ हि भज्जियानानां समूलोच्छेदनाय कृतसङ्कल्पावभवताम् भाषाकरो हि भगवन्तं बुद्धमुपससर्प । उपदिदेश भगवान् बुद्ध —यावत्ते सम्भूय राज्यपालनं कुर्वन्ति तावत्तेषामुच्छेदो दुःशकः । ताभ्यामेव मन्त्रिभ्यामिदं नगरं दुर्गप्राकारादिना परिवेष्टितं किमपि मनोरमं रूपमाससाद। मन्त्रिभ्यां सादराभ्यर्थनं निमन्त्रितो भगवान् बुद्धोऽपि पाटलिपुरनगरं सनाथितवानात्मन आगमनेन । आगत्य चात्मनः पार्श्वचरमानन्दमवदत्—इदं नगरं कदाचित् प्रसिद्धिमद् भविष्यति, वणिजां प्रधानं स्थानञ्च भविष्यति । भगवतो बुद्धस्य वाणी काले सार्थक्य—मासादितवती । चन्द्रगुप्ताशोकादयः प्रतापशालिनो राजान इदमेव नगरं राजधानीमकार्षुः ।

उदयो नाम महीप अजातशत्रोः पौत्रः। तेन हि पाटलिपुरं नगरमेव कुसुमपुरनाम्ना प्रख्यापितम् । ग्रीकेतिहासेषु पाटलिपुरं "पालिवोथरा"इत्यभिधीयते, एतन्निवासिनश्च पलाशीयाः, पराशीया वेत्युच्यन्ते स्म । पलाशाधिक्यनिमित्ता मगधस्य, "पलाश" इति संज्ञेति केचित् ।

चीनसंन्यासिनो ह्युएनत्सङ्गस्यागमनसमये मगधराज्यस्य नासीत्समृद्धिमद्दशा । तदाऽस्य पाटलिपुरस्य तद्गौरवं विलयगमनाय कृतप्रयत्नमभवत् । चन्द्रगुप्ताशोकादीनां सह पाटलिपुरस्य गौरवमपि लोकान्तरं गन्तुमुपक्रान्तम्। यदा चीनसन्यासी प्रदेशेऽस्मिन् प्रवेशमकरोत्, तदा पाटलिपुरे पञ्चाशन्मठा आसन् तेषु च दशसहस्रमिता बौद्धा वसन्ति स्म । पाटलिपुरनगरं परितो बहूनां मठस्तूपमन्दिरादीनां भग्ना अंशा विलोक्यते स्म, पुरा नगरस्यास्य कुसुमपुरनाम्ना प्रसिद्धिरभवदितिवर्णितं चीनसंन्यासिना। यद्यप्यस्य नगरस्य नाम चीनसंन्यासिनो ग्रन्थेविलोक्यते परमपरेषु ग्रीकैतिहासिक विलिखितेषु ग्रन्थेषु न तन्नाम दृश्यते। राज्ञश्चन्द्रगुप्तस्य सभायां मेगास्थनिसनामा कश्चन ग्रीकदूतः समागत आसीत् । तेन च वर्णितमितिवृत्तं मगधराज्यस्य। तत्र 'पालिवोथरा" नामकस्य कस्यचिन्नगरस्य वर्णनमुपलभ्यते । चीनसंन्यासिना वर्णितं पाटलिपुरं ग्रीकदूतेन च गीतगुणं "पालिवोथरा" नगरमित्युभावप्यभिन्नावितिं प्रत्नतत्वविदो निश्चिन्वन्ति। ग्रीकदूतस्य मतमनुसृत्यारियननामकः कश्चनैतिहासिक इतिहासमेकमरचयत्। स हि मगधमधिकृत्य विलिखति पुरा "पालिवोथरा" नगरं निखिलस्य भारतस्य राजधानी समभवत् । गङ्गाया हिरण्यवाहुनदस्य च सङ्गमे इदं नगरमवस्थितमासीत् । पाश्चात्यप्रत्नतत्वज्ञोरामेन्स्मनमहोदयो बहुभिः प्रमाणोपन्यासैः समर्थयति

स्म यत् पाटलीपुत्रनगरमुत्तरेण गङ्गाशोणयोः सङ्गमोऽभवदिति। शोणनदस्यैव हिरण्यबाहुरित्यपरं नाम।

---

## मत्स्यानामपत्यस्नेहः

स्वाभाविकोऽयं प्रेमप्रवाहः प्रायशो निम्नं गच्छति। यथा नैसर्गिकः स्नेहो मानवहृदयमधिकरोति तथैवान्येषामासन्नचेतनानामपि हृदयं प्रेमप्रह्वमिति जीवतत्वज्ञैः पाश्चात्यविद्वद्भिर्ननु प्रमाणीकृतम्। तत्र हि जीवतत्व मधिकृत्य बहवो ग्रन्था विरच्यन्ते। कीटाः मक्षिकाः मशकाः येहि प्रतिदिनमस्माकं प्रत्यक्षतामुपयान्ति तेष्वेकैकमधिकृत्य वैज्ञानिकैर्विरचिता ग्रन्थाः समुद्भासयन्ति हृदयं प्रेक्षावताम्। तत एव तथ्यमुपगृह्य पाठकेभ्यः समुपह्रियते किञ्चित्।

मानवानां यादृशः स्नेहोऽपत्येषु भवति, ततोऽधिकतरो मत्स्याना मपत्यस्नेहो भवति, मानवेषु मातृस्नेह एव प्रशस्यते, यतो नहि निष्करुणा जननी दृष्टा कुत्रचित्। परं सन्ति तथाविधा बहवः पितरः येषां हृदयं सन्तानवात्सल्यहीनं भवति। अपरेषु स्तन्यपायिजन्तुष्वपि स्वाभाविको मातृस्नेहो दृश्यत एव। परं तेषां पितरः प्रायशो निस्नेहा भवन्ति। हिंस्रस्वभावानां पक्षिणां पितरः स्नेहवन्तो दृश्यन्ते, ते हि सन्तानार्थमात्मनः प्राणानपि तृणाय मन्यन्ते। शान्ताः पक्षिणा हि मातृभिरेव पाल्यन्ते, शिक्ष्यन्ते च, तेषां पितरो हि जीवनौपयिकं कर्मोपदिशन्ति।

बहुजातीया मत्स्या भवन्ति, अतस्तेषाम पत्यस्नेहः सन्तानपालनोपायश्च बहुविधो भवति। यूरोपीयमत्स्यानां सन्तान वात्सल्यं प्रायशो न दृश्यते। परं "ष्टिकलवैक" नामक एको मत्स्यो व्यतिक्रामति नियममुम्। स हि गृहं निर्मिमीते, एतज्जातीयाः पुरुषमत्स्याश्चापत्यं पालयन्ति बह्व्यो मत्स्यमातरस्तावदपत्यान्यात्मनो मुखे स्थापयन्ति यावदण्डतःस्ते न निःसरन्ति। काश्चिच्चाण्डनिःसरणानन्तरमपि तानि मुख एव स्थापयन्ति। शिशवो हि मध्ये मध्ये मातृमुखान्निःसृत्य बहिः परिभ्रमन्ति। क्लान्तमीनाश्च पुनस्ते मातृमुखमेव त्वरितमाश्रयन्ति। दृश्यमेतदतीव मनोरमं कौतुकावहञ्च भवति। अनेकेमत्स्य पितरःसयत्नमात्मनोऽपत्यानि परिभ्रामयन्ति। एतद्धि पश्यतां हृदयमावर्जयति। एतदेवावलोक्य पुरा च्यवनो महर्षिः स्थविरोऽपि परिणयाय मतिं दधौ।

"परडाइजमत्स्य (Paradise fish) नामक एको मत्स्यप्रभेदः। एतज्जातीयकेषु मत्स्येषु पितर एव स्नेहवन्तो भवन्ति, मातरः किल राक्षस्यो भवन्ति। शर्मण्यदेशीयो वर्ण्ट पण्डितो वदति, तज्जातीया मत्स्यमातरः पितृमत्स्यादलक्षिता अण्डानि भक्षयन्त्यो दृष्टास्तेन महादयेन। यदापुरुषाः फेनसंग्रहे, गृहनिर्माणे च प्रवृत्ता भवन्ति तदेव राक्षसोभिस्ताभिरवसर उपलभ्यते। अपत्यविनाशनव्यग्रा ,अवलोक्यानुधावन्ति पुरुषाः गृहीत्वा ताड़यन्ति च। एवंविधा मत्स्या वीरा इति

कथ्यन्ते। यदा हि शिशवो बहिर्निस्सृताः परिभ्रमन्ति तदा तेषां पितरस्तान् रक्षयन्ति तदा यद्यपरः कश्चन मत्स्यो दैवात्समागच्छति तदा स न निरुपद्रवस्ततो गन्तुं पारयति, स हि मत्स्यपित्रा निर्दयं व्यापाद्यत एव।

एतद्देशीयानां रोहितमत्स्यानामपत्यस्नेहः प्रसिद्ध एव।

---

## इतिहासः

यत्सत्यमितिहासो नाम बहिश्चराः प्राणाः देशस्य समाजस्य च इतिहास एव यस्य कस्यापि वा देशस्यसमाजस्य च महिमान प्रथयति, परोक्षीभूतानप्यात्मगुणान् प्रकाशयति पूर्वजकीर्तिगाथां कीर्तयन्नादधाति किमपि बलम्। पूर्वजानामाचारविद्यानीतिप्रतिष्ठाः प्रकाशयन्नितिहासः पथश्च्युतमपि पुनः पन्थानमारोपयति जनम्। पूर्वजानां को धर्मः क आचारः कीदृशी नीतिः किं ज्ञानं का विद्या किं कुलं का प्रथा इत्यादयो विषया इतिहासेनैवावगम्यन्ते। अस्माकं पूर्वजा उन्नता अवनता वेति ज्ञानमितिहासत एव स्फुरति मानवेषु। इतिहासज्ञानशून्यः समाजः पुरः स्थितमपि विधेयं पश्यन्नपि न पश्यति, अन्तः शून्य इव प्रतिबोधितोऽपि न विबुध्यते, खञ्ज इव गन्तुं प्रवर्त्तितोऽपि न पुरश्चलति, बधिर इवोपदेशान् न शृणोति इन्द्रियविकलः स्थाणुरिव, विवेकरहित पशुरिव चतुरशिल्पिप्रवर्तितं यन्त्रमिवेतिहासज्ञानविरहितःसमाजो निष्प्रभस्तिष्ठति, सूत्रनिबद्धा पुत्तलिकेव सञ्चार्यते। अतो बहिश्चराः प्राणा इतिहासो नाम समाजस्येति युक्तमुक्तं भवति।

इतिहासो नाम शब्दात्मकः समाजः समाजप्रतिकृतिर्वेति प्रतीमः। एतेन विबोधितो जनः स्वकर्तव्यमधिगच्छति। उन्नतिरवनतिश्च फलम् फलं हि व्यापारायत्तम् कैर्व्यापारैरस्माकं पूर्वजा उन्नतिमध्यगच्छन्निति कथं वा तेऽवनता इति वेतिहास एव विबोधयति। अतश्च भवति महानादर इतिहासस्य सभ्यानां समाजेषु। अस्माभिरुपयुज्यमानाः पदार्थाः केनाप्यव्यक्तेन नियमेन वशीकृताः सदा परिवर्तन्ते। यथा तेषां पदार्थानां रूपे विशेषः समुपजायते तथैव गुणेऽपि, पदार्थानां रूपपरिवर्तनेन सह गुणा अपि परिवर्तन्ते इति स्वाभाविकोऽयं नियमः। इत्थं तेषां पदार्थानामुपयोगान्मानवानां हृदयवृत्तिरपि परिवर्तत एव। एतेनैव हृदयवृत्तिपरिवर्तनेन कदाचित् कोऽपि समाजः समुन्नतो भवति कदाचिच्च स एव समाजोऽवनतो दृश्यते। समाजस्योन्नतिश्च सर्वथा रुचिमनुसरतीति नः प्रत्ययम्। परमितिहासस्तथोपदिशति यथा रुचिविपर्ययो न भवति, परिवर्तितगुणा अपि पदार्था हृदयवृत्तीः परिवर्त्तयितुं न प्रभवन्ति। अत एवावनतोऽपि समाज उन्नतिमृच्छति इतिहासानुशीलनेनेति दृढः प्रत्ययो मानवानाम्।

अस्य भारतवर्षस्य नास्ति कोऽपीतिहासो नामेति साम्प्रतिका विद्वांसोऽनुमन्यन्ते। परमेषां वचस्मि प्रत्ययमाधातुं नेहते नश्चेतः। नैतादृशः कोऽपि देशो यस्य साध्वसाधु वेति-

हासो न लभ्येत। पुराभवो वृत्तान्त एवेतिहासशब्देनाख्यायते। इत्थं निखिलस्य देशस्यास्त्येव यथा तथा वा इतिहासः। स्वाभाविकोऽयमितिहासप्रणयो मानवानां हृदयेषु प्रस्फुरति। सर्व एव समाजः परमेण प्रेम्णा परमया श्रद्धया चेतिहासमनुशीलयन्तीति प्रत्यक्षोऽयं विषयो निखिलानाम्। अक्षरगन्धरहिता वर्वरा अप्यात्मनः पूर्वजानां गुणगणान् श्लाघयन्ति तैश्चात्मानं बहुमन्यन्ते च। अत आसादितविविधशास्त्रतत्वज्ञस्य भारतस्य नास्तीतिहास इति वचनं कथं श्रद्धेयपदवीमारोपयितुं शक्यते प्रेक्षावद्भिः। इतिहासप्रणयिनो भारतीया इति विदितमशेषाणाम्। देवचरित इवेतिहासानुशीलने भारतीयाः श्रद्दधते। परमथापि भारतस्य नास्तीतिहास इतिप्रवादमूलमनुसन्धातुं प्रयस्यतेऽस्माभिः।

भारते कः प्रथमो नरपतिर्बभूव, ? का वा तस्य शासनप्रणाली ? राज्यशासनौपायिकाः के के विभागाः स्थिरीकृताः तदा प्रतिशतकं कियन्तः शिक्षिता आसन्, तदा के के पण्डिता अभवन्, तैर्निर्मितः कश्चन ग्रन्थो न वा, तदा कीदृश आसीत् सामाजिको व्यवहारः को धर्मस्तदा समाजे प्रसारमलभत् का वा दण्डव्यवस्था इत्येवंविधानां प्रश्नानां प्रतिवचः प्रदातुं साम्प्रतं न शक्नुवन्ति भारतीयाः। इतिहासेनैवैते प्रश्नाः समाधेया,। यद्येतान् कश्चन् न समादधीत, तदा निश्चितमितिहासज्ञानविरहितः स इति वक्तव्यम्। एतत्प्रश्नसमाधाने भारतीया मूका इति नास्तितेषामितिहास इति फलितं भवति। अत एव भारतस्य नास्तीतिहास इति केचन वदन्ति। परमेवंविधानां प्रश्नानामसमाधाने वयमपरं हेतुमाकलयामः।

एकमेव कर्म भिन्नभिन्ननिमित्तेनानुष्ठीयते। यत् कर्मैकेनप्रकृतिप्रेरितेनानुष्ठीयते, अपरेण च कस्मैचित् फलायानुष्ठीयते, एकमेव कर्म कस्यचित् मनोविनोदकरं भवति, अपरस्य च तेनैव कर्मणा जीविकानिर्वाहो भवति। इत्थमेकस्यैव कर्मणो भवति बहुविधं लक्ष्यमित्यंगीकर्त्तव्यमेव लोकव्यवहारनिष्णातैः। अवस्थाभेदो रुचिभेदश्चात्र निमित्ततामवगाहते। चिरादिदं भारतमाध्यात्मभावप्रवणम्, अतो भारतीया निखिला विद्या अध्यात्मतत्व मुपदिशन्ती विनाशयन्ति त्रिविधं दुःखं मानवानाम् परमपरेषु देशेषु लौकिकी सिद्धिरेव परमपुरुषार्थतया गण्यते। अतो भारतीय इतिहास अध्यात्मभावप्रवणः देशान्तरीयाणाश्चेतिहासो लौकिकसिद्धिपरः। एष एव हेतुर्यत् पूर्वं निर्द्दिष्टा प्रश्ना भारतीयैः समाधातुं न शक्यन्ते। अत एव नास्ति भारतीय इतिहास इति कल्पयन्ति केचित्।

भारतीयेष्वितिहासेषु साम्प्रतं न श्रद्दधत आधुनिका विद्वास इत्यत्रास्त्यपरोऽपि हेतुः। स च शिक्षाप्रणालीपरिवर्तनमेव भवितुमर्हति येनोद्देश्येन पुरा शिक्ष्यन्ते स्म भारतीयाः, यन्निमित्तमासीदेषामितिहासे प्रणयः, साम्प्रतं तदेवरूपान्तरीभूतम्। किञ्च भौगोलिकज्ञान-

विपर्ययोऽप्यत्रान्यो हेतुर्भवितुमर्हति । भारतीयेष्वितिहासेषु यस्य नगरस्य देशस्य वा यन्नामविनिर्द्दिष्टं, साम्प्रतं तस्यैव नगरस्य देशस्य चापरेण नाम्नाव्यवहारो भवति । अतः पुरा कस्य देशस्य नगरस्य च केन नाम्ना व्यवहार आसीदित्यधस्तान्निर्द्दिश्यते किञ्चित् ।

ग्रीकदेशीयः "टालेमी" पण्डितः कश्चन भूगोलेतिहासनिष्णातश्च समभवत् । तेन च महात्मना खृष्टीय द्वितीय शतकस्य मध्यभागे स्वजन्मना मही कृतार्थिता । तस्यचालीकचन्द्रीयनगरे (अलजेण्ड्रिया) जन्माभवत् । तेन च स्वग्रन्थे भारतीयभूगोलेतिहासौ वर्णितौ, । तत एव च भौगोलिकमैतिहासिकञ्च तत्वमुद्धृत्य पाठकेभ्यः समुपह्रियते ।

साम्प्रतं "अफगानिस्थान, वलुचिस्थान" नामकस्य देशस्य कियन्तश्चिद्भागा भारतवर्ष एवान्तर्गच्छन्तीति टालेमीपण्डितो व्याहृतवान् परमपरेस्तु सिन्धुनदेनैव भारतस्यापरान्तसीमा निर्द्धारिताऽभवत् । परं पुराणग्रन्थानुशीलनेन टालेमीपण्डितस्यैव मतं समीचीनं प्रतिभाति, यतो "अफ़गानिस्थान वलुचिस्थान" इत्यादीनां संस्कृतं नाम समुपलभ्यते । किञ्च पुरा तत्र भारतीया नरपतय आसन्नित्यपि निश्चीयते अफगानिस्थानप्रदेशे कुभाकपिशागान्धारप्रभृतीनि राज्याणि भारतीयैरेव राजभिः शासितान्यभवन । वाल्हीकराज्यं साम्प्रतं "वालख्" नाम्ना परिज्ञीयते । वाल्हीकराज्यं कुरुवंशीयेन केनापि राज्ञा शासितमिति महाभारतानुशीलनादवसीयते । पौष्यपुरं, पुरुषपुरं वा साम्प्रतं "पेशावर" नाम्नाऽभिधीयते । "इमायश" पर्वतो भारतस्योत्तरसीमेति टालेमीपण्डितेन निर्णीतम् । अयम् "इमायस" शब्दो " हिम " शब्दस्यैवापभ्रंश इति कृतं कथनेन । वोखारासमरखण्डयोर्मध्ये "सगदियाना" नामास्ति कोऽपि प्रान्तविशेषः। एतस्य पूर्वेण "शकइ" इति प्रसिद्धनामास्ति देशः । अत्र देशे निवासिनः किराता इति पुराणेभ्यः प्रतीयते, शक इत्यस्यापभ्रंशः "शकइ" इति, कम्बाज इत्यस्यचापभ्रंशः "कमोदइ" इति नात्र संशयीरन् केऽपि । साम्प्रतमपि हिन्दुकुशनामके पर्वते काम्बोजा निवसन्ति ।

सौराष्ट्रराज्यं वर्णयन "टालेमी" पण्डितस्तस्य देशस्य सर्वशस्याढ्यत्वं, तदधिवासिनां सौन्दर्यं तद्भवानि कार्पासवस्त्राणि च प्रशंसितवान । गुर्जरदेशस्यैव सौराष्ट्र इत्यपरं प्राचीन नाम, सौराष्ट्रप्रदेशान्तर्गतं हि सुराष्ट्रनगरम । साम्प्रतं सुराष्ट्रनगरं "जूनागढ़" इति नाम्नाख्यायते । जीर्णदुर्गमित्यपरमेतस्य नाम । एतस्यैव समीपे गिरनार इति प्रसिद्ध एकः पर्वतः, यस्य "रैवतक" नाम्ना पुराभिधानमभवत् । अत्रैव पर्वते अशोकस्कन्दगुप्तरुद्रदामादीनां प्राचीनानां प्रथितप्रभावानां नरपतीनामुत्कीर्णानि शासनान्युपलब्धानि । साम्प्रतं "भावनगर" इति प्रसिद्धस्य राज्यस्यानतिदूरे वलभीराज्यस्य भग्नांशो विलोक्यते ।

लाटिकराज्यस्य राष्ट्रिकराज्यमिति संस्कृतं नाम । एतद्धि राज्यं गुर्जरदेशस्य प्रान्त

विशेषः। गुर्जरदेशस्यैवापरं नाम लाट इति। लाटदेशीया संस्कृतरचनापद्धतिर्लाटीरीतिरित्युच्यते। संस्कृतग्रन्थेषु "भृगुकच्छम्" इति यन्नगरमाख्यायते, तस्य "परिगाजा" इति टालेमीपण्डितेन नाम निर्दिष्टम्। तद्भृगुकच्छमेव साम्प्रतं "भरोच" नाम्नाख्यायते। मगधराज्यस्य प्रतापभानावह्नोमध्यमारूढे द्वे पोततीर्थे भारतेऽभवताम्। पूर्वसमुद्रतीरे "ताम्रलिप्तम्" अपरान्तसमुद्रतीरे च "भृगुकच्छम्" इति। तदा पाटलिपुत्रनागरादेतत्पोततीर्थद्वयगामि सुन्दरं राजवर्त्म निर्मितमासीत्।

टालेमीपण्डितेनार्यकीराज्यं वर्णितं दृश्यते तच्च महाराष्ट्रदेश एव। पुरा दाक्षिणात्य आर्यराजभी राज्यं प्रतिष्ठापितमभवत्। तस्यैव तत्रत्यैरनार्यैरार्यकी संज्ञा विहितेति प्रतीयते। महाराष्ट्रदेशो हि त्रिधा विभक्त आसीत्। तत्रैकस्यांशस्य काऽपि वणिक्समितिः शासनमकरोत्, अन्यश्च भाग आन्ध्रराज्ञामधीनोभवत्। कल्याणनगरमेव महाराष्ट्र—देशस्य प्रधानं नगरम्।

सौवीरप्रदेशो हि "सुपर" इत्यभिनवं रूपमासाद्य स्वीयावस्थाननिर्णये विमोहयति पण्डितान्। सौवीरप्रदेशो हि समुद्रतीरं यावद्विस्तृत आसीत। अफिरशब्दो ह्याभीरशब्दस्यापभ्रंश इति स्वत एव निर्णीयते। तदाऽपरान्तसमुद्रो (अरबसागर) जलदस्यूनां वासस्थानमिति किमपि भीषणं रूपमाससाद। समुद्रोपकूलादागत्य जनपदान् प्रध्वंसयामासुरसुरा इति संस्कृतपुस्तकेषु वर्णितं दृश्यते। जलदस्यव एव तेऽसुरा इति विदुषां परामर्शः। देवैः प्राप्तभङ्गा ह्यसुराः समुद्रमेव शिश्रियुरित्यपि वर्णितं पुराणेषु। प्रेत्नावन्तोऽस्यार्थमित्थं वर्णयन्ति आर्यैः पराजिता निर्वासिताश्चानार्याः समुद्रतीरमाश्रित्यार्यान् पीडयामासुरिति।

मालावारप्रान्तभागे ब्रह्मागारनामकं किमपि स्थानं सुप्रसिध्यति, तत्र चार्यावर्ताद् ब्राह्मणा आगत्योपनिविविशुः। पुरा जामदग्न्य आर्यावर्ताद् ब्राह्मणान् आनाय्यात्र प्रदेश आर्योपनिवेशमस्थापयत्। तत आगतैर्ब्राह्मणैरनार्या अपि सभ्या विहिताः। महर्षिरगस्त्योऽप्यनार्याननुगृहीतवानित्यपि वर्णितं पुराणेषु। ब्राह्मणप्रधानानि नगराण्यग्रहार इत्याख्यायन्ते। अनार्यैः पृथग्भूता अपि तानुपकृतवन्त आर्याः, अग्रहाराणां साधारणतन्त्रप्रणाल्या शासनमभवत्।

टालेमीपण्डितस्य "कुमारिया" एव साम्प्रतं कुमारिका इत्याख्यायते। पुरात्र प्रदेश आसीद्भगवत्या दुर्गायाः कापि प्रतिमूर्तिरिति प्रदेशस्याप्यस्य तन्नामाभवत्। साम्प्रतं "तूतीकोरिन्" नाम्ना प्रसिद्धस्य "रासिकोरइ" नाम्नाव्यवहारमकुर्वन् पाश्चात्या ऐतिहासिकाः। इदं हि तदा प्रधानं पोततीर्थमभवत्, प्रधानञ्च स्थानं मुक्ताव्यवसायिनामभवत्। इदं तामीलभाषायां "कलकी" इत्युच्यते। अत्रैव पाण्ड्यराज्ञो,, राजधानी प्रतिष्ठिताभूत्। इदमूर्जितविभवं नगरं व्यवसायिनां प्रधानं

लेभमभवत् । टालेमीनिर्मिते ग्रन्थे ताम्रपर्णीत्यस्य "सोलन्" इत्यभिधानं दृश्यते । पालीभाषायां च सेयं "तम्बापाणि" इत्युच्यते। ताम्रपर्णी यत्र समुद्रमुपतिष्ठते, पुरा ततो मुक्ता निस्सार्यन्ते स्म । महाकविः कालिदासोऽपि-
ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम्

इति वदन्नमुमेवार्थं प्रमाणयति । टालेमीग्रन्थे दृश्यमाने "पाण्डियन" राज्यं पाण्ड्यराज्यस्यैवापभ्रष्टं रूपम् । मदुरानगरेऽस्य राज्यस्य राजधानी प्रतिष्ठिताऽभवत् । मथुराशब्द एव तामीलाभाषायां मदुरा इति रूपमासादितवान् गुर्जरदेशात आगत्यार्यैरत्र राज्यं प्रतिष्ठापितम् । "कोरी" अन्तरीपस्याधुनिकं नाम "कालमिपर" इति । लङ्काभारतवर्षयोर्मध्यस्था द्वीपा रामधनुर्नाम्नाऽख्यायन्ते स्म ।तस्ते ह्यर्द्धचन्द्रनिभा आसन् । धनुष्कोटिप्रतिमत्वात् कोटिशब्देनापि तेषामभिधानंप्राववर्त्तत । कोटिशब्दस्यैव "कोरि" इति रूपान्तरम् । त्रिवङ्कुरराज्यं टालेमीग्रन्थे "पारिलिया" नाम्ना परिचितम् । एतस्यैव पुराली इत्यपरं प्राचीनंनाम, तदधिपतयो नरपतयश्च पुरालीश इत्याख्यायन्ते स्म । द्रविडराज्यस्योत्तरेण तदा चोलानामधिकार आसीत् । "खवारम् अर्धगङ्गा" इत्यादिभिर्नामभिः पुरा कावेरी परिचीयते स्म । एतेन गङ्गातीरस्थैरार्यैरत्र राज्यं स्थापितमित्यनुमीयते । साम्प्रतं पुरी नाम्ना प्रसिद्धं भगवतो जगन्नाथस्य नगरं पुरा "जागगेइला" नाम्ना प्रसिद्धमभवत् । टालेमी पण्डितेनोत्कलदेशभवानां चतसृणां नदीनां नामान्युल्लिखितानि, परमस्मत्परिज्ञाताभिरुत्कलीयनदीनां नामभिर्न तानि तुलामधिरोहन्ति । सुवर्णरेखा नाम्न्या नद्यास्तीरे कुशाम्बनामकं नगरमासीत् । परं साम्प्रतं तस्य किमपि चिन्हं न विलोक्यते । पुरा पश्चिमोत्तरप्रदेशे यमुनातीरे प्रसिद्धा कौशाम्बी नगरी प्रतिष्ठिताऽभवत् नष्टे हस्तिनापुरे कुरूणां तत्रैव राजधानी स्थापिताऽभवत् । रामायण महावंश मेघदूतादिष्वेतन्नाम विलोक्यते । इदं नगरं बाद्धानां किमपि तीर्थम् ।

भागीरथ्याः पञ्च शाखा विनिर्दिष्टाः टालेमीपण्डितेन । परं तेन विनिर्दिष्टनामभिः गङ्गायाः कस्या अपि शाखाया नामसाम्यं नोपलभामहे ।

भारतीयैर्भूगोलविद्भिः "महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षः पारियात्रो विन्ध्यश्चेति सप्त कुलपर्वता भारत इति निरूपितम् । टालेमीपण्डितग्रन्थे तु केवलं विन्ध्यस्यैव नामान्तरमुपलभ्यते । अर्बुदपर्वतो हि "अपकोप" नाम्ना निर्दिष्टस्तेन पण्डितेन. । टालेमीपण्डितेन पञ्चनदीयानां बह्वीनां नदीनां नामान्युल्लिखितानि । ऋग्वेदेऽपि" सिन्धुः सरस्वती, शतद्रुः परुष्णि मरुद्वृधा असिक्नी, आर्जिकीयाः सुषोमा, ससर्तु, रसा, श्वेती, गोमती कुभु, कुभा, मेहत्नु इत्यादीनि पञ्चनदीयनदीनां नामान्युल्लिखितानि । पुरा पञ्चनदप्रदेशः सप्तसिन्धुनाम्नाख्यायते स्म । सिन्धुस्तच्छाखाः पञ्चनद्यः सतस्वती चेति सप्तनद्यो यत्र प्रवहन्ति स प्रदेशः सप्तसिन्धुपदेनाख्यायते ।

विदेशीयैरैतिहासिकैः सिन्धुनदस्यापरान्तशाखा "वाइडसपेस" नाम्नाख्यायते। साम्प्रतं "वेहत्झीलम" इति नाम्ना वास्य प्रसिद्धिर्लोके। अलीकचन्द्रानुचरैरियं "हाइदासपेस" नाम्नाभिहिता। काश्मीरेष्वियं "विदस्ता" इत्युच्यते। वितस्ता इत्यस्याः संस्कृतं नाम। साम्प्रतं चन्द्रभागा हि चन्द्रावलरूपे परिणता दृश्यते। "असिक्नी' ग्त्यस्या वैदिकं नाम। विदाशा, इरावती, शतद्रुरित्येता नद्यः साम्प्रतं यथाक्रमं वियम रावी सतलज इतिनाम्ना ख्यायन्ते। यमुना शोण सरयुश्चेति टालेमीपण्डितेन यथाक्रमं जोयामोना, सोया सारावस् इति नामभिर्निर्दिष्टाः।

येषामफागानिस्थानपञ्चनदमध्यवर्तिनां देशानां नामानि टालेमीपण्डितेन विनिर्दिष्टानि तानि महाभारतेऽन्येषु च पुराणेषु वर्णितानि दृश्यन्ते। तदा मेघवाहनो नरपतिः काश्मीराणामधिपतिरासीत्। गङ्गां यमुनाञ्च स्पृशति स्म तदधिकारसूर्यः। शतद्रुगङ्गयोर्मध्यस्थो देशः "किलिण्डि्नि" इत्युच्यते। संस्कृतग्रंथेष्वयं देशःकुलिन्दनाम्ना प्रसिद्धः। युधिष्ठिरस्य राजसूययज्ञे सुवर्णमुपहृतवन्त एतेऽध्वरदीक्षिताय महाराजाय। गान्धारराज्यं हि सिन्धुनदस्य पूर्वां पश्चिमाञ्च दिशमभिव्याप्यासीत्। इदमतिप्राचीनं नगरं बौद्धानामपि प्रधानं स्थानमभवत्। तक्षशीला पुष्करावती चेति प्रधानं नगरं गान्धार राज्यस्य। दाशरथेर्भरतस्य पुत्रेण पुष्करेणेयं नगरी स्थापिताऽभवत्। अलीकचन्द्रस्य भारताभियानसमये हस्तिनामकः कश्चनात्र नरपतिरासीत्। एष नरपतिस्त्रिंशद्दिनान्यलीकचन्द्रवहिन्या समं युद्ध्यन् नगररक्षामकरोत्, ततश्च परलोकमगात्। ततस्तत्पुत्रः सजयो नामालीकचन्द्रेण तत्र राजसिंहासनेऽभिषिक्तःशकजातीयः कनिष्कस्तदा पुरुषपुरस्य (पेशावर) नरपतिरासीत्। सिन्धुवितस्तयार्मध्यवर्तिनिप्रदेशे तक्षशिलानिभं न किमप्यन्यन्नगरमासीत् अतिप्राचीनेष्वपि ग्रंथेष्वेतन्नगरस्य नामोपलभ्यते। भरतपुत्रेण तक्षेणेदं नगरं स्थापितमिति रामायणतो निश्चीयते। अत्र च प्रभुत्वमासीत् शकानाम्। बौद्धाश्चास्य नगरस्य पावनत्वमुद्घोषमासुः। भगवान् बुद्ध एतन्नगरायात्मनः शिरः प्रदान ममन्यत इति बौद्धपुराणादितो विज्ञायते। माहम्मदानां कस्मिन्नपि ग्रंथे तक्षशिलाया नाम नोपलभ्यते, तस्मात्तदागमनतः पूर्वमेवेदं नगरं विनष्टमिति प्रत्येतुं शक्यते।

संस्कृतग्रन्थेषु वर्णितं पाण्डवराज्यं, टालेमीपण्डितेन च गीतगुणं पाण्डइ राज्यं नातिरिक्त इति तु निश्चितमेव। ललितविस्तरनामके बौद्धानां ग्रन्थे दृश्यते—बुद्धजन्म समये पाण्डवा हस्तिनापुराधिपतय आसन्निति। पुराणेषु राज्ञो जन्मेजयस्य पुत्रस्य शासनकालेपौत्रस्यशासनकाले वेदं नगरं समुद्राम्भसि निमग्नमिति वर्णितं दृश्यते। इदं हि पुराणवर्णनं बुद्धजन्मतः बहुप्राग्निष्पन्नम्। साम्प्रतं का गतिर्ललितविस्तरोक्तस्य, टालेमीपण्डित समये वा क्व स्थितिरासीत् पाण्डवानाम्। नन्दानां राज्यकाले पाण्डवकुलं समूलतो

नष्टमित्यैतिहासिकाः। भूयः खृष्टाद्द्वितीय शतके कुतः पाण्डवानामाविर्भावः? इत्थं तु मन्ये। इक्ष्वाकुवंश्या कुरुवंश्याश्च तदा तत्र तत्र विभक्ताः क्षुद्रक्षुद्रतरं राज्यं स्थापयामासुः तेषामेव कस्यापि वर्णनं टालेमीपण्डितेन कृतं भवेदिति।

एतेन विद्वांसोऽवगन्तुं पारयेयुर्यदस्ति भारतवर्षस्यापीतिहासो नामेति। साम्प्रतं भूगोलज्ञानाभावात् सन्तमपीतिहासमवगन्तुं न पारयामः। अस्ति भारतीय इतिहास इति तु सत्यम्, परं सामयिकज्ञानाय ते नालमिति नो बुद्धिः। साम्प्रतमितिहासेन यादृशं ज्ञानं सम्पाद्यमानमभिलष्यते, न तथाविधं ज्ञानं सम्पादयितुं समर्था भारतीया इतिहासाः। नाप्येते पूर्णाः यथा पूर्वजानां वृत्तान्त इतिहासे उपनिबध्यते, तथा विद्याया, गुणस्य, समाजस्य, धर्मस्य, मनःप्रवृत्तेश्च साम्प्रतमितिहासा उपनिबध्यन्ते। अनुकरणीयोऽयं पन्थाः विद्याप्रणयिभिर्भारतीयैरिति शिवम्

## पातालपरिभ्रमणम्

मदीयोपाध्यायस्य स्वभावो नितरां विलक्षण इति प्रायो विदितं सर्वेषामध्यापकानामध्येतृणाञ्च। पथि गच्छन्तमुपाध्यायं विलोक्य परस्परं दत्तसङ्केता मन्दमन्दमुपहसन्ति स्म सर्वे केचनाङ्गुल्या तं निर्दिशन्तः करतलमास्फोटयन्तश्च विरूपयितुमपि तं न विरमन्ति स्म। परं न तेषु मनागप्युपाध्यायस्य दृष्टिपातोऽभवत्, स हि सर्वदा कस्मिंश्चिद् गभीरे विषये निमग्नो योगीव बाह्यज्ञानशून्योऽतिष्ठत्। साम्प्रतं हि निजावास एव किमपि जीर्णतरं पुस्तकं विलोकयत उपाध्यायस्य बहुदिनान्यतीतानि, उपाध्यायस्य दयितापि परलोकमासादितवती। साम्प्रतं तस्यैका तनया अपरा वृद्धा च परिवारे तिष्ठतः परं धामोपगतवति पितरि तद्गृह एवाहमपि निजवसतिमकार्षम् उपाध्यायो महता स्नेहेन मामपाठयत्, तद्वयतमासाद्य पितरि मे मन्दोत्कण्ठा समजायत। आसीदुपाध्यायस्य गृहे प्रत्नहस्तलिखितानां पुस्तकानां महान् सङ्ग्रहः। तान्येवपुस्तकान्यासन् मनसो विश्रामस्थानमुपाध्यायस्य। सायं प्रातश्च परिभ्रमितुं स गच्छति स्म। आत्मन आन्हिकं निर्वर्त्य स निखिलं समयं पठन्नेवातिवाहयति स्म। परमेषु दिवसेषु सर्वाः क्रिया विपर्यस्तास्तस्य महाभागस्य। अधुनात्मनो गृह एव सदा तिष्ठति, नापि यथा समयं स स्नानभोजनेऽप्याचरति। सर्वदा जीर्णतर एकस्मिन् पुस्तके लग्न दृष्टिः किमपि विलिखन्नेव दृश्यते, कदापि कोपकुटिलितनयनो विखिलतं पत्रं खण्डयति, कदापि चीत्करोति, कदाचिच्च विहसति। तदा तं पश्यतां नश्चेतसीत्थं समभवद् यदयं विहस्तीकृतश्चेतनया, उन्मत्त एव संवृत्त इति। बह्व्यो यामिन्यस्तेन जाग्रतैव नीताः, आत्मसमीपं गतमपि जनं स नाभिजानाति केवलं शून्यया दृष्ट्या परितो विलोक्य पुनस्तस्मिन्नेव पुस्तक आसक्तदृष्टिर्भवति। स ह्यशीतिवर्षव-

यस्को वृद्धः अनशनतश्च तस्य त्रित्राणि दिनान्यतीतानि, मुखं हि तस्य विवर्णं नयने च मूर्द्धानं चुम्बितुमिवोपक्रान्ते। एष एव मदीय उपाध्यायो लोक विलक्षणः सर्वशास्त्रनिष्णा तश्च।

तस्यैवंविधं दशाविपर्ययमवलोक्य समुत्पन्नः सर्वेषां हृदि कोऽपि सन्त्रासः। साम्प्रतं हि वृद्धा भीता तत्समीपमपि नोपसर्पति। दूरत एव तं विलोकयन्ती किमप्यव्यक्तं वदति अहं हि निखिलान् अस्तान विलोक्य इत्थमुपाध्यायस्य भोजनाभावेन प्राणोत्क्रमणं निर्धार्य कथं कथमपि तत्समीपमुपागच्छम। उपाध्यायतनया नर्मदाऽपि मामन्वगच्छत्। तस्मिन्नेव समये हर्षनिर्भर उपाध्यायो मे "अधिगतंमया" इति तारतारमाक्रन्दितुं प्रवृत्तः। यदा तस्य दृष्टिर्मयि निपतिता, तदोपाध्यायस्य मुखं विवर्णमभवत्, किञ्चिन्नष्टमेतस्येति तदा तदाकृत्यातर्कयम्। पुनरासन्दीमधिष्ठायैकस्मिन् पत्रखण्डे विलिखितान्यक्षराणि सावधान मनुसन्धातुं प्रवृत्तः लुप्ता तदा बाह्यसंज्ञापि तस्य। पुनस्त्वरितमेवोत्थाय "सत्यं! सत्यं! तारापुरम्! तारापुरम्! मणिपुरम्! इत्युच्चैरुच्चारयितुं प्रवृत्त उपाध्यायः।

तदाहमुद्विग्न इवावदम् "किमेवं विधीयते साम्प्रतमुपाध्यायेन, नावगच्छामः श्रीमदाचरितमेते सर्वेऽपि वयम्" एतन्निशम्योपाध्यायो मां करयोर्गृहीत्वा गाढमाश्लिष्यन्नवदद् "राजेन्द्र, साम्प्रतं प्राप्तवानसि तारापुरम् मणिपरञ्च"।

उपाध्यायस्यैवंविधामवस्थामवलोक्य मे हृदयं कम्पमाधत्त, मत्पृष्ठतः स्थिता तत्तनयाऽपि चित्रलिखितेव निर्निमेषया दृशा तमवलोकयन्ती तूष्णीमतिष्ठत्, अहं कथमपि तद्बाहुपाशमुन्मोच्य कथं कथमपि तमासीनञ्च विधाय तद्गृहमुन्मुक्तद्वारमकरवम् पुनर्नर्मदया किञ्चित्प्रपानकमानाय्य तमपाययञ्च। इत्थं शान्ता वेदनोपाध्यायस्य, तच्चितञ्च स्थिरमभवत्। तत उपाध्यायो वारंवरमपृष्टोऽपि केनचित् स्वयमेव "तारापुरम्, मणिपुरम्" इत्यवदत्।

तदाहमुपाध्यायमपृच्छम्—क्वास्ति तारापुरम् किं वा तत्र भविष्यति"।

उपाध्यायस्त्वरितमवदत् "पश्य, इदं तारापुरम्, इदं तारापुरमेव भवति, पश्यान्यच्च, एभिरक्षरैर्मणिपुरम् भवति" इत्युक्त्वा तालपत्रविलिखितं जीर्णतरमेकं पुस्तकमामदर्शयदुपाध्याय,। तत्पुस्तकलिपिं लेशतोऽपि ज्ञातुमहं नापारयम् अदृष्टपूर्वाण्यासँस्तान्यक्षराणि, अहमपृच्छम् का नामेयं लिपिः, भर्त्सयन्निवोपाध्यायो मामवदत्—नाभिजानासि, इयं पैशाचीलिपिः, अस्या राक्षसीत्यपरं नाम। पुनस् "तारापुरमि" त्यनिच्छतो मम मुखाद्विनिर्गतमिति श्रुत्वोपाध्यायोऽवदत्। अथकिम्, तारापुरमेव, तारापुरव्यतिरिक्तं नान्यत् किञ्चिदपि भवितुमर्हतीदम्" तदा नेत्रकोटरान्तर्गत उपाध्यायस्य कनीनिके किञ्चिद्बहिर्निःसृत इति विलोक्याहं भीत इव ततः किञ्चिद्दूरं प्राद्रवम्।

"यत्सत्यमिदं तारापुरमेव भवतीति शनै-स्तकाहं शीतोपचारमारचयम्, तत्तनया नर्म-दाऽपि तं वीजयितुं प्रवृत्ता इत्थं कथं कथ-मपि मया नर्मदया च प्रकृतिं गमितमुपाध्या-यमहमब्रवम् उपाध्याय, समयोऽयं स्नान-भोजने सेवितुम्, इदंतु तारापुरं जात मेव।

एतच्छ्रुत्वा प्रसन्नाननः समभवदुपाध्यायः मामवदच्च—इदं तारापुरमेवेति नात्र लेश-तोऽपिसन्देहः। यद्धि मणिपुरस्यैशान्यां दिशि वर्तते। यथाह उपाध्याय इति मयाऽपि तथैव स्वीकृतम्, ततः स्नानभोजनानन्तरं कथंकथ-मप्यवाभ्यां सेव्यमान उपाध्ययोः निद्रामभजन्।

---

## मणिपुरम्

अस्तोन्मुखे सूर्ये मदीय उपाध्यायस्तल्पम-त्यजत्,। सुप्तोत्थितस्य तस्य मुखं स्फूर्तिमदिव दृश्यते साद्युपाध्यायस्य मुखमुद्रा कुहचन विलीनेति साम्प्रतं स प्रसन्नावदनः समभवत्। तस्य स्तब्धे नयने प्रसन्ने, बाह्यज्ञानशून्यत्वम-न्तर्हितमिति साहसमवलम्ब्य भूयस्तत्समीप-मुपागच्छम। मामवलोक्यैवोपाध्यायोऽवदत्। वत्स, अपि जानासियन्मे मनोरथद्रुमः साम्प्र-तं साफल्यमुपलब्धुमुपक्रान्त इति। अधिग-तमिव साम्प्रतं मणिपुरम्। परं नैतदेकेनैव मया सम्पादयितुं शक्यम्,। बहूनां यान्त्राणां व्यवहारे त्वयापि मम सहकारिणा भवितव्य-म्,। तेषां व्यवहारप्रक्रियाश्चाहं त्वां यथासम-यं बोधयिष्यामि।

अहमवदम्—न कदाप्युपाध्यायस्याज्ञामुल्लङ्घ-यितुं शक्नामि, मया साध्यं साधयितुमहमु-द्यतएव, परं किं विधेयमित्युपदेष्टुमर्हत्युपा-ध्यायः,

उपाध्यायः किञ्चिच्चिन्तयन्निवावोचत्—"पातालपरिभ्रमणाय प्रस्थातव्यमवाभ्याम्"

एतन्निशम्य मे काप्यवस्था समभवत्,। साम्प्रतमुन्मत्तोऽयं संवृत इति मया निर्धारितम् पैशाचिकैर्मन्त्रैरयं पिशाचीकृतो वा। न जाने वार्द्धक्ये कियती यातनाऽनेन भोक्तव्या भवि-ष्यति। सर्वथा प्रभवति विधिरेव।

स्तब्धीभूतं मामवलोक्योपाध्यायोवदत्—"आकर्णितं त्वया अवाभ्यां पातालं प्रस्थातव्य-म् भविष्यति, यन्त्राद्युपकरणवहनार्थं कश्चन भृत्योऽप्यपेक्षितः, आदिश, हंसं, सोऽपि व्रज-त्विति। यथा शक्यं विलम्बः परिहरणीय एव।

किमादिशत्युपाध्याय इति लेशतोऽपि नाव-गच्छम्, परमेतेनोपाध्यायस्य न किमपीष्टम-निष्टं वा सम्पन्नम्, स हि सत्य सत्यं पाता-लपरिभ्रमणाय सन्नद्धः, सम्भृतानि पाथेया-दीनि तेन महाभागेन, किं विधीयत उपाध्या येन, नाद्य यावत्पातालं गच्छनकोऽपि दृष्टः श्रुतो वा इति सभयं वदन्तं मां निरभर्त्सयदु-पाध्यायः। अहमपि तत उपाध्यायवचने न प्रतिपन्थी भविष्यामीति प्रत्यशृणवम्।

उपाध्यायस्य यात्रोपकरणादिकं विलोकय-तो ममापि हृदि निहितं पदमुत्साहेन। किय-

न्ति दिनान्यस्माभिरवस्थातव्यं भविष्यति कथं वाहारो निर्वाहिष्यतीति सञ्जातसंशयोऽहमुपाध्यायमवोचम, तत्राहारव्यवस्था कीदृशी भविष्यति सन्ति वा तत्र पण्यानि ? ममप्रश्नं निशम्य वैज्ञानिकोपाध्यायस्य स्वभावनीरसं मुखमण्डलं किञ्चिदुद्भिन्नपलाशस्य पत्रस्य शोभामधत्त । उपाध्यायः प्रत्यवोचत् क एतन्निश्चित्य वक्तुंशक्नोति । परं वैज्ञानिकप्रयाणं तथैव प्रणाल्या भवितुमुचितम । तदर्थंविहिता मया सर्वेऽपि प्रबन्धा-इत्युक्त्वा उपाध्याय एकां पेटिकामपरांवसनग्रंथिञ्चादर्शयन्नवोचच्च, एतद्दृष्ट्य साकंत्रयाणामपिवर्षद्वयभाज्यं भविष्यति । यद्यप्येते मोदका लघवस्तथाप्येकेनैव प्रस्थपरिमितं भुञ्जानाअपि तृप्तिमेष्यन्ति । तत उपाध्याय एकस्मिन पात्रे जलं निधाय तत्पात्रं विद्युद्दीपिकायामस्थापयत् उष्णीभूते तज्जले मोदकार्द्धं तत्र निक्षिप्तंमुपाध्यायेन । पश्यत एव मम तेन मोदकार्द्धेन पात्र पूर्णमभवत । ततो भोक्तुं मां समादिशदुपाध्यायः । भीतेन मया ततः किंचिद् भुक्तम् न तद्विरस मासीत् । एकस्मात् काचपात्रात तरलमौषधं तत्र संयोज्य—भुज्यतां यथेच्छमित्युपाध्यायो मामाज्ञापयत । मयाप्याकण्ठंभुक्तं तत् । येन मे रात्रावपि भोजनाभिलाषो नाभवत । ।

---

## वार्ताः सम्पादकाभिप्रायाश्च ।

### विज्ञानञ्च वेदश्च

प्रत्यक्षाभिः प्रत्यक्षवद्धीनसंशयाभिश्चोपपत्तिभिर्वस्तुतत्वनिर्द्धारणं विज्ञानमित्याख्यायते । तदवबोधकं शास्त्रञ्च विज्ञानशास्त्रमित्याख्यायते । सत्यमसत्यञ्चेति द्विधा विभक्तं मानवानां ज्ञानम् । सत्यात्मकं ज्ञानं "प्रमा" तद्विरुद्धञ्च 'अप्रमा' इति "भ्रम" इति चोच्यते । प्रमाणैः सञ्जातनिर्णयं ज्ञानं प्रमा, अप्रामाणिकञ्च भ्रम इति निर्दिष्टं भवति । तदेव प्रमात्मकं ज्ञानं सत्यञ्च ज्ञानं विज्ञानशब्दाभिधेयतां वहति ।

प्रौढबुद्धीनामेव विज्ञान आदरातिशयो भवति त्वग्मात्रसारासु कथासु न तेषां मनो रमते । यः कोऽपि वा विषयो येन केनापि वा कथितं वचनं, स्वयमुद्भाविताभिर्युक्तिभिरपरीक्ष्य न तत्र विश्वासमादधते प्रेक्षावन्तः । तेषां हृदयं हि सत्यानुसन्धान प्रवणं भवति. युक्तिपरीक्षितो विषय एव तेषां हृदयं वशयति । अतो निखिलशास्त्रमूर्द्धन्यं विज्ञा शास्त्रं गायते । विज्ञानञ्च वेदश्चत्युभयोर्न तात्त्विको भेदः । ईश्वरीयं ज्ञानं प्रमात्मकं ज्ञानं वा वेद इत्युच्यते विज्ञानमपि तदेव । इत्थं सिद्ध उभयोरभेदः । "मोक्षे धीर्ज्ञानमन्यत्रविज्ञानं शिल्पशास्त्रयोरिति वदन्नमरसिंहो ज्ञानविज्ञानयोर्भेदं व्यवस्थापयति । मोक्षविषयकं तात्त्विकं ज्ञानंज्ञानं शिल्पशास्त्रविषयकं तात्त्विकं ज्ञानं विज्ञानमित्यमरसिंहो निर्दिशति ।

सन्ति प्रमातुमशक्या अपि पदार्थाः । "ईश्वरोऽस्ति, आत्माऽस्ति, धर्मोऽस्ति, परलोको-

ऽस्ति" इत्यादयो विषया नहि प्रत्यक्षादियुक्तिभिरुपपादयितुं सिद्धान्तयितुञ्च शक्याः। एतेषां निर्धारणं साधरणविज्ञानशास्त्रेण भवितुमशक्यम्। यदा मानवो वैज्ञानिकीं सीमामतिक्रम्याप्रमेयसत्यान् पदार्थानुलब्धं प्रयतते, तान् पश्यति वा तदा तेषां हृदय विशाल भवति, केनाप्यलौकिकेन भासा समुद्भासित भवति, तदा तेषां पुरो वैदिक विज्ञान प्रतिफलति। अत्रायम्भावः, विज्ञानशास्त्रं द्विधा विभक्तम्, साधारणविज्ञानशास्त्रम्, वैदिकविज्ञानशास्त्रञ्च। साधारणविज्ञानशास्त्रं हि सान्तं परिच्छिन्नञ्च। वैदिकविज्ञानशास्त्रं ह्यनन्तम्। साधारणविज्ञानशास्त्रस्य यत्र समाप्तिर्भवति तत्र वैदिकविज्ञानस्य प्रारम्भो जायते। साधारणविज्ञानशास्त्रं हि वैदिक विज्ञानेन परिच्छिन्नमिति युक्तमुत्पश्यामः। प्रमेयसत्या एव पदार्थाः साधारणविज्ञानशास्त्रेण परीक्षितुं शक्याः अप्रमेयसत्यास्तु वैदिकविज्ञानेन बोध्यन्ते। अतः स्वश्रेयसमर्भीप्सद्भिर्मानवैर्विज्ञान शास्त्रं सावधानमनुशीलनीयम। साधारणविज्ञानं हि वैदिकविज्ञानुगतं वैदिकविज्ञानञ्च साधारणविज्ञानकूलं पश्यन मानवः शान्तिमधिगच्छति। यत्र विज्ञानं वेदविरोधि, वेदो वा विज्ञानशून्यो न तत्र धार्मिकं ज्योतिः प्रतिफलति। विज्ञानविरहितो वेदोऽन्धविश्वास इति निगीयते धीमद्भिः। विज्ञानविरहितो वेदो न चिरं स्थातुं पारयति। महाबलशालिभिर्नरपतिभिरप्यन्धविश्वासस्तावदेव स्थापयितुं शक्यते। यावन्नोदेति तमोहरं विज्ञानशास्त्रम्। ननु भगवती श्रुतिरप्यमुमेवार्थं समर्थयति।

> अविद्यायामन्तरे वर्तमानाः,
> स्वयं धीराः पण्डितम्मन्यमानाः।
> दन्द्रम्यमाणाः परियन्ति मूढाः,
> अन्धेनैव नीयमाना यथान्धाः॥
>
> (कठोपनिषद्)

## भारते विज्ञान शास्त्रं

साम्प्रतं भारतीया दिनादिनं शाश्वते धर्मे क्षीणश्रद्धा विलोक्यन्ते। नायमभिनवोऽर्थः। अत्र कुसुमसुकुमारं विलोचनं निपतितमस्माकं धर्माचार्याणां, समाजपतानाञ्चेति मन्तुष्यामः। परं हन्त तैरभिनव एव कोऽपि हेतुर्निर्द्धारित इति निवेदामः। कलिहतकेन विमोहिता निखिलाः शाश्वतधर्माय निवापाञ्जलिं प्रदातुं सन्नद्धा इति तेषां मतम्। केचन नास्तिक्यप्रसविनीं पाश्चात्यशिक्षामेवात्र निमित्तं स्थिरी कुर्वन्ति।

हन्त भोः कलिप्रसरं निरोद्धमसमर्थाः साम्प्रतं यूयम, निमित्तमप्रयोजकं प्रकृतोनांवरणाभेदस्तु ततः नैमित्तिकवद् इति पातञ्जलीयोपदेशे विलीना वा श्रद्धा, ?पूर्वमहर्षिभिर्निरूपिते युगप्रवृत्तितत्त्वे नामशेषतां गता वा साम्प्रतं श्रीमतामास्था? अन्यथा कथमिव कलिहतको धर्मलोपनिमित्ततामनुभवतीति सिद्धान्तं व्यवस्थापितुं समुन्मिषेद्‌ वाणी नाम? धर्मपालनञ्च न मस्तिष्कशिक्षायत्तमिति तु

मन्यामहे इदयशिक्षयैव धर्मः पालितो भवति, साम्प्रतं सैव शिक्षा भारतीयेषु नास्तीति तत्कृत एव भारतीयानां धर्मे प्रतिदिनं जायमानः श्रद्धाह्रास इति नः स्थैर्यसौबुद्धिः ।

सा हि शिक्षा विज्ञानशिक्षयैवोपलभ्यते । यदा भारते विज्ञानप्रचारआसीत्, तदा धर्मे वेदे च निखिलाः श्रद्धावन्त आसन् । विज्ञानशिक्षणाभावादेवेयं शोच्या दशा शाश्वतस्य धर्मस्य भारतीयानाञ्च ।

अत्र केचनेत्थं प्रत्यवतिष्ठन्ते—नहि बाल्ये विज्ञानशिक्षणं सुशकम, तस्य क्लिष्टत्वात । धर्माङ्कुरो हि बाल्य आरोपयितुं शक्यते, तदैव तस्यापयुक्त समयः । तस्माद्विज्ञान शिक्षणायत्ता धर्मश्रद्धा, विज्ञानशिक्षणे हि परिणतबुद्धित्वमपेक्षितम तच्च बाल्येऽसम्भवमितिसमुच्छेद एव धर्मस्येति । अभिज्ञाः अत्रेदं तावत् किञ्चित्कर्णयोः कुरुत, स्वभाव एव शिक्षयति वैज्ञानिकं तत्त्वमस्मान । प्रथमं स्वभाव एव विज्ञानोपदेष्टा भवति । मातृकुक्षितो बहिर्निःसृतः शिशुः क्रमेणरूपरसादीन गुणान् प्रत्यक्षीकरोति । निखिलाः पदार्था मानवानामिन्द्रियदर्पणेषु प्रतिफलन्ति । बाह्याभिः क्रियाभिर्मानवानां हृदयेऽपि यथायथं परिवर्तनं भवत्येव । सुखदुःखेर्ष्यामोहादयः समुत्पन्ना कदाचिन्मानवान् सुखयन्ति, कदाचिच्च दुःखयन्ति, तेन च प्रहणप्रतिकारेच्छोपजायते इत्थं फलेच्छया-प्रेरिता मानवा व्यापारमनुतिष्ठन्ति । ततश्च शरीरस्था शक्तयो विकशन्ते । इत्थं भवति कार्यकारणनिर्णय. । स्वभावसमुत्पन्न एव विज्ञानाङ्कुरो विज्ञानानुशीलनेन विबोध्यत इति

---

## माहम्मदविद्यार्थिनः संस्कृतानुरागः ।

पुरा बहवो माहम्मदाः संस्कृतभाषानिपुणा अभूवन् । इयं हि भगवती शारदा समाराधिता निर्विशेषं दयते सर्वेषाम् । माहम्मदैरपि समाराधिता भगवती सस्नेहमनुगृह्णात्येव तान् । पूर्वमाहम्मदैर्निर्मिताः स्तोत्रग्रन्था ननु सन्तर्पयन्त्येवरसिकानां मनांसि ।

साम्प्रतमपि बङ्गीयो मौलवी महम्मदशहीदुल्लानामको माहम्मदः कलकताविश्वविद्यालये संस्कृताध्ययने ख्यातिमासाद्य भूयः संस्कृतशिक्षायै लण्डननगरं प्रस्थित इति नूनमनेन कर्मणा तस्य महात्मनः संस्कृतानुरागः परिचीयते वर्द्धतामुत्तरोत्तरं संस्कृतभाषायां निखिलानामनुरागः ।

---

## विज्ञानपरिषत् ।

प्रयागे विज्ञानपरिषदिति कापि समितिः प्रतिष्ठापिता उत्साहवद्भिर्विद्वद्भिः । प्रसिद्धैर्मान्यैर्विद्वद्भिर्धनिकैश्च दत्तहस्तावलम्बेयं परिषत् काममात्मन उद्देश्य सफलतिष्यतीत्याशासे । अस्या यः कोऽपि वा विज्ञानप्रणयी विद्वान् सदस्यो भवितुमर्हति । सदस्यैश्च प्रतिवर्षं रूप्यकद्वयं देयं भवति । विद्याप्रणयिभिर्विद्वद्भिः केवलं विज्ञानप्रचारकामुकैः प्रतिष्ठापितेयं विज्ञानपरिषत् साधयिष्यति तेषां मनोर-

थमिति निपुणं विश्वसीमि। विज्ञानपरिषत्प्रतिष्ठापनफलं ह्यन्यदा प्रकाशयिष्यामीत्यवशिष्ट एव मे मनोरथः।

## पाश्चात्यानां जन्मान्तरवादः।

अचिन्तनीयः खलु महिमा कालस्य, एष सदाऽदृष्टं दर्शयन्नश्रुतञ्च श्रावयन् प्रथयत्यात्मनो महात्म्यम्। वर्तमानं तिरोधापयन्नन्तर्हितञ्च प्रत्यक्षयन् विभवोऽयं कालस्य परितो विजृम्भते। नास्य किञ्चित् सम्भव मसम्भवं वा। यः कदाचित् कस्मिंश्चिद्वस्तुनि न प्रत्ययमादधत्ते स एवान्यदा तदेव वस्तु सस्नेहं श्लाघते कालमाहात्म्यात्।

नासीत् पुरा पाश्चात्येषु जन्मान्तरवादविश्वासः तेषां "बायबिल" नामके धर्मग्रन्थे यद्यप्यात्मनो नित्यत्वं वर्णितं तथापि परलोकवर्णनगन्धोऽपि न ततो बहिरवतरति। शरीरं परित्यज्य जीवात्मा पुण्यपापफलभोगाय स्वर्गं नरकं वा प्रतिष्ठिते। स्वल्पस्यापिपापस्य कृते चिराय नरकभोगोदुर्निवारो भवति। स्वल्पं पुण्य बलवता पापेन बाध्यते सति बलवति पापे न स्वल्पस्य पुण्यस्य फलं भवतीति तेषां विश्वास आसीत्।

परं साम्प्रतं विज्ञानानुशीलनसञ्जातप्रज्ञोन्मेषाः पाश्चत्या जन्मान्तरतत्वे श्रद्धामादधन्तो दृश्यन्ते। तत्र "जुलियाबुरो" इति प्रसिद्धा समितिर्यत्र जन्मान्तरतत्वमनुशीलयन्ति विद्वांसः। सरअलिवरलाज, मारिस मीटरलिङ्क प्रभृतयः प्रसिद्धा विद्वांसो जन्मान्तरतत्वं प्रमाणयितुं सन्नद्धाःप्रयतन्ते। एतैर्हि महाभागैः प्रत्यक्षाभिर्युक्तिभिः परलोकतत्वं प्रमाणयितुमुपक्रान्त मिति विलोकयन्तः प्रहृष्यामः।

## साधुवादः—

श्रीमते प्रयागमण्डलशासकाय ( Distreet Magistrate ) येनहि महात्मनाशासकोचितैर्गुणैर्वशीकृतानि हृदयानिजानाम्। सर्वथाभ्युदयमधिगच्छतु श्रीमेन्गलमहोदय इति भगवान्स्वयम्भु: प्रार्थ्यते।

## व्याघ्रचर्माम्बरीणःस्वामी।

अनेन विद्यागमिकेन महात्मना सहकृतेयं पत्रिकाऽद्य प्रकाशिता। नूनमयं महात्मा आध्यात्मिकीं सिद्धिमासादयत्विति मे मनोरथः।

## गुरुकुलमहोत्सवः।

पौषकृष्ण त्रयोदशीतः वृन्दावन गुरुकुले वार्षिकमहोत्सवो भविष्यति। तत्रविदुषां व्याख्यानं संस्कृतभाषायां भविष्यति। ब्रह्मचारिभिर्निबद्धाः प्रबन्धा अपि पठिष्यन्ते इति श्रूयते।

SUPREME CONTENTMENT
AND satisfaction are assured the purchaser of Lalimli Blankets.
You will be needing warm blankets now for these colder nights. What brand will you buy? Will you purchase ordinary blankets excessively heavy but barely protective or will you buy Lalimli, pure wool, medium weight blankets that keep you perfectly warm without over-heating?
The superiority of Lalimli Blankets is due to the purity and quality of the wools, which are free from all mixtures, and which wear better and wash better than any other blankets sold.
Write for samples and prices sent free on application.
LALIMLI
BLANKETS
CAWNPORE WOOLLEN MILLS CO., LD.
CAWNPORE.

मासिकी संस्कृतपत्रिका ।

विद्ययाऽमृतमश्नुते ।

| प्रथमे वर्षे | १९७० विक्रमाब्दाः, आग्रहायणः | २ संख्या, |
|---|---|---|


## मुकुन्दमुरली

मुकुन्दमुखमेलनादमृतपूर्णरन्ध्रोद्गतैः,
स्वरैः सुविशदैर्गतागतविविक्तवर्णैर्नृणाम् ।
हठाद्हृदयहारिभिः समभिपूरयन्ती श्रुती,
मिलन्मधुरमाधुरीं मुरलिकां मनो धावति ॥१॥

विगाह्य मुरलीध्वनि मधुवन शरच्चन्द्रिकां,
कलिन्दतनयातटस्थितकदम्बमालम्बते ।
मनो मम मुकुन्दसुन्दरमुखेन्दुबिम्बोद्गतां,
पिबन्नमृतसम्भृतामपि विभामये! मुह्यति ॥२॥

अपाङ्गमनुरागिणो नदभिकेव वंशी भृशं,
पटान्तनखरश्मिभिर्निहितपीतिमालोहिती ।
निगीर्णनवनीलिमाऽधररदांशुसम्मार्जिता,
मुकुन्दमुखमण्डले नवनवां श्रुतिं पुष्यति ॥ ३ ॥

स्वरा अहह! स्वन, ते विधिर्विधेयते यत्र नो,
सुधा मिलति भूतले यमनु मातृवाणीसुखम् ।
नितान्तरसभावितः सगुणकृष्णनिःश्वासयुङ्,
निशान्तमुरलीध्वनिः श्रुतिशतान्यतिक्रामति ॥४॥

मुकुन्दमधुराधरामृतरसावसिक्तः क्षणा-
च्चराचरजगत्सु सम्मदमहाब्धिमुद्वेल्लयन् ।
मनो विवशयन् सतां व्रजवधूर्मुधा मोहय-
न्नयं विजयते नुनः सुरगणैः स वंशीध्वनिः ॥५॥

श्रीकान्तपतिशर्मणः ।

# निरुक्तम्

इदं हि किमप्युज्ज्वलतरं रत्नं भारतीयविद्याभाण्डारस्य, अपार्थिवं यशो यास्काचार्यस्य, कोऽपि दर्पणो वैदिकविज्ञानस्य छायग्राहियन्त्र ज्ञानविज्ञानयोः। इदं हि भाषाविज्ञानशास्त्रमिति षडङ्गेषु श्रोत्रात्मना विनिर्दिष्टम्।

यदा हि पूर्वं महर्षयस्तपसा मन्त्रान् ददृशुः, तदा तदर्थविज्ञाने नासीत् कस्यापि लेशतोऽपि सन्देहः, तदा निखिला मन्त्राः सुबोधा आसन्। परमन्तर्हितेषु महर्षिषु क्रमशो वेदाध्ययनाध्यापनादीनां विरलप्रचारतया त एव मन्त्राः दुर्बोधार्थाः संवृत्ताः। पुरा येषां मन्त्राणामर्था विनैव श्रममवबुध्यन्ते स्म, साम्प्रतं तेषामेवार्था बहुपरिश्रम्यता ऽवगन्तुं शक्या इति। यत्कृतं मन्त्राणां दुर्बोध्यार्थत्वमासीत्, ते शब्दाः पृथक् सङ्गृहीताः पूर्वमहर्षिभिः। कियन्तः शब्दाः पृथिवीवाचकाः कियन्तश्च जलबोधका इत्येकार्थबोधकाः शब्दा एकत्रीकृताः। एते शब्दाः पृथिवीं बोधयन्ति, एते च जलमित्येवंरूपेण तेषामर्था निर्दिष्टाः। इत्थं राशीकृतानां शब्दाना निघण्टुनाम्ना व्यवहारः प्रावर्तत। तस्यैव निघण्टुनामकस्य ग्रन्थस्य मुनिना यास्काचार्येण व्याख्या विनिबद्धा। शब्दार्थनिर्वचनमिषात् महामुनिना यास्काचार्येण ते मन्त्रा अपि व्याख्याता येषु निर्वचनीयदुर्बोधार्थाः शब्दाः सन्ति। इत्थं शब्दानां निर्वचनं, वेदमन्त्राणां व्याख्यानं निरुक्तग्रन्थेन विबोध्यते।

इदं हि निरुक्तं वेदभगवतः षडङ्गेषु श्रोत्रात्मना निर्दिष्टम्। श्रोत्रं हि शब्दज्ञानोपयोगि भवति। श्रोत्रेणैव शब्दं ज्ञानं भवति। भगवान् वेदः शब्दात्मकः। शब्दात्मकस्य भगवतो वेदस्य ज्ञानं श्रोत्रेणैव भवति, एतेन वेदार्थावबोधाय निरुक्तस्य माहात्म्यमवगन्तुं शक्यम्। अस्य ग्रन्थस्य परिचयोऽधस्तान्निर्दिश्यते किञ्चित्।

ग्रन्थारम्भे महामुनिना यास्काचार्येण शब्दाश्चतुर्धा विभक्ताः, ते यथा "चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च" इति। नामाभिधाने शब्दैः पदानामर्था बोध्यन्ते। आख्यातेन क्रिया बोधिता भवति। अयं विषयो यास्काचार्येणोदाहरणैः परिष्कृतो विनोदयति मनांसि शाब्दिकानाम्। अत्रात्मनः पुराभवेन औदुम्बरायणाभिधानेन केनापि महर्षिणा कृतं संशयमित्थं समाहितवान् यास्काचार्यः। तस्यायमभिप्रायः, नहि पदार्थानां विभागो भवितुं शक्यः, अचिरस्थायित्वात् तेषाम्। नहि युगपत्सर्वे वर्णा उच्चारयितुं शक्याः। क्रमेणैव तेषामुच्चारणं भवति। उच्चारिताश्च वर्णा विनश्यन्ते वर्णानां त्रिक्षणस्थायित्वात्। अतः कथं शब्दाश्चतुर्धा विभक्ता इति। किञ्च वर्णानां सम्बन्धज्ञानमपि भवितुमशक्यम्, पूर्वपूर्ववर्णविनाशपूर्वकमुत्तरोत्तरवर्णानां जायमानत्वात्। "रामो गच्छति" इतिवाक्ये राकारोच्चारणकाले मकारोऽनुत्पन्न एव, मकारोच्चारणकाले हि "रा" एव विनष्ट इति नोभयोः संबन्धज्ञानं सुबोधम्। अत्रेदं समाधानं यास्काचार्यस्य "व्याप्तिमत्त्वात्तु शब्दस्य" व्यापकाः शब्दाः, मकारोच्चारणकालेऽपि न भवति विनाशः पूर्ववर्णस्य। व्याप्तिमन्तः शब्दा अपरैः शब्दैः संबद्धाः अर्थं बोधयन्ति। इत्थं समादधन् भाषाविज्ञानस्य किमपि तत्त्वमाविष्कृतवान् महर्षिर्यास्कः। भावक्रिययोः कथं भवति परस्परं भेदः उपसर्गा अर्थवन्तोऽनर्थका वा, निपातैः कस्याभिधानं भवति इत्येवमाद्या विषयाः सुस्पष्टैरुदाहरणादिभिः सम्यक् परिष्कृता महर्षिणा। उदाहरणानि च वेदमन्त्रा

एव । इत्थं द्वावर्थौ सिद्धौ भवतः । व्याख्यायमानस्य शब्दस्यार्थः परिज्ञातो भवति, उदाहृतस्य मन्त्रस्यार्थश्च परिज्ञातो भवति । यत उदाहृता मन्त्रा अपि व्याख्याताः श्रीमता यास्केन। निपातेष्वेकस् 'त्व" शब्दो विद्यते, महर्षियास्को वदति केचन एकार्थवाचो "त्व" शब्द इति वदन्ति, अत्रोदाहृतवान् ऋग्वेदीयं मन्त्रं महर्षिः ।

"ऋचां त्वः पोषमास्ते पुपुष्वान
गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां विमिमीत उ त्वः ॥"

मन्त्रेणानेन ऋत्विचां कर्म परिचीयते । एषामेको होता ऋक् पठेत, अपरश्चोद्गाता तदाश्रयेण गायेत्, अन्यः सर्वविद्यो ब्रह्मा स्खलितेषु सर्वान् ऋत्विजः बोधयेत्, अध्वर्युश्चाहुतिमात्रां निर्धारयेत् । मन्त्रेणानेनैतद्विज्ञायते यत् पुरा नासीदथर्ववेदस्य वेदनाम्ना प्रचारः । पुरा ऋग्यजुःसामाना त्रयीशब्देनाभिधानं भवति स्म । उदाहृते मन्त्रे त्रिवेदानामेव परिचयो भवति, ऋग्वेदज्ञो होता, सामवेदज्ञ उद्गाता, यजुर्वेदज्ञोऽध्वर्युः, त्रिवेदज्ञश्च ब्रह्मेति पूर्वमन्त्रेण सूच्यते, चतुर्भिरेभिरेव ऋत्विग्भिर्यज्ञः सम्पादनीय इति । एकार्थवाची च त्व शब्द इति यास्कोदाहृतेनानेन मन्त्रेण पूर्वोक्ता विषया अवगम्यन्ते। एतेन यास्काचार्यस्यापूर्वा व्याख्यानशैली विज्ञायते ।

शाब्दिकः शाकटायनो, ह्यपरे च निरुक्तकारा आख्यातेन नाम्नामुत्पत्तिं वर्णयन्ति । नैरुक्तो गार्ग्यः शाब्दिकप्रधानाश्चान्ये नाम्नामेवात्पत्तिराख्यातेनेति सिद्धान्तमिममङ्गीकर्तुं नेहन्ते । विषयोऽयं चारु निरूपितो यास्काचार्येण । अतो निरुक्तं भाषाविज्ञानग्रन्थ इति सूक्तम् भवति ।

नामाख्यातोपसर्गनिपातान् विवेचयन् यास्काचार्यो वेदपाठफलमित्थं निर्द्दिशति—
—पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिमन्त्रावेदे—
—मनुष्याणां ज्ञानमनित्यमिति तेषां कर्मसम्पादनाय नित्यं ज्ञानमपेक्षितं भवति । वेदमन्त्रा अपौरुषेया इति नित्याः । मानवीयं ज्ञानमनित्यं भ्रमात्मकञ्चेति सत्यं वैदिकं ज्ञानं मानवानां कल्याणायापेक्षते ।

किं फलं निरुक्तग्रंथस्येति यास्काचार्यो निर्द्दिशति, अथापीदमन्तरेण मंत्रेणार्थप्रत्ययो न विद्यते । निरुक्ताध्ययनमंतरा मंत्रार्था नावगन्तुं शक्याः । साम्प्रतं हि वेदमंत्रा यत्र तत्र व्याख्यायंते । बहवो व्याख्यातारो निरुक्तं दूरमुत्सार्य मंत्रार्थव्याख्याने बद्धपरिकरा दृश्यन्ते, परं नैतत् सम्यक् यस्य ग्रंथस्य व्याख्याने या रीतिः प्रसिद्धा, सैव रीतिराश्रयणीया अपरैरपि, तां रीतिमपहाय मनःकल्पितेन पथा प्रवृत्तो न कस्याप्यस्याधिकारो नामेति ।

"मित्रं हुवे पूतदक्षं वरुणं च रिशादसं,
धियं घृताचीं साधन्ता" ।

अत्र प्रयुक्तो घृतशब्दः साम्प्रतं प्रसिद्धे घृतरूपेऽर्थे गृहीतः साम्प्रतिकैः । यास्काचार्येण सायणाचार्येण चोदकरूप एवार्थो गृहीतो घृतशब्दस्य । साम्प्रतिकैरयं मन्त्र इत्थं व्याख्यातः । त आगत्यात्र यज्ञे घृताहुतीः प्रदद्युरिति । परमस्य यथार्थोऽयमर्थः—पूतदक्षं मित्रं, शत्रुनाशकं वरुणञ्चात्र यज्ञे निमन्त्रयामः यतस्तावुदकप्रेरणरूपं कर्म सम्पादयन्ति। अतः सूक्तं महर्षिणा यास्केन "अथापीदमन्तरेण मन्त्रेष्वर्थ प्रत्ययो न विद्यत" इति ।

अन्यच्च निरुक्तफलं निर्दिशति यास्काचार्यः "अथापीदमन्तरेण पदविभागो न विद्यते" निरुक्तज्ञानमन्तरा पदविभागः कर्तुं न शक्यः । "दूतो निर्ऋत्या इदमाजगाम," अत्र

निरूक्त्या इति पञ्चम्यन्तं षष्ठ्यन्तं वेति भवति संशयः, "परो निर्ऋत्या आचक्ष्व" अत्र निर्ऋत्यै इत्यस्य निर्ऋत्या इति विकृत रूपं जातम्। "इन्द्रं न त्वा शवसा देवता वायु पृणन्ति" अस्य मन्त्रस्येन्द्रो वा वायुर्वा देवता इति भवति सन्देहः। निरुक्ते मीमांसिता एते विषया। अर्थज्ञानार्थं निरुक्तमध्येयम्। अर्थज्ञानमन्तरा न कस्यापि कर्मणः सिद्धि-राशंसनीया प्रेक्षावद्भिः। वेदेऽप्यर्थज्ञा प्रशंसितास्तच्छून्याश्च तिरस्कृता.—

"स्थाणुरयं भारहारः किलाभूद्,
अधीत्य वेदं न विजानाति योऽर्थम्,
योऽर्थज्ञ इत् सकलं भद्रमश्नुते,
नाकमेति ज्ञानविधूतपाप्मा।

एते विषया निरुक्तस्य प्रथमाध्याये सम्यगालोचिता यास्काचार्येण, द्वितीयाध्याये च पदानां निर्वचनं विहितम्। द्वितीयाध्यायत एव निघण्टुग्रन्थस्य व्याख्यानमारभ्यते।

निघण्टुनामकस्य ग्रन्थस्य प्रथमाध्याये पृथिवीवाचका एकविंशतिशब्दाः सन्निवेशिताः। तत्र प्रथमो "गो" शब्दः। व्याख्यातः किलैषशब्दो यास्काचार्येण, ततः परं गोशब्देन केषामर्थानामभिधानं भवतीत्यपि निरूपितं महर्षिणा। आदित्यवाचको गोशब्द इत्यभिधाय यास्काचार्यो वदति "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रतिदीप्यते, आदित्यतोऽस्य दीप्तिर्भवति। साम्प्रतिका विद्वांसो महर्षयो ज्ञा इति निर्धारयन्ति, नासीत् तदा विज्ञानप्रचार इति च। परमनया यास्कोक्त्या तेषां विज्ञानपाटवं परिचीयते। सूर्यरश्मयश्चन्द्रमनुधावन्ति, चन्द्रश्च तैरेव दीप्यते। पुनरमुमर्थं प्रमाणयति चन्द्रस्यापरं नाम गन्धर्व इति, सूर्यरश्मिभिरयं दीप्यत इति सुषुम्णपदेनापि तस्याभिधानं भवति, "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति" रश्मिवाचकोऽपि गोशब्दः, तद्यथा—"यत्र गावो भूरिशृङ्गा अयासः" अस्यार्थः, तद्गृहं वासयोग्यं यत्र सूर्यरश्मय प्रचुरंप्रतिफलन्ति-इति।

"होत्रमृषिर्निषीदन्" इति ऋक्खण्डव्याख्यानावसरे यास्कः पूर्वाचार्यस्यौपमन्यवस्य मतमुद्धृत्य विलिखति "ऋषिर्दर्शनात्" स्तोमान् ददर्शेत्यौपमन्यवः तद् यदेनांस्तपस्यमानान् स्वयम्भ्वभ्यानर्षत् ऋषयोऽभवन् तदृषीणामृषित्वमिति विज्ञायते। दृश् धातोरेवायमृषिशब्द उत्पन्न इत्यौपमन्यवः ऋषिभिर्मन्त्रा दृष्टा इति। तपसा प्राप्तश्रुतिप्रसादा एव ऋषय इति।

"वृत्रस्य निन्यं विचरन्त्यापः" इत्येतद्व्याख्यानावसरे यास्कः प्रोवाच "तत्को वृत्र? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः" रूपकृद्देवतायास्त्वष्टा इति नामान्तरम् यया शक्तिभूतया देवतया पदार्थानां रूपाणि प्रकाशन्ते तस्या एव त्वष्ट्टपदेनाभिधानं भवति। सूर्य एव रूपप्रकाशक इति तस्य त्वष्टा इत्यपरं नाम। पृश्निरिति सूर्यस्यापरं नाम वेदेषु दृश्यते। पृश्निशब्दस्य यास्ककृतोऽयमर्थ —"पृश्निरादित्यो भवति, प्राश्नुते एनं वर्ण इति नैरुक्ताः" सूर्यतो मेघा उत्पद्यन्ते। अतस्तेषां त्वाष्ट्रपदेनाभिधानं भवति। असुरा मेघा असुं जलं राति आदत्त इति व्युत्पत्त्या। इत्थमैतिहासिका अपि वृत्रपदेन मेघानेव परिचिन्वन्तीति फलितम्। साम्प्रतं वेदवर्णितस्य वृत्रासुरयुद्धस्य का गति? कथमसत्यं वृत्रासुरयुद्धवर्णनं वेदे सन्निविष्टम्, इति यास्काचार्य समादधाति "अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णना भवति: अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च" इति।

अहन्‌शब्दो दिनवाची, यथाः—

"अहश्चकृष्णमहरर्जुनञ्च
विवर्तेते रजसी वेद्याभि.
वैश्वानरो जायमानो न राजा
वातिरज्योतिषाग्निस्तमांसि"

दिनं रात्रिश्च सततं परिभ्रमति, सूर्यो ज्योतिषां श्रेष्ठः, स हि किरणै रपनयत्यन्धकारम्, तदा सूर्य उदयतीति प्रतीयते, परं स स्थिरः, पृथिव्येव सदा परिभ्रमति अत एव पृथिव्या अर्धो भाग कृष्ण अर्धश्च शुक्लः प्रतीयते, यदा पृथिव्या यो भाग सूर्यसम्मुखीनो भवति, तत्र सूर्य उदयन्निव लक्ष्यते अतएव "जायमान इव" इतिमन्त्रवर्ण सङ्गच्छते, पृथिवीभ्रमणसिद्धान्तः पाश्चात्यैरेव विद्वद्भिःस्थिरीकृत इति साम्प्रतिका विद्वांसो मन्यन्ते, परमेतेन तैर्व्यवस्थापितः सिद्धान्तो दूर निरस्यते।

तृतीयाध्यायस्य प्रारम्भेऽपत्यवाचका शब्दा व्याख्याता यास्काचार्येण । तत्रैव प्रसङ्गतः पुत्रो वा दायाधिकारी, कन्या वेति विचारितोऽयं विषयो महर्षिणा । पुत्र एवांशभाक् न कन्या, अतएव कन्या परेभ्यः प्रदीयते। यथा कन्या प्रदीयन्ते विक्रीयन्ते त्यज्यन्ते च न तथा पुत्राः अपरे पुत्रा अपि विक्रीयन्त इति वदन्ति उदाहरन्ति च शुनःशेफपितुर्निर्घृणमपत्यविक्रयम्, केचन वदन्ति अभ्रातृमती कन्या दायमर्हतीति । एतत्प्रसङ्गेनाभ्रातृमती कन्या परिणेया न वेति संशयः समाहितो यास्काचार्येण, न परिणेया सोदरहीना कन्येति तेन व्यवस्थापितः सिद्धान्तः, उदाहृत श्चात्राथर्ववेदीयो मन्त्रः —

"अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः" अभ्रातृका इव योषास्तिष्ठन्ति, सन्तानकर्मणे पिण्डदानाय हतवर्त्मन इत्यभ्रातृकाया निर्वाह औपमिकः, स्मृतिभिरप्येष एव सिद्धान्तः स्थिरीकृतः ।

पुरा भारतवासिनो वैदिकाआर्या इत्युच्यन्ते स्म, साम्प्रतिका विद्वांस आर्यशब्दस्य कृषककरूपोऽर्थ इति वर्णयन्ति । ऋधातोरय निष्पन्नः शब्दः पर सम्स्कृतधातुपठे न कर्षण ऋधातो रर्थो दृष्टः। य. शब्दा यस्या भाषायास्तस्य शब्दस्यार्थनिर्णये सैव भाषा क्षमते सस्कृतभाषायां नार्यशब्दस्य कृषककरूपोऽर्थो दृष्टः श्रुतो वा। यास्काचार्यो ह्यार्यशब्दमित्थं व्याख्यातवान् । "उरु ज्योतिश्चक्रथुरार्याय" इत्येतन्मन्त्रखण्डस्थार्यपदव्याख्यानावसरे "आर्य ईश्वरपुत्र" इतिनिरुक्तकारः प्रोवाच ।

मन्त्राणां ऋषिर्देवता छन्दश्चेति विज्ञाय वैदिकाः कस्मिन्नपि कर्मणि प्रवर्तन्ते । मन्त्रप्रयोक्तृणांज्ञानमावश्यकम् । मन्त्रद्रष्टारो ऋषय इत्युक्तपूर्वम् । कस्यमन्त्रस्य का देवतेत्येतस्य विज्ञानोपायं निर्दिशति महर्षिर्यास्कः "सैषा देवतोपपरीक्षा यत्काम ऋषिर्यस्यां देवतायामर्थापत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति अतो बहुधा देवता सम्भवन् मन्त्राणामिति ।

"तिस्रो देवता इति नैरुक्ताः अग्निः पृथिवीस्थानो वायु र्वेन्द्रोवान्तरिक्षस्थानः सूर्यो द्युस्थानः" एकैव देवता कर्मभेदात् त्रिधा विभिन्ना। पुनरेतास्तिस्र एव देवता ब्राह्मणग्रन्थेषु, पुराणेषु च बहुधा भिन्ना दृश्यन्ते। परमासां मूलीभूता देवता एकैव, या ह्यग्निरित्युच्यते । विश्वानर इति वैश्वानर इत्यग्नेरपरं नाम । त्रिविधोऽग्निरिति पूर्वमुक्तमेव । कीदृशोऽग्निर्विश्वानरः; कीदृशो वा वैश्वानर इतिविचारितं यास्काचार्येण । विद्युतः सूर्यस्य च विश्वानर इति नाम । पार्थिवोऽग्निर्विद्युता सूर्येण चोत्पद्यते; अतःस वैश्वानर इत्याख्यायते ।

इत्थमेव वैदिकाः शब्दा व्याख्याता यास्काचार्येण । परमद्य कालविपर्यासाल्लुप्तप्रायो ग्रन्थस्यास्य पठनपाठनव्यवहार इति विषीदामः ।

# भारतीयमितिवृत्तम् ।

प्राचीनेभ्यो निबन्धेभ्यो नवीनेभ्यश्च यत्नतः
संगृह्य भारतस्येतिवृत्तं संक्षिप्तमुच्यते ॥ १ ॥
पूर्वराजशिलालेखताम्रपत्रप्रशस्तिभिः ।
मुद्राद्यैश्च कृतः प्रत्नैः प्रबन्धोऽयं परीक्षितैः ॥ २ ॥
कवित्वशक्तिदारिद्र्यान्निबन्धे यत्र कुत्रचित् ।
सूक्तयोऽस्मिंश्चिरत्नानां गौरवेण निवेशिताः ॥ ३ ॥
एकाहोरात्रवर्षेषु ध्रुवभूषितमूर्धसु ।
पुरा मेरुप्रदेशेषु न्यवसन्नार्यजातयः ॥ ४ ॥
तदा वसन्तसमयस्तत्राभूत्सार्वकालिकः ।
शीतोष्णबाधा नैवासीज्जनाश्च सुखिनोऽभवन् ॥ ५ ॥
ऋषीणामुग्रतपसामतिमानुषवर्चसाम् ।
वेदः प्रादुरभूत्तत्र विद्यास्थानापबृंहितः ॥ ६ ॥
तन्वन्तो वैदिकान्यज्ञांस्तुवन्तश्चार्यदेवताः ।
नन्दिताः प्राकृतैर्दृश्यैर्न्यवसंस्तत्र ते चिरम् ॥ ७ ॥
अथ कालवशादार्याः सर्वतो मेरुमण्डले ।
प्रालेयप्रलयाक्रान्ते प्रस्थिता दक्षिणां दिशम् ॥ ८ ॥
आक्रामतः क्रमाद्घोराः सरितः सागरान्गिरीन् ।
जयन्त्यार्यजातांश्च सर्वतस्ते प्रतस्थिरे ॥ ९ ॥
क्रान्त्वा हिमालयं केचित्प्राप्ताः पश्चिमभारतम्
कृते युगे महायागाः सप्तसिंधुपरिप्लुतम् ॥ १० ॥
विजित्य नरजातीश्च भारते प्रथमागताः ।
पश्चिमोत्तरभागेषु सभ्यतां ते वितस्तरुः ॥ ११ ॥
अजय्याश्छलिनो वन्याः पणयोरण्यमाश्रिताः ।
जितास्तु शूद्रा दासत्वमार्येषु प्रतिपेदिरे ॥ १२ ॥
रक्षन्तः पूर्वजैर्दृष्टं वेदं निधिमिवाक्षयम् ।
व्यभजन्नृग्यजुःसामरूपेणार्या महौजसः ॥ १३ ॥
ऋचो देवस्तुतिप्राया यज्ञात्मानि यजूंषि तु ।
सामानि गीतिसाराणि सगृहीतानि ऋक्छ्रुतेः ॥ १४ ॥

सुदासःप्रभृतयो भूपाः संग्रामाद्यं च तत्कृतम् ।
वर्णिता इतिहासांशा अपि वेदे क्वचित्क्वचित् ॥ १५ ॥
यदैतिह्यमभूदत्र पणिप्रभृतिषु स्थितम् ।
अथर्वांगिरसाख्योऽस्य ऋषिभिः संग्रहः कृतः ॥ १६ ॥
अथर्वणां पुराणानामंगानां चाथ विस्तरैः ।
विटपैरिव रेजे सौ वेदः कल्पद्रुमोपमः ॥ १७ ॥
बहुप्रकृतिविज्ञानमथर्वांगिरसे स्थितम् ।
मूलात्मकं यत्तस्याभूदायुर्वेदादिविस्तृतिः ॥ १८ ॥
इतिहासपुराणेषु राजवंशादिकीर्त्तनम् ।
लोकयात्रादिकाश्चान्ये विविधा विषयाः स्थिताः
शिक्षा व्याकरणं कल्पो ज्योतिश्छन्दो निरुक्तकम् ।
वेदज्ञानोपयुक्तानि षडंगान्यृषयो जगुः ॥ २० ॥
शिक्षा विचारो वर्णानां पदानां व्याकृतिर्मता ।
कल्पस्य विषया यज्ञा ज्योतिः कालविनिर्णयः २१
गायत्र्यादिगतिश्छन्दो निरुक्तोऽर्थस्य निश्चयः ।
इत्थं विभक्ता विषया वेदांगानां पुरातनैः ॥ २२ ॥
कलिः शयानो भवति संजिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन् ॥ २३ ॥
इति श्रुतेर्महायागनिस्तंद्रप्रायपूरुषम् ।
कृताभिधानं प्रथितं युगं तत्कृतिशालिनाम् ॥ २४ ॥
त्रयोदशसहस्राणि युक्तानि नवभिः शतैः ।
सोनाशीतानि वर्षाणामंतरे शकक्रुत्ययोः ॥ २५ ॥
चत्वार्यब्दसहस्राणि संयुतान्यष्टभिः शतैः ।
कृतमग्रिक्षये चान्ययुगानां त्रितयं क्रमात् ॥ २६ ॥
सुदासश्चिन्द्रनलाः पुण्यश्लोकास्तथापरे ।
भगीरथाद्या अभवन्कृतात्मानः कृते युगे ॥ २७ ॥
पितॄन्प्लावयितुं दग्धान्गगास्त्रोतोवतारितम् ।
भगीरथेनाद्य यावच्चम्पातो दृश्यतेऽब्धिगम् ॥ २८ ॥
अथ त्रेतायुगे रामो भ्रमन्दशरथाज्ञया ।
नीतवान्कीर्तिमार्याणां लङ्काद्वीपं सुदुर्गमम् ॥ २९ ॥
लंघयन्सागरं रामस्तं प्राप्य विनिवर्त्तितः ।
भगीरथात्पूर्वमवाप्तिवर्व्वे ऽतिशयं निजम् ॥ ३० ॥
द्वापरेऽप्यभवन्नेवं भूपा भीष्मादिपूर्वजाः ।
क्रमेण भारतीयानां ह्रासमापत्तु गौरवम् ॥ ३१ ॥

ऊनाशीत्यधिकामेकत्रिंशदब्दशतीमिह।
शकाब्दारम्भतः पूर्वं प्रादुरासीत्कलिः किल ३२
प्रवृत्तेथ कलावासीद्वैरालस्यादिविप्लुतम्।
जगत्समस्तमेवेदं धर्मक्षयविसंकुलम् ॥ ३३ ॥
सप्तविंशे कलेरब्दे चैत्रशुक्लादिमे तिथौ।
सप्तर्षिवर्षस्यारम्भो लौकिकाख्यस्य भूतले॥३४॥
शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले।
कलेर्गतेषु वर्षाणामभूवन्कुरुपाण्डवाः॥ ३५ ॥
षड्द्विपंचद्वि वर्षाणि पूर्वं शकसमोदयात्।
सप्तर्षिषु मघास्थेषु शशास क्ष्मां युधिष्ठिरः॥३६॥
इन्द्रप्रस्थमधिष्ठाय पाण्डवाश्चण्डविक्रमाः।
सागरान्तां धरां घोरा अशिषन्नाशितद्विषः॥ ३७॥
श्रीकृष्णसचिवा वीराः पार्था बलमदोद्धतान्।
दुर्योधनादीनसंग्रामे सुखेनैव विजिग्यिरे॥ ३८ ॥
घोरांगिरसशिष्योसौ ज्ञानविज्ञानतत्परः।
छान्दोग्ये वर्णितः श्रीमाञ्श्रीकृष्णो देवकीसुतः॥३९
अथ कृष्णे गते घोरः कलिः प्रावर्त्तत क्षितौ।
धर्माधर्मविमूढानां विनिपातस्य कारणम् ॥ ४०
व्यनश्यद्वैदिकं ज्ञानमितिवृत्तं व्यलुप्यत।
भूतप्रेतपिशाचादिपूजनं सर्वतोभवत्॥ ४१ ॥
संप्रदायसहस्राणि मतभेदाश्च भूरिशः।
धर्मे विनष्टेऽजायन्त व्यामोहाय नृणां क्षितौ॥४२
पाण्डवानां तृतीयस्य पौत्रः शत्रुनिवर्हणः।
अभिमन्योरभूत्पुत्रः परीक्षिन्नृपसत्तमः ॥ ४३ ॥
जनमेजयनामाभूत्परीक्षित्तनयो नृपः।
बृहदारण्यके नाम्नी विन्यस्ते नृपयोस्तयोः। ४४
ब्राह्मणानां शतपथ प्रभृतीनां क्रमेण च।
छान्दोग्याद्योपनिषदां प्रादुर्भावोभवद्भुवि॥ ४५॥
सब्राह्मणोपनिषदां संहितानां समुद्भवः।
जनमेजयपर्यन्ते कालेऽवनितलेभवत् ॥ ४६ ॥
श्रौतगृह्यादिसूत्राणि प्रातिशाख्यं निघण्टवः।
जनमेजयतोर्वाक्चि बुद्धात्प्रस्तराणि तु ॥ ४७ ॥
आदौ कालः संहितानां ब्राह्मणानां ततः परम्।
सूत्राणां समयः पश्चात् काव्यानां समयस्ततः। ४८
भाषानुसारतः प्रायः कालस्थितिरितीदृशी।
जनोद्योगानुसारेण कृतादिस्थितिमूचिरे ॥ ४९ ॥
प्राचेतसेन मुनिना छन्दोभिर्लौकिकैर्नवैः।
वाल्मीकिना विरचिता रम्या रामायणी कथा ५०
छन्दोभिर्वर्ण नियतैर्नूतनैर्वैदिकेतरैः।
यस्मान्निबद्धं प्रथममादिकाव्यमिदं ततः॥ ५१ ॥
रामायणीयैश्छन्दोभिः प्रायश्चैतादृशैः परः।
भारतं स्मृतयश्चैव पुराणानि च चक्रिरे॥ ५२॥
कुरूणां पांडवानां च संयुगं रोमहर्षणम्।
कृष्णद्वैपायनो व्यासो भारते विनिबद्धवान् ॥५३
इदं कविवरैः सर्वैराख्यानमुपजीव्यते।
उदयं प्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ५४ ॥
अवलम्ब्यातिविस्तीर्णे वाल्मीकिव्यासयोः कृती।
पाणिन्याद्याःकविवराःकाव्यान्यन्यानि चक्रिरे५५
प्रक्षीणराजके वृत्ते महाभारतसंयुगे।
चक्रवर्त्तिविहीना भूः सामन्तैर्धर्षिता चिरम्॥५६

> महानुभावेष्विति,कालवेधसा,
> सुमेधसामप्यविभाव्यवर्त्मना।
> क्षयं दुरन्तं गमितेषु राजसु
> प्रजासु, वैक्लव्यमवर्त्ततामित ॥ ५७ ॥

इति प्रथमा वीचिः।

अथ दक्षिणकूले यो भागीरथ्या मनोहरः।
देशोस्ति मगधाभिख्यो वसुधामुखमण्डनम् ॥१॥
यस्मिन्ग्रामोपमा गोष्ठा ग्रामाश्च पुरसंनिभाः।
पुटभेदनतुल्यानि पुराण्यद्भुतया श्रिया ॥ २ ॥
अनेकवारमुप्तानि लूनान्यपि हि कर्षकैः।
यत्र धान्यानि दूर्वावत्प्ररोहन्ति मुहुर्मुहुः ॥ ३ ॥
सदाप्रस्रवशालिन्यः कुण्डोध्न्यो यत्र सुव्रताः।
अहर्निशं कामदोहा गावः कामगवीनिभाः ॥४॥
तत्र भारतवर्षस्य सर्वस्वनिधिभूरिव।
श्रियः क्रीडागृहमभूत्पुरं राजगृहाभिधम् ॥ ५ ॥
वसन्यत्र जरासन्धो वन्दीकृतमहारथः।
पाण्डवानां द्वितीयेन द्वन्द्वयुद्धे न्यपात्यत ॥ ६ ॥
तत्राभूच्छिशुनागाख्यो नागराजलसद्भुजः।
शकाब्दारम्भतः पूर्वमष्टमे शतके नृपः ॥ ७ ॥

शाक्यवर्णः क्षेमधर्मा क्षत्रौजा इति तत्कुले।
भूमिपाला रमालानवाहवो जज्ञिरे क्रमात् ॥ ८ ॥
सप्तमे शतकेऽभूवंस्त्रयोऽप्येते नृपोत्तमाः।
नेतिवृत्त पुराणादौ तेषां किमपि दृश्यते ॥ ९ ॥
क्षत्रौजसोऽथ तनयो बिम्बसार इति श्रुतः।
गृहे लक्ष्मीसरस्वत्योरभूद्राजगृहे वली ॥ १० ॥
श्रेणीकृतयशा योऽभूच्छ्रे णिकापरनामकः।
नेतेव दक्षिणः क्षोणी लक्ष्मी चावर्जयन् गुणैः॥११॥
षट्शताधिकवर्षाणि पूर्वं शकसमोदयात्।
निर्ममे बिम्बसारेण नवराजगृहं पुरम् ॥ १२ ॥
नवराजगृहाख्ये स नगरे निजनिर्मिते।
जित्वाङ्गानविदध्ये राज्य प्रायोऽष्टाविंशति समाः
कोशलेषु नृपस्यास्य समये शाक्यव राजः।
जातो गौतमबुद्धोऽसौ पुरे कपिलवस्तुनि ॥ १४ ॥
वर्धमानमहावीर जिनोऽपि मगधान्सुधीः।
कालेऽस्मिन्न व वैशालिसभव समुपादिशत् ॥१५॥
अजातशत्रुर्नृपतिर्बिम्बसारतनूभवः।
कूणिकापरनामाऽऽशाद्वसुधामथ वीर्यवान ॥ १६ ॥
विजित्य कोशलान्राजा लिच्छवीन्मैथिलांस्तथा।
हिमवद्विन्ध्ययोर्मध्ये मगधानां जयं व्यधात् ॥१७॥
दुर्गं च पाटलिग्रामे लिच्छवीनामुपप्लवात्।
रक्षितुं मगधानेष स्थापयामास दुर्जयम् ॥ १८ ॥
खिन्नः पितुर्वियोगेन नृपतिः पितृवत्सलः।
निर्माय चम्पानगरीं तत्रैव न्यवसच्चिरम् ॥ १९ ॥
सार्धपञ्चशताब्देभ्यः पूर्वमेव शकाब्दतः।
गौतमो भगवान्बुद्धः प्राप निर्वाणमात्मवान् ॥२०
प्रसेनजित्सुतो राजा कोशलानां विदूरथः।
अजातशत्रो कालेऽभूच्छाक्योन्मूलनदुग्रहः ॥२१॥
उपालिकाश्यपानन्द प्रमुखैः श्रमणैः कृता।
कालेऽस्मिन्बौद्धसमितिःपुरे राजगृहाभिधे ॥२२॥
पञ्चविंशतिवर्षाणि राज्यं कृत्वा मृते ततः।
अजातशत्रौ तत्पुत्रो दर्शको मगधानशात् ॥ २३ ॥
तावन्त्येव तु वर्षाणि कृतराज्ये गतेऽत्ययम्।
दर्शके तस्य पुत्रोऽभूदुदयो मगधेश्वरः ॥ २४ ॥
अस्योदयननाम्नापि प्रसिद्धिं केचिदूचिरे।
वत्सराज इति ख्यात आख्यानेष्वेष भूपतिः॥२५॥
पाटलिग्रामदुर्गं स पितामहकृतं नृपः।
चक्रे पाटलिपुत्राख्यं परितो नगरोत्तमम् ॥२६॥
आसप्तचत्वारिंशानि वर्षाणि कृतशासने।
उदये पञ्चतां याते नृपोऽभून्नन्दिवर्धनः ॥ २७ ॥
ततः परं महानन्दी नृपतिर्मगधानशात्।
ओपविंशाब्दिकं प्रायः प्रत्येकं राज्यमेतयोः ॥२८
स महापद्मनन्देन राज्यात्पुत्रेण पातितः।
प्रतिपेदे कालगतिं महानन्दी दुरत्ययाम् ॥ २९ ॥
नन्देन तस्य पुत्रैश्च पञ्चाशदधिकाः समाः।
समृद्धिमत्सु विहितं मगधेषु प्रशासनम् ॥ ३० ॥
नन्दानां यवनाध्यक्षोऽलिकचन्द्र प्रशासने।
विजित्य पौरवं कंचिद्गंधारानजयद्बली ॥ ३१ ॥
प्राचीं प्रपालितां नन्दैरदृष्ट्वैव जिघृक्षिताम्।
अनुत्साहहते सैन्ये प्रतस्थे स भुवं निजाम् ३२
विसृज्य सिन्धुमार्गेण नयार्कं पोतनायकम्।
पारसीकपथेनासौ प्रत्यगाद्विषयं स्वकम् ॥३३॥
प्रायोऽस्मिन्समये वर्षं शिष्याद्व्याकरणोत्तमम्।
दाक्षीपुत्रादभूच्छालातुरीयात्पाणिनेर्मुनेः ॥ ३४ ॥
शाकल्यगार्ग्यापिशलि-शाकटायनगालवैः।
भारद्वाजस्फोटपुत्र-चाक्रवर्मणकाश्यपैः ॥ ३५ ॥
सेनकाद्यैश्च नैरुक्तैर्व्याकृतिज्ञैश्च यत्नतः।
कृतानुगमान्वीक्ष्याष्टाध्यायीं पाणिनिर्व्यधात्
संस्कृतं पाणिने काले देशभाषाभवज्जने।
भाषा लोकादिशब्दैर्हि संस्कृतं स व्यपादिशत् ३७
व्याकृतिज्ञेन मुनिना पातालविजयाभिधम्।
कृतं पाणिनिना काव्यमिति केचित्परीक्षका ३८
नैरुक्तानां शाकपूणि-प्रभृतीनां मतानि च।
संगृह्य समयेष्वेषु यास्कश्चक्रे निरुक्तकम् ॥ ३९ ॥
कियन्ति पाणिनेः पूर्वं परतोऽप्यपराणि तु।
काणादादीनि सूत्राणि बभूवुर्दर्शनेष्विह ॥ ४० ॥
शिलालिना कृशाश्वेन तथान्यमुनिभिः कृतम्।
सूत्रजातं वीक्ष्य नाट्यशास्त्रं भरत ऊचिवान्॥४१॥

नन्दानां समये धीमानभूद्वररुचिः कविः ।
आसीद्व्याकरणे यस्य कवित्वे च मतिः समा ४२

सुमाल्याद्यैर्महापद्मः पुत्रैरष्टभिरन्वितः ।
मौर्येण चन्द्रगुप्तेन बलेन विनिपातितः ॥ ४४ ॥

चतुर्भ्योऽब्दशतेभ्यश्च किंचित्पूर्वं शकाब्दतः ।
नन्दाः स्मृतिपथं नीता बलिना मौर्यभूभृता ॥४५

आसीदमात्यश्चन्द्रस्य चाणक्याख्यो महामतिः ।
प्राणैषीदर्थशास्त्रं यो नृपाणामर्थमक्षयम् ॥४६॥

येन शस्त्रं च शास्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु प्रांशुवीर्येण धीमता ॥४७॥

यस्याभिचारवज्रेण वज्रज्वलनतेजसः ।
पपात मूलतः श्रीमान्सुपर्वा नन्दपर्वतः ॥ ४८ ॥

हत्वा नन्दान् विजित्यारींश्चन्द्रगुप्तस्तथापरान् ।
चाणक्यसचिवो राज्यं चिरं चक्रे महामतिः ॥४९

शल्यकाद्यवनाधीशाद्बलेन विजितादसौ ।
गान्धारादीन्समाच्छिद्य चक्रवर्त्तित्वमाप्तवान्५०

शल्यकप्रहितो राजदूतो मेघस्तनाभिधः ।
चिरं चन्द्रसभामध्यमध्युवास विनीतधीः ॥५१॥

तल्लेखेभ्यस्तथैवार्थशास्त्राच्चाणक्यनिर्मितात् ।
तात्कालिकीस्थितिः प्रायः प्रत्यक्षेव विभाव्यते ५२

चतुर्विंशतिवर्षाणि राज्यं कृत्वा महाबलः ।
पुत्राय विंदुसाराय तद्दत्वा व्यापदं गतः ॥ ५३ ॥

विंदुसारो महासारः प्राप्य राज्यं स्वपैतृकम् ।
अमित्रघात इत्याख्यां भेजे सत्यावतां वरः ॥५४॥

प्रपाल्य पैतृकं राज्यं सम्यक्पञ्चविंशतिं समाः ।
शिशावेव सुते वीरो जगाम स्मृतिशेषताम् ॥५५॥

अशोकवर्धनो राजा विंदुसारसुतस्ततः ।
बौद्धं धर्मं समाश्रित्य पालयामास भारतम् ५६

प्रशस्तयः शिलास्वस्य स्तूपाश्च बहुसंख्यकाः ।
संप्रत्यपि यशोराशिं पुष्णन्ति प्रियदर्शिनः ५७

दुर्बोधं संस्कृतं प्रायोऽशोकस्य समयेऽभवत् ।
प्राकृतैर्विविधैस्तस्मादस्य दृब्धाः प्रशस्तयः ॥५८४

चत्वारिंशतमाब्दानामशोकः शोककर्षणः ।
प्रायः प्रत्यन्तसहिते भारते शासनं व्यधात् ॥५९॥

ततः परं दशरथः संगतश्च तथा नृपः ।
शालिशूको देववर्मा शतधन्वा बृहद्रथः ॥ ६० ॥

षडित्येतेऽभवन् मौर्या निर्वीर्याः प्रायशः क्रमात् ।
अभुञ्ज मागधं राज्यं षट्चत्वारिंशतं समाः ॥६१॥

चन्द्रगुप्तादिभिर्वीरैर्गर्जितोर्जितकीर्तिभिः ।
हारितेयं धरा मूढैर्भिक्षुराजसुतैरियम् ॥ ६२ ॥

चार्वाकबौद्धजैनाद्यैर्निर्वेदपरमैरथ ।
साम्यं पशुमनुष्याणामुपादिश्यत भारते ॥ ६३ ॥

भारतीयेष्वनुद्योगं दर्शयेषु प्रायशः कलाः ।
यवनान् रोमकांश्चैव पाश्चात्त्येषु समाश्रितः ॥६४॥

दर्शितादौ परसैन्यश्च बलदर्शनं कृतवान् ।
सेनानीः पुष्यमित्रोऽथ निष्पिपेष बृहद्रथम् ॥६५॥

बृहद्रथं विनिष्पिष्य बन्दीकृत्यास्य मन्त्रिणम् ।
इष्टवानश्वमेधेन पुष्यमित्रो महामनाः ॥ ६६ ॥

चिरादशोकस्याज्ञाभिर्निर्यज्ञां भारतावनिम् ।
पुष्योऽश्वमेधकल्पेन सयज्ञामतनोत्पुनः ॥ ६७ ॥

क्षारवेलः सकालिंगं मिलिन्दं यवनं तथा ।
निरस्यति स्म वीर्येण मगधाक्रमणोद्यतौ ॥ ६८ ॥

कात्यायनेन कृतिना पाणिनीये सवार्त्तिके ।
संग्रहाख्यां महाव्याख्यां व्याडिश्चक्रे महामतिः ६९

पातञ्जलं महाभाष्यं संग्रहाविधसुधासमम् ।
पुष्यमित्रस्य समये समुदेति स्म भारते ॥ ७० ॥

साकेतमध्यमिकयोर्यवनेनोपरुद्धयोः ।
वर्णनं पुष्यमित्राय यागस्य च पतञ्जलौ ॥ ७१ ॥

पुष्यमित्रे गते पञ्च-त्रिंशदब्दिकशासने ।
अग्निमित्रोऽभवद्राजा तस्य पुत्रो महायशाः ॥७२॥

कालिदासोऽग्निमित्रस्य कथामालस्य निर्ममे ।
महाकविर्मालविकाग्निमित्रं विक्रमे नृपे ॥ ७३ ॥

अग्निमित्रे यशःशेषे राज्यं कृत्वाष्टवत्सरान् ।
हीनवीर्याः क्रमादष्टशुंगा व्यसनिनोऽभवन् ॥ ७४ ॥

सङ्कल्पविकल्पाद्यात्मकेन मनोमयकोशेनाऽऽत्रियते ततश्चाहं जीवामीति दर्शनश्रवणादीन्द्रियधर्म्मविशिष्टमशनादिपिपासाद्युपेतं जीवत्वमभिमन्यमानः प्राणमयकोशेनाऽऽव्रियते। ततः परं मनुष्योऽहमित्याद्यभिमन्वानो बाल्यताऽऽरुण्याद्यनेकधर्मवताऽन्नमयकोशेन देहापरनाम्ना पिहितो भूत्वा नानाविधान् पुत्रकलत्रधनागारादिरूपान् देहतोऽपि बाह्यान् विषयानुपश्लिष्यंस्तत्र तत्राभेदेनोपरज्यते। तद्यथा भार्यापुत्रादिषु सकलेषु विकलेषु वा अहमेव सकलो विकलो वेत्यभिमन्यते। एवं मिथ्याज्ञानेन मोहमुपगतो देहाद्यभिन्नमात्मानं गृह्णन् स्वस्य पारिच्छिन्नत्वधर्मामभिमन्यते अहमिहास्मि मदने इति तदेवमखण्डानन्दे स्वप्रकाशे चिदात्मनि अहङ्कारेण प्रगाढितं कर्त्तृत्वभोक्तृत्वसुखदुःखमोहादिस्वभावं देहाद्युपाधिनिबन्धनं भेदप्रतिभासमपवदितुं जीवात्मपरमात्मनोरभेदं प्रत्याययति "तत्त्वमसि" "अयमात्मा ब्रह्म"इत्यादि श्रुतिवाक्यानि।

अथात्र तत्त्वमसीतिवाक्यात् कीदृशोऽर्थोऽवबुध्यते इति विचार्यते। तत्र वाक्यार्थज्ञानस्य पदार्थज्ञानोत्तरभावित्वनियमात् पदार्थजिज्ञासायां सत्यां तच्छब्दस्य पूर्वप्रक्रान्ते परोक्षार्थे शक्तत्वात्सर्वज्ञत्वादिधर्मकं जगत्कारणत्वेन प्रक्रान्तं परोक्षमीश्वरचैतन्यं तत्पदस्य वाच्योऽर्थः॥ अपरोक्षे सम्बोध्यार्थे युष्मच्छब्दस्य शक्तत्वादल्पज्ञत्वादिधर्मकं सम्बोध्यत्वेन विवक्षितमपरोक्षं जीवचैतन्यं त्वं पदस्य वाच्योऽर्थः। समानविभक्तिकपदोपस्थितत्वादनयोः पदार्थयोरभेदान्वयेन भाव्यम्। जीवेश्वरयोरभेदस्तु खद्योतादित्याकारयोरिव न सम्भवतीति शक्यार्थबाध उपस्थिते लक्षणावृत्त्या पदार्थं लक्षयित्वा वाक्यार्थो बोद्धव्यः। पदशक्यार्थमादायान्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा लक्षणाबीजत्वात्। तत्र गङ्गायां घोष इत्यादौ गङ्गापदशक्यस्य प्रवाहरूपार्थस्य घोषाधिकरणत्वाऽसम्भवादशेषं शक्यार्थं परित्यज्य तत्सम्बद्धं तीरं लक्षयन्ती या जहल्लक्षणा सा न सम्भवति। अशेषस्योपाधिविशिष्टचैतन्यरूपशक्यार्थस्य परित्यागे तत्सम्बन्धिनः कस्यापि लक्षणीयार्थस्याप्रसिद्धेः, प्रकृतवाक्यस्य शून्यपर्यवसायित्वापत्तेः। नचेष्टापत्तिः असिपदेन सन्मात्रवाचिना समभिव्याहारविरोधात्। नाप्यजहल्लक्षणात्र सम्भवति यतः सा शक्यार्थमपरित्यजन्ती सत्येव तत्सम्बद्धमन्यार्थं लक्षयति। यथा "वायव्यं श्वेतमालभेत भूतिकामः" इत्यादौ गुणवाचिना श्वेतशब्देन स्वशक्यार्थं गुणमपरित्यज्य श्वेतगुणविशिष्टं पशुद्रव्यमालभनक्रियाकर्मत्वयोग्यं लक्ष्यते। प्रकृते तु तथा न सम्भवति यतश्चिज्जडातिरिक्तस्य लक्ष्यार्थस्य बन्ध्यासुतसमत्वात्। तस्माज्जहदजहल्लक्षणैवात्र स्वीकर्त्तुमुचिता। सा च शक्यार्थस्य कञ्चिद्विरुद्धांशं परित्यजन्ती सत्यविरुद्धभागं रूपान्तरेण लक्षयति। इयमेव भागलक्षणेत्युच्यते यथा गौर्नित्य इत्यादौ शब्दशक्त्युपस्थितायां गोत्वविशिष्टव्यक्तौ नित्यत्वान्वयविरोधाद्विशेष्यांशपरित्यागेन विशेषणभागो गोत्वमेव लक्षणावृत्त्या विशेष्याकारेण लक्ष्यते इतिगोत्वं नित्यमिति वाक्यार्थः सञ्जायते॥ तथैव तत्त्वमसीति वाक्ये पदशक्त्युपस्थितापितयोर्जीवचैतन्येश्वरचैतन्ययोरभेदान्वयासम्भवाद्विरुद्धयोर्जीवत्वेश्वरत्वरूपविशेषणांशयोः परित्यागेनाविरुद्धौ चैतन्यरूपविशेष्यभागावेवाखण्डाकारेण लक्ष्येते, ततश्च विगलिताऽखिलविकल्पमखण्डचैतन्यमिति वाक्यार्थबोधः सम्पद्यते।

किञ्च यत्र शक्तिजन्योपस्थितिविषये परस्यान्वयो न सम्भवति यथा गङ्गायां घोष इत्यादौ गङ्गापदादुपस्थिते प्रवाहे आभीरपल्लीरूपस्य घोषस्याधेयतयान्वयः तत्रागत्या

तीरोपस्थितये लक्षणाश्रयणीयैव । प्रकृते त्वभेदान्वययोग्यचैतन्योपस्थितिरपि पदशक्त्यैवेति न लक्षणायाः प्रयोजनमस्ति । जीवत्वेश्वरत्वरूपवैशिष्ट्यांशस्य तु विशिष्टयोरभेदान्वयो न सम्भवतीत्यनुपपत्त्या पराहतत्वादनन्वय एवेति तत्परित्यागस्याप्यर्थत एव सिद्धत्वान्न तदर्थमपि लक्षणाश्रयणप्रयासः समुचित इतिशङ्कमानं वादिनम्प्रति समाधत्ते । विशेष्यांशमात्रोपस्थितये लक्षणाश्रयणमावश्यकम् । शक्तिजन्योपस्थितेर्विशेष्यांशविषयत्वेऽपि नासौ विशेष्यांशः शुद्धः किन्तु संसृष्ट एवेति ।

किञ्च शक्त्युपस्थापितयोः पदार्थयोरभेदान्वये विरुद्धो यः प्रकारांशस्तं परित्यज्याविरुद्धयोर्विशेष्ययोरभेदान्वयो बुध्यतामिति केषाञ्चिन्मतन्न समीचीनम् । कुतस्तथा सति गौर्नित्य इत्यादावपि पराभिमता भागलक्षणा न स्यात् । नित्यत्वान्वयायोग्यस्य व्यक्ति रूपविशेष्यांशस्य परित्यागेन शक्तिजन्योपस्थितिविषये प्रकारीभूत गोत्वांशे नित्यत्वान्वयसम्भवात् । अथ गौर्नित्य इत्यत्र व्यक्तिरूपविशेष्यभागस्य त्यागमात्रेण न निर्वाहो भवति । व्यक्तिविशेषणत्वेनोपस्थितस्य गोत्वस्य नित्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभावात् । तस्माद्विशेष्यत्वेन गोत्वस्योपस्थितये तत्र युज्यत एव लक्षणाश्रयणम् । प्रकृते तु चैतन्यरूपार्थस्य विशेष्यस्यैवोपस्थितत्वाद्विफलो लक्षणाश्रयणप्रयास इत्यपि कथनं न समीचीनम् । यतोऽखण्डचैतन्यरूपलक्ष्यार्थस्योपस्थितये लक्षणाया अवश्यापेक्षणीयत्वात् । शक्त्युपस्थितपदार्थानां शाब्दबोधे संसर्गविधया भाननियमाद्विशेष्यतयोपस्थितयोरपि चैतन्यरूपयोस्तत्त्वं पार्थयोरभेदो भासमानः संसर्गविधयैव भूयात् । नचैतदिष्यते प्रकृतवाक्यादखण्डार्थबोधस्य सिद्धान्ते इष्टत्वात् । अर्थस्याऽखण्डत्वन्नाम प्रकारताविशेष्यतादिविषयशून्यत्वम् । प्रकृतवाक्यार्थभूतमखण्डचैतन्यं हि न पराभिमतमसंसर्गवत् प्रकारतया विशेष्यतया वा भासते ; किन्तु विगलिताशेषविशेषं विशुद्धचैतन्यमेव ॥ अतः शक्तिजन्यां विशेष्यतयोपस्थितिं त्यक्त्वा लक्षणाजन्यां शुद्धवस्तूपस्थितिमुरीकुर्वन्ति वेदान्तदर्शनाभिज्ञाः ॥ अतएवायं वाक्यार्थबोधो निर्विकल्पक. सम्पद्यते । शुद्धपदार्थस्यैव वाक्यार्थत्वादिति रहस्यम् ।

वाक्यप्रयोगवैयर्थ्यं स्यादिति केचिद्वदन्ति तन्न सङ्घटते । यतः केनापि निमित्तेनाऽस्तमितनिजयाथात्म्यज्ञानस्य सम्बोध्यस्य स्वयाथात्म्यप्रत्यभिज्ञापनाय त्वं पदघटितवाक्यप्रयोगस्यावश्यकत्वात् । तथाविधवाक्यार्थबोधमन्तरेण भ्रमाऽनिवृत्तेश्च ।

यदाहुर्भगवन्तः सुरेश्वराचार्याः

> "राजसूनोः स्मृतिव्याप्तौ
> व्याधभावो निवर्त्तते ॥
> यथैवमात्मनोऽज्ञस्य ।
> तत्त्वमस्यादिवाक्यत इति ॥

भवत्वेतत् यथाऽग्रमात्राऽवयवेऽवयवित्वारोपेण प्रयुक्तेऽग्रहस्त इति समासपदेऽवयवाऽवयविनोः सामानाधिकरण्यम् यथा वा राजकीयेऽपि सचिवे राजत्वारोपेण प्रयुक्ते राजा त्वमसीति वाक्ये स्वस्वामिनोः सामानाधिकरण्यं दृश्यते तथा प्रकृतेऽपि वाक्ये जीवेश्वरयोरंशांशिभावापन्नयो स्वस्वामिभावापन्नयोर्वा सामानाधिकरण्यमवगम्यताम् ॥

"यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे आत्मानो व्युच्चरन्ति" इतिश्रुतेः ॥

> "ममैवांशो जीवलोके
> जीवभूतः सनातन "

इतिस्मृतेश्च,

जीवेश्वरयोरंशांशिभावस्य यथा—

"ईशानः सर्वविद्यानां
मीश्वरः सर्वभूतानाम्" इति

"सर्वस्य वशी सर्वस्येशानः,, इत्यादिश्रुतिभ्यो जीवेश्वरयोः स्वस्वामिभावसम्बन्धस्याप्यवबोधनादिति चेन्न तन्सारम् ॥ परमात्मन ईश्वरावयवत्वे सावयवत्वमीश्वरस्यापद्येत। तथा सति तस्यान्यपूर्वकत्वनियमात् सृज्यकोटिप्रविष्टत्वेन जगत्कर्तृत्वं व्याहन्येत, सर्वज्ञत्वसर्वशक्तिमत्त्वाद्ययोगाच्चानीश्वरत्वं प्रसज्येत। किञ्च-जीवात्मपरमात्मनोर्भेदघटित स्वस्वामिभावादिर्न कोपि सम्बन्धो घटते। "सदेव सौम्येदमग्र आसीत्;; "एकमेवाद्वितीयम् ब्रह्म;;" ऐतदात्म्यमिदं सर्वम्;; इत्युपक्रमोपसंहारयोः पठितेन श्रुतिकदम्बेन स्फुटमेवानयोरखण्डत्वापरपर्यायं यदद्वितीयत्वं समाम्नात--तदेव प्रत्याययितुं प्रवृत्तानाम्—"तत्त्वमसि;; "अहं ब्रह्मास्मि;' "अयमात्मा ब्रह्म;; 'इत्यादिश्रुतिवाक्यानां भेदघटितस्वस्वामिभावादौ लेशतोऽपि तात्पर्याभावात् ॥ तत्सृष्ट्वातदेवानुप्राविशत्;; "स एष इह प्रविष्ट आनखाग्रेभ्यः;' इत्याद्यनेकश्रुतिभिः सृष्टुरीश्वरस्य स्वसृष्टेषु सङ्घातेष्वविकृतस्यैव प्रवेशबोधनात्, यत्तु क्वचिदंशांशिभावादिश्रवणं तत्तूपाधिकल्पितभेदमाश्रित्यौपचारिकमेव बोध्यम्। अत एव

निष्कलं निष्क्रियं शान्तं।
निरवद्यं निरञ्जनम् ॥

नित्यं विभुं सर्वगतं।
सुसूक्ष्मञ्च तदव्ययम् इत्यादिश्रुतयः

अच्छेद्योयमदाह्योय
मक्लेद्योऽशोष्य एव च ॥

नित्यः सर्वगतः स्थाणु
रचलोऽयं सनातन ॥

इत्याद्यास्मृतयश्च सङ्गच्छन्ते ॥

तस्मादौपाधिकत्वेनातात्विक एव सर्वोऽपि द्वैतप्रपञ्चः सत्यंपरमद्वितीयं ब्रह्मैवेति वेदान्तश्रुतीनां हृदयमिति शिवम् ॥

अप्राप्य यस्य महिमानमचिंत्यपारं-
वाचो भवन्ति मनसैवसमं निवृत्ताः ॥
तं सत्यमौपनिषदं पुरुषं महान्त-
मानन्दकन्दमनिशं शरणम्प्रपद्ये ॥

स्वामी रामकृष्णानन्दगिरिः बाघम्बरी।

---

# तत्वविद्या

---

विदन्ति जना यया सा विद्येत्युच्यते। या ह्यज्ञातानर्थान् ज्ञापयति तां विद्यामाचक्षते विद्वांसः सा हि परा अपरा चेति द्विधा निरूपिता पूर्वैः निखिला लौकिककल्याणसम्पादनप्रवृत्ता विद्या अपरा, यया तदक्षरमधिगम्यते सा परा। इत्थं द्विधा निरूपिता अपि विद्या भूयो बहुधा भिद्यते चतुर्दशात्मना अष्टादशात्मना च भिन्नाया विद्यायाः प्रकृते सन्दर्भे न ते भेदा निरूपणीयाः, अपि तु किन्निमित्तमत्र समभवद् विद्यायाः प्रकाशः किं फलं साधयितुं प्रवृत्ता इमा विद्या तत्वविद्यानाम्ना का विद्या प्रसिद्धा इत्याद्या विषया अत्र समालोच्याः।

द्वन्द्वमयमिदं जगत्। अत्रैकं वस्तु वस्त्वन्तरविरोधीति भवति द्वयोरपि विरुद्धस्वभावयोर्वस्तुनोः प्रकाशः। अन्धकारसत्तयैव प्रकाशः परिचीयते, असदेव सद्वस्तु प्रकाशयति। इत्थमविद्याकृत एव विद्याप्रकाश इति सिद्धान्तो विद्यावताम्। यदि नाभविष्यदत्राविद्याया असद्वस्तुनश्चाधिकारस्तदा विद्याया नामाप्यत्र नास्थास्यत्। सद्वस्तुप्रकाशेनासद्वस्तु दूरीकर्तुमिमा निखिला विद्या यथायथं प्रवृत्ताः

विद्या हि ज्ञानविज्ञानयोः प्रसविनी। ज्ञानविज्ञानसहकारादेव मानव आत्मानं परि-

चिनाति, आत्मनोऽभावं चाधिगच्छति, पदार्थानां तात्विकं स्वरूपज्ञानमाप्नोति, आत्मनः कर्तव्योपायांश्च निर्धारयति; विद्यया हि मानवा विजानात्यवधारयति करोति, मुच्यते च विद्याविरहितो हि मिथ्याज्ञानशृङ्खलमपनेतुं न शक्नोति न प्रभवति चात्मनः कर्तव्यं निर्धारयितुम् न पारयति चोपायाननुष्ठातुम्। यथा हेयोपादेयवस्तूनां ज्ञानं समुद्भवेत्तथोपदेष्टुं प्रवृत्ता विद्याः।

त्रिविधा मानवा भवन्ति, वाला व्यवहारदक्षाः प्रौढाश्चेति तानुपदेष्टुं विद्या अपि त्रिधा प्रवृत्ता। वाला अज्ञा इति प्रकृतिरेव स्वयं शिक्षयति तान। स्वभावशिक्षिता एव ते प्रवर्तन्ते, व्यवहारदक्षा हि सद्यः फलप्रदे बुद्धिनिर्धारिते कर्मणि प्रवर्त्तन्ते, प्रौढा हि समुन्मिषत्तत्वज्ञाना विवेकेन पदार्थाना याथातथ्य निर्णीय प्रवर्तन्ते। एषां प्रवृत्तिनिमित्ता बुद्धिरपि वालबुद्धिर्लोकबुद्धिः परमार्थबुद्धिश्चेत्याख्यायते। यया विद्यया वालाः शिक्ष्यन्ते, सा विद्या- प्रकृतिरेव शिक्षयतीति नात्र तस्या विचारण। द्वितीयावस्थोपयोगिनी विद्या यया सदसद्वस्तु विनिर्णीयते, सा हि तत्वविद्या इत्याख्यायते। श्रद्धया भक्त्या चानुशाल्यमाना विद्या धर्मविद्या इत्युच्यते। तत्वविद्याविषयको विचार एवात्र प्रस्तूयते।

त्रिविधा मानवा, अतस्तेषां कर्मानुष्ठानमपि त्रिधा भवति। चित्तप्रेरिता वालाः कर्तव्ये कर्मणि व्यापृता भवन्ति, द्वितीयावस्थायां हि कर्मप्रवृत्तौ बुद्धिः प्रेरिका भवति। तृतीयावस्थायाञ्च जना हृदयेन परिचाल्यन्ते। वहिरन्तरञ्च निरीक्ष्य यथा धर्मविद्या प्रवर्त्तते, न तथा तत्वविद्या, बाह्यपदार्था एव तत्वविद्याया आश्रयीभूताः, अतो हृदयशून्येव विद्या। यथा धर्मविद्यानिपुणस्य समाजे आदरो भवति न तथा, तत्वविद्यानिष्णातस्य, सामान्यापि धर्मविद्या सश्रद्धं मानवैर्गृह्यते, तत्वविद्या हि युक्तिसमुर्ज्जिता इति नादरो भवति तस्याः साधारणसमाजेषु। साधारणसमाजे तत्वविद्या नादृता भवतीति नैतेन निष्फलेयं विद्येति कल्पनीयम्। तत्वविद्ययैव धर्मविद्या निर्मला सुदृढा च सम्पाद्यते। कथं धर्मोऽनुष्ठेय इति तत्वविद्ययैवायं प्रश्नः समाधेयो भवति, एतेन तत्वविद्याया उपयोगित्वं सुबोध भवति।

तत्वविद्यया मानवानामैहिका मनोरथाः पूर्यन्ते। कथं प्रवर्तितव्यमित्यवबोध्यते तत्वविद्यया, निविष्टसमाक्षासमुद्भूतज्ञानेन पूर्वोपार्जितं ज्ञान दृढतामापाद्यते। यथा रासायनिकप्रक्रियया पदार्था विकृतिमासाद्य पदार्थान्तरमुत्पादयन्ति, तथैव तत्वविद्यापि नवं नवं ज्ञानमुत्पादयति। साम्प्रतं विज्ञानबहुले समये यथा यथा तत्वोपादानस्य भावाऽभावौ वा भवति, तथा तथा परिवर्तते सेयं तत्वविद्या। अत एव भवति तत्वविद्यायां बहवो भेदाः। द्वे अवस्थे भवतस्तत्वविद्यायाः। एकया चापरेऽपि पदार्था वैपरीत्यमापाद्यन्ते, अन्यया च सिद्धान्तस्य स्थापन भवति। तत्वविद्यायाः प्रथमावस्थातर्कदर्शनादयः शास्त्राणि, द्वितीयावस्था च शास्त्रविद्या तत्वविज्ञानाख्याः, अपरैर्व्यवस्थापितः सिद्धान्त एकया निरस्यते अपरया चाभिनवः सिद्धान्तो व्यवस्थाप्यते। तर्कदर्शनादिभिर्यथा सन्देहा निराक्रियन्ते, तथोपाद्यन्ते च, परं ते सन्देहा तत्वविज्ञानेनापनीयन्ते। •

मा भवतु समादरः समाजे तत्वविद्यायाः, परं तत्वविद्याध्ययनमन्तरा न समुपलब्धो भवत्यधिकारो धर्मविद्याध्ययनस्य। तत्वविद्यैव धर्मविद्यायै पूर्णतां परिष्कृतिञ्च प्रयच्छति।

तत्त्वविद्यानुप्राणिता धर्मविद्या नापरैर्विचालयितुं शक्यते । सांसारिकव्यवहारप्रवृत्तो मानवः किं विधेयं किञ्च विधेयमिति प्रथमं सन्देहगर्त्ते निमज्जति, तदा स्वेच्छया प्रवर्तमाना हेयमुपादत्ते, उपादेयञ्च जहाति, सन्देहजालनिगडितबुद्धिविभवो निश्चेष्टस्तिष्ठति। तदा तत्त्वविद्या तथोपदिशति, यथा मानव आत्मनः कर्तव्यमधिगच्छति । स्वभावोन्नयनमन्तरा न कोऽपि मानव ऐहिकं पारत्रिकञ्च श्रेयोऽधिगन्तुं शक्नोति, स्वभावोन्नतिश्च केवलं तत्त्वविद्ययैव लभ्यते । स्वभावोन्नयनमन्तरा धर्मतत्त्वादिशिक्षणप्रयास उपहासाय भवति, निष्फलं हि तत्। चौर्यं हि विनिन्दितं सर्वैः नानुष्ठेयः पाप इति सर्वैरुपदिश्यते, परमद्य यावन्न चौर्यप्रवाहोऽवरुद्धः, नापि पापानुष्ठानं दूरीभूतम्, किमत्र कारणमिति चेत् स्वभावानुन्नतिरिति प्रतीमः । न हि श्रुतः पठितो वा धर्मोपदेशः कस्मैचित् फलाय कल्पते, श्रुतो धर्मोपदेशो यावन्न हृदयं वशयति, न तावत्तेन किंचित् फलं भवति। साम्प्रतं न तत्त्वविद्यायाः समादरः समाजे, अतो मनस्यन्यद्वचस्यन्यत् कर्मानुष्ठीयते लोकैः । साम्प्रतं शब्दैरेव जना आत्मनः पाण्डित्यं धर्मवत्त्वं च प्रकाशयन्ति, न कर्मणा। साम्प्रतिका दण्डभयादेव पापेनाभिनिविशन्ते, न तु धर्मभयात् स्वार्थसाधनमेव तेषां धर्मसेवनम्, बाह्याडम्बर एव मुक्तिरर्मं ।

परमात्मनि धर्मे च श्रद्दधाना तत्त्वज्ञानोपलब्धिमिच्छन्तो न हीदृग्विधा भवन्ति । न हि सहसा तेषां प्रवृत्तिः कस्मिन्नपि कर्मणि भवति, प्रवृत्ता वा न ततो विरता भवन्तिः तेषां हि परिशुद्ध आत्मा परिष्कृता वा प्रकृतिस्तान् पन्थानमारोपयति न ते दुर्नीतिपरा भवितुं शक्नुवन्ति । प्रकृतिप्रेरिता एव मानवाः किञ्चिदनुतिष्ठन्ति भाषन्ते च । बहुविधैः कारणैरत्र मानवनां प्रकृतिर्विकृता भवति परं सा विकृतिस्तत्त्वविद्ययाऽपनेतुं शक्या । अतस्तत्त्वविद्यावलम्बेन कर्मणि प्रवर्तमानानामाचारो न सद्विरोधी नापि नीतिविरहितो भवति । प्रकृत्युन्नयनं दुर्नीतिपरिहारस्य प्रशस्तः पन्थेत्यवसेयम् ।

तत्वविद्यापरिशुद्धे हृदये न कपटदम्भप्रतारणादीनां सम्पर्कोऽपि भवति आत्मावमाननं दूरीभूतं भवति अन्धविश्वासः कुहचन विलीनो भवति, स्फुरति चात्मप्रकाशः। स्वां प्रकृतिमवलम्ब्य कस्मिन्नपि कर्मणि प्रवृत्तिर्निखिलानां श्रेयसे भवति। सा हि प्रकृतिपरिशुद्धिः केवलं तत्वविद्ययैवोपलभ्यत इति वीतशङ्कमभिधीयते धीमद्भिः।

हन्त, साम्प्रतं विरला अतिविरला एव तत्वविद्यायां स्नेहवन्तो दृश्यन्ते। तत्वविद्याह्रासनिवन्धन एव दिनाद्दिनं शोच्यां दशामधिगच्छति भगवान् शाश्वतो धर्मः । भारतीयैर्धर्मगुरुभिर्धर्मोऽनुष्ठेय इत्युच्यते परं तैरपि तत्वविद्याशिक्षणं हानिकरमिव मन्यते। न हि केवलं शुष्क उपदेशः फलति, तत्वविद्याप्रसिक्त उपदेशोऽचिरेणैव फलति, मोदयति च मनांसि शान्तिमताम्।

---

# प्रतिष्ठानपुरम्

—— .०:——

श्रूयते यत्र तत्र वर्णितं पुराणेषु प्रतिष्ठानपुर नाम नगरम् । इलनाम्ना राज्ञा नगरमिदं प्रतिष्ठापितं, यद्धि पुरूरवसो महाराजस्य राजधानी समभवदिति दृश्यते वर्णितं रामायणे। साम्प्रतं क्व तत्प्रतिष्ठानपुरम् । इदं प्रयागनगरमेव प्रतिष्ठानपुरस्य नामान्तरमिति बहूनां विश्वासः । मत्स्यपुराणे दृश्यते राजा ययातिः पुरवे राज्यं

प्रयच्छन् वदति स्म, "गङ्गायमुनयोर्मध्ये कृत्स्नोऽयं विषयस्तव" अत्र गङ्गायमुनयोर्मध्यस्थदेशनिर्देशः प्रतिष्ठानराज्यमेव बोधयतीति दृढः प्रत्ययः पुरातत्त्वविदाम् । एतेन पुरूरवसमारभ्य ययातिपर्यन्तं चन्द्रवंश्यानामेव राज्ञामधिपत्यमासीदिति प्रतीयते, राज्ञो युधिष्ठिरस्य समयेऽपि प्रतिष्ठाननामकं किमपि नगरं परिचितं भवति, तदा हि प्रतिष्ठानपुरं प्रयागराज्ये प्रधानं नगरमभवत् । प्रयागमाहात्म्यमवगन्तुमना युधिष्ठिरो मुनिं मार्कण्डेयमपृच्छत्, तदुत्तरे मुनिर्वदति प्रतिष्ठानमारभ्य वासुकिह्रदं यावत् प्रजापतिक्षेत्रमित्यभिधीयते, मत्स्यपुराणेऽप्येतत्सममेव वर्णनं दृश्यते, कूर्मपुराणेऽपि मार्कण्डेयो मुनिर्युधिष्ठिरमवबोधयति गङ्गायाः पूर्वभागे त्रिभुवनप्रसिद्धं सर्वसमुद्रनामकं गह्वरं प्रतिष्ठाननगरञ्चावतिष्ठते । एतेन गङ्गायाः पूर्वभागे प्रतिष्ठाननगरमासीदिति निश्चीयते । परं साम्प्रतं क्व तत्प्रतिष्ठानपुरम् ? कालप्रभावात्तन्नगरं विलयमुपगतं, प्रयागस्यैवाङ्के समर्पितविग्रहं नामशेषतामासादितमित्यनुमानस्तद्विदाम् । विलीने प्रतिष्ठाननगरे प्राधान्यमासादितं प्रयागेन, यद्यपि प्रयागनगरे न कस्यापि राज्ञो वसतिरासीत्तथापीदं प्रधानं तीर्थक्षेत्रमिति वर्णितं यत्र तत्र पुराणेषु दृश्यते प्रयागप्राग्वटयोरुल्लेखो रामायणे दृश्यते, भरद्वाजाश्रमगङ्गायमुनासङ्गमवर्णनञ्चापि रामायणे निबद्धमवलोक्यते । अतो गङ्गायमुनयोः सङ्गमे प्रयागतीर्थस्य भरद्वाजाश्रमस्य च स्थितिर्वर्णिता । तदानीं प्रयागे न कस्यापि राज्ञो राजधानी प्रतिष्ठापिताऽभवत् । विलीने प्रतिष्ठानराज्ये प्रदेशोऽयं कोशलराज्येऽन्तर्गतः समभवदिति शक्यते निश्चेतुम् । साम्प्रतम् "अक्षयवट" नाम्ना यस्याभिधानं भवति, पुरा स एव "प्राग्वट" नाम्नाभिहित आसीदिति तत्तद्ग्रन्थेभ्यो विनिश्चीयते । अत्र नगरे सुयोधनस्याधिपत्यमासीदिति महाभारतादवसीयते ।

कदाचिद् भारतवर्षस्य प्रसिद्धेषु स्थानेषु बौद्धप्राधान्यं विजृम्भितमासीत् । प्रयागनगरमपि न तेन निर्मुक्तमासीत् । प्रयागदुर्गे धातुनिर्मितः कोऽपि विशालः स्तम्भो विलोक्यते साम्प्रतमपि, अत्र हि कदाचिद्राज्ञोऽशोकस्याधिपत्यं विस्तृतमासीत् । तत्प्रमाणयत्येष स्तम्भ एव । अत्र स्तम्भे भगवतो बुद्धस्योपदेशा समुत्कीर्णा दृश्यन्ते, अशोकानन्तरमत्र गुप्तवंश्यानां राज्ञां राजधानी प्रतिष्ठिता, गुप्तवंशीयो राजा समुद्रगुप्तोऽशोकस्तम्भ आत्मनः परिचयं सन्यवेशयत्, अत्र हि समुद्रगुप्तस्य राज्यमाहात्म्यं पितृकुलवर्णनञ्च सन्निवेशितं वर्तते । माहम्मदराज्ञोऽकवरस्य शासनसमये प्रयागे माहम्मदानां सुदृढं दुर्गं रचितमभवत्, यस्य च "इल्लाहाबाद" इतिनामाभवत् । ततस्तद्वंशीयेनैव शाहजहां नम्ना राज्ञा "अल्लाहाबाद" नाम्ना परिवर्तितं तत् साम्प्रतम् "एलाहाबाद" नाम्ना सुप्रसिद्ध्यति । कश्चित्तस्मिन्नेव वंशे जहांगीरनामको भारताधिपतिः समभवत्, तेन ह्यशोकस्तम्भो वैकृत्यमापादितः । पुनस्तेनैव १६०५ खृष्टाब्दे तस्मिन्नेवस्तम्भे स्वकीर्तिगाथां सन्निविष्टां व्यधात् । सा हि कीर्त्तिगाथा पारसीकभाषया लिखिताऽभवत् । प्रयागदुर्गे स्थितः स्तम्भो बहूनां नरपतीनां कीर्तिगाथां वहन्नवतिष्ठते ।

चीनसंन्यासिनां भारतवर्षभ्रमणवृत्तान्तपुस्तकेभ्य एतदवसीयते । चीनसन्यासी फाहियानहुएनत्सङ्ग इत्युभावप्ययोध्यातः प्रयागं समागच्छताम्, परं भिन्नस्तयोरागमनमार्गः । हुएनत्सङ्गस्तु— अयुतो ( Ayuto ) अयोध्या

नगरीनगरमभिमारुह्य द्वादशयोजनान्यतिक्रम्य च गङ्गाया उत्तरतीरस्थितं "हयमुख" नगरं प्राप्तवान। हयनाम्ना दैत्येन प्रतिष्ठापितमिदं नगरमितिहेतो हयमुखनाम्नाभिधीयत इति प्रवादः। यदुवंशेऽपि हयनामकः कश्चन नरपति रासीत् तेनैवेदं नगरं प्रतिष्ठापितमित्यप्यनुमातुं शक्यते। हयनाम्ना प्रसिद्धेन यवनाधिपतिना राज्ञः पुरञ्जनस्य राज्यमाक्रान्तमभवदिति भागवते वर्णितं दृश्यते। हयमुखनगरमपि तदधीनमासीदित्यप्यनुमीयते। स यवनाधिपतिरेव दैत्यनाम्ना निर्दिष्ट आर्यैरिति प्रेक्षावतां विमर्शः। ततो दक्षिणपूर्वस्यां दिशि चतुर्दशयोजनान्यतिक्रम्य चीनसन्यासी हुएनत्सङ्ग प्रयागनगरमागच्छत्। चीनसंन्यासी प्रयागनगरमित्थमवर्णयत्, द्वयोर्नद्योः सङ्गम इदं नगरं प्रतिष्ठापितं वर्तते। तस्य हि पश्चिमस्या दिशि सिकतामयं विशाल क्षेत्रं विद्यते। नगरस्य मध्ये किमपि ब्राह्मणानां देवमन्दिरं प्रतिष्ठापितमासीत्। तन्मन्दिराधिकारिणां विश्वास आसीद् यत् तत्र यः कोऽप्येकमपि पणमुपहारीकरोति, स बहुधनमधिगच्छति। मन्दिरस्य तस्य मुख्यप्रकोष्ठे विशाल एको वृक्ष आसीत्। तत्र निवसति कोऽपि मानवाशी दैत्य इति प्रसिद्धा तत्रत्या किंवदन्ती। वृक्षं परितो बहूनां मानवानां विकीर्णान्यासन् कङ्कालानि। स्वीयं पारलौकिककल्याणमभीप्सद्भिर्मानवैर्यैः प्रियाः प्राणाः सुखेनोत्सृज्यन्ते स्म, बहुतिथात् समयात्तेषां कङ्कालानीत्थमेव विकीर्णान्यभवन्निति वदति चीनसन्यासी। प्रत्नतत्त्वज्ञः कनिंहममहो[illegible] [illegible]ति [illegible]वर्णनया हुएनत्सङ्गा "अक्षयवट" [illegible]लक्ष्यीकरोति। साम्प्रतमपि दुर्गमध्ये स वटो विद्यमान इति निर्दिश्यते। साम्प्रतं चीनसन्यासिवर्णितं मन्दिरं न विलोक्यते. परमक्षयवटवृक्षं परितो भग्ना भित्तयो द्योतयन्ति पुरा स्थितस्य कस्यापि गृहस्य सत्ताम्। अशोकस्तम्भस्योत्तरेण तन्मन्दिरमासीदिति प्रत्नतत्वज्ञा निश्चिन्वन्ति, निनिपुणमनुसन्धानेन तत्र कस्यापि नगरस्य सत्ता स्वीकर्तव्यैव। कालमाहात्म्यात्तन्नगरं साम्प्रतं स्तूपरूपे परिणतमभवत्। साम्प्रतमप्यक्षयवटं द्रष्टुं गच्छद्भिरेतदनायासेनैव ज्ञातुं शक्यते, यतः सोपानमाहात्म्याद् अधोगत्वाऽक्षयवटः साक्षात्क्रियते। १८७१ खृष्टाब्देऽपि कनिंहममहोदयः सोपानमाहात्म्यादेवाक्षयवटं द्रष्टुमशकत्। अद्यापि तथैव तत्र गम्यते। माहम्मद ऐतिहासिकेन रसीदउद्दीननामकेन "जमी ओ तवारीख" नाम्ना प्रसिद्धं किमपीतिहासपुस्तकं विलिखितम्, तत्रापि "अक्षयवटो" वर्णितो दृश्यते। एष हि ग्रन्थकर्ता 'आबूरिहान्‌निर्मितपुस्तकादेव प्रायश सङ्गृहीतवान् विषयमात्मपुस्तक इति निश्चीयते। आबूरिहानपुस्तके हि मोहमुत् (महमूदगजनी) सामयिकमेवैतद्वृत्तं निबद्धमिति सम्भाव्यते। सप्तमशतके हुएनत्सङ्गभारतागमनकाले नगरसङ्गमयोर्वर्णितमात्रं व्यवधानमासीदिति तद्वर्णनादेवावसीयते। परं ततोऽतीतेषु नवशतकेषु अकबरशासनकाले विलिखत्यात्मनो ग्रन्थे अब्दुलकादिरमहोदयो यद् अक्षयवटस्य शाखामारुह्य तत उत्प्लवन्ते जनाः सङ्गम इति। एतेन निश्चीयते हुएनत्सङ्गागमनसमये नगरतो दूरं सङ्गम आसीत्, अकबरशासनसमये तु नदीप्रवाहो नगरसमीपं गत इति। किञ्चाकबरशासनसमये तत्र नासीन्नगरस्य चिन्हमपि आबूरिहाननिर्मिते ग्रन्थे प्रयागनगरस्य नामापि न दृश्यते, केवलं तत्राक्षयवट एव वर्णितो वर्तते। आबूरिहानाकबरयोर्मध्ये न कोऽपि माहम्मद ऐतिहासिकः प्रयागस्य नामापि समुदलिखत्, एतेन निश्चीयते, आबूरिहान-

समयतः पूर्वमेव प्रयागनगरमपि नामशेषता-मासादितमासीत्।

साम्प्रतिकप्रयागनगरस्थापनसम्बलिता कापि किंवदन्ती प्रसिद्धा सर्वत्र। अत्र प्रयागनामकः कश्चन ब्राह्मणो निवसति स्म। तस्यैव स्मारक नगरस्यापि प्रयाग इतिनाम समभवत्। यदा हि सम्राड् अकबरः "इलाहाबाद" दुर्गं निर्मातुमारभत्, तदा नदीवेगेन दुर्गस्य प्राकारखण्डो भग्नः। बहुप्रयत्नस्यन्तोऽपि शिल्पिनस्तत्प्राकारखण्डं निर्मातुं न प्राभवन्। नरबलिं कामयते भगवती जाह्नवी इति सञ्जातप्रत्ययो नरेश्वरोऽकबर इत्थं घोषणां प्रचारितवान, यः कोऽपि जनो निर्विघ्नं दुर्गनिर्माणसम्पादनाय स्वीयान् प्राणानुत्स्रक्ष्यति तस्यैव नाम्नाऽस्य नगरस्यापि नाम भविष्यतीति। तदा स एव प्रयागः प्राणानत्याक्षीत्। तदनुसारमेवनगरस्यापि तन्नाम समभवदिति।

परं प्रत्नतत्त्वज्ञः कनिंहममहोदयो नात्र विश्वासमादधाति। यतः समुल्लिखितं प्रयाग इतिनाम सप्तमशतके समागतेन चीनसंन्यासिनेति। अशोककीर्तिस्तम्भेऽपि प्रयाग इति नाम दृश्यते।

---

# धर्मस्योपादानं फलञ्च,

---

धर्मो नामाऽयं न साम्प्रतिकैः सूक्ष्मसमीक्षकैः पाश्चात्यैः कल्पनाप्रवणैः प्राच्यैर्वा विद्वद्भिराविष्कृतः कल्पितो वाऽभिनवः कोऽपि पदार्थः। अपित्वीश्वरव्यवस्थापितः कोऽपि प्राचीनतरः पदार्थः। कदायं समुद्भूत इति न शक्यते निश्चेतुम। चेतनोन्मेषेण सहैव धर्मः परिलक्षितो मानवेषु। बहुतिथात् समयादयमधिकरोति मनांसि मानवानामतो ह्यनादिरयं पदार्थो धर्म इति विनिर्णीयते तत्वज्ञैः।

निखिलानामस्माकं पूर्वपुरुषैर्ग्रथिता ग्रंथा धर्मप्रचुरा। पारम्पर्यक्रमागत आचारः, साक्षात्कृतधर्मभिः परमकारुणिकैर्महात्माभिरूपदिष्टा विधिनिषेधादय एव समुन्नयन्ति मानवान। तेषु विधिनिषेधाचारादिष्वपि धर्मः परिलक्षितो भवति। नागरिकाणां वर्वराणां च सर्वेषामेव हृदि धर्मांकुरो वर्त्तमानः प्रत्यक्षीक्रियते निखिलैः। सर्गस्य प्रारम्भे यावज् ज्ञानं न पुष्टिमारादयति यावच्च नोदयन्ति मानवानां मनसि सामाजिका भावाः, तावदेव मानवानां हृदयं केनापि धर्मभावेनानुप्राणितं भवति। प्रत्नासु संस्कृतग्रीकप्रभृतीषु भाषासु ये ये धर्मवाचकाः शब्दा दृश्यन्ते, तेषामुपादानं बहुतिथात् समयात् वर्तमानमासीत्। अत उच्यते धर्मोऽयं नाभिनवः पदार्थः, अपित्व नादिः सोऽयमिति विद्वांसो निरूपयन्ति।

सत्यं, सृष्टेः प्रारम्भसमयादेव मानवानां हृदयं धर्मप्रवणम, मानवेतिहासस्य न कोऽप्यध्यायो धर्मविरहितः, परं सर्वसम्मतो धर्मोपादाननिर्णयोऽद्य यावन्न जातः,। पुरा धर्मशब्देन यादृशोऽर्थो बुध्यते स्म, साम्प्रतं ततो विलक्षण एव कोप्यर्थोवबुध्यते। सर्व एव मानवा धार्मिकाः, सर्वेषामेवहृदय धर्मप्रवणं तथापि धर्मं यावान् परिवर्त्तो जातो न तावानन्यत्र कुत्रचित। प्रतिदेशं, प्रतिसमाज प्रतिमानवञ्च भिन्न भिन्न एव धर्मो निरूपितो भवति, किं बहुना स्त्रीपुरुषयोरपि भिन्नो धर्मो व्यवस्थापितो, बालवृद्धयोश्चापरो धर्मो निरूपित इति बहुधा भिन्नः प्रावर्तत धर्मः अतो धर्मशब्देन कः पदार्थो ग्राह्य इति निर्णयः प्रायो दुःशकः।

किञ्च व्यवहारेऽपि प्रयुज्यमानोऽयं धर्मशब्दो न कमपि विशेषमर्थमभिधत्ते। यथान्येषां शब्दानामर्था नियता न तथाऽस्य धर्मशब्दस्य,। अयं शब्दो हि यथेच्छ यत्र तत्र वा प्रयुज्यते लोकैः। कोऽस्य विशेषोऽर्थ इत्यद्य यावन्न ज्ञातः केनापि। अनभिसन्धायैवास्य विशेषमर्थं सर्वत्रैवायं प्रयुज्यते। एक एवायं धर्मशब्दः कदाचित् देवोपासनयज्ञाद्यभिप्रायेण प्रयुज्यते कदाचित् धर्मसिद्धान्तावबोधाय प्रयुक्तो भवति, कदाचिदयं शब्दो दार्शनिकं तत्वमभिधत्ते, कदाचिदयमिष्टदेवोत्कण्ठां बोधयति कदाचिच्च मानसिको भावो ह्यर्थो भवत्येतस्य। इत्थं बहुविधेऽर्थेऽस्यप्रयोगात् कोऽस्य विशेषोऽर्थ इति न शक्यते निर्धारयितुम्।

यदाऽयं देवोपासनरूपेऽर्थे प्रयुज्यते तदा स एव मानव समाजो वा धार्मिको भवितुं शक्नोति, यो ह्यस्य प्रकृतिमालोच्य धर्मसाधनोपायान् निर्धारयितुं शक्नुयात् धर्मसाधनौपयिकान् नियमांश्च व्यवस्थापयितुं प्रभवेत्। धर्मसिद्धान्ताभिप्रायेणः यदाऽयं प्रयुज्यते तदा स एव मानवः स चैव समाजो धार्मिकपदेनाभिधातुं शक्यते, यस्य धर्मविषयकोऽतिसूक्ष्मोऽनुभवो भवेत् यो ह्यनभिसन्धायैव धर्मतत्व तन्माहात्म्ये श्रद्धत्ते, यो हि तर्कविचारापेक्षया श्रद्धाभक्तिविश्वासादीनेव बहुमन्यते च। तृतीयेऽर्थे प्रयुज्यमानश्चायं तमेव धार्मिकमवगमयति यो ह्यनुभूतकर्ममाहात्म्यो पूजार्चादिषु मनो निवेशयति। इत्थमेकस्यैव धर्मशब्दस्य त्रयोऽर्था भवन्ति, धर्मसानं धर्मभवो धर्मकर्माणि च। अतः केनाभिप्रायेणायं प्रयुक्त इति सविशिष्य निर्द्धारणमन्तरा न पठता पठकानाञ्च सन्देह उपशाम्येत्।

अस्माकं भाषावैकल्यात् शब्दप्रयोगशैथिल्याच्चायं धर्मे भेदवाद समुत्पन्न। साम्प्रतं धर्मे यावान् मतभेदो दृश्यते न तावानपरेषु विषयेषु अद्य यावत्किं धर्मलक्षणमित्यत्रैव विवदन्ते धार्मिका इति मर्म तुदति प्रेक्षावताम्।

साम्प्रतमुपलब्धास्तथाविधाः समाजाः यत्र नास्ति कोऽपि धर्मवाचकः शब्दः। परं तेषामाचारव्यवहारा धार्मिका एव दृश्यन्ते। तेष्वेवंविधोऽप्यस्ति समाजो यत्र न कर्तव्यं मन्यते पूजनं देवानाम् परं तत्रापि मृता प्रेता पूज्यन्ते। कोऽपि पण्डितो बह्वीभिर्युक्तिभिर्निरीश्वरवादं प्रतिष्ठाप्य मानवसमाजता देवविश्वासं दूरीकर्तुं प्रयतते। पर स एव लोकोन्निनीषया ग्रन्थान् विरचयति परोपकृतये जीवनञ्चाप्युत्सृजति। कश्चन नानुतिष्ठति भगवतो भक्तिम् परं सोऽपि भगवतः करुणां कामयते, कश्चन जगदिदं देवमयमिति विलोकयति। कश्चन देवादीनामसत्वकल्पनमेव धर्म इति प्रतिपद्यते।

कश्चन यज्ञोपासनप्रार्थनादिकर्मणि मनो निवेशयति, तदेव धर्माचरणमिति स्वीकरोति च स एवान्यदा निरर्थकमिति तत्सर्वमपहाय योगे रमते विजानाति च तमेव धर्मम्। कश्चन देवेभ्यो बिभेति कश्चिच्च सम्मानयति देवान्। कश्चन परलोकसुखाशया दुःखभयाद्वात्र नियमान् पालयति। कश्चन देवपूजनमपहाय मानवसेवनमेव विदधाति कश्चिच्च भगवत्साक्षात्कारवीतवितृष्णः सदा तिष्ठति।

धर्म एवंविधं वैलक्षण्यमित्यत एव नह्येकमत्यं धर्मे स्थापयितुं शक्यम्। सर्वो ह्यात्मन आचरितं धर्म इत्यङ्गीकरोति अपरांश्चाधर्मिकान् प्रख्यापयति,।

अस्ति धर्मे भेद इति भिन्नभिन्नासु भाषासु प्रयुज्यमाना धर्मवाचकाः शब्दाः न समानार्थका भवन्ति। एकस्यां भाषायां

धर्मवाचकः शब्दो यमर्थमभिधत्ते, अन्यस्यां भाषायां वर्तमानो धर्मवाचकः शब्दो न तादृशमर्थं द्योतयति आङ्गलभाषीयो 'रेलिजन' शब्दो न धर्मसमानार्थकः। अतो भाषाविज्ञानसाहाय्यादपि धर्मभेदो दूरीकर्तुमशक्यः।

भाषावैकल्यात् विषयवैचित्र्याच्च तत्तद्धर्मावलम्बिषु मतभेदो विरोधो वा सम्भवत्येव परमहो मतभेदोऽयं धर्मविज्ञानप्रतिष्ठापकेषु दार्शनिकेष्वपि स्थानमासादितवानिति निरीक्ष्य चित्रीयते चेतः। ये हि केवलं धर्मं प्रतिष्ठापयितुकामास्तत्वनिरीक्षकास्तेऽपि परस्परं विरुद्धा नह्येकं धर्मसिद्धन्तं प्रतिष्ठापयितुं प्राभवन् यथा धर्मा परस्पर विरुद्धास्तथा धर्मविज्ञानान्यपि, । एकेन निर्धारितो धर्मोऽपरेण खण्ड्यते इत्थं स्वभावतः समुत्पन्नो धर्मभेदो विज्ञानवादिभिरेभिर्दृढतामापादितः स इति विश्वासः प्रेक्षावताम्

केचन वदन्ति जीवितौपयिकानि भगवदिङ्गितेन स्थिरीकृतानि कर्म्माण्येव धर्मः परं मानवा भगवदिङ्गितमनुसृत्य न प्रवर्तन्ते ते हि स्वयं बुद्धया विवेचयन्ति, इदं कर्तव्यमिदकर्तव्यमिति, ततस्तदेव कर्म भगवदादेश इति निरूपयन्ति। एषां मते न मानवकर्तव्यानि भगवता स्थिरीक्रियन्ते अपितु मानवैरेव तानि निरधार्यन्ते अपरेण व्यवस्थापितं कर्म सम्पादयन्तो मानवा अधमा इत्यमीषां विदुषामभिप्रायः निखिला धर्माः प्रथमं मानवान् केनापि व्यवस्थापितानां नियमानां पालनाय नियोजयन्ति ततश्च ज्ञानवृद्धया सहैव तेषां पुरः सत्यं तत्वं प्रतिस्फुरति, सदाचार एव धर्म इत्येषामभिप्रायः।

अपरे तु नेमं सिद्धान्तं साधुमन्यन्ते एषामेष आशयः सदाचारेणैव मानवा नियन्त्रिता भवन्ति योहि धर्मसंयतो व्यवहरति न स सभ्य इतिवदन्त्येते महाभागाः। एषां मते ज्ञानमेव धर्मः स हि कर्माकर्माण्युपदिशति। मानवो धर्मेणात्मस्वरूपं परिचिनोति, ततश्च सम्पादयति निजं लक्ष्यम्।

केचन वदन्ति देवपूजनमेव प्रधानो धर्म इति। देवपूजनविहीना न धार्मिका भवितुं शक्नुयुः। केचन बाह्यै राचारैर्न धर्मस्य कोऽपि सम्बन्ध इति सिद्धान्तयन्ति इत्थं तत्र तत्र बहुधा सिद्धान्तितोऽयं धर्मः पुराभवैः।

इत्थं बहुधा निरूपितस्य धर्मस्य यत्र-समाजे व्यक्तौ वा यादृशः प्रकाशः समभवत्, तर्हि येषां नियमानां पालनं धर्मनाम्नाङ्गीकृतम् तेषां लक्षणं विधातुं शक्यते। यतो बहुतिथात् समयात् प्रसिद्धस्य साम्प्रतमपि विजृम्भितविकाशस्य धर्मस्य साधारणलक्षणव्यवस्थापनं नातिदुष्करमिव प्रतीयते। तत्साधारणलक्षणमेव धर्मस्य तात्विकं रूपमित्यङ्गीकर्तव्यम्। अत ऐतिहासिकक्रमविकाशेषु धर्मस्योपादानमुपलब्धुं शक्यत इति नः स्थेयसी बुद्धिः।

भगवतो धर्मस्य रश्मयस्तत्र तत्र प्रतिफलिता यावन्ति रूपाण्यासदयन तेषु निपुणं निरीक्ष्यमाणेषु शक्यते सिद्धान्तद्वयं व्यवस्थापयितुम्। प्रथमस्तु सन्ति तथाविधा बहवः पदार्थाः, ये केवलं धार्मिका एव। सन्त्यत्र बहुविधाः पदार्थाः येषां भिन्नभिन्न उपयोगप्रकारः। केचन पदार्थाः केवलमिन्द्रियैरेव गृह्यन्ते, इन्द्रियशक्तिविकलो जनो न तान् पदार्थान् अनुभवितुं शक्नोति। इत्थमेव तथाविधा अपि पदार्था सन्ति येषां प्रत्यक्षो नेन्द्रियैर्भवति, अपि तु कयापि शक्त्या, तया विरहितो न तानासादयितुं प्रभवति।

बहिरन्तरभेदेन द्विविधं जगदाम्नातम्। यथा वाह्यं जगत् कस्या अपि शक्तेर्निर्भी-

भूतम्, तथान्तरमपि । परं तथाविधा अपि पदार्था ये न वाह्ये जगत्यान्तरे वान्तर्भवन्ति ते धार्मिका इति प्राचां सिद्धान्तः ।

अपरन्तु—अस्त्येवंविधा कापि शक्तिः यया मानवः केवलं धर्ममेव साक्षात्कर्तुं प्रभवति, तया नन्यस्य कस्यचिद्वस्तुनो ज्ञानं भवति । इयं हि न काऽप्यभिनवा शक्तिः; किन्तु मानवो यया शक्त्या कमपि पदार्थमुपलभते विजानाति, तयैव शक्त्या धर्मोऽपि साक्षात्क्रियते, सा ह्येकैव शक्तिरुपाधिभेदाद्रूपान्तरं भजति, धर्मप्रवणा सा शक्तिर्यथा विचेष्टते न तथा पदार्थान्तरसम्बन्धादिति भवति तस्यां भेदः ।

इय हि शक्तिर्न कस्मिन्नपि वस्तुनि पदार्थे वा नियता । अत्र यावन्त सजीवा निर्जीवा वा पदार्थाः सन्ति, ते सर्व एव बह्वीनां शक्तीनां संयोगादुत्पन्नाः तेषां पदार्थानां संयोगादेव ताः शक्तयः परिचीयन्ते, परं पदार्थानामन्तर्निविष्टा शक्तिः तेषामाधारभूतौ नैकं वस्तु । न कोऽपि पदार्थः शक्तिविरहितः, शक्तिश्चापि पदार्थं विना न स्थातुं पारयति परमथाप्यनयोर्भेदः पृथक् सत्ताचाङ्गीकर्तुं शक्या । उपलखण्डं, तद्गुरुता चोभौ भिन्नौ पदार्थौ, पृथिवी तदाकर्षणशक्तिश्चेत्युभावपि नैकं वस्तु । अतो धर्मज्ञानौपयिकी शक्तिरस्तीत्युक्तिः परिचाययति मानवचित्तान्तर्निविष्टां कामपि शक्तिम् ।

मानवैर्यया बुद्ध्या ज्ञानोत्पादिकया शक्त्या च ये पदार्थाः प्रत्यक्षीक्रियन्ते धार्मिकपदार्थप्रकाशिका सा शक्तिरपि तस्या एव शक्तेः केवलं विकाशमात्रम् । साह्युपाधिभेदाद्बहुविधानि कार्याणि सम्पादयति । उपाधिकृत एव तस्या बहुविधो भेदः परिलक्ष्यते ।

मानवहृदयं यावद्विधानि कार्याणि सम्पादयति, तानि सर्वाणि त्रिधा विभक्तुं शक्यन्ते धारणाशक्तेरभिव्यक्तिस्त्रिधा भवति अतो मानवज्ञानमपि त्रिविधं भवति । इन्द्रियज्ञानं हि प्रथमम् अत्रहि रूपरसशब्दस्पर्शविषयकं ज्ञानमन्तर्भवति । युक्तिसमुज्जितं ज्ञानं द्वितीयम् । तृतीयं हि धर्मज्ञानम् । धार्मिकानां पदार्थानां ज्ञानाय भवति चित्तस्य कापि क्रिया, सा हि क्रियान्तरविलक्षणा । अत एव धर्मज्ञानमुत्पद्यते ।

एषां त्रिविधानामपि धर्मज्ञानानां भवत्यवस्थाद्वयम्, प्रारम्भावस्था, चरमावस्था च प्रथममिन्द्रियज्ञानं न विकाशमेति, इदं हि क्रमेण विकाशमधिगच्छति, इत्थं युक्तिसमुज्जितं ज्ञानं, धर्मज्ञानञ्चापि क्रमेण व-विकाशभावमधिगच्छति । मानवानां चित्ते निखिलमपि ज्ञानमव्यक्तं तिष्ठति । विकाशमधिगतेषु ज्ञानेषु तानि परिचीयन्ते, कुत्रचिच्च तानि सदाऽव्यक्तावस्थायामेव तिष्ठन्ति । अतः कदाचिन्मानवज्ञानमप्यव्यक्तावस्थायामेव तिष्ठन्नासादयति प्रकाशम् ।

यद्यपि ज्ञानं त्रिधा विभिन्नं, परं तानि सर्वाणि परस्परं सम्बन्धवन्ति इन्द्रियज्ञानमेवैषां मूलम् तदवलम्ब्यैव युक्तिसमुज्जितं ज्ञानं धर्मज्ञानञ्च समुत्पद्येते युक्तिसमुज्जितं ज्ञानमिन्द्रियज्ञानस्यैव परिणामविशेषः इन्द्रियज्ञानसाहाय्यादेव युक्तिसमुज्जितं ज्ञानमुत्पद्यते इत्थं धर्मज्ञानञ्चेन्द्रियज्ञाने युक्तिसर्ज्जितज्ञाने चावलम्बते, इन्द्रियज्ञानं युक्तिसमुज्जितञ्च ज्ञानं तामवस्थामासादयतो यत्र स्वत एव धर्मज्ञाज्ञानं समुदेति यत् मानवहृदयं न तामवस्थामासादयति न तत्र धर्मज्ञानं विकसति ।

धर्मस्य यानि रूपाण्यभिव्यज्यन्ते येच पदार्था धर्मतोऽभिव्यक्ताः, तेषु प्रधानीभूतः पदार्थो धर्मस्य फलमित्यभिधीयते । मानवानां हृदयं बहुभिरुपायैस्तमेव पदार्थमुपलब्धुं प्रय-

नते। ते उपाया एव धर्मनाम्ना भिधीयन्ते। निखिले धर्मेऽचिन्त्यं चिन्तयितुमशक्तञ्च व्यञ्जयितुं प्रज्वलत्यनिशं मानवानां हृदि कोऽप्याग्रहः। सर्वज्ञत्वसर्वेश्वरत्वोपलब्धय एवानिशं परिश्राम्यति लोकोऽयम्।

---

# मेघनादवधम्।

## प्रथमः सर्गः।

अथास्त्ययोध्या नगरी गरीयसी,
पवित्रिता पुण्यचरित्रसम्पदा।
जगन्निवासस्य परार्च्चिपोशनो,
धरावतीर्णस्य धरात्मजापतेः॥ १॥

विभूषिता सच्चरितैः क्षितीश्वरैः,
पुरा पुरी सा रविवंशमण्डनैः।
बभार शोभामतुलां जगद्विभो-
र्विभासिता पादनखेन्दुरश्मिभिः॥ २॥

धृता मही येन शिरःसु लीलया,
परोपकारैकधिया मनीषिणा।
अनन्तवीर्येण महोग्रतेजसा,
कृपालुना तेन सनाथिता पुरी॥ ३॥

ददत्सुमित्राहृदि मोदमद्भुतम्,
सहोदरे भक्तिमलौकिकीं दधत्।
ततान मोदं परिचर्यया मुहुः,
कृताधिवासस्य वने जगत्प्रभोः॥ ४॥

दशाननछद्महृता धरासुता,
बभूव लङ्कोपवनं श्रिता यदा।
हसन् स्वतेजोभिरयं विडौजसं,
जहार मानं द्विषतां रणाजिरे॥ ५॥

अथार्दितं वीक्ष्य दशास्यसूनुना,
बलं स्वकीयं रघुवंशपुङ्गवः।
निजानुजं न्यक्कृतवीरविक्रमम्,
जगाद मोदं जनयन् सदुक्तिभिः॥ ६॥

प्रिय प्रतिष्ठस्व रणाङ्गणं द्रुतम्,
विमुञ्च केलिं किल बालकोचिताम्।
रिपूत्तमं प्राप्य विधेहि वीरताम्,
चकास्ति काले कृतिनां न मार्द्दवम्॥७॥

इयं पुरस्तेऽरिशितेषुभिश्चमू-
र्निराकृता दीनतमा पलायते।
द्रुत प्रतिष्ठस्व गृहाण कार्मुकं,
श्रितेषु ताटस्थ्यमिदं न भूषणम्॥ ८॥

मदर्थमेषा रिपुभिः कदर्थिता,
प्लवङ्गमानां बृहती वरूथिनी।
दुनोति हा वत्स मदीयमानसं,
कथं त्वया वीर्यवता विलम्ब्यते॥ ९॥

अहं भवद्बाहुबलातिगर्वितो,
दशाननं जेतुमना इहागतः।
त्वया तटस्थेन निषद्यते यदा,
कथं तदा मे विजयस्य सम्भवः॥ १०॥

प्रियावियोगानलदग्धमहतो,
बलं न हा पूर्वतनं विलोक्यते।
विचार्य कार्यं न कृतं मया पुरा,
प्रकोपितो वीतबलेन यद्बली॥ ११॥

अयि, प्रिये जानकि चारुदर्शने,
त्वदर्थमेषोऽस्मि विपन्नतां गतः।
न साध्यते यत्तु पराक्रमेण मे
शुचिव्रते तत्र न मेऽस्ति दूषणम्॥ १२॥

गतासि दूरं मम चक्षुषोऽधुना,
चिराय ते दर्शनमस्ति दुर्लभम्।
क्षमस्व मां देवि, कृतं त्वदप्रियम्,
वनाय तुभ्यं ददतानुशासनम्॥ १३॥

इति निगदति रामे पूर्णकामे मनस्वी,
झटिति विजितदावं वीरभावं दधानः।

रघुपतिपदलीनो लक्ष्मणो लक्षणाढ्यो,
मृदुवचनमुदारं सार्थभारं समूचे ॥ १४ ॥

## द्वितीयः सर्गः ।

त्यज विभोऽरिपुरे करुणारसं,
वितर मे निजमङ्गलमाशिषम् ।
न हि वलं प्रभुवीक्षणवीक्षितं,
निधनदे धनदेऽपि हतोत्सवम् ॥ १ ॥

परिचयं यदि नाथ वलस्य मे,
भवसि लब्धुमनास्समराजिरे ।
भवतु तर्हि मही सचराचरा,
प्रवर ते वरतेजसि पातिता ॥ २ ॥

किमियमेकनिशाचरपालिता,
कनकहर्म्यविभूषितविग्रहा ।
युधि पुरी कुपितस्य पुरो व्रजेत्,
प्रहरतो हरतोऽधिवलस्य मे ॥ ३ ॥

प्रभुरदः परिपश्यतु शात्रवं,
विदलितं निशितैर्मम सायकैः ।
अचिरमेव समेष्यति संक्षयं,
कपिशिता पशिताशनवाहिनी ॥ ४ ॥

अहमिहास्मि तवानुचरः प्रभो,
कथय किं विदधामि तवेहितम् ।
अहमलं विनिपातयितुं क्षणान्,
नरजनो रजनीचरनायकम् ॥ ५ ॥

अयि विभो हृदये नु विशङ्कसे,
जनकजा न तवाङ्कमुपेष्यति ?
विसृज लोकजनोचितभावनाम्,
रसमयः समयस्तव संगतः ॥ ६ ॥

विहरसि त्वमहो पृथिवीतले,
निखिलदुर्जनसंहननेच्छया ।
वद किमस्ति विभो तव दुष्करं,
समरतोऽमरतोऽपि न हीयसे ॥ ७ ॥

यदि ददासि समादरतो नु मे,
विजयकीर्तिमलभ्यतमां प्रभो ।
प्रकटिता तव वत्सलताद्भुता,
विपदि संपदि संतुलिता समा ॥ ८ ॥

इति प्रयुक्तं सरसं निशम्यत-
द्वचोनुजस्याप्रतिमस्य राघवः ।
ननन्द, मोदं विकिरन् समन्ततः,
ससैनिकानां हृदये गतस्मयः ॥ ९ ॥

## तृतीयः सर्गः ।

अथ लक्ष्मणबाहुरक्षिता,
कपिसेना बृहती वलोन्मदा ।
रजनीचरचक्रसंमुखं प्रद-
धावाशु सगर्वगर्जितम् ॥ १ ॥

क्व गतः स खलो दशाननः,
कपटाद्येन हृता विदेहजा ।
यमराजनिकेतनातिथिं,
विदधाम्यद्य निशाचराधमम् ॥ २ ॥

विजने वनितापहारिणम्,
रघुवीरे विहितागसं शठम् ।
समरेऽद्य निपात्य पापिनं,
हृदयाच्छल्यमथोद्धराम्यहम् ॥ ३ ॥

किमिहास्ति फलं विषोपमं,
सपदि प्राणवियोगकारणम् ।
परदारहृतिद्रुमस्य तं,
विनिवेद्याद्य सुखी भवाम्यहम् ।

इति रोषनिविष्टमासनं,
दधतं कालकरालविग्रहम् ।
सहसा रघुनन्दनानुजं,
समरे रावणिरित्थमब्रवीत् ॥ ५ ॥

अयि बाल किमर्थमागतं,
कपिभिः केलिरतेन संयुगे ।

व्रज मातृवराङ्कमाश्रय,
क्व वपुस्ते समराङ्गणक्षमम् ॥ ६ ॥

अहमस्मि स एव सङ्कटो,
विजितो येन मुहुः सुरेश्वर ।
यमुपेत्य बिभेति शङ्करस्त
महो वीक्ष्य न किं पलायसे ॥ ७ ॥

भवता शलभोपमेन हा,
समराग्नौ विनिपत्य दह्यते ।
इति मां विदुनोति चारुता,
तव लोकोत्तरगामिनी शिशो ॥ ८ ॥

अपि याहि विमुञ्च साहसं,
विहगे दर्शय हस्तलाघवम् ।
क्व वयं रणदुर्मदा भटाः,
क्व शिशुस्त्वं नवपल्लवाकृतिः ॥ ९ ॥

इति कोमलभाषिणं रिपुं,
तरसा वाचमुवाच लक्ष्मणः ।
कथमित्थमहो विकत्थसे,
शिशुबुद्ध्या मयि राक्षसाधम ॥ १० ॥

अमराधिपतिस्त्वया जितो,
बहुशो जल्पसि यद्वृथाधुना ।
नहि तेन वतास्ति मङ्गलं,
विशिखैर्मे निशितैर्हतस्य ते ॥ ११ ॥

असवो यदि सन्ति ते प्रियाः,
पितरं ब्रूहि वचो हितावहम् ।
प्रभवे ददतोऽस्य जानकीं,
कुशलं हस्तगतं हि नान्यथा ॥ १२ ॥

शिशुरस्ति कुतो रणाङ्गणे,
पुरतः स्थास्यति मादृशां क्षणम् ।
इति मास्तु वृथाभिमानिता,
तव हा मोहवशाद्विजृम्भिता ॥ १३ ॥

विनिशम्य शिशोर्मुखाद्वचो,
विरसं क्रोधविमूर्च्छितः खलः ।
विदधे शरवर्षणं जवात्,
सुमनोवृष्टिमिवास्य मूर्द्धनि ॥ १४ ॥

विहसन् धनुषि न्ययोजयन्,
निशिताग्रं विशिखोत्तमं प्रभुः ।
हृदये निहितो दृढं हि यै-
र्निपपाताशु धरातलं रिपुः ॥ १५ ॥

तव हन्त विचित्रकौशलं,
शिशुभावेऽप्यसमा हि वीरता ।
मिलितोऽसि विपक्षपरकुले,
भुवि वीरस्त्वमहो ममैकलः ॥ १६ ॥

इति लक्ष्मणवीर्यसाक्षिणं,
विशिखं प्राप्य बलोन्मदो रिपुः,
प्रकटीकुरुते स्म सङ्गरे,
निजदिव्यास्त्रकलाधिकौशलम् ॥ १७ ॥

नरराक्षसयोः परस्परं,
विजयस्पर्धितया भयङ्करम् ।
ववृतेऽश्रुतपूर्वमाहवे,
घननिष्पेषणमायुधैर्मुहुः ॥ १८ ॥

हृदये निशितेषुभिर्हत-
स्तरसा शक्रजिता बलीयसा ।
विदधे निधनेऽस्य मानसं,
कुपितो रामसहोदरस्ततः ॥ १९ ॥

वरमैन्द्रशरं शरासने,
सहसा तस्य वधाय योजयन् ।
स बभौ गुरुतेजसो विभु,
लंघयन् शङ्करबाहुविक्रमम् ॥ २० ॥

निपपात रिपुर्महीतले,
हृदये दिव्यशरेण ताडितः ।
गगनाज्जयशब्दसङ्कुलम्,
मुमुचे संयुधि पुष्पवर्षणम् ॥ २१ ॥

इत्थं निपात्य समरे रिपुसूनुमुग्रं,
भ्रातुर्निपीड्य चरणौ मुदमादधानः ।

श्रीलक्ष्मणो विजयकीर्त्तिमवाऽपशुभ्रां,
रामस्य मोदमतुलं हृदये चकार ॥ २२ ॥

इति श्रीकविविनोद परमानन्दकृते
मेघनादवधे तृतीयः सर्गः

---

## पठनपाठनप्रकारः

—:०—

नात्र संशयो यदधुनातना भारतवर्षीयाः संस्कृतविद्वांसो महता श्रमेणच्छात्रानध्यापयन्ति, छात्राश्चाधीयते ग्रन्थान्। परन्त्वेनावानेव प्राक्तनस्य साम्प्रतिकस्य च पठनपाठनप्रकारस्य भेदो दृश्यते यत्प्राचीना अध्ययनपरायणा अतीवनिष्णाताः प्रायः सर्वासु विद्यासु लब्धाधिपत्या जायन्ते स्म। यन्निर्मिता गम्भीराशयपरिष्कृता बहुशो ग्रन्थाः सम्प्रति बहुलब्धपदवीकाणामपि मनीषिणां दुरूहाः सन्ति। अधुनातनाश्च बह्वायासेन ग्रन्थानधीयमाना अपि न तादृशीं चमत्कृतिं सर्वविषयगां विचक्षणतांवा दधाना दृग्विषयीभवन्ति। केवलं पाणिनीयं वा काणादमुत ज्योतिषमेकं कञ्चिद्विषयमधिगम्यात्मानं बहुमन्यमाना विविधकुतर्कवितण्डावादैर्विवदमाना मात्सर्यदोषोपहतात्मानः स्वां वृत्तिमपि निष्पादयितुमक्षमाः यत्र तत्र परिसरन्तोऽवहेलनामासादयन्तीति नितान्तं विश्रुतम्, विशेषतश्च शाब्दिकाः। कारणञ्चेह पुरा पाणिन्यादयो महर्षयो लोकोपकृत्येकधृतव्रता परदुःखदुःखिता महाकूपारस्येवापारावारस्य शब्दशास्त्रस्य दुरवगाहतामधिगच्छन्तो बहुतिथं कालं दुश्चराम् तपश्चर्य्यांविधायाऽऽमन्दजनसौलभ्याभीप्सया शब्दशास्त्रं सूत्रितंविदधुः। अन्यथा लेखपंभेनापि दुस्तरश्शब्दस्तोमः सम्प्रति मानवानां लेशतोपि लभ्यो न स्यात्। तथाह भगवान् पातञ्जलिः "बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्र प्रतिपदोक्तानां शब्दानां शब्दपारायणम्प्रोवाच नान्तं जगाम" बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालस्तथापि नान्तं जगामेति"। तत्प्रभृत्येव महर्षिप्रणीतान् तत्तद्ग्रन्थान् पठन्तः पाठयन्तश्चापरग्रन्थाभिनवरसं प्रवाहितवन्तो महाजनाः। यत्प्रवाहसम्प्लावितहृदया नित्यमुद्बुद्धबुद्धयो विरचितानेकनिबन्धाः समुन्नमितभारतवर्षाः भारतस्यादर्शा इव बहुशः सूरयः समभूवन्। परंहन्त तेऽपि दुर्भागधेयादस्माकं नामशेषां गतिं गताः। अथ श्रीमद्भट्टोजिदीक्षित इमामेव महर्षिसूत्रितसूत्रसन्ततिं सादरं सेवमानो वेदादिसर्वविषयेषु लब्धावभासो व्याकरणशास्त्रस्य तत्त्वमाविश्चिकीर्षुः सिद्धान्तकौमुदीनामकं ग्रन्थमुद्ग्रथितवान्। दिग्दिगन्तव्यापिनी पौर्वापर्य्येणारभ्यमाना या मानवानविलम्बं सहृदयान् विषयान्तरेऽप्रतिहतज्योतिष्कान् विदधाति एतदवष्टम्यैव "कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रम" इति लोकाख्यायिका सर्वतोव्याप्य तिष्ठति। यस्याश्च निश्शेषपानेनैव श्रीमन्नागेशभट्टो वाङ्मयार्णवे स्फुरच्चक्षुः शब्देन्दुशेखरादि ग्रन्थमाकलय्य शाब्दिकसिद्धान्तान् विशदीचकार। अथो ग्रन्थस्य चारुतया चमत्कारितया च वैयाकरणा नागेशनिर्मितनिबन्धमप्यध्ययनाध्यापनयोर्व्यवाहरन्, तावत्कालं पठनपाठनयोर्व्यवस्था पुरातनी छटाम्बिभ्रती भारतीयसंस्कृतविदुषामुदयसमुदयं यथावत्प्रासारयत्। परं हि लोकस्थितिहेतुकं सिद्धान्तग्रन्थं विस्मृत्य यतः प्रभृति केवलं परिष्कृत्यादिप्रखरविचारगहनगहनं शास्त्रानुशीलनम्भारतेऽस्मिन् प्रववृते तत्क्षणादेव न कोऽपि वेदवेदाङ्गपारं पश्यति, न कोऽपि कस्याचद्विषयस्य मर्म स्पृशति, न कोऽपि ग्रन्थस्यान्तः

ऽविशति। हन्त भोः! कश्चिदेकंविषयमालम्ब्य खलं जीवनं यापयन्तो भारतसंस्कृतरसिकाः ऐहिकं न वामुत्रिकम्प्रयोजनं समाराधयन्ति साम्प्रतम्। प्रत्युत निगमागमविहितकर्मोल्लङ्घनप्रयुक्तं दोषमेवाश्रयन्ते। तथा च श्रुतिः "ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति। एवं, द्वे विद्ये वेदितव्ये परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदःसामवेदोऽथर्ववेदशिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति, मुण्डकश्रुतिरपि तदेवानुशास्ति।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ज्योतिषामयनं चक्षुःनिरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणन्तु वेदस्य मुखव्याकरणं स्मृतम्। तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते इति शिक्षोपदेशश्च। द्वे च विद्ये वेदितव्ये परा चैवापरा द्विज, ऋग्यजुःसामाथर्वाख्यो वेदा अङ्गानि षड्द्विजाः। शिक्षाकल्पो व्याकरणं निरुक्तं ज्योतिषन्तथा छन्दश्शास्त्रं च मीमांसा धर्म्मशास्त्रम्पुराणकम्। न्यायो वैद्यकगान्धर्वधनुर्वेदार्थशास्त्रकम्। अपरेयं पराविद्या तया ब्रह्म निगद्यते। इत्याग्नेयवाक्यञ्च तदेवानुवदति। यतः साङ्गं सरहस्यं वेदमधीत्यैव लौकिकं पारलौकिकंवा सुखं साधयितुं शक्नुवन्ति पुमांसो नान्यथा कथमपि। अहमेव पञ्चदशसमा व्याकरणशास्त्रमेवाधीयानो नैरन्तर्य्येण तदीयम्बिविधविवादमभ्यस्यंश्च तात्त्विकीमुपयोगितामनभ्युपेत्य न कस्मैचित्कार्य्यायालं समभूवम्। प्रत्यासन्नेश्च नानेन किमप्यनुष्ठितमिति सततमुपहस्ये च। किम्बहुना यावदेतादृक् शास्त्रानुशीलनं लोके प्रचरति न तावत् पटीयसीमपौर्विकीं योग्यतामभ्युपेतुं न वा तादृशं समुन्नतमुन्नतिशिखरमारोढुं महिष्यन्ति भारतीयाः संस्कृतच्छात्राः प्रत्युतानुदिनमधःपतिष्यन्त्येव। मन्ये कराल [illegible] कलिप्रसरे कुक्षिम्भरित्वमेव स्वीयं परमं कर्त्तव्यं निश्चिन्वानानामालस्यपर्य्यङ्के निर्भरमधिशयानानां प्रबोधकः समयो नापतिष्यत् चेत्तदा नितान्तं दुरवस्था समभविष्यद् भारतीयविद्यायाः।

पुरा भरद्वाजादयः कुलपतयः संस्कृतविद्वांस एवान्नपानादिवितरणपुरस्सरमन्तेवासिनो विविधविषयेषु विदग्धान् विदधत आसन्। येन तदीयाश्छात्राः बहुविधानि पुस्तकानि विनिर्माय लोके धर्म्मं स्थितिञ्चक्रुः। महात्मनो द्रोणस्य सूत्तं लोके कस्य न विदितमस्ति, यत्स वेदवेदाङ्गा अस्त्रशस्त्रादिविद्या अपि पाण्डवान् कौरवांश्च एवोपादिशदिति। यदुपदेशनैपुण्यं प्रवृत्ते महासङ्गरे (भारते) प्रेक्षावतां मनसि चित्रमादधानमनन्यलभ्यत्वमभ्यगात्। भगवतो वाल्मीकेरपि सैव गतिः यदुपदिष्टा असंख्याताः पटवो वटवो योगजनितामनेकधां सिद्धिमासाद्य लोकानुदधरन्। सामर्थ्यंजपि विरहय्य कौमार एव वयसि सर्वासु विद्यासु येन सुशिक्षितौ कुशलवौ गायन्तौ वनेसदां तपस्विनां हृदये कौतुकञ्चक्रतुः। तथा च पाद्मे-

उपनीय मुनिर्वेदं साङ्गमध्यापयत्सुतौ सरहस्यं धनुर्वेदं रामायणमपाठयत्। वाल्मीकिना च धनुषी दत्ते स्वर्णविभूषिते अभेद्ये सगुणे श्रेष्ठे वैरिवृन्दविदारणे। इषुधी बाणसम्पूर्णे अक्षय्यौ करवालकौ चर्मण्यभेद्ये सुदृढे ददौ सीताकुमारयोः। धनुर्धरौ धनुर्वेदपारगावाश्रमे मुदा। चरन्तौ तत्र राजाते अश्विनाविव शोभनौ॥

अपरेऽपि पुरातनाः संस्कृतविद्वांस एवमेव सर्वविद्याधिकारिण आसन्निति पुराणेतिहासादिभिरवगम्यते। ते यदि कञ्चिदेकं [illegible] काञ्चिदेकाम्परिभाषांवाश्रित्य निखिलं [illegible] नयेयुस्तदा कथमपि न सम्भाव्यते सर्वत्र तत्कौशल्यन्नेष्यिति। सम्प्रति दर्शनवैशारद्य-

माम्नायमीमांसोपनिषद्रसास्वादनञ्च द्वीपान्तरमुपगतानि। इहत्यैरेव पुस्तिकाकदम्बकैः पाश्चात्यसंस्कृतविद्वांसो व्योमयानादिप्रचारेण बहुधा नैजं देशं समुन्नयन्तो निखिलान्देशानतिक्रम्य वर्त्तन्ते। एते पुनरार्य्यावर्त्तीया संस्कृतानुरागिणः विशेषतश्च ब्राह्मणाः सिद्धान्तग्रन्थाभ्यासमन्तरेण नितान्तमनुदिनं सीदन्तोऽपि न तत्समुद्धरणे समवधानाः भवन्तीत्यतीव निर्वेदः। अतोऽभ्यर्थनेयं विदुषाम्पुरतो यच्छ्रीस्वामिशङ्कराचार्यश्रीस्वामिरामानुजाचार्या दिप्रतिमगुणवत्तनयविरहिताङ्गीं शोशुच्यमानां रात्रिन्दिवमश्रुधारां विमुच्य भवतोऽपेक्षमाणां भारतजननीं मोघविषादविरहय्यैहिकामुत्रिकश्रेयस्करेषु वेदवेदाङ्गदर्शनादिषु महर्षिप्रणीतेषु मुख्यग्रन्थेषु यथा सर्व एवाभ्यासनिरता भवेयुरिति सर्वात्मना प्रयत्नमातन्वना उपसान्त्वयितुमर्हन्ति श्रीमन्तः।

पाण्डेयोपाह्व रामानन्दशर्मा व्याकरणतीर्थः।

---

# सुदृढो ग्रन्थिबन्धः

—:०:—

"अल्लाहो अकबर" इति सम्बोधनशब्दैः शब्दायमानं समजनि जन्यचत्वरम्। एकत्र लक्षत्रयं यवनसैनिका सन्नद्धाः। अपरत्र सहस्रत्रयं हिन्दुस्थानीयसैनिकास्तान्प्रतिरोद्धुं कृतप्रयत्नाः। तरलतरङ्गतरङ्गिनायास्तरङ्गिण्या अन्तरङ्गे चलदलद्रुम इव हिन्दुस्थानीयवीरविसरा, दिवानिशं युद्ध्यमाना न पराङ्मुखः समभूत्। परमिदानीमनुमीयते वीराणामस्थेमा। तदनन्तरमेव भारतविजयवैजयन्त्यपि निपत्य विश्वम्भरायां विलोठिष्यति। पुनरस्यैव दिवसस्यास्ताचलं प्रतिष्ठासुनामुनाऽम्बरमणिना सम भारतस्य गौरवसूर्योऽपि चिरायात्मानं तिरोधास्यति।

"हर हर महादेव" पाठकाः। कोऽयं वीरवरो युवा यः किल चञ्चच्चन्द्रहासभासमानः पञ्चत्रिंशता सहचरैः सहितः तरलतुरङ्गमधिष्ठितो भारताधिदेवताकरकलितदीप्यमानदम्भोलिरिव परिपन्थिपृतनोपरि परिपतित इति भवद्भिर्बोधयितुं शक्येत? अपि च कस्य प्रतापेनेदं यवनबलं प्रचण्डपवनपातकम्पितं विशङ्कटं विपिनमिव विचलितम्? कस्य वा हरहरमहादेव इति विरावे लक्षत्रयस्य यवनसैन्यानां "अल्लाहो अकबर" इतिध्वनिर्व्यलीयत? कस्य च चलच्चन्द्रहास विकाशी. शार्दूलसमाक्रान्तमेषकदम्बकमिव एक पदे सपत्नसैन्यं पलायितुं प्रचक्रमे? अन्यच्च तदात्वे आर्यावर्तसहस्रकिरणः रक्तसहस्रकिरणामर्शनेन शोणितसिक्तशितनिस्त्रिंशं सम्बद्ध्यांशीभिर्विश्रमितुमस्ताचलमुदचलत्? स एवायं ललितनामा ललितसिंहः भारतपुरावृत्तस्य भुवनक्षत्रं काञ्चीनगराधिपतेः सेनापतिश्च!

पाठकाः अस्त्येतद्विदितं भवतां यदद्य किमर्थं काञ्चीनगरं महोत्सवमयं संलक्ष्यते प्रासादेषु विजयवैजयन्त्यः समीरणैरानन्दसन्दोहैर्वा किमेतावच्चञ्चलाः विलोक्यन्ते? प्रतिप्रतीहारं कदलीद्रुमाः प्रतिमन्दिरं शङ्खनिश्वनाः प्रतिराजपथं प्रतिपल्लि च दीपमालिका विराजन्ते। नगराधीशितुः प्रसादभित्तयो मनुष्याकुलाश्चलन्त्य इव शब्दायन्ते। नगरवासिनः कस्यागमनं प्रतीक्षन्ते। सहसा मनुष्यकण्ठानां जयजयध्वनी रमणीनां रमणीयमाङ्गलिकगीतध्वनिश्च खं संगत्य द्यावापृथिव्यौ समपूरयताम्, प्राप च निर्निमेषं नक्षत्र लोकम्। तारगणः पवनकम्पितो दीपमालेव वेपमानो बभूव।

पाठकाः वायुवेगवाजिनमारूढं पुरप्रतीहारं प्रविशन्तञ्चैनं वीरवरं भवन्तः परिचिन्वन्ति

स एवायं परिचितपूर्वः काञ्चीपुरपतेः सेनापतिर्ललितसिंहः परान् परलोकं सम्प्रेष्य रिपुरुधिराप्लुतंनिस्त्रिंशं काञ्चीपुरपतेः पादयोरुपनिनीषुः सम्प्राप्तः। अनेनैव निदानेनात्रैतावानुत्सवो दृश्यते।

किन्तूच्चैरुद्घुष्यमाणायामेतावत्यां जयध्वनौ सेनापतेरुन्मनीभावो न तिरोधत्ते। नगररमणीनां करकमलैर्मोमुच्यमानां गवाक्षजालैर्निष्पतन्तीं पुष्पवृष्टिं सेनापतेरक्षिणी न लक्ष्यीकुरुतः। किं सरोवरं प्रतिष्ठासुः पिपासाकुलः पथिको विपिनपथेन प्रसर्पन् निजोपरिपतन्ति नीरसपत्राणि कदाचिदधिगच्छति? तथैव ललितसिंहोऽपि पतन्तीं पुष्पवृष्टिं नीरसां क्षुद्राञ्च मेने। यदासावन्तःपुरप्रसादं प्रत्यपद्यत तदा क्षणं वाहनवल्गामाचकर्ष। सैन्धवस् तस्थौ ललितसिंहः सोत्सुकं राजप्रसादगवाक्षं क्षणं निरीक्षाञ्चक्रे। मुहुर्तमात्रेण कौतुकाकुले मन्दाक्षमन्दीकृते इव चकितचकिते चटुललोचने तन्मुखोपरि सुधावृष्टिं चक्रतुः। पुनः कोमलकमनीयकरकमलकलिता कुसुममालिका तत्समक्षं क्षितावपतत्। क्षणादवतीर्य्य वाहनात्तां मालिकां सविनयं सानुरागं सप्रणयमसौ स्वशिरोभूषणे स्थापयामास, कृतार्थदृष्ट्या गवाक्षञ्च ददर्श। तदा वातायनं नियन्त्रितमासीत् दीपा निर्वाणश्च।

२

ये कदाचिदपि सहस्रसहस्रसंख्यातिगामिनां शत्रूणां निकटे पराभववैक्लव्यं नानुभवन्ति तेऽपि मृगलोचनाञ्चलचललोचनाभ्यां पराजीयन्ते। सेनापतिश्चिराय निजागम्यहृदयदुर्गे धैर्यं संजुगोप। किन्तु ह्यः सायं कज्जलोज्ज्वलिते लज्जायन्त्रिते सपदि परावर्तनशीलशालिनी चञ्चललोचने तद्धृदयदुर्गभित्तिमपातयताम्। निमेषमात्रेण चिरसञ्चितं धैर्यं धूलिसादभवत्। परन्तु सेनापते! त्वया लज्जालुना भवितव्यम्। किं ते समुचितमेतत्करणीयम्! यत्त्वं दस्युरिवान्धकारे राजनिष्कुटकुड्यमुल्लङ्घयसि? भवान् किल विजयी मनुजः।

ये किलोपन्यासानुपन्यस्यन्ति, यैराख्यायिकाश्चख्यायन्ते, न तेषां कुत्रापि कस्यचित्कश्चित्प्रतिरोधः। प्रतीहारिणोऽपि व्याहरन्तो न तान्प्रत्याहरेयुः। असूर्यम्पश्या अपि तान्पश्यन्ति। अत आगत्यास्माभी रमणीयराजान्तःपुरं प्रवेष्टव्यम्। यत्र च वायुर्वीजयति वाटिकापथिकान्। आगच्छत पाठकाः! पाठिकाश्च! युष्मानाज्ञापयामि भवद्भिरपि निःसंशयमव्याहतगतिभिरहमनुसरणीयः, विलोचने विस्फार्य विलोकयत वाचकवराः! वारमेकम् केयं किल केसरस्याधस्तलास्तृतास्तरणा समासीना सन्ध्यातारानुकारिणी? किमेनां परिचिनुथ? विलोकितमेतादृशं क्वापि सौन्दर्यम्? अवर्णनीयमलौकिकञ्चास्याः लावण्यम्। किं कदापि कापि गाथा केनापि मन्त्रबलेनैवं लावण्यजीवनयौवनैः पूर्णा प्रतिपद्येत यया अस्याः मुखवर्णनं सम्भवेत्? पाठकाः, अस्ति चेद्भवतां द्वितीया पाणिगृहीती तदा तदाननं स्मर्य्यताम् रूपवत्यः पाठिकाः या सौभाग्यवती भवतीमपि, दृष्ट्री समावर्ज्यनिजसौन्दर्यवर्णने सख्या समं मुखरीकरोति तथा श्रीमत्योऽपि श्रीमतीं तां निश्चित्य विच्छायमिव तस्याः सौन्दर्यं कथयन्ति। तन्मुखं स्मर्यताम्। तद्वृक्षाधोऽधिष्ठितया राजकुमार्या साकं तस्याः द्वितीयभार्यायाः सौभाग्यवत्याश्च सादृश्यं किमपि घटयिष्यति। किं परिचिताद्य नवा? इयमेव राजकुमारी चन्द्रकला।

राजकन्या निजाञ्चले कुसुमानि सञ्चित्यानम्रमुखी मालां ग्रन्थाति, मध्ये मध्ये क्रमेण कोमलांगुलीः सुकुमारकार्ये शिथिलयति। निरानन्दा दृष्टिः कस्मिंश्चिद्दूरदेशीयचिन्ताराज्ये परिभ्रमति। राजकन्या किं चिन्तयति?

पाठकाः! परमेतदनुयोगप्रतिवाक्यविश्राणने मुखं न मुखरयामि। अद्य तन्निस्तब्धसन्ध्यासमये राजकन्याकाया निस्तरङ्गान्तरङ्गे पूजनीयस्यैकपुरुषस्य नीराजनं भवति। अतो न वयं तत्रापवित्रकौतूहलं वितन्वानाः प्रवेष्टुं पारयामः। विलोकयत, कुमारिकायाः दीर्घनिश्वासः पूजायाः सुगन्धितधूपधूम इव सन्ध्यासमीरणे विलीनोऽभवत्। युगललोचनाम्बुबिन्दुद्वयं कुसुमकोरकद्वयमिव तदज्ञातदेवतापादपद्मोद्देशेन निर्गलितम्। अस्मिन्नेवावसरे पृष्ठतः कश्चित्पुरुषो गम्भीरेण सम्भ्रमवशात्स्खलता रुद्धेन च स्वरेणैनां कुमारीमाकारयामास। राजकुमारी अतर्कितोपस्थितेन भयेनोच्चैराचक्रन्द। परितः प्रहरिणः समुपेत्यापराधिनं निगडितवन्तः। सा दीर्घं निश्वस्यावालोकयत्सेनापतिं वन्दीभूतम्। एतादृशेऽपराधे प्राणदण्ड एव न्याय्यः, परं पूर्वोपार्जितमहापकारं विचिन्त्य कृतज्ञो नृपतिः केवलं सेनापतिं निर्वासितवान्। सेनापतिरात्मगतमित्थं चिन्तितवान्। देवि! त्वल्लोचने एव त्वां प्रतारयतस्तदा मन्ये जगज्जीर्णारण्यमिव। नास्ति क्वापि सत्यासत्यविवेकः। इतः परमहं मनुष्यमात्रस्य वैरी सम्वृत्तः। ललितसिंहो महता दस्युदलस्याधिपत्येऽभिषिक्तो विपिनमध्युवास।

पाठकाः! मादृशा भवादृशाश्च पुरुषाः समुपस्थित एवं विधे समये किं कर्तुं प्रभवेयुः? नियतमेव निर्वासितदेशमधितिष्ठद्भिस्तैर्द्वितीयं दास्यमेवावलम्ब्येत न चेन्नूतनं पन्थमेव प्रकाश्येत? किमपि कष्टं भवितात्र नास्ति सन्देहः, स च केवलं दुर्भरोदरपूरणस्यैव। परं सेनापतिसमाः पुरुषा ये चोपन्याससुलभा दुर्लभाश्च मेदनीतले न कैङ्कर्यं नापि पन्थप्रकाशनं स्वीकुर्वन्ति। सुदशायां तिष्ठन्तस्ते निश्वासेनैवससागराया वसुन्धराया महोपकारं सम्पादयन्ति। परं मनोरथे कणशोऽपि वैफल्यं प्राप्ते, ते क्रोधोद्धताः कथयन्ति 'अरे भूमिभारभूताः पापाः' पिशाचासमाजाः। भवतां वक्षःस्थलानि विदार्य्य वाञ्छावैफल्यप्रतीकारं साधयामः आभाष्यैतद्दस्युवृत्तिमवलम्बन्ते। ईदृशो हि व्यवहारः प्रायो यूरोपीयकाव्ये समुपलभ्यते। आसीदेषा प्रथा पूर्वं क्षत्रियेषु।

दस्युदलदुरुहोपद्रवैरुपद्रुतास्तद्देशवसिनः समभवन्। परमसामान्या एवैते मोषका निस्सहायानां सहायकाः दुर्विधानां मित्राणि दुर्बलानामाश्रयाः समभूवन्। आसंश्च केवलं महाकुलसम्भूतानां धनिनां महापुरुषाणां राजकर्मचारिणां कालान्तकरूपाः।

## (३)

अस्ति विस्तीर्णमरण्यम्। पूर्णतया नास्तंगतो द्युमणिः। किन्तु वनच्छायायामकालरजनिः प्रादुरास। एकोऽल्पवयस्को युवा संस्तुते पथि प्रयाति। कटिकलितकरवालभारो दुर्भर इव प्रतीयते। विपिने सहसोपनतेनाधिकाधिकनिनादेन भीतान्तरङ्गः कुरङ्ग इव स कुमारः चकित इव प्रतिक्षणं भवति। तथापि सत्वरमेवागामिन्या रजन्यामपि विपिने स्वाध्यवसायं न परिहरति।

दस्यवः सेनापतिमसूचयन्। समधिगतं शरव्यमेकम्। आगच्छति कश्चिद्राजकुमारइव। शिरसि मुकुटं कटौ करवालश्च तस्यासाते। एवञ्चेन्ममैवायं लक्ष्यो भवतु। भवद्भिः पदात्पदमपि न गन्तव्यम्। गच्छन्नेवाय पथिकः स-

हसा शुष्कपत्राणां खर र शब्दं शुश्राव । उत्कण्ठितेन तेन दिक्षु चक्षुर्विक्षिपता निरीक्षाञ्चक्रे । अतर्कितागतेन वक्षस्स्थले विद्धो विशिखेन छिन्नपादप इव स पान्थः पृथिव्यां पपात । सेनापतिस्तत्समीपमुपेत्य सकुचितजानुरात्मानमाकुञ्च्य पतिताहतपथिकवदनं विलोकयाञ्चक्रे । करौ सेनापतिमवलम्ब्य पतितेन पथिकेन केवलं श्रुतता मन्दस्वरेणाभिदधे ललितसिंहः ।

क्षणेनदस्युसेनापतेर्हृदयं शतधा भिन्नमिवाभवत् । स प्रत्याह, राजकुमारि ! समागत्यापरेतस्करा अपश्यन् । लक्ष्यलक्ष्यभेदिनावुभावपि गाढं परिष्वजन्तौ रसायां सुखं सुषुपतुः । अयमेवेतयोः राजकुमारीललितसिंहयो सुदृढो ग्रन्थिबन्धः । एकदा सायं राजकन्या निजनिस्कुटेसमासीना मोहदजानन्तीललितसिंहराजाज्ञया निर्वासितमकारयत् पुनरेकदा प्रदोषेगहनेऽज्ञानात्सेनापतिरपि राजकन्योरसि विशिखं विचिक्षेप । यदि लोकान्तरे क्वाप्येतयोः सङ्गः सङ्घटेत् तदा द्वाभ्यां द्वयोरेव दोषोऽपमाज्यंतेति ।*

रामदहिनशर्म्मा काव्यतीर्थः

---

# भारतस्य रोगस्तच्चिकित्सा च ।

किमेतच्चिन्तयतां नो न चित्रीयते चित्तवृत्तिः ? स्वस्वविषयग्रहणग्रहिलोऽपि न निष्परिग्रहो भवति करणग्रामः ? विधुरो वा न मज्जत्यन्धेतमसि सीदन्नन्तरात्मा ? यत्किल साम्प्रतमस्मिन् विद्युन्मये समये (Age of electricity) अस्मिन् विंशे शतके—यत्किल सर्वेऽपि वैदेशिका उपास्य भगवतीं सरस्वतीमधिगत्य जगत्यधीश्वरतामासाद्य सर्वतोमुखीं नैपुणीं परित्यज्य बन्धुषु तरतमभावं परिगृह्य सर्वेष्वेव विधेयपदेषु विष्वद्रीचीं निखिलतन्त्रस्वतन्त्रताम् अपसार्य मात्सर्यं दूरीकृत्य दुरुदकवष्यमालस्यं, किं बहुना, गलहस्तयित्वा सर्वानेव सामाजिकान् दोषोद्यान् व्यापारान् विजयन्तेतमां प्रकृतिदेव्याः स्वैरविहारपरिसरे विधातुः सर्गे । यदाच ते न केवलं ब्रह्माण्डभाण्डोदरसदनसदां नक्षत्रमालम्बन्ते, न केवलं कूपमण्डूकानां नदीष्णतामदमवचूर्णयन्ति, न केवलं वीरम्मन्यानां हृत्कम्पमुपजनयन्ते, न केवलं प्रबन्धॄणां प्रबन्धगौरवगर्वमवगूरयन्ते, न केवलं वन्यान् वशीकुर्वन्ति, न केवलमसंख्यातान् विटपान् विविधानि कुसुमानि उच्चावचान् जन्तून् अणून् कीटांश्च गणयन्ति न केवलं सर्वयानातिगेन धूमयानेन मनुजान् क्षणं स्थानात् स्थानान्तरं प्रापयन्ति, न केवलं दुर्दान्तान् दमयन्ति, न केवलं कल्लोलजालोद्धूताम्भोदम्भं विहितसंरम्भं पारावारं गोष्पदीकुर्वन्ति, न केवलं भारतीयानामस्माकं प्राचीनानि देशगौरवकराणि वस्तून्युद्धृत्य महताऽवधानेन गोपायन्ति, न केवलं प्रलयप्रालेयवर्षिणि ध्रुवमूर्धनि विस्रब्धं धावन्ति, न केवलं प्रत्यक्षेण ग्रहगतिं विदन्ति, न केवलं मृतकाञ्जीवयन्ति, न केवलमन्धानध्यापयन्ति, न केवलं मूकान् वावदूकान् कुर्वन्ति, न केवलं पङ्गून् गिरिंलङ्घयन्ते, न केवलं जडान् चेतयन्ति, न केवलं मनोबुद्ध्यादि नीरूपपदार्थजातमपि परिमिमते, न केवलं पुष्पकस्मयानिशयहारिणा विमानवर्गेणाप्रतिबद्धप्रसरं सुरवर्त्मनि विहरन्ति, न केवलं पृथक्पृथगवस्थाना दवीयांसोऽपि भूत्वा सम्मुखीना इव परस्परं वाग्भिर्वाचौ मिश्रयन्ति, न केवलम-

---

*प्रसिद्धकवेः रवीन्द्रनाथठक्कुरलिखितायाः सरस्वत्यां प्रकाशितायाः आख्यायिकायाः अविकलोऽनुवादः ।

अनुवादकः

स्मान् शिक्षयन्ति, न केवलं पञ्चभूतेश्वरतां भजन्ते, अपितु दुर्ग्रहग्राहग्रस्तस्यापि भारतस्य गौरवावहे निरतिशयसमाधिममधिगम्ये विचारपारद्रश्वनि दर्शनशास्त्रवैदुष्येऽपि शनैः शनैः पदं निदधतः निजधिया विभाव्य काश्चनचमत्कृतीः सम्मोहयन्ति हतविधिलसितानलासान्———भारतीया वयम्——येषां भारतं पुरासीत् रङ्गस्थलीव भगवत्याः सरस्वत्याः, प्रमदोद्यानमिवेन्दिरायाः, दुर्ग इव दुर्वारवीर्यस्य शैलइव साहसशिलानाम्, मनुरिव मानवानाम् उदरमिवौदार्यस्य, दक्षिणहस्त इव दाक्षिण्यस्य, शय्येव सुखस्य, प्रसवभूमि रिवागाधमेधपण्डितानाम्, प्रदर्शनीव दर्शनशास्त्राणाम्, इभ्य इव सभ्यताधनस्य, सरोवर इव सौन्दर्यसरसीरुहाणाम्, पुण्यभूमिरिव पातिव्रत्यस्य, आकर इव कविमणीनाम्, नेपथ्यमिव वाङ्माधुर्यरूपकस्य, आत्मानमिव वैरिगजानाम्, गोष्ठमिव वृषस्य, धरणिरिव धृतेः, क्षेत्रमिव क्षमायाः, देवतेव दमस्य, प्रलयकाल इव परार्थाभिलापस्य, पतिरिव पवित्रतादेव्याः, मन्दुरामन्दिरमिवेन्द्रियवाजिनाम्, धामेव धियाम्, विश्रामस्थानमिव सर्वासां विद्यानाम्, सागर इव सत्यामृतरसस्य, मोचनमहौषधिरिव द्वेषपिशाचस्य, विराम इव वैरस्य, प्रभातमिवालस्यान्धकारस्य, निवास इव वात्सल्यस्य, अभिजन इव स्नेहस्य, भवनमिव भक्तेः निधानमिव श्रद्धायाः तल्पमिव शिल्पकलानाम्, किं बहुना, योनिरेव गुणानामयोनिरेव दोषाणाम्। यत्रासीदेतत् साधारणं वा कोवाक्यम्:—अखानि सिन्धुः समपूरि गङ्गया कुले किलास्य प्रसभं स भन्त्स्यते। विलङ्घ्यते चास्य यशःशतैरहो सतां महत् सम्मुखधावि पौरुषम्।——साम्प्रतम् अविद्यायाः सूचिभेद्ये तमसि निलीयामहे। यं कमपि विषयमवलम्ब्य परस्परं विवदामहे। द्वेषपिशाचिकया कवलीक्रियामहे। वैरवेतालेन भृशमाविश्यामहे। शरीरयात्रामपि निर्वोढुमक्षमा अन्नेन विना म्रियामहे च।

नूनमिदानीमस्माकं स्वबन्धुशिरश्छेदेन पराक्रमः, स्वजातिरुधिरपानेन पिपासा परस्वत्वभक्षणेन बुभुक्षा, परनिन्दोदाहरणेन वाग्वैदग्ध्याम्, गर्भदास्येन कायसम्पत्, विरोधानुध्यायेन मनः, जगद्दोषनिभालनया चक्षुषी, दुर्गुणाकर्णनया कर्णौ, वेश्याधरचुम्बनेनौष्ठौ, मदिरारसास्वादनेन रसना, दुर्बलपीड़नया वलम्, अभियोगस्यापातरम्येण जयेन धनम्, वञ्चनचुञ्चुतया चातुरी, सभासुविवादात् प्रतिपक्षजयेन पापकर्मसु नैपुण्यसम्पादनया वा विद्या, पूर्वजेष्वश्रद्धया स्वाच्छन्द्यम्, गुरुताडनेन प्रभुशक्तिः, परभार्याभिमर्षणोत्साहशक्तिः, कूटकर्मणा मन्त्रशक्तिः, अपत्यविक्रयेण व्यापारः बालवृद्धविवाहेन मङ्गलम्, स्त्रीशिक्षाविरोधेन कुलाचारः दम्पत्यकलहेन समराभिषङ्गः, पथिकाश्रमे (Hotel) भोजनेन मानससाहसम् (Moral courage) वर्णसाङ्कर्येण देशसमुन्नतिश्च चरितार्थतामापद्यन्ते।

अहो नु खलुभोः कथं वयं पञ्चेन्द्रियसमायुक्ता नरा अपि नाम भूत्वा अस्मिन्नतलस्पर्शे विपत्सागरे निःसहायं प्लवामहे पारञ्चास्य न पश्यामइति जायते सर्वस्यपि नैसर्गिकी विचारणा।

परमहो व्याख्यानानवरतकोलाहलैर्मुखरी क्रियमाणेऽपि दिङ्मण्डले, प्रतिष्ठितेषु परःशतेषु सभासमाजेषु विद्यमानेषु बहुषूपचारकेषु, धरत्सुधमनीं भिषग्वरेषु योजयत्सुच नेतृषु नैकभेदान् उपायान्, कथमस्यचिररोगिणो भारतस्य दशादिनेदिने शोचनीया, अङ्गानि शिथिलानि, सन्धिबन्धाः कण्डिताः, चक्षुषोस्तिमिरत्वम् शरीरे भेकाभता च जायते।

सम्भावयामि विषयमिममधिकृत्य केनापि महाभागेन प्रवर्तिताऽपि स्यादात्मनः प्रज्ञा निर्णीतश्च स्यात् कश्चित् फलेग्रहिरुपायः प्रतीकारस्य। परं विकारं परमार्थतोऽज्ञात्वाऽनारम्भः खलु प्रतीकारस्येति न्यायमनुरुन्धानो यावदहं विमृशामि तावदनुमिनोमि मतानैक्यमेवास्य मूर्धाभिषिक्तं कारणम्।

बहोः कालात् क्षुण्णमप्यध्यात्मविषयं पुनः पुनः क्षुन्दानेऽस्मिन् देशे वेदान्तस्यासीत् फलवती विचारणा। तत्र केचित् अद्वैतम् अपरे विशिष्टाद्वैतम्, इतरे शुद्धाद्वैतम्, अन्ये द्वैताद्वैतम्, एवमादि द्विशब्दघटितशरीरं मतं यथाभिरुचि प्रचारयामासुः। स्वाभाविकश्चायं मतभेदः परोक्षे ब्रह्मणि स्वस्वशेमुषीविभवेन विचारयितुं प्रवृत्तानां पण्डितानाम्। परमेते मतावलम्बिनो मत्ता दिने दिने धार्मिकं मतभेदं कायिकमतभेदं वाचिकमतभेदं मानसिकमतभेदञ्च मन्वाना न विरमन्ति परस्परं केवलात् शुष्ककलहादेव अपितु अन्यमतावलम्बिनं शत्रूयन्ति यथासाध्यं तस्यापकाराय च यतन्ते। अनयैव च भिदया समुत्पद्यमानं भेदबीजं प्रभवति सर्वपथीनेष्वेव कर्मसु भारतीयानां वैमत्यसम्पादनाय भारतस्य च समस्ताधिकायै विपदे।

का नाम क्षेत्रियस्यैवास्य रोगस्य चिकित्सेति विचार्यमाणे समुपतिष्ठते भगवान् वेदोऽस्मानुपदेष्टुम् "संगच्छध्वं संवदध्वं संवो मनांसि जानताम्" अयं पवित्रो वेदमन्त्रस्त्रिरस्माकं समभावमावेदयति।

सम्भाव्यतां काचन गायकमण्डली यस्यां रङ्गी सारङ्गं वादयेत्, मृदङ्गी देवमाश्रयेत्, जीरिका भैरवाराधने कृतादरा भवेत्, गायकाचार्यश्च तत्सर्वमप्यनवधाय पञ्चमस्वरेणोच्चैरारटेत् तदा किं सा गायकमण्डली केनापि स्तोष्यते? नहि कदापि नहि। किन्तु सा मूढमण्डली वा क्षीबमण्डली वा कथयिष्यते। नूनमेषैव दशा भारतीयानामपि समवायस्य। केचिदितो गच्छन्ति अपरे च ततः। अन्येपुनः सत्वरमेव सरलेन पथा साक्षात्स्वर्गमेवारोढुमिच्छन्ति।

एवं कार्यविमुखता च भारतस्य दुश्चिकित्स्यो व्याधिः। सन्ति चात्र बहव एतादृशा ये खलु अन्यायेनोपार्जितस्य धनस्य साहाय्येन कृत्वा निजोदरपूर्तिमुपास्य चालस्यदेवतां बलादिव गमयन्ति दिवसान्। न सहन्ते च भगवतो भास्करस्य चिरस्थितिम्। परं विचार्यतां हन्त, यदेते कृषीवला धूलिपादाः कृत्वा बहुविधं शरीरायासमुत्पाद्य शस्यराशीन् समर्पयन्ति लघवे फलाय एतेभ्यः पुरुषाधमेभ्यः परमार्थतश्चाज्ञेभ्यः। ततः किमेतान् उपधानकीटान् सुखेन भुञ्जानांस्तांस्तान् भोगान् कदाचित्क्षमिष्यते न्यायशीला प्रकृतिदेवी! कदाचिदपि न। सा खलु एतान् पशून् शृङ्गग्राहिकया गृहीत्वा तस्मिन् दुष्प्रतिकार्ये महागर्त्ते निपातयिष्यति, यत्रैते अजकनाशं नंक्ष्यन्ति अरुन्धाञ्चैतेषां प्रवृत्तिर्न श्रोष्यते।

कार्यविमुखो हि जनो न केवलं वैरायते स्वाभ्युदयस्य किन्तु परानपि अध्यापयति स्वविद्याम् विकलयति तान् पदे पदे।

साध्विदमुच्यते "अलसं हि मनो भवति व्यापारालयो वेतालस्य" (An idle mind is the devils work shop)

खलूक्त्वा खलु विस्तरेण, मतभेदः कार्यविमुखता च दूरतः परिहर्त्तव्यौ भारतीयैरिति भवतां मनसि लगयित्वा विरमामीति।

केशवप्रसाद मिश्रः।

# विद्यालाभः।

—:×:—

विद्यालाभेन पुरुषा न केवलमात्मसन्तोषप्राप्तिरित्येव फलमासादयन्ति, अपि तु ऐहिकामुष्मिकं च सुखमनेनैव लभ्यते। विदितमेतत्सर्वं विदुषां। अनेनैव विद्यालाभेन प्राचीनकाले भारतवर्षे ब्राह्मणाः सर्वेषां गुरवो बभूवुः। विद्ययैव ते राज्ञोऽप्यधिकं संमानमापुः। राजा तावद्देशस्य स्वाम्यासीत्, प्रजानां प्राणान्धनानि च रक्षयाम्बभूव, किन्तु ब्राह्मणस्तु सर्वप्रकारेण देशोपकारक आसीत्। राजा केवलं स्वदेश एव पूजित आसीत् विद्वान् ब्राह्मणस्तु सर्वत्र एव लब्धप्रतिष्ठो बभूव। विद्वद्भिरेव ब्राह्मणैस्तथाविधानि शास्त्राणि रचितान्यासन् येभ्यःसर्व एवात्मीयं व्यवहारं विज्ञाय सुखेन संसारयात्रामकुर्वन्। ब्राह्मण एव विद्याभ्यासेन संसारगुरवोऽभूवन्। न केवलं शास्त्राणां पठनपाठन एव किन्तु सर्वेष्वेवानुष्ठानेषु व्यवहारेषु च जगतीतले ब्राह्मणा एव आदर्शपुरुषाभवन्। धन्येयं जातिः धन्या च ते महाभागाः येऽनया जात्या शिक्षिता बभूवुः।

पञ्चवर्षदेशीय एव ब्राह्मणपुत्रः विद्याभ्यासार्थं पुरा गुरुगृहे प्रेषितोऽभवत्। गुरुश्च तं तथाविधामुपनिनाय, येनास्य शरीरिकं मानसं च बलं प्रतिदिनं ववृधे। ब्राह्मणो विद्यार्थी क्रमेण विद्याध्ययनं चकार। गुरुश्च यथोपयोगं योग्यतां चानतिक्रम्यास्मै शिक्षां ददौ। साहित्ये, व्याकरणे, दर्शने, ज्योतिर्विद्यायां, धर्मशास्त्रादौ च विद्यार्थी सम्यक् शिक्षां लभते स्म। अधीतविद्यो बालकः ब्रह्मचर्यपूर्वकं गुरुगृहनिवासकार्यं यथासमयं समाप्य गुर्वाज्ञया पित्रोः समीपं निवर्तते स्म, तदनन्तरं यथाशास्त्रानुमोदितं कर्म व्यवहरन् ब्राह्मणो विवाहं कृत्वा गार्हस्थधर्मे प्रविशतिस्म, पञ्चविंशतिवर्षं वय आरभ्य आपञ्चाशद्वर्षं ब्राह्मणो गृहे तिष्ठति स्म। तदनन्तरं धर्मतः पुत्रानुत्पाद्य तेषु गृहभरं च निक्षिप्य पश्चिमे वयसि वानप्रस्थो भूत्वा सभार्यो वनं गच्छति स्म,। तत्रेश्वराराधनं योगसाधनं धर्मविषयिणीं चिन्तां च करोति स्म। तदानीं लब्धविद्यो लब्धसंसारानुभवश्चायमन्येषां विद्यार्थिनां गुरुर्बभूव। अनयैव रीत्या ब्राह्मणानां मध्ये गुरुशिष्यपरम्परा प्रादुर्बभूव। अथ गच्छति काले ब्राह्मणा एव सर्वेषां गुरवोऽभूवन्। विद्याभ्यासं विहाय नासीत्किमप्यपरं कार्यमस्मिन् संसारे ब्राह्मणानाममीषां। विद्यया च सन्तुष्टा इमे न राज्यं, न धनानि, न भूमिं, नाधिकारं, दारान्, भृत्यानन्यसम्पत्तीर्वाऽभिलेषुः। सन्तोष एव तेषां परमं निधानमासीत्। प्राणयात्रार्थमिमे विद्वांसः नागराणां वसतिषु भिक्षाटनं चक्रुः। इमान् न नामाभिमानो जात्वस्पृशत्।

प्राचीने समाजे राजा नाम्नैव राजाभवत्। वस्तुतस्तु सर्व मेवकार्यं ब्राह्मणानां हस्तेष्वर्पितमासीत्। वनौकसोऽपि ब्राह्मणाः यथावसरं राजानं राजकार्ये साहाय्यदानं चक्रुः। कल्पसूत्राणि स्मृतयश्च राज्ञां व्यवहारार्थं ब्राह्मणा एव प्रणिन्युः। गम्भीरविषयेषु ब्राह्मणा एव निर्णेतार आसन्। राजा तु ब्राह्मणाधीन एवासीदिति नात्युक्तिः। ब्राह्मण एव समाजस्य नेता यथार्थाधिकारी च बभूव। राजाप्यमुं पूजयांचकार। लब्धप्रतिष्ठोऽपि ब्राह्मणः राजगुरुरिति नात्मानमभिमानपदेऽन्वयुङ्क्तः। उपस्थितेषु विवादेषु त एव ब्राह्मणा न्यायाधीशस्य कार्यं चक्रुः। परस्परस्य विवादं शमयाम्बभूवुः दण्डयामासुर्वापराधिनम्। राजनीतिग्रन्था अपि ब्राह्मणैरेव निर्मिता अदृश्यन्त। धर्मविषयेष्वपि त एव पथदर्शका

आसन्निति सर्वमेवैतद् विद्याया प्रभावेनैव ।

ब्राह्मणाः विद्यां प्राप्य स्वायत्तामेव तां चक्रुरिति मिथ्यैव प्रवादः । सर्वानेवाब्राह्मणान्ब्राह्मणा यथापात्रं विद्यादानं कृतवन्त इति निर्विवादम् । अधिकारिभेदेनावश्यमेव पृथक् पृथक् पाठमददुः । शूद्रांश्च ब्राह्मणाः त्रयीवर्जं सर्वमपरं शास्त्रं शिक्षितवन्तः । शूद्रास्तु वेदाध्ययनानधिकारिण इति न वेदेषु शिक्षिताभवन् । द्विजातयस्तु वेदाध्ययनं चक्रुरेव । न केवल पुरुषाः स्त्रियोऽपि गुरूणां सकाशद्विद्यां लेभिरे । शूद्राणामिवानधिकारित्त्वात्तासामपि सामान्यतो वेदाध्ययनं नाभवदिति ।

विद्याध्ययनानन्तरं ये केचनाब्राह्मणा अपि यदानुष्ठाने व्यवहारे च ब्राह्मणवत्स्वच्छा पवित्राश्च बभूवुः ते विद्याबलेनैव ब्राह्मणवत्प्रतिष्ठां प्रापुः । ब्राह्मणा अपि तानादरेण जगृहुः । न चासूयांचक्रुः । ब्राह्मणानां तादृशो लोकव्यवहार आसीत् यद्राज्ञां विनापि तेषां नीतिमार्गमक्षुण्णं पूर्णं च बभूव । ब्राह्मणानां धर्मः संसारेऽमरतां लेभे । एते ब्राह्मणा परलोकगुरवो लोकगुरवश्च ।

यदा कदाचित् कोऽप्यभिमानी क्षत्रिय राजा ब्राह्मणान्धर्षयितुमैच्छत् । निःस्पृहाः ब्राह्मणाः केवलंताननुगृह्य शिक्षां ददुः । लब्धसमस्तभूमण्डलराज्या अपि ब्राह्मणा न प्राचीन कालेषु कदापि राजसिंहासनाधिरोहणं चक्रुः । क्षत्रियस्यैतत्कर्मेति मन्यमानाः प्रबला अपि ब्राह्मणा न पृथिवीपतयो बभूवुः । वनमेवैषां मनोरमो निवासभूमिः ।

कालक्रमेण क्षत्रियान् राज्ञोभिभूय मुहम्मदीयाः भारतवर्षे पदार्पणं चक्रुः । तेषां धर्मः ब्राह्मणाना विपरीतमासीदिति ते ब्राह्मणानामादरं न चक्रुः । किन्तु विदुषां ब्राह्मणानां प्रथिता धर्मनीतिरीदृशी यद्विनापि राज्ञा ब्राह्मणधर्मो जनैः पाल्यते स्म । राजानोऽपि भूत्वा मुहम्मदीयाः ब्राह्मणधर्मे हस्तक्षेपमीहमाना अपि प्रायेण विफलयत्ना बभूवुः । राजभिरनादृतोऽपि ब्राह्मणधर्मो न ग्लानिं प्राप । प्रजाभ्यः करमादाय महम्मदीया राजानस्तुष्टा बभूवुः कदाचित्कोऽपि दुष्टःप्रभुः ब्राह्मणधर्मद्वेषी तान् ब्राह्मणान् तेषामनुयायिनश्च पीड़यामास । किन्तु धर्मविषये ब्राह्मणानामधिकारं सोऽप्यभिभवितुं नाशकत् । ब्राह्मणधर्मानुयायिनो यथाशक्ति धर्मग्रन्थानुसारेणेवात्मविवादस्य निर्णयं चक्रुर्महम्मदीयानां राज्ञां निर्णयस्योपेक्षां च कृतवन्तः । ब्राह्मणानां धर्मः प्रौढ़ो दृढ़श्चासीन्न शस्त्रबलेन न च विद्याबलेन महम्मदीयास्तमभिभवितुं शेकुरितीदानीमपि देशावस्था विलोकनेन प्रत्यक्षी भवति ।

विद्याया बलेनैव ब्राह्मणाः विजयं लेभिरे । विद्ययैव प्रतिष्ठाभाजनं बभूवुः, विद्ययैव तेषां धर्मोऽमरत्वं प्राप्तवानस्मिन् संसारे ।

इदानीं महम्मदीयाः भारतवर्षस्य राजानो नैव सन्ति । तान्विजित्य संप्रति ब्रिटेनदेशीया भारतं शासति । इमे आङ्गलभौमीया विद्यायां कृतश्रमाः प्राचीनब्राह्मणानां कृतिमालोक्या साश्चर्याः सन्ति । विद्वांसस्ते ब्राह्मणानां धर्मस्य ग्रन्थानां च आदरं कुर्वन्ति । महम्मदीयानामिव ते धर्मविरोधेन प्रजापीड़नं न कुर्वन्तीति तेषां विद्वत्तायाः परिचयोऽस्माभिः प्राप्यते । अधुना ब्रिटिशसिंहेन राजराजेश्वरेण पञ्चमेन जयार्जमहीपेन सुरक्षिताः भारतवर्षीयाः प्रजाः सुखेन स्वाचरणान् विद्यालाभेन शोधयेयुरिति सौभाग्यावसरः ।

यथा विद्यया प्राचीनब्राह्मणाः संसारे उन्नतिं चक्रुः यथा च तयैवेदानीं आङ्गल-

भैमीया उन्नतिशिखरमारोढुमुद्युक्तास्तथाः सर्वं विचिन्त्य मनुष्येणाप्यात्मा [illegible]
धर्मं [illegible]
सर्वं [illegible]

हरि[illegible]मिश्रः एम्. ए.

---

## विद्या।

—:०:—

यस्य देशस्य समाजस्य च न भवति परमोऽनुरागो विद्यायां, न स समाजो देशश्चाक्षयं ज्ञानज्योतिरासादयितुं प्रभवति। विद्याप्रभयैवाज्ञनान्धकारोऽपनीयते। विद्यावलं प्रधानं निखिलेषु बलेषु। विद्याविरहितो निर्बलोऽपि पशुः। अविद्वान्नैहिकं पारत्रिकञ्च सुखं न प्राप्नोति, न च पश्यति। अज्ञानतमसावृतः किमिव सदसद्विवेक्तुं प्रभवति। निरक्षरा जनो न निवृत्तो भवति विगीतादपि कर्मणः, स हि प्रतिहिंसाद्वेषादिकुवृत्तिमलिनान्तःकरणः स्वयमेव विपद्यते। विद्याप्रकाशमासाद्य प्रभवनि मानव आरोढुमभ्युदयशिखरम्। पूर्वतनभारतीयगौरवस्य प्रधानं मूलं विद्यैवेति निश्चिन्वन्त्यैतिहासिकाः। विद्यैव प्रसिद्धान् वीरान् विदुषश्चोत्पादयति, भगवतः कृष्णस्य नीतिदाक्ष्यं, कृष्णद्वैपायनस्य विद्यावैशारद्यं, शङ्करस्य कल्पनानैपुण्यं, कविकुलगुरोः कालिदासस्य रचनामाधुरी नाद्याप्युपमातुं शक्यते कैश्चित्। विद्याप्रभावादेव साम्प्रतमाङ्ला निखिललोकमूर्द्धन्याः समभवन्। भारतीयानां सौभाग्यादेव साम्प्रतं भारते आङ्लभूपानामाधिपत्यं विजृम्भते। ते हि विद्यानुरागप्रवणा अस्मानपि विद्यार्जने प्रोत्साहयन्ति, सहकुर्वन्ति च। अत एव भारते साम्प्रतं दिनाह्निं वृद्धिमेति विद्याप्रचारः। अयि, भारतीयाः, "विद्या राजसुपूजिता," विद्याविहीनः पशुः इत्यनयोस्तारतम्यं विनिश्चित्य विद्योपार्जने वृत्तिं तनुध्वम्।

मिश्रकृपारामशर्मा,
( दीवान रायगढ़स्टेट )

---

## भारतीयस्थितिमीमांसा

विदाङ्कुर्वन्तु तत्रभवन्तो विज्ञानामृतपानाभिलाषिणः शारदानिकेतननिवासिनो भारतीयाः यत् दुर्लभं मानुष जन्म प्राप्य नरपदशालिना प्राणिना किं कर्तव्यमिति। प्रतिक्षणपरिवर्तनशीलं संसारं विचारपथं समानीतश्चेत् दृश्यन्ते निखिलप्राणधारिणः प्रतिदिनं सुखार्थं चेष्टमानाः। यतन्ते चाहोरात्रं सुखसाधनपदार्थसमुपलब्ध्यै, किन्तु बहवः शारदाविलासपराङ्मुखा न जानन्ति कुत्रास्ति तात्त्विकं सुखमिति। केचित् पदार्थ एव सुखं मन्यमानाः पदार्थसंग्रहमेव कुर्वन्ति निरन्तरम्। केचित्पदार्थेभ्यः सुखमिति जानन्तः स्वपरिश्रमप्राप्तपदार्थानुपभुञ्जत एव। किन्तूभयमतपरीक्षार्थं क्वास्ति सुखनिकेतनमिति गवेषणमवश्यमेव कर्तव्यम्। यदि पदार्थ एव सुखञ्चेत् कथं न सुखयत्येक एव पदार्थः सर्वान्; स एव पदार्थः कस्यचन सुखाय भवति कस्यचन दुःखाय च। यथाऽन्नं क्षुधितेभ्यः सुखकरं भवति तदेव चाजीर्णग्रस्तेभ्यो विपरीतं परिणमते। अतो निश्चीयते पदार्थः सुखं नेति। परञ्च येषां मते पदार्थेभ्यः सुखं, तेषां कथनस्य याथार्थ्यमनुभूयत एव सर्वैः।

यदनुकूलवेदनमेव सुखं तत्तु शरीरयात्रानिर्वाहकपदार्थसंप्राप्त्यैव समुत्पद्यते न तेषां वार्तामात्रेण। सुखमेव मनुष्यस्य जीवनं तद्विना न कोऽपि प्राणान् धारयितुं शक्नोति। प्राकृतिक-पदार्थेषु यथा यथा प्राणिसत्ता संवर्धते

तथा तथैव जीवनं चिरविलासकरं भवति येषां नावलोक्यते इन्द्रियनिरोधो ये च न जानन्ति पदार्थोपयोगितां न ते प्रभवन्त्यात्मानं रक्षितुं, यथा जीवनस्य सुखमेव मूल तथा सामाजिकतत्त्वज्ञानं शारीरकोन्नतेः। पश्यन्तु सामाजिकतत्त्वानभिज्ञान् भिल्लान्, न त अद्यापि सहनिवासे प्रभवन्ति नावबुध्यते तैः पारस्परिकसंपर्कजन्यसमुन्नतिः। अतो न कस्यापि पण्डितप्रकाण्डस्य प्रादुर्भावः खलु तेषां कुले संजात इति श्रूयते। दृश्यते च लोके संपर्कजन्यैव समुन्नतिः। येषां सर्वथा विद्यावत्सु वलवत्तरस्त स्वल्पेनेव कालेन पूर्वमनाघ्रातसमुन्नतपदा अपि प्रतिदिन क्रमकोन्नतिशिखर समारूढा विलोक्यन्ते। इद समाजिकतत्वं प्रमाणीकर्तुमवलोकनीयं खल्वैतिहासिकं वृत्तं जिज्ञासुभिः। इदन्तु तात्पर्यं यत्सुखमाकाङ्क्ष्यते सर्वैः, तत्तु समाजोन्नत्येव भवति। समाजोन्नतिस्तु व्यावहारिकपदार्थगवेषणयैव। गवेषणापि तदैव सुखकारिणी यदा पदार्थोपयोगिताज्ञानसमृद्धिः। ज्ञानसमृद्धिस्तु तदैव यदा विज्ञानमहात्मसंपर्कः। तादृशसपर्कस्तु तदैव यदा वयमेव श्रेष्ठाः सर्वज्ञा अस्मदीयशास्त्रमेव सकलविज्ञानभाण्डारमस्माकं पूर्वजा एवाणिमादिसिद्धिसदनस्वामिनो वयमेव वर्णाश्रमादिभिः समुन्नताः कथमस्माभिः स्वातिरिक्तवर्णाश्रमाचारवद्भिः सबंधः कर्तव्य इत्यभिमानशिखरमारूढैः पण्डितंमन्यैः प्रतिदिनं जायानस्वावनतिमजानद्भिर्येन केनापि प्रकारेण पामरजनवंचनेन समधिगतप्रतिष्ठालेशैर्देहमात्रेण त्यक्तसंसारै निरक्षरभट्टाचार्यैर्वृहन्मठाधीशैः स्वोदरपूर्तिपरैरालस्यभवनभूतैर्भारतोन्नतिधूमकेतुभिश्चिरपालितं मात्सर्यं परित्यज्य सांप्रतं भारतीयकलहकरं मतवादं समुत्सृज्य लोकोन्नतिकरं तत्वं परिशोध्य कलासु कौशल्यं संप्राप्य शास्त्रपाटवं समुपलभ्य विज्ञानिभिः परमपरिश्रमेण विचारार्णवमन्थनेन संशोधितपदार्थविज्ञानेऽभिरतिः कृतेव भवेत्, किन्तु नाममात्रेण महात्मानो देशदशां नावलोक्य जायमानं देशदारिद्र्यं नानुभूय सांप्रतं कस्योपदेशः शिष्याणां सुखकारकः कथमैक्यतासमृद्धिः स्यात् कथं पारस्परिकविद्वेष उन्मूलितो भवेत् कथ समाजेऽन्योन्येषु विश्वासः स्यात् कथमन्योऽन्यस्य सहाय्यं संपादयेत् कथं स्वोपार्जितपदार्थानां न्यायत उपभोगः कर्तव्यः कथं वा परकीयपदार्थेभ्यः इन्द्रियसकोचः कार्य इत्याद्युपदेशान् न जानन्त आकुलीकुर्वन्ति पठितभारतीयजनचेतांसि।

सांप्रतं ये च ब्राह्मणा येषां पूर्वजाः शमदमादिसाधनसम्पद्भिर्नित्यानित्यवस्तुविवेकेन तथेहामुत्रार्थभोगविरागेण तथैव पदवाक्यप्रमाणार्णवसतरणेन तथैव जितेन्द्रियत्वेन परिपालितब्रह्मचर्येण च तथैव परोपकारकत्वेन प्राप्तचक्रवर्तिसत्कारा आसन्, तेषामेव सन्तानानि इदानींतना ब्राह्मणाः स्वालस्यादनधिगतशास्त्रतत्वा अननुकृतस्वपैतृकसदाचारा अपरिपालितब्रह्मचर्याः स्वोदरभरय सन्तः गृहाद्गृहं ग्रामाद्ग्रामं वा भिक्षापात्रेण सह भिक्षार्थै सूर्यास्तपर्य्यन्तमटन्तोऽपि न लभन्ते स्वोदरपूर्तपरिमितमपि धान्यम्। किन्तु धिगिति गर्ह्यन्तेऽपि बहुभि, तथापि श्वानवत् पुनः पुनर्गच्छन्त्येव धनिकानां गृहेषु केचिद्विद्यावन्तोऽपि ब्राह्मणा आत्मगौरवकरान् शमदमादीन् परित्यज्य तृष्णयाकुलीकृता आत्मनो लक्षाधिपत्यं कामयमानाः प्राचीनांपठनपाठनादिपरिपाटीं तिरस्कृत्य कैंकर्यपरायणा अकर्तव्यान्यपि कार्याणि कुर्वाणा दुन्वन्ति विद्यावता ब्राह्मणानां मनांसि।

ये च क्षत्रिया येषां पितृपितामहाश्चक्रवर्तिपदवीमलङ्कुर्वाणाः शौर्यसमृद्धिनिकेतनी-

भूता साम्राज्यलक्ष्म्याधिपत्यं सनाथीकुर्वन्तः पुत्रवत्प्रजापालनतत्परा जितमनस्का गोवत्सपदीकृतविद्यार्णवाः परमोद्योगिनः क्षात्रमर्यादापालनपरा दयादाक्षिण्यशमदमाद्यनन्तकल्याण गुणगणैकभाजनाः "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति भूमा पदमनुभवन्त आसन्, तेऽपि सांप्रतं कराल कालव्यालकवलीकृता अत एव मूर्छिता विस्मृतस्वपूर्वजाचाराः स्वमतिजाड्येन वशीकृतदेहा विषयसुखलोलुपाः सन्ता वारुणी पानपरायणा नितरां दारिद्र्यमनुभवन्ति। अधिकृतभूविभागा अपि न विश्वासपात्री क्रियन्ते जनैः स्खलितव्यवहारनियमेभ्य एभ्यो न दीयन्ते पुनर्द्रविणानि, मदिराविक्रयिभिर्हृतसर्वस्वा अत एव निरतिशयं दारिद्र्यं समानीता अपि न परित्यजन्त्येनां निखिल विनाशकरीं वारुणीम्। एतेऽपि किंकर्तव्यता मूढा मूर्छयन्ति भारताधिकृतानां पठितक्षत्रियाणां हृदयानि।

इदानींतना ये वणिग्जना येषां पुराणाः पितामहाः कृषिगोरक्षादिव्यवहारेषु परं निष्णाता विदेशेषु वस्तुक्रयविक्रयार्थमनर्गलं भ्रमन्तो भारतभूमिं महार्हमणिवैदुर्यहीरकादिरत्नैः प्रपूरयन्तो निजविशालभवनवलभिं मणिमयीं विरचयन्तो नानाविधपरिमलद्रव्यराशिभिर्विदेशीयानां मनांसि विमोहयन्तो मुक्तामणिखचितचित्रविचित्रपरिधानैः स्वस्वरमणीं विभूषयन्तोऽनेकविधरमणीयमहोद्यानविलसितविविधक्रीड़ाभवनेषु नितान्तं रमयमाणा आकर्षयन्ति स्म निरन्तरं महेन्द्रपुरनिवासिनामपि स्वन्तानि, येषां व्यवहारसरणिः सत्येनालंकृता करोति स्म तान् निखिलजनविश्वासनिधीन् यथा नानाविधसरित्सरोवराणि स्वस्वजीवनमानीय ससुखं महार्णवे समर्पितविग्रहाणि संवर्धयन्ति महार्णवसमृद्धिं तथैव निखिलेतरवर्णाः स्वस्वोर्वरितद्रविणजीवनं वणिग्जननिकटं तेषां धनसमृद्धिं वर्धयन्तः स्वधनस्यवृद्धिकामनया सानन्दं संसारयात्रां सुखयन्त आसन् तेऽपि दुर्धरकालहतकेन जर्जरतां नीता विस्मृतस्वपूर्वजाचारा असत्यतामेव व्यापारसमृद्धिसाधनं जानन्तः परवंचनमेवात्मनः श्रेयस्करं मन्वानाः स्वमित्रैः सह कूटव्यवहारमेव सुखकरमिति विचारयन्तोऽन्यान् विषगर्भपीयूषकल्पवचनैर्विमोहयन्तो यावत्कार्यं न म्रतां स्वीकुर्वन्तः स्वकार्यसिद्धिपर्य्यन्तं विनीतभावं धारयन्तः कार्यान्ते च निजकुललामभूतनैष्ठुर्यं प्रदर्शयन्त आभासमात्रेण स्वधार्मिकभावं सूचयन्तः स्वदेशलुण्टाक इव परार्तिं नानुभवन्तः केनापि प्रकारेण स्वोदरगर्तं पूरयन्ति। हसन्तीं व्यापारसत्तामवलोक्य प्रतिदिनं विलुप्यमानां स्वदेशविश्वासपात्रतामनुभूय कथं नोन्मील्यते नेत्रं तैः। व्यापारादिषु न भारतीयवणिग्जनविश्वासः कर्तव्यो न कैरपि निक्षेपः कार्य एते देशविघातायैव महतीं विपणिं (Bank) समुद्घाट्य सर्वसाधारणभारतीयजनेभ्यः परिमितद्रव्यमेकीकृत्य कतिपयकालं स्वकृतव्यापारसंजातहानिलाभौ संगोप्यान्ते सकलद्रविणराशिं कवलीकृत्य दारिद्र्यं प्रसारयन्ति भारतीयेष्वेव. निर्भर्त्स्यमाना अपि न विलज्जन्त अद्यापि। केचित्स्वपापेनैव संदग्धमतयो विषप्रयोगादिभिः स्वात्महत्यामेव कुर्वन्ति परत्र च वोभुज्यन्ते रौरवादिनरकेषु विविधयामीयातनाः हा कष्टंभारतभूदेवि! ईदृशी स्थितिस्तव वणिग्बालकानम् हे भगवन् अपहरत्वेषां जनप्रतारिकां देशनिर्धनकरीं कुमतिं येन स्वपूर्वजसमा भूत्वा सत्येन व्यवहारं कुर्वन्तः स्वदेशीयानां विश्वासभूमिः पुनर्भवन्तो भारतं लक्ष्मीविलासभवनं कुर्वन्त्वेत इति प्रार्थयमो जनकुमतिध्वान्तमार्तण्डं भवन्तम्।

ये चास्मत्परमप्रियशूद्राः येषां पूर्वपुरुषा वर्णत्रयसेवया सकलैश्वर्यविलासरङ्गभूमीभवन्तः स्वदेशपरमहितचिन्तकाः स्वामिकार्यसंपादनाय समर्पितप्रियप्राणाः स्वजीवनादप्यधिकतरं स्वधर्मं परिपालयन्तः कृत्यकृत्यतां यातास्त एवाधुना परैराशुविनाशिद्रव्येण समाकृष्टाः सत्वरं परधर्मरता भवन्ति स्वोदरपूर्त्यै विधर्मसंचालकनियोगाङ्किताः परमोत्कृष्टसमुन्नतपदप्रापकनिगमागमप्रमाणीकृतमोक्षैकसाधनवैदिकपथं विस्मरन्तः स्वजन्मभूमेर्गौरवं स्मृतिपथातीतं स्वदेशाभिमानं त्यजन्त आगमप्रतिपादितवर्णत्रयसेवां स्वकल्याणकारिणीमवधीरयन्तः कुपथमेव श्रेयस्करं विलोकयन्तः स्वधर्मत्याग एवात्मीयोन्नतिकरं वितर्कयन्तो विदेशीयपरिच्छदधारणमेव स्वदेहविभूषणं मन्यन्तोऽत एव दुर्लभं मानुषं जन्म व्यर्थयन्तो विधर्माचरणेनात्मनः परलोकसुखं धूलिधूसरं कुर्वन्तः खेदयन्ति मनांसि पठितवर्णत्रयाणाम् । साम्प्रतं नाधीयन्ते चतुष्षष्टिकलाः नापि क्रियते स्वधर्माचरणं न विचार्यते देशोन्नतिः न रक्ष्यते ब्रह्मचर्यं न पाल्यते सत्यं न क्रियत ऐक्यरक्षणं न ध्रीयते स्वदेशाभिमानं न विदार्यते देशदारिद्र्यं न त्यज्यते मतवादो न विज्ञायते स्वगौरवं न पठ्यन्ते विज्ञानशास्त्राणि न तिरस्क्रियत अलीकाभिमानं न छिद्यन्ते कुरीतयो नाभिमन्यते भारतीयशास्त्रमाहात्म्यं न विचार्यते व्यापारोन्नतिः न मतिपथं समानीयते स्वजनेषनुरागो नोन्मूल्यते चिरपालितस्वमात्सर्यदोषो न निःसार्यते ज्ञातिजनकलहो न पठ्यते व्यवहारोन्नतिकरं शास्त्रं न चिन्त्यत आत्मनो मङ्गलं न समुन्नीयते कृषिविद्या नाङ्गीक्रियते स्वधर्मसेवा न व्यवह्रीयन्ते स्वदेशपदार्थाअतोऽनुभूयत एव प्रतिदिनं संवर्धमाना महतिर्हानिः खलु भारतस्य। इमां परमशोचनीयां भारतीयामवस्थामवलोक्य किंकर्तव्यमिति विचार्यते किंचित् ।

एतन्नाविदितं खलुभारतीयनां यच्छिक्षकोपदेशं विना विज्ञानप्राप्तिर्न भवति कस्यापि। त एवानन्यसाधारणा उपदेष्टारो भवन्ति ये स्वकृताचारणपूर्वकं प्रथयन्त्युपदेशान्। साम्प्रतं स्वदेशोन्नतिनियमोपदेशेषु महात्मानः पाश्चात्या एवोन्नतरा गुरवो ये स्वपराक्रमेण स्वमतिचातुर्य्येण स्वदेशाभिमानेन स्वजनेष्वनुरागेण स्वव्यवहारकोविदत्वेन स्वदेशोद्भूतवस्तुसंप्रसारेण स्वविचारसंगोपनेनाऽहर्निशं व्यवहारोपयोग्यविज्ञातपूर्वपदार्थगवेषणेन विविधविलाससदनकलापाटवेन व्यापारस्वायत्तीकरणेन स्वातन्त्र्यानुरागेण स्वस्वामिनियोगानां प्राणेभ्योप्यधिकतरपरिपालनेन परराष्ट्राधिकारसाधनीभूतशास्त्रविद्यापांडित्येन राजनीतिवैदग्ध्येन स्वधर्मसंरक्षणेन स्वदेशव्यवहारेषु गौरवसंस्थापनेन सदाचारेण प्रजासंरक्षणैकसाधनन्यायप्रदानशीलत्वेन सत्यव्यवहारेण विविधविद्याविलासेनाहर्निशमुपदिशन्ति भारतीयान्, किन्तु स्वालस्यमहार्णवे निमग्नाः स्वजनेषु कलहप्रिया मतवादलंपटाः स्वार्थनिद्रावशीकृता मिथ्याभिमानप्रमादाक्रान्ता चिरपलितमात्सर्यदोषतिमिरान्धा अत एवाहर्निशं जायमाननिधनत्वमपश्यन्तो नाद्यापि जागरूका भवन्ति इति खिद्यते हृदयं कोविदाम् अत उक्तदोषानुन्मूलयितुं "कर्मण्येवधिकारस्ते मा फलेषु कदाचने ति भगवद्वाक्यं स्मरन् विश्राम्यति।

पण्डितः श्रीकृष्णशास्त्री

---

# अथ ब्राह्मणधर्म्मविलापकव्यम्।

अयि धातृजनुः पुरोगमाः,
मुनयो मज्जनिदायकाः पुरा।
पतितम्बिपदाम्पयोनिधौ,
कथमेतर्हि न मां प्रपश्यथ ॥ १ ॥

अनिशं रुदतो विचेतसः,
स्फुटितं मामकमम्बकद्वयम्।
अधुना नयनापवर्जितो,
हतभाग्यः करवाणि किं ननु ॥ २ ॥

शिथिलावयवं कलेवरम्,
रहितं पाणिपदेन सन्ततम्।
वहतो मम जीवनं जगत्य,
धुना हास्ति विड़म्बनं महत् ॥ ३ ॥

महतां मृदुमौलिमालया,
गतवान् योहमहो समर्च्यताम्।
इतरप्रपदैर्हतोधुना,
शरणां हन्त लभे न कञ्चन ॥ ४ ॥

भवरक्षणदक्षधामभि,
र्वत यः सम्वलितोऽभवत्पुरा।
विधिना कुटिलेन दुःस्मरां,
गमितोऽहं कुदशां हि साम्प्रतम् ॥ ५ ॥

शतकोटिसवीतृवर्चसा,
य इहाऽऽसंज्वलितो जगत्त्रये।
अधुनाभिगतो नु लक्ष्यतां,
वतदीपप्रभया हतप्रभः ॥ ६ ॥

क्व पुराहमहो दुरासदः,
पृथु तेजोभिररिन्दमैर्नृपैः।
क्वच शोच्यविलक्षणक्षणः,
श्वपचाद्यै रधुना तिरस्कृतः ॥ ७ ॥

यदगस्त्यमुनेः सरस्वतः पटु,
तेजोहह शोषणे पुरा।
अधुनातनभूसरैर्युते,
मयि सर्वं विफलीकृतं हि तत् ॥ ८ ॥

जनने वत यस्य पूर्वजा,
अपि राज्यं त्रिजगत्समुत्थितम्।
तृणवद्विगणय्य यत्कृते,
ह्यु ररीचक्रुरण्यसंस्थितिम् ॥ ९ ॥

तदिदंद्विजवृन्दमापत,
न्नितरामेकवराटिकाकृते।
अतिनिम्नपदे विगर्हिते,
त्वधुना मां तमधिक्षिपत्यलम् ॥ १० ॥

श्रुतिपाठरुतं निशम्यते,
यदरण्येष्वपिपूर्वमुच्चकैः।
वत सम्प्रतिनागरेष्वपि,
द्विजसंघेषु तदस्तमभ्यगात् ॥ ११ ॥

हरिणापि समर्चिता पुरा,
वसतिर्या मम विप्रसंहतिः।
अभिनन्दति सा वताधुना,
वृषलानां हि तमालसज्जनम् ॥ १२ ॥

वत साम्प्रतिका महीसुरा,
अपि गाय्यभिधां विदन्ति नो।
अनुभावसमृद्धिवर्षिणो,
यमपञ्चाध्वरयोस्तु का कथा ॥ १३ ॥

विहितौ निगमागमौ यया,
समधीत्यापरकेसुसङ्गताः ॥
वत हा मम सैव सन्तति,
र्वसतिर्भेदभरस्य दृश्यते ॥ १४ ॥

इह सन्त्यपरेऽपि मानवा,
निजवर्गाभ्युदयंसमीप्सवः।
अहितं वत हा ममाश्रया,
अभिनन्दन्ति परस्पराश्रयम् ॥ १५ ॥

क्व गतो धिगरुन्धतीपतिः,
सविता मेऽङ्कदम्बकस्य सः।

विरहय्य विखिन्नमानसं,
द्विजवंशस्य धुरन्धरोऽद्य माम् ॥ १६ ॥
अयि जात पराशरात्मज,
श्रुतिसन्दोहपटो विना त्वया।
पतितं व्यसनस्य वारिधौ,
वत मां कोऽद्य समुद्धरिष्यति ॥ १७ ॥
शुकशौनकदेवलादयो,
मुनयो या परिवद्‌र्ध्य निर्भरम्।
मयि दुर्विपदं गतेऽधुना,
न मनागीक्षणमुत्क्षिपन्ति हा ॥ १८ ॥
प्रजगाम तपोधनर्षभ,
स्त्वनुसूयारमणो नु कुत्रचित्।
विनिपात्य कलिर्द्विजन्मनां,
हतहस्ते वत मामनाथवत् ॥ १६ ॥
इतिदर्शितपूज्यविप्लवं,
द्विजवृन्दं यदि नो क्रमं व्रजेत् ॥
विधिना रचिता विवेकिता,
भुवने हन्त तदा लयं गता ॥ २० ॥
इति सीदति नोऽनुजीवनं,
निजधर्मे नितरां विडम्बनम्।
पितरि प्रतिपन्नदुर्गतौ,
तनयानामिह जीवनं मुधा ॥ २१ ॥
परमेशविसृष्टमादितो,
मुकुटं पूर्वजसेवितं द्विजैः।
स्वकरैरवतार्य मूर्धतो,
वत हा क्षिप्यत उन्मदैरिव ॥ २२ ॥
अधुनापि विजित्य शात्रवं,
ननु षड्वर्गमयि द्विजन्मनः।
सकलेष्टसमृद्धिमाधिकां,
कुरुतान्योन्यजनेषु सङ्गतिम् ॥ २३ ॥
कुटिलक्षणमेघमण्डलैः,
सहसा ह्यन्तरितोरुमण्डलः।
भवतामनुभावभास्करः,
समुपेतात्खरतारुणश्रियम् ॥ २४ ॥

पाण्डेयोपाह्वरामानन्दशर्म्मा।

---

# पातालपरिभ्रमणम्

——:०:——

## पूर्वतोऽनुवृत्तम्।

अहमुपाध्यायमवदम् "रसायनशास्त्रे परं कौशलमासादितमुपाध्यायेन, एतेन वटिकाद्र्वेनैव मयैतद् ज्ञातम्" उपाध्यायः प्रत्यबोचत्, अत्रेदं भवति, कारणम्, प्रतिदिनमस्माभिरभ्यवह्रियमाणेषु पदार्थेषु भवत्यधिको जलीयो भाग, स हि मया वैज्ञानिकप्रक्रियया पृथक्कृतः। अत एवेमाः क्षुद्रा वटिका विलोक्यन्ते, यदेयं पुनर्जलेन संयुज्येत, तदात्मानस्तात्विकीमवस्थामासादयिष्यति। इत्थमेव मयापरेषामपि भोज्यवस्तूनां सारः पृथक्कृत्य सङ्गृहीतः, यो यात्रायामुपयोगं, जनयिष्यति। एषु काचपात्रेषु शक्तिसञ्चारिण्य ओषधयो निहिताः।

इत्थमुपस्थितो यात्रासमयः। अहमुपाध्यायो हंसश्चेति त्रयो गृहान्निर्गता यथासमयम्। अयःशकटमारुह्य वयं मणिपुरं प्रति प्रस्थिताः, ततः पदवर्त्मना पैशाचपुस्तकनिर्देशानुसारमुपाध्यायेन बोधिताः पूर्वोत्तरस्यां दिशि वयं प्रस्थिताः। रात्रौ यत्रासकं वसतिरभवत्तत्रापि गाथा यन्त्रमाहात्म्याद्धिमिर्द्धारणमकरोत्, तत्फलञ्च व्यलिखदात्मनः स्मृतिपुस्तके। इत्थं गच्छद्भिरस्माभिः काऽपि गुहा प्रत्यक्षीकृता। उपाध्यायोऽवदन्नेयं गुहा हैहयवंश्यानां राज्ञां समयेऽत्र कोप्याग्नेयगिरिरासीत्। तस्यैवैतद्विलोक्यमानं मुखं भवति। साम्प्रतं प्रमाणीभूता मेऽनुमितिः। निर्दोषाणि

मे यन्त्राणि येषां साहाय्यादतिप्राचीनोऽप्ययं वृत्तान्तोऽस्माकं नयनयोः पुरःस्थित इव, इदमेव पातालद्वारम्, अस्यैव वर्णनमस्माकं पुराणेषु कृत दृश्यते। अनेनैव पथा पुरा राक्षसा भूतलमागच्छन्ति स्म। अस्माभिरप्येतेनैव पथा पातालं प्रवेष्टव्यम्। छायाग्राहियन्त्रं सावधानं गृहाण, पातालचित्रमपि कस्मिन्नपि प्रसिद्धे संस्कृतपत्रे प्रकाशयिष्यामः।

इत्थमुपाध्यायोपदेशं शृण्वतातिवाहितो दिवसः। रात्रौ भोजनादिकं निर्वर्त्य, अग्निञ्च प्रज्वाल्य वृक्षच्छायायां वयमस्वपाम। प्रातः सूर्योदयत्प्रागेव शीतपीडिता अभवाम प्रबुद्धाः, प्रातः समुदयतः सूर्यस्य बालकिरणैरपनीतशीतबाधः पुनरपि मातृभूमिं निरीक्ष्य तस्या अलौकिकीं शोभामपश्यम्, यत एतेन विकृतमस्तिष्केन वृद्धेन सहास्मिन्नन्धकूपे प्रविष्टस्य ततः पुनरागमनं सम्भाव्यते नवेति को निश्चेतुं शक्नुयात्।

उपाध्याय समाज्ञापयत्, आगच्छ, त्वर्यताम्, साम्प्रतमस्ति शुभो मुहूर्तः। साम्प्रतमेव पातालं प्रवेष्टव्यम्।

दृष्ट्वा न्यश्चिनवम् यदेतस्य गह्वरस्य मुखं विपर्ययीकृतस्य कोणस्य तुलामेति। तन्मुखव्यासः क्रोशार्द्धपरिमित आसीत् एतस्य गिरेरग्न्युद्गमनकालेऽस्मिन्नेव कोणाकारे स्थाने द्रवीभूता धातव उपलानि च संलग्नानि बभूवु इतस्ततः संचरद्भिरग्निगोलकैः सयोगमेत्य वज्रनिनादगम्भीरं ननन्दुश्च। एतस्य हि तलं बहुविस्तृतमासीदतोऽधोगच्छतां मनो न केनापि भयेन स्पृष्टमभवत्। तथापि मम मनो नवं कल्पनाप्रसूनं भयमुद्भाव्य समुद्विग्नमभवत्।

भीरुरपि साहसिकसङ्गाद् भीरुतां जहाति। मम भृत्यः सोत्साहं ससम्भ्रमं चाधोगन्तुं प्रवृत्त इति निरीक्ष्य, किञ्चित् संजातत्रपोऽहमपि मनसि साहसमाधाय पाताल दर्शनाय गुहामुखं प्रविष्टः। अस्माकं मार्गमुपलगोलकैः समाच्छन्नमासीत् अस्माकं चरणैराहतानि तान्यपि गुहातले निपतितानि भयङ्करं शब्दमुत्पादयितुं प्रवृत्तानि। स शब्दो हि कन्दरामुखे प्रतिध्वनिदत्तां द्विगुणितां पुष्टिमासाद्य कम्पयितुं प्रवृत्तो मदीयं मानसम्।

अधोगच्छद्भिरस्माभिर्भूमेर्बहुविधं रूपं प्रत्यक्षीकृतम्। कुत्रचित् शुष्कपङ्क इव, कुहचनाहिनशुभ्रभस्मेव समदृश्यत भूमिः। एवंविधेषु स्थानेषु सावहितमग्रेपदं निक्षिप्यते स्म, भृत्यस्तु लोहयष्टिकया भूमिं परीक्ष्य पदं निदधाति स्म। मयोपाध्यायेन च स एवानुस्रियते स्म।

अह्नो मध्यमारूढे सूर्ये वयं गुहातलं प्राप्ताः। तत्र गत्वाहमुपर्य्यपश्याम्। तदा सूक्ष्मं गगनखण्डं व्यलोकयम्, परं तद्गोलमिव प्रतीयते स्म। गह्वरगर्भगतैरस्माभिः कस्यापि पर्वतस्य शिखरमनीयत दृष्टिपथम्। गह्वरस्योपर्येव स्थित इव यः पर्वतो न्यपतदक्ष्णोः, स हि ततो बहुदूरमासीदित्युपरिस्थैरस्माभिः प्रत्यक्षीकृतमासीत्।

तस्मिन् गुहातले तिस्रः प्रणालिका आसन्। तासां व्यासोऽप्यतिविशाल आसीत्। यद्दर्शनेन समुदपद्यत भीतिर्मे मनसि। परमुपाध्यायस्तु नाम्नापि भयं न परिचिनोति स्म। स हि यथायथं ताः प्रणालिका द्रष्टुं प्रवृत्तः। उपाध्यायस्तु समुच्छ्वसन् हस्तौ सञ्चालयन् शिरो घूर्णयश्चैकां निरीक्ष्यापरां, तां निरीक्ष्य चान्यां सस्पृहं द्रष्टुमारभत्। एकस्मिन् धातुप्रस्तरमये शिलातल उपविष्टौ भृत्योहञ्चोपाध्यायमेव विलोकयितुं प्रवृत्तौ।

सहसैवोपाध्यायश्चीत्कारमकरोत्, तच्छ्रुत्वा मया निर्द्धारितम् कुत्रचिच्चरणावरोधान्निप-

तितो भवेदुपाध्यायः । परं मया कल्पितं कल्पितगन्धर्वनगरमिव कुहचन विलीनमभवत् । स हि कस्यापि शिलातलस्य पुरः स्थितः प्रसारितकरचरणः किमपि पश्यन्नासीत् । तदा हर्षपारतन्त्र्यात्तस्य वाणी रुद्धा समभवत् । स हि कदाचिदानन्दाश्चर्यकिर्मीरितमहोर्मिमालिनि निमग्नः, कदाचिच्च दुरवबोधं जल्पन्नात्मनोऽनुपमां वैज्ञानिकतां प्रथयति स्म । स हि तारमवदत्, राजेन्द्र, त्वरितमागच्छ, पश्य ।

अहमुपाध्यायसमीपमुपासरम् । परं भृत्यस्तु नाधिष्ठित स्थानमत्यजत् । उपाध्यायोऽवदत्, सावधानं पश्य, उपाध्यायस्येव ममापि मानसमाश्चर्यान्वितमभवत् । तस्मिन् शिलातले पैशाचैरक्षरैरुत्कीर्णानि कानिचिदक्षराण्यपश्यम् । तान्यक्षराणि बहुपुरा समुत्कीर्णानीति कालवशात् कानिचिदक्षराणि त्रुटितानीव विलोक्यन्ते स्म । तत्र हि तारापुरमिति लिखितमिति मयापि ननु वाचितमेव । यत गृह एवोपाध्यायेनैतदहमवबोधित आसम् । अहं किञ्चिदपि वक्तुं नापारयम्, तूष्णीमेव भृत्यसमीपमागम्य तस्मिन् शिलातलैकदेशे न्यषीदम् । अद्य यावन्मया उपाध्याय उन्मत्त इति निर्द्धारितमासीत्, परमद्य विगलिता निखिलाः सन्देहाः । न जाने कियन्तं समयमहं विषयममुं विचारितवान् । पुनरपश्यम्, उपाध्यायः पञ्जरबद्धः शार्दूल इव तस्मिन्नेव गर्ते परिभ्रमतीति । तदा स्वीयं स्थानं परित्यज्यान्यत्र गन्तुं नासीत् शक्तिरिति तत्रैव निद्रामभजम् । शयितस्य मे कर्णयोः पृथिवीगर्भस्थः कोऽपि महान् शब्द आविरभवत् । इत्थं नो व्यतीता आद्या रजनी तस्मिन् गह्वरे ।

अन्यस्मिन् प्रभाते तद्गुहामुखमेकेनाकाशखण्डेनाच्छादितमिवादृश्यत्, तदाकाशखण्डं पिङ्गलवर्णमिवासीत् । पुनस्त्वरितमेव नः पश्यतामेव विलिल्ये प्रकाशः, समुपससर्प चान्धकारः । तस्मिन् दिने नाभवद्भगवतः सूर्यस्य दर्शनम् ।

तदानींतनीमुपाध्यायस्य दशां वर्णयितुं नास्मि शक्तः, मेघैरावृतस्य चन्द्रस्य शोभामधत्त तन्मुखम् । अवददुपाध्यायः, सूर्यसाहाय्यमन्तरा यन्त्राणि मे विफलानि, नाहं तैः किञ्चिदपि कर्तुं शक्नोमि, अतः साम्प्रतमवरुद्ध एव तारापुरप्रणालिकाप्रवेश इति । इत्थं तद्दिनमपि व्यतीतम् । तत्रत्याभिः प्रस्तरपट्टिकाभिरुपाध्यायस्य भृत्यः किमपि गृहं निर्मितवान् । इदं हि कार्यं सामयिकमभवत् । यतो रात्रौ वृष्टिसमये तदेवास्माकं शरणमभवत् । महता दुःखेन सा रात्रिरपि नीतास्माभिः ।

पुनरभवत्प्रभातः, परं मेघाटोपो न विलीनोऽभवत् । तदा हि क्रोधकषायितलोचन उपाध्यायो मन्त्रौषधिरुद्धवीर्यः सर्प इव परं बाधामनुभवति स्म, परं किंकरोतु, परवति वस्तुनि कोऽस्य शक्तिः ।

तृतीयेऽपि दिवसे नाभवत् सूर्यस्य दर्शनम्, परं चतुर्थे दिने समभवदृतुविपर्ययः, मेघाः क्वचिदन्तर्हिताः । तद्गह्वरं सूर्यरश्मिभिः प्रपूर्णमभवत् । तदा गह्वरस्थाः पदार्था विविच्य ग्रहीतुं शक्यन्ते स्म । तदोपरि वर्णितस्य पर्वतशिखरस्यैव छायापि सूर्यरश्मिभिः समं घूर्णितेवादृश्यत, यदियं कापि रेखा परिभ्रमतीति । यन्त्रहस्त उपाध्यायस्तां छायामनुससार ।

मध्यान्हे सा छाया प्रणालिकाया मध्यभागमाश्रयत् । तदावददुपाध्यायः, राजेन्द्रगम्यतां, विलम्बः परिहरणीय एव ।

---

## पुस्तकपरिचयः

—:×:—

**ग्रन्थप्रदर्शनी**—इयं हि संस्कृतभाषामयी काऽपि ग्रन्थमाला। अत्र हि नानाविधप्राचीनापूर्वमहाग्रन्थाः संगृहीताः प्रति मासं प्रकाश्यन्ते। सम्पादकः प्रकाशकश्चास्या एस० पी० वी० रङ्गनाथस्वामी आर्यवरगुरुः। विजगापट्टमिति प्रसिद्धं नगरमस्याः प्राप्तिस्थानम्। मूल्यमस्याः षडाणकाधिकं रूप्यकत्रयम्।

साम्प्रतं विरल. कोऽपि जनो यो भारतस्य मौर्ख्यापनयबद्धदीक्षां, कल्पलतिकामिव समीहितसिद्धिदां भगवतीं सुरसरस्वतीमाराधयितुमुद्युञ्जीत, दूर तावत् तत्प्रचारणम् साम्प्रतिका भारतीया अधीतपञ्चषोपन्यासा सुरसरस्वत्या मृतिकल्पनामेव द्रढयितुं विनियोजितबुद्धिविभवा विलोक्यन्ते, सत्यं कुपुत्रजननी माता मृतकल्पैवेतित्यस्माकमपि मतम्। एवंविधे विगलितात्माभिमाने दूरापेतपूर्वजश्रद्धे समये संस्कृतग्रन्थानां प्रचारणे बद्धदीक्षै रार्यवरगुरुभिर्नन्वाविष्कृत आत्मनो विद्यानुरागः उद्घोषितं भारतहितैषित्वम्। उपकृताः सस्कृतप्रणयिनः, साधुवादं गाजनतां नीतश्चात्मा तेषां यशःशेषाणां कविपुङ्गवानाम्।

मत्समीपमागतासु " संख्यासु संस्कृता एते ग्रन्था मुद्रिताः।

**प्रकृतसर्वस्वम्**—मार्कण्डेयकवीन्द्रकृतम् अयं ग्रन्थो विंशतिपादात्मकः, अत्र भाषाविभाषाऽपभ्रंशपैशाचादिभेदेन बहुधा भिन्नानां भाषाणां लक्षणानि व्याक्रियाश्च निरूपिताः। यत्सत्यमिदं पुस्तकं भाषातत्वमधिजिगमिषूणां महदुपकारकमिति।

**मीमांसार्थप्रकाशः**—श्रीमता भट्टकेशवेन ग्रथितोऽयं सन्दर्भो द्वादशसु परिच्छेदेषु समाप्तः। अत्र सुविशदं वर्णितानि मीमांसातत्वानि। सरलया भाषया सरण्या चोपनिबद्धो मीमांसार्थप्रकाशको ग्रन्थ, इम मीमांसार्थप्रकाशनामकं ग्रन्थमपहायनापरो ग्रन्थो दृष्टोऽस्माभिः।

**उपसर्गवर्गः**—श्रीमहादेवभट्टाचार्यविरचितः। अयं हि शब्दार्थाववोधकः कोप्यनुपम. सन्दर्भः। एक एव धातुरुपसर्गवशेन बहून् अर्थान् बोधयतीति सम्यग्निरूपितोऽयं विषयोऽत्र भट्टाचार्येण, अधस्तान्निर्दिश्यते तत्रत्य एकः श्लोको, यनैतस्योपयोगितामवगन्तुं पारयेयुः पाठकाः।

पा पाने

निपानमुपकूपः स्या, द्रापानं पानगोष्ठिका।
अनुपान भेषजस्यानुकूलं यत्प्रदीयते॥

**काणादनयभूषणम्**—अयं ग्रन्थो वैशेषिकदर्शनतत्वाववोधपरः।

अद्य यावदस्या ग्रन्थमालाया द्विचत्वारिंशत् संख्याः प्रकाशिता।

**उषा**—मासिकी संस्कृतपत्रिका, गुरुकुल विश्वविद्यालय काङ्गडीतः प्रकाश्यते। अस्या द्वे संख्येऽधिगते। इमामुषामवलोक्य सञ्जातः कोऽपि मधुरो हृदि मनोरथाङ्कुरः। नूनमियमुषा त्वरितमेवागामिनः प्रौढप्रतापस्य संस्कृतसहित्यदिनमणेरागमनं सूचयन्ती प्रकामं वशयति नश्चेतांसि। चिरञ्जीवतु कनीयसी प्रियवयस्येयमिति साह्लादं कामयते शारदा,।

**सिद्धान्तसिद्धापगा**—एतन्नामकः संस्कृतभाषामयः कोऽपि निबन्धः श्रीमता

कविना भट्टवलभद्रशर्मणा काव्यरत्नाकरेण निर्मितः। अत्र हि श्रीमता मञ्जुभाषिणी-सम्पादकेन शुद्धाद्वैतसिद्धान्तविरुद्धमाविष्कृता आक्षेपाः समाहिताः श्रीमता काव्यरत्नाकरेणेति बोधयत्यस्याः सिद्धान्तसिद्धापगायाः प्रस्तावना। मनोहारिण्या सरण्या सरलया भाषया च ग्रथितोऽयं सन्दर्भः श्रीमता काव्यरत्नाकरेणेति सन्तुष्यामः। शुद्धाद्वैतसिद्धान्त प्रति प्रत्यघतिष्ठमानान् समाधातुकामानामियं महदुपयोगं जनयेत् सिद्धापगेति प्रतीमः। यद्यस्या भाषा किञ्चित्संयता भवेत्तदेयं सिद्धापगावश्यं मनो विनोदयितुं शक्नुयान्निखिलानाम्। अस्यामूल्यम् आनकपट्कम्, प्राप्तिस्थानम् शुद्धाद्वैतसिद्धान्तकार्यालय, बड़ा मन्दिर, भूलेश्वर, बबई।

एतत्तु सप्रश्रयं निवेद्यन्ते काव्यरत्नाकरा, मञ्जुभाषिणीसम्पादकाश्च, परमकारुणिकैराचार्यचरणैर्लोकोपचिकिर्षया लोकोन्निनीषया चाविष्कृताः सिद्धान्ता अवैदिका इति वदन् बृहस्पतिरपि श्रद्धेयवचनो भवितुं न शक्नुयादिति नो बुद्धिः। इत्थं साम्प्रतिकैस्तत्तदाचार्यप्रवर्तितसिद्धान्तप्रचारकैरपरः सिद्धान्तस्तत्सिद्धान्तानुयायिनो वा किन्निमित्तमाक्षिप्यन्ते? युक्त्युपपत्तिप्रदर्शनपुरस्सरं स्वसिद्धान्तस्थापनं न दोषाय, पर तन्मिषाद्विहित आक्षेपो व्यथयति परान्। ययास्य वाचा पर उद्विजेत, तामहृद्यामुदीरयितुं कथं क्षमेरन् धर्माचार्याः। किञ्च नायमनुकूलः समय एवंविधाय कर्मणे। साम्प्रतं हि प्रज्वलति सर्वत्र वैदिकधर्मग्रसिस्नुर्दावानलः। यथा स उपशाम्येत्तदर्थमेव प्रयतितव्यं वैदिधर्मप्रणयिभिरिति।

**देवीस्तवः**—अस्य निर्माता जोधपुरवास्तव्य आशुकविर्नित्यानन्दशास्त्री। मुम्बास्थश्रीवेङ्कटेश्वरयन्त्रालये मुद्रितस्तत एव प्रकाशितश्च सोऽयम्। अत्रत्या श्लोकाः कविनैव व्याख्याताः तदग्रजेन हिन्दीभाषायां दुरूहाणां श्लोकानां स्फुटोर्थो निबद्धः।

नागपुरादनतिदूरे कस्मिंश्चिद्धनोद्देशे कापि "दधिमथी' देवी निवसति। तत्प्रसादादेव कविनाऽयं निबन्धो विनिर्मित इति विलिखति स्वयं कविरेव प्रस्तावनायाम्। अस्य ग्रन्थस्यायं विशेषो यद् यस्मिन् श्लोके योऽलङ्कारो यच्च छन्दस्तदुभावपि तस्मिन्नेव श्लोके कुत्रचित् तद्वाचकेन कुत्रचिच्च तत्पर्यायभूतेन शब्देन सूचितौ। आशुकविना निबद्धानां श्लोकानां काठिन्यं देवीस्तवरसास्वदनसमुत्कान् दूरत निवारयति। कियदेतस्य मूल्यमिति न ज्ञायते।

**संस्कृतबालबोधिनी**—विद्यावाचस्पतिना श्रीमता देवीप्रसादशास्त्रिणा संस्कृतभाषामधिजिगमीषूणामुपयोगाय खण्डत्रयात्मनोपिनिबद्धा। एतदध्ययनेन बाला संस्कृतभाषामगवन्तुं शक्नुयुः। खण्डत्रयात्मिकाया एतस्या मूल्यम् पञ्चाणकाः।

प्राप्तिस्थानम् पं० देवीप्रसादशास्त्री
संस्कृतपाठशालाध्यापक,
चूरु J. B. Ry.

**पद्यप्रबोधः**—हिन्दीभाषामयोऽयं ग्रन्थः श्रीमता रामनरेशत्रिपाठिना निर्मितः। मूल्यम् ।≤) षडाणकः।

प्राप्तिस्थानम्—रामनरेशत्रिपाठी, फतहपुर (जयपुर)

साम्प्रतं हि हिन्दीभाषा क्रमेणात्मनो गौरवं विस्तारयितुं प्रवृत्तेति पश्यतां नश्चेतसि सञ्जातः कोऽपि सन्तोषः, अयं ग्रन्थो हि हिन्दीभाषायां किमपि रत्नमिति शक्यते वक्तुम्। आत्मनः कवित्वमुद्भावयितुमिच्छतामेतेन भविष्यति महत्फलम्। अत्र हि सोदाहरणं छन्दोलक्षणं निरूपित वर्तते। व्यतीते

कस्मिन्नपि वर्षे सरस्वतीमासिकपत्रिकायां कवित्वविषयक विदुषा श्रद्धेयेन तत्सम्पादकेन निबद्धं निबन्धमेकं प्रकाशितमासीत्। तद्वलम्बादस्मिन्नपि ग्रन्थे कविना कवित्वोपलब्धिसहायका उपदेशा सन्निवेशिता। यद्यत्रालङ्कारलक्षणं सन्न्यवेश्यत कविना तदेदं पुस्तक महते समुपयोगाय भविष्यतीति नो बुद्धिः।

**वैद्यभूषण**—इदं हि हिन्दीभाषामयमायुर्वेदीय मासिकपत्रम्। सम्पादकः प्रकाशकश्चास्य वैद्यराज धर्मदेवकविभूषणवैद्यरत्नमहोदयः। लाहोरनगरादिदं प्रकाश्यते, अस्य द्वे संख्ये करतलमुपगते नः, अत्र आयुर्वेदविषयकाः मनोहरा लेखा प्रकाशिता भवन्ति। अस्य प्रथमोङ्कः सम्पादकस्य सुन्दरेण छायाचित्रेणोपेतो विनोदयति तद्रसिकान्। अत्र हि प्रकाश्यमाना लेखा नायुर्वेदमर्यादामतिक्रामन्तीति सम्पादकस्य वैदुष्यं विलोकयन्त. सन्तुष्यामः। चिरञ्जीवतु, भूषयतु च वैद्यान् इति कामयामहे। मनेजरविद्याभूषण, लाहोर इत्यत्र १।) मूल्येन प्राप्यते।

**वैदिकसर्वस्व**—इदं हिन्दीभाषामयं श्री वैष्णवमहासभाया मुखपत्रं प्रतिमासं प्रकाश्यते। सम्पादकोऽस्याधिकारी जगन्नाथ दासविशारदः। भरतपुरादिदं प्रकाश्यते। वार्षिक मूल्यम् ३॥) मनोहरैर्लेखैः सयुक्तिकैश्च सम्पादकाभिप्रायैरुपदिशति धर्मतत्वम् बोधयति वैष्णवानां कर्तव्यम् विवृणोति वैष्णवं शास्त्रीयं तत्वम्। अयमपरोऽस्य विशेषो यदिद नापरैर्धार्मिकपत्रैरिव परस्परं कलहायमानो यापयिष्यति दिवसान् किञ्च पराक्षेप एव दार्शनिकं तत्वम् कलह एव धर्मोपदेशः त्वक्सारैरुपदेशैः परातिसन्धानमेव भगवदादेश इति नास्य नीतिर्भविष्यतीति स्वयं निवेदयति सम्पादक एव। योग्येन विदुषा सम्पादकेन सम्पादितमिदं पत्रं सम्पादयिष्यति निजं कृत्यम्, प्रकाशयिष्यति चाक्षयं धार्मिकं ज्योतिरित्याशास्यते।

**शिवाजी का आत्मदमन**—महाराष्ट्र भाषया लिखितस्य "सूवे कल्याण" नामकस्य हिन्दीभाषया विहितोऽयममनुवादः श्रीमता काशीनाथशर्मणा। अत्रैतिहासिकी कथा वर्णिता। मनोहरा कथा विनोदयति मनो वाचकानाम् अस्य मूल्यम्। ≋)॥ पं० खुन्नूलाल रावत फर्रुखाबाद इत्यत्र लभ्यते।

**प्रयागमाहात्म्यम्**—इदं हि मत्स्यपुराणान्तर्गतं द्वादशाध्याय्यात्मना विनिबद्धं प्रयागमाहात्म्यं त्रिवेणीप्रिंटिंग" यन्त्रालये मुद्रितम्। तीर्थराजस्य प्रागस्य पुरावृत्तं विज्ञातुमिच्छतां धार्मिकाणां विदुषाञ्चैतेन महानुपकारो भविष्यति। अस्यहि संस्करण द्वयं प्रकाशितं प्रकाशकेन। केवलस्य संस्कृतस्य।) हिन्दीभाषाटीकोपेतस्य च।≈) पडाणका मूल्यम्। प्राप्तिस्थानम् मनेजर त्रिवेणी प्रिंटिंग वर्क्स, दारागंज प्रयाग।

---

# वार्ताः सम्पादकाभिप्रायाश्च।

०:

## राज्याभिषेकमहोत्सवः।

निर्वृत्तो भारतसौभाग्यैकसूर्यस्य श्रीमतः पञ्चमजर्योर्जमहीवल्लभस्य वातसरिकराज्याभिषेकमहोत्सवः। निखिलेऽपि भारते प्रजाः सम्राज्ञा सहितस्य सपरिवारस्य सम्राजोऽभ्युदयं दीर्घायुष्ट्वं च कामयमानाः स्वेष्टदेवतामाराधितवत्यः। चिरञ्जीवतु सम्राट् समं महिष्या, विस्तारयतु चातुलां कीर्तिम्।

## महाकवेर्बहुमानः।

पाश्चात्येषु "स्वीडन" नामकमस्ति राज्यम्। तत्रहि "आलफ्रेड वार्नहार्ड नोवल" नामकः कश्चनासीद्वैज्ञानिकशिरोमणिः। येनहि "डेनामाइट" नामकमुद्ध्वंसकपदार्थविशेषमाविश्चकार। सहि १८९६ खृष्टाब्दे, निश्चित्यात्मनस्त्वरितमेव लोकान्तरप्रस्थानं, स्वीयं निखिलमपि धनं कस्यापि प्रतिनिधिमण्डलस्य हस्ते न्यधात्। तद्धनं हि द्वे कोटी द्विपष्टीर्लक्षम्, पञ्चाशत्सहस्रञ्चासीत्। महात्मा नोवल महोदय एतावद्धनं प्रदायेत्थं समयकमरोत्, मानवेषु येषामुच्चतमो लोककल्याणकरः प्रयत्नो भवेत्, तेभ्योधनस्यास्य वृद्धिः पञ्चधा विभक्ता देयेति। इदं हि पारितोषिकं पञ्चधा विभक्तम्। प्रतिवर्षं पञ्चभ्यः पुरुषोत्तमेभ्य इदं पारितोषिकं वितीर्यते। (१) प्राकृतविज्ञानम् फिजिक्स, (२) रसायनशास्त्रम्, (३) शारीरतत्वम् (४) साहित्यम् (५) जगति शान्तिस्थापनञ्चेत्येते विषया निर्धारिताः पारितोषिकप्रदानाय। यस्मिन्वर्षे द्वौ पुरुषौ पुरस्कारयोग्यौ निश्चीयेते, तदा तयोर्मध्ये तत्पारितोषिकधनमर्धमर्द्धं विभज्यते।

पुरस्कारप्राप्तौ लोकोत्तरां योग्यतामपहाय नापरःकोऽपि हेतुः। परं साहित्यविषयेऽस्त्येको नियमः। यस्य पुस्तकस्य कृते पुरस्कारप्रदानं निश्चितं भवति, तत्पुस्तकं भवतु यया कयापि वा भाषया लिखितं, परं तस्यानुवादो कयापियूरोपीयभाषया भवितव्यम्। तत्रत्या साहित्यपरिषदेव निश्चिनोति पुरस्करणीयं पुरुषोत्तमम्। नोवलमहोदयस्य मृत्योः परं पञ्चवर्षाणि न प्रदत्तमभवत् कस्मायपि पारितोषिकम्। एतत्पारितोषिकोपलब्धिर्हि महत्सम्मानसूचकमिति कृतं कथनेन।

इदं नोवलपारितोषिकं (Nobel Prize) यूरोपीयविदुषां तपश्चर्यायाः प्रधानं फलम्। साम्प्रतं महाकवये रवीन्द्रनाथ टैगोरमहाशयाय साहित्यपरिषदा वितीर्णमिति यत्सत्यमनेन सुसंवादेनाप्यायितमिव हृदयं भारतीयानां विशेषतस्तु वङ्गीयानाम्। महाकविना निर्मितं गीताञ्जलिनामकं काव्यमेव पारितोषिकयोग्यमभवदितिप्रसिद्धम्। अनया पारितोषिकोपलब्ध्या महाकवेः साधना सफलीभूतेव। एतस्य पारितोषिकस्य मूल्यं विंशतिसहस्राधिकमेकं लक्षम्।

साहित्ये ये महाभागा अद्ययावत पारितोषिकमुपलब्धवन्तस्तेषां नामानि ग्रन्थः सक्षिप्तः परिचयश्चाधस्तान्निर्दिश्यन्ते।

१९०१ खृष्टाब्दे—साली प्रुधोम, एष "फरासी" कविः। एतद्विरचितस्य काव्यस्य नाम 'Stances et Poems'

१९०२ थियोडोर मसमनकविः। एषहि शर्मण्यदेशीय ऐतिहासिकप्रवरः प्रसिद्ध इतिहासतत्वज्ञेषु। एतद्विरचितो रोमसाम्राज्येतिहासः किमपि रत्नम् इति नात्युक्तिः।

१९०३ वार्नष्टार्न वार्नसन, एष नारवे प्रदेशस्य श्रेष्ठः कविरभिनेता, आख्यायिकानिर्माताच। एषहि तत्र कस्या अपि रङ्गशालाया अध्यक्ष आसीत्। एतद्विरचितं नारवे जातीयगीतमतिमधुरं मनोहरं चास्ति'।

१९०४ फ्रेडरिकामिस्ट्राल, जोसे एकगारे,च

१ फ्रे., रक मिस्ट्राल महोदयस्य जन्मभूमिः फ्रान्समध्यवर्तिनी "प्रावेन्स" प्रदेशः। एषहि स्वकवित्वचातुर्येण प्रावेन्सप्रदेशाय साहित्यं समुन्नीतवान्।

२ जोसे एकगारे। एषहि स्पेनदेशीयः सर्वश्रेष्ठः कविः।

१९०५ हेनरिक सिङ्कभिच, एषहि 'पोल', जातीयः। प्रसिद्धश्चोपन्यासनिर्माता।

१९०६ ग्यूसेप्प कार्डूची। "एष इटली" देशीयः कविः पण्डितश्च। एतस्य भूतविषयिणी कविता मनोहरा।

१९०७ राडियार्ड किपलिं, एष आङ्लः, मुम्बई नगरेऽस्य जन्माभवत्। एष प्रसिद्धः कविः साम्राज्यवादस्य चानुपमो वक्ता।

१९०८ राडलफ ऐकन, एष शार्मण्यः। पाश्चात्यपण्डितेष्वेष प्रधानो दार्शनिकः। साम्प्रतमेष "जेनो विश्वविद्यालये" दर्शनशास्त्रमध्यापयति। एतद्विरचिता ग्रन्था बहुषु भाषासूनूदिताः पाठ्यन्ते यत्र तत्र।

१९०९ सेलमा लेजारलफ, इयं स्त्री, स्वीडनप्रदेशीया काप्युपन्यासरचयित्री, प्रतिभावती च।

१९१० पल हेयर्सि, शार्मण्योऽ यमुपन्यासरचयिता प्रधान आख्यायिकालेखकश्च।

१९११ मारिस मेटरलिङ्क, बेलजियमप्रदेशवासी कविरयम्। नाटकनिर्माता दार्शनिकश्च। एष यूरोपीयसाहित्यक्षेत्रे प्रधानो महारथः।

१९१२ जेरहर्टहप्टमेन' एष शार्मण्यः प्रसिद्धश्च नाटकनिर्माता।

१९१३ महाकवी रवीन्द्रनाथठाकुरः।

## विचित्रा दृष्टिशक्तिः।

विषयेन्द्रियसयोगादेव प्रत्यक्षं ज्ञानं जायत इति नियमः। पुरः स्थितमेव वस्तु चक्षुषा प्रत्यक्षीक्रियत इति साधारणोऽयं नियमः। परं हाड द्वीपान्तर्गते कस्मिन्नपि ग्रामे दशवर्षदेशीया कापि बालिका अन्तःपिहितमपि वस्तु लोकविलक्षणशक्तिकया आत्मनो दृष्ट्या प्रत्यक्षी कृत्य वर्णयितुं शक्नोति विजानाति च कस्यापि मानसिकं भावं, प्रथममियं स्वीये ग्राम एवात्मनोऽनुपमां शक्तिं प्रकाशयति स्म। ततस्तस्या असाधारणीभूतायाः शक्तेः परीक्षायै सा नीताऽभवत् न्यूयार्कनगरम्। तत्र हि परीक्षितेयं सम्यक्, डा. जान क्वेकवोन्समहाभागेन। एष हि मनोविज्ञाने, आचारशास्त्रे च प्रथितसमज्ञः पण्डितः। तस्या मानसिकशक्तिं परीक्ष्यैष महाभागो विचित्रास्या दृष्टिशक्तिरित्यवोचत्। नात्र किमप्यसम्भाव्यं भगवतो विधातुः सर्गे।

## अभिनवा आविष्क्रिया।

साइनर उलवी नामकः कश्चन वैज्ञानिकाग्रणी निवसति पाश्चात्येषु। तेन हि साम्प्रतमेव काप्यभिनवा आविष्कृतिः समुद्भाविता। किमपि विद्युत्किरणं (f Ray) नामकमाविष्कृतं महात्मनानेन। यद्धि तन्त्रीसाहाय्यमन्तरापि विद्युद्धारां प्रवाहयितुं शक्नोति। एतेनाभिनवायां युद्धविद्यायां कोऽप्यपूर्वः परिवर्तो घटितः।

## साधनं सिद्धिश्च।

सिद्धिर्हि साधनायत्ता। साधयन्नेव मानव आसादयति सिद्धिम्। असाधकैर्नोपलभ्यते सिद्धिः। करस्था सिद्धिः साधकानाम्। यत्र हि साधकः साधयन्नपि नासादयति सिद्धिं, तत्र केनापि कारणेन तिरोहिता सिद्धिरिति स्वीकर्तव्यम्।

यां विद्यामाराध्य पूर्वे निखिलं ज्ञानजातं करामलकवत् पश्यन्ति स्म, साम्प्रतं तामेवाधीयाना बहुपरिश्राम्यन्तो भारतीयमितिवृत्तमपि ज्ञातुं न क्षमाः। साम्प्रतिकैः संस्कृताध्येतृभिः साधितापि भगवती वाग्देवी न वितरति सिद्धिमेतेभ्यः। किमत्रापराध्यति वाग्देवी? मन्ये साधकापराधः खल्वेष। साम्प्रतिकाः साधका ज्ञानविज्ञानप्रसविनीं सर्वाचार्यभूतां भगवतीं वाग्देवतां न साधयन्ति, साधयितुमुपक्रान्ता अपि न साधनाविधिं प्रतीक्षन्ते साधनसमाप्तावेव फलोपलब्धिर्भवति। मन्येऽधुनातनानां संस्कृतविद्यार्थिनां साधनपूर्तिरेव न भवति, कुतः फलावाप्तिः?

———.

मासिकी संस्कृतपत्रिका ।

विद्ययाऽमृतमश्नुते ।

प्रथमे वर्षे } १९७० विक्रमाब्दाः, पौषः । { तृतीया संख्या,

## चिन्तनप्रक्रिया

कथं भवति चिन्तनम् का रीतिश्चिन्तनस्येति साम्प्रतिकैर्वैज्ञानिकैराविष्कृतं पन्थानमाश्रित्य किञ्चिदत्र विचार्यते । यथा प्रकाशतापादीनां भवति विस्तृतिस्तथा चिन्तनस्यापीति वक्तव्यम् । दूरस्थापि प्रभा प्रतिफलत्यस्माकं नयनयोः, दवीयसोऽपि सूर्यस्य भानुभिः क्लिष्टाङ्गा भवन्ति मानवाः । सति सम्बन्ध एव कस्यापि वस्तुनो गुणदोषपरिज्ञानं भवतीति नियमः । जिह्वासम्बन्धमन्तरा न हि शर्कराखण्डस्य मधुरिमा परिज्ञायते । इत्थं कथं दूरस्था प्रभा तापश्चानुभूयत इति भवत्ययं विषयो विचारस्य । वैज्ञानिकास्तावदत्रेत्थं समादधते, आकाशेन व्याप्तमिदं निखिलमपि जगत् । यत्रोदेति प्रभा तापो वा, तत्र तदुदयसंजातक्षोभादुत्पद्यन्ते आकाशे बहवस्तरङ्गाः । तेषामाकाशतरङ्गाणामेव साक्षा-

-ध्यात्प्रभा तापश्चेत्यादयो भावा अस्माभिः प्रत्यक्षीक्रियन्तेऽनुभूयन्ते च। इत्थमपि दृश्यते यदेको मानवो विजानात्यन्यस्य पुरुषस्य मानसिकं भावम्। अत्राप्याकाशतरङ्गकृतं साहाय्यमेव हेतुं विश्वसन्ति वैज्ञानिकाः।

केचन वैज्ञानिका वदन्ति—यदा कश्चन मानवश्चिन्तयितुमुपक्रान्तो भवति, तदैव तस्य मस्तिष्के रासायनिकः कश्चन क्षोभः समुत्पद्यते। तस्मात् क्षोभादेव भवत्याकाशतरङ्गाणां समुत्पत्तिः ते च परितः प्रसर्पन्ति।

इयं हि तरङ्गपरम्परा तत्सम्बन्धिनां सर्वेषामेव मस्तिष्के यत्किञ्चित् क्षोभं जनयति परं नहि सर्वोऽपि जनस्तदनुभवितुं शक्नोति चिन्तयिता (thought reader) तु तत् त्वरितमेव विजानाति। यस्य मस्तिष्कं तदाकाशतरङ्गान् ग्रहीतुं, तत्क्षोभमनुभावितुं च शक्तं भवति, स एव परस्य मानसिकं भावं विज्ञातुं शक्नोति।

कदाचिदनभ्यस्तमस्तिष्कमपि गृह्णाति तरङ्गानेतान्, यथा कापि माता विदेशं गतस्य तनयस्य विपत्तिं गृहकोणस्थितापि ज्ञातुं पारयति। तत्र हि तरङ्गाणां प्राबल्यमेव हेतुं निश्चिनुमः। यतो विपदमनुभवतः पुत्रस्य हृदयं सदा मातुश्चरणयोरेव संलग्नं भवति। सर्वदा तामेव चिन्तयति, इत्थमुपजायते मस्तिष्कतरङ्गाणां प्राबल्यम्। मातुरपि भवति तथैवावस्थेति तस्या अपि मस्तिष्कं चिन्तातरङ्गग्रहणायोपयुक्तं जायते।

इत्थं यथा प्रभाकाशतरङ्गसङ्घाश्चक्षुषोर्ग्रहणविषयत्वमेति, यथा वा ताप आकाशतरङ्गेण समं कृतसम्बन्धस्त्वचा तापमानयन्त्रेण च प्रत्यक्षीक्रियते, तथा चिन्ताया अपि समुद्भवन्त्याकाशतरङ्गाः, तेच तद्ग्रहणोपयुक्तेन मस्तिष्केन गृह्यन्ते।

सर्व एव मानवः प्रतिक्षणं किञ्चिच्चिन्तयन्नेव तिष्ठति, अत एवाजस्रं चिन्तातरङ्गाः परितः प्रसर्पन्ति, आहताश्च भवन्ति। परमद्य यावत्तेषां चिन्तातरङ्गाणां सत्तां प्रमाणयितुं नकोऽप्युपायो निर्दिष्टोऽभवज्जडविज्ञानेन। छायाग्राहियन्त्रेण नास्य छाया गृह्यते, किञ्च नानेन प्रकाशोत्तापचुम्बकादयः पदार्था आविष्कृताः। परमेको मानवः स्वमस्तिष्कतरङ्गान् परस्य मस्तिष्के सञ्चार्य तं वशयितुं शक्नोतीति विषयोऽयं फ्रांसदेशस्य प्रधाने धर्माधिकरणे ननु प्रमाणीभूतः। कस्यचित्सच्चिन्तया तदीयोऽपरोऽपि वन्धुः सच्चिन्तयितुं शक्नोतीति सत्सङ्गमहिमा वर्णितोऽस्माकं ग्रन्थेषु।

समुन्नतिङ्गते विज्ञाने कोपि रासायनिकः पदार्थ आविष्कृतो भविष्यति, यस्य विश्लेषणं केवलं चिन्ताशक्तिरेव कर्तुं पारयिष्यतीति केषाञ्चन वैज्ञानिकानां विश्वासः। यथा साम्प्रतं विद्युत्साहाय्यादपरे पदार्थाः। ते वदन्ति, यद्यभिश्चिन्तातरङ्गैर्मस्तिष्के परिवर्तनमुत्पाद्यते किञ्चदिति यदाङ्गीक्रियते, तदैतदप्यवश्यमङ्गीकर्तव्यं यत्तेषां तरङ्गाणां बाह्येऽपि कस्मिन्नपि पदार्थे किमपि चिन्हं भवत्येवेति।

दूरं सम्भवत्ययमर्थः । यत उदिते मेरुज्योतिषि बहुदूरस्थितापि दिग्दर्शनयन्त्रशलाका कम्पिता भवति, सूर्यमण्डलले च कलङ्कसंख्या परिवृद्धा भवति । अयमसम्भवोऽप्यर्थः साम्प्रतं प्रमाणीभूतः सत्यतया गृह्यते ।

अपरे वैज्ञानिका वदन्ति—मस्तिष्के जायमानं रासायनिकं परिवर्तनं नहि वैज्ञानिकप्रयोगशालासु प्रत्यक्षीकर्त्तुं शक्यते । अतो मस्तिष्कपरिवर्त्तनं कल्पितमित्यङ्गीकर्तव्यम् परिवर्तनलक्षणं वा व्यापकं विधेयम् । मस्तिष्कोपादाने तथाविधः कोऽपि स्थूलः पदार्थो यो नाद्य यावदधिगतो वैज्ञानिकैरित्यप्यङ्गीकर्तव्यमिति । अस्यायं स्फुटोऽर्थः उद्भवप्रलयचिन्तनप्रभृतीनां विषयाणां तत्वं नाद्य यावद्वैज्ञानिकैरधिगतमिति । तथाप्यत्रात्मनो मतं प्रकाशयितुं समुत्का वैज्ञानिकाः, अत्रेदं कारणं भवितुमर्हति, यदेत एवंविधैरेवोपन्यासैरात्मनो मनसस्तोषमिच्छन्तीति । निसर्गः किलैष मानवानां यदात्मनोऽज्ञतामाच्छादयितुं ते प्रयत्नवन्तो भवन्तीति अतस्तेऽज्ञातेऽपि विषये बहुपरिश्रम्य अज्ञोचितामात्मनः सम्मतीः प्रकाशयितुं न त्रपन्त इति । अत्रह्यज्ञा अभिज्ञाश्चोभावपि समस्वभावौ । मध्यान्हे मेघमन्तरापि पिहितमण्डलं सूर्यं निरीक्ष्य, राहुजनितोऽयमुपप्लव इति कल्पयन्त्यज्ञाः । प्रभाप्रसारः तापोन्मीलनम् तन्त्रीर्विना संवादप्रेरणमित्यादीनां यथार्थं हेतुमनाकलयन्तोऽभिनवमाकाशतरङ्गं स्थिरीकुर्वन्त्यभिज्ञाः ।

कोऽयमाकाशतरङ्गो नाम? किमयं बहूनां पदार्थानां, सयोगादुत्पन्न उत मूलभूतः कश्चनैक एव पदार्थः । अस्ति तत्र कोऽपि भेद इति नैवविधानां प्रश्नानामुत्तरदाने समार्थाः साम्प्रतिका वैज्ञानिकाः । अत एवाद्य यावदाकाशतरङ्गस्य नामकरणसंस्कारोऽपि न जातः । परं नवो नवः कार्यभारो विन्यस्यते शिरस्येतस्य । साम्प्रतं वैज्ञानिकैः कृतामाकाशतरङ्गस्य दुरवस्थामवलोक्य बिभेत्यन्तरात्मा, द्रवीभवति च मनो, यदित्थं कदाचिदेष आकाशतरङ्ग एव नामशेषतामासादयिष्यतीति । यथास्य ज्यायान् केलोरिकनामकः पदार्थः । (Calorie) पुरा वैज्ञानिका वदन्ति स्म, यदतिसूक्ष्मस्तरलश्च कोऽपि पदार्थः "केलोरिक" नाम । एतन्मुखेनैवोष्मा पदार्थात् पदार्थान्तरमुपसंक्रामतीति । सूर्याग्निकिरणेषु चास्य समुपलभ्यतेऽधिको भागः । अत एतेषां समीपस्थेषु पदार्थेषु संक्रान्तोऽयं केलोरिकपदार्थस्तंपदार्थमपि समुत्तापयतीति । परं विज्ञानाभ्युदयेनायं सिद्धान्तस्तिरस्कृतो, दूरं निरस्तः साम्प्रतिकैर्वैज्ञानिकैः । यदा विद्युद्भाण्डे संलग्नया तन्त्र्या समुत्तापितो दूरं स्थितः पदार्थः, तन्त्री च नोत्तापमभजत्, ततः प्रभृत्येव "केलरिक" पदार्थस्य विगलिता प्रतिष्ठा वैज्ञानिकसमाजेषु । तस्य च स्थानं स्पन्दवादाय (Vibration Toeory) प्रदत्तमभवत् । आकाशतरङ्गस्यापीत्थमेव भविष्यतीति शक्यते लक्षणैर्निश्चेतुम् । अद्य यावदाकाशतरङ्गविषयको ज्ञातोऽयमुदन्तः । अतीन्द्रियः सूक्ष्मः शिथिलश्च कोऽपि पदार्थ आकाशतरङ्गो नामेति ।

अयं सूक्ष्मः शिथिलश्चाकाशतरङ्गः कथं स्थूलैः पदार्थैर्मिश्रीभावमेति, कथं वा कठिनेषु पदार्थेष्वनुप्रविश्येदं जगत्स्रष्टुं प्रभवतीति विवेचनीयोऽयं विषयः। केचित्त्वनेनैव हेतुनाकाशतरङ्गस्य सत्तामप्यङ्गीकर्तुं नेहन्ते। श्रीमता वैज्ञानिकेन लार्डकेलविनमहोदयेन मनोरमं समाहितोऽयं विषयः। वायव्यास्तरलाश्च पदार्था यदा गतिशून्या भवन्ति तदा तेषां घनत्वं न भवति, परं वैज्ञानिकप्रणाल्या समुत्पादिते वेगे तेऽपि ननु संहता भवन्त्येव। वात्या जलावर्तश्चात्रोदाहरणम्। केवल वेगसम्पन्नत्वादेवैषां बलवत्त्वं प्रत्यक्षीक्रियते। इत्थमाकाशतरङ्गोऽपि वेगवशाद् घनत्वमुद्भवतीति मायमाश्चर्यकरो वृत्तान्तः।

स हि प्रसङ्गतोऽन्यदपि वदति—यत्ततत् पदार्थानामुपादानभूताः परमाणवो भिन्ना अपि तस्यैवाकाशतरङ्गस्य वेगतारतम्यनिबन्धना तेषामुत्पत्तिरिति। इत्थं हि सर्वेषां पदार्थानां मूलभूत एक एवाकाशतरङ्गनामकः पदार्थ इत्यङ्गीकर्तव्यो वैज्ञानिकैः।

साम्प्रत वैज्ञानिकेष्वपरोऽपि कश्चन सिद्धान्त आत्मानं प्रकाशयितुं प्रयतमानो दृश्यते। एतत्सिद्धान्तस्थापनप्रणयिनो वैज्ञानिका वदन्ति यदस्ति सूक्ष्माणुनामकः कश्चनातिसूक्ष्मः पदार्थः तस्मादेव निखिलानां स्थूलपदार्थानामुत्पत्तिरिति। तस्यैव तत्तत्पदार्थानामारम्भकपरमाणवोऽवस्थान्तरभूता इति।

लार्डकेलभिनमहोदयेनाविष्कृते सिद्धान्ते सन्दिहतेऽपरे वैज्ञानिकाः। एते वदन्ति यदि घूर्णनवेगवशत एव सूक्ष्मोऽप्याकाशतरङ्गो घनत्वमेति तदैतदप्यङ्गीकर्तव्यम्, यदयं भारसहः कश्चन पदार्थः। अङ्गीकृते चास्य भारसहत्वे परमाणुवत्त्वमप्यङ्गीकर्तव्यम्, ते चाणवः स्थितिस्थापकधर्मवन्त इत्यपि ननु स्वीकर्तव्यमेव। स्थितिस्थापकधर्मवत्त्वमपि यद्यङ्गीकृतं चेत्तदा तदारम्भकः कश्चनापर आकाशतरङ्ग इत्यप्यङ्गीकर्तव्यमितीत्थं समापतिता तस्य महोदयस्य गलेऽनवस्थादोषपरम्परा।

केचनाकाशतरङ्गमन्तरापि चिन्ता सम्पद्यत इति वदन्ति। प्रभातापप्रसरणचिन्तनादिकार्येषु किन्निमित्तमेष आकाशतरङ्ग आहूयते? स्वीक्रियते चैतत् यदाकाशे—यत्र न मातरिश्वा प्रवहति—नापि कठिनास्तरला वा पदार्था उपलभ्यन्ते—तत्र चन्द्रसूर्यादीनां प्रभातापयोर्भूतलागमनायाविष्करणीयः कश्चन पन्थाः। तदर्थमाकाशतरङ्गाङ्गीकरणे न कोऽपि प्रतिषेधति, परमित्थं चिन्तनमप्याकाशतरङ्गसाहाय्यादेव भवतीत्यङ्गीकारो न शक्यते स्वीकर्तुं प्रेक्षावद्भिः।

श्रीचन्द्रचूड़ शर्मा

---

# भारतीयमितिवृत्तम्

—:०:—

वासुदेवे कनिष्कस्य पौत्रे कालगतिं गते।
नाधिराज्यमभूदत्र कस्याप्यब्दशतं भुवि ॥१॥
अधिराजपदस्यार्थं विलुप्ते नातिविश्रुताः।
स्वतन्त्राः क्षुद्रसामन्ता ये केचिदभवन्क्वचित् ॥२॥

कनिष्कस्य कियत्कालात्परं कश्मीरमण्डले।
अभिमन्युरिति ख्यातो नृपोभूद्विबुधाश्रितः ॥३॥
चन्द्राचार्यादिभिर्लब्ध्वा तादादेशं प्रयत्नतः।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम् ॥४॥
शतद्वये शकाब्दानामधित्रिंशे गते ततः।
चन्द्राख्यो गुप्तवंशीयो नृपतिर्मगधानशात् ॥५॥
प्रायश्चन्द्रस्य समये दीपवशो विनिर्मितः।
यत्र सिंहलराजानामितिवृत्तं न्यबध्यत ॥६॥
कुमारदेवी तस्यासीद्देवी लिच्छविकन्यका।
जातः समुद्रगुप्ताख्यो महौजास्तनयस्तयोः ॥७॥
अब्दान्सप्तदश प्राज्यं राज्यं कृत्वा गतेत्ययम्।
चन्द्रे समुद्रो राजाभूदाजानुविलसद्भुजः ॥८॥
प्रशस्तिरधुनाप्यस्य हरिषेणविनिर्मिता।
प्रयागऽदुर्गेऽशोकस्य शिलायामवलोक्यते ॥९॥
समये प्रहितस्तस्य कसतन्तुमहाभुजे।
भारतीयो राजदूतः कसतन्तुपुरीमगात् ॥१०॥
पुष्पाह्वयं पुरं पूर्वं साकेताख्यं पुरं ततः।
समुद्रगुप्तराज्यस्य राजधानीं विदुर्बुधाः ॥११॥
विजित्य भारतं सर्वं काम्बोजैः कृतसंधिकः।
पूजितो मेघवर्णेन सिंहलेशेन भूपतिः ॥१२॥
इष्टवानश्वमेधेन राज्यं पञ्चाशतं समाः।
समुद्रगुप्तः संपाल्य प्रयातः स्मृतिशेषताम् ॥१३
न किलानुययुस्तस्य राजानो रक्षितुर्यशः।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता१४
चन्द्रगुप्तोस्य तनयो दत्तदेवीतनूभवः।
जगाम विक्रमादित्य-नाम्ना ख्यातिं महीतले ॥१५॥
सिन्धोः पारे स बाह्लीकान्सौराष्ट्रे शकसत्रपान्
विजित्य भारतस्यासीदेकच्छत्रो महीपतिः ॥१६॥

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा।
तथैव सोभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥१७॥
राजन्वती धरा तेन सतामप्यन्यभूभुजाम्।
ताराग्रहादियुक्तापि रात्रिर्ज्योतिष्मतीन्दुना ॥१८॥
विक्रमे विक्रमांकस्य भारतं परिरक्षति।
चीनः फाहियनाख्योत्र तीर्थयात्रार्थमागतः ॥१९॥
अन्विष्यन्विनयाख्यं स पिटकं मथुरापुरे।
कान्यकुब्जेषु यत्नेन श्रावस्त्यां कपिले ततः ॥२०
कुशीनगरवैशालि-काशीपाटलिषु भ्रमन्।
ताम्रलिप्त्यां सिंहले च यवद्वीपे ततो वसन् ॥२१॥
बुद्धभद्रसखो यासीच्चीनान्सुचरितप्रियः।
लिलेख च स्वयात्राणामितिवृत्तं महामनाः ॥२२॥
सुधीः सोपि स्वलेखेषु गुप्तराज्यस्य भारते।
सुरक्षितस्य सर्वत्र शश्वन्निर्दस्युता जगौ ॥२३॥
समये विक्रमांकस्य कालिदासमहाकविः।
रघुवंशादिकाव्यानि कल्पस्थायीनि निर्ममे ॥२४॥
भासशूद्रकसौमिल्ल-प्रमुखैः पूर्वसूरिभिः।
कालिदासो नवीचक्रे क्षुण्णां नाटकपद्धतिम् ॥२५॥
नाडिन्धमोमरुककविः शृंगारकवितागुरुः।
शृङ्गारशतकं चक्रे चन्द्रगुप्ते प्रशासति ॥२६॥
समुद्रगुप्ते तत्पुत्रे चन्द्रगुप्ते च शासति।
जीर्णोद्धारः पुराणानां स्मृतीनां च व्यधीयत ॥२७॥
सति पाटलिसाकेतोज्जयिन्याख्ये पुरत्रये।
राजधानीत्वयोग्ये भूच्चन्द्र उज्जयिनीप्रियः ॥२८॥
अष्टत्रिंशतमब्दानामद्वितीयातपत्रकम्।
परिपाल्योर्जितं राज्यं शकशत्रुर्गतोत्ययम् ॥२९॥
समयेष्वेष्वभूद्धीमान्दिङ्नागो बौद्धतार्किकः।
निरास्थत्पक्षिलन्यायं यः प्रमाणसमुच्चये ॥३०॥

दिङ्नागस्याभवत्प्रत्याद्देष्टा तस्मात्कियत्परम्।
न्यायवार्त्तिककृद्विद्वानुद्योतकरनामकः ॥३१॥
महानाम्नो गयास्थायां प्रशस्तौ दृश्यते स्फुटम्।
लेखे दशपुरीयं च कुमारस्य समानता ॥३२॥
कालिदासीयपद्यानामिति साहित्यविन्मतम्।
एतत्कालिकमाहुस्तमतोपि सुपरीक्षकाः ॥३३॥
कुमारगुप्तः पुत्रोभूद्विक्रमादित्यभूभुजः।
योरीनमारयद्वीरः कौमारेप्यमरोपमः ॥३४॥
दिङ्नागस्य गुरुर्धीमान्वसुबन्धुरिति श्रुतः।
विक्रमादित्यपुत्रस्य वृद्धामात्योभवच्चिरम् ॥३५॥
कालिदासः कविः श्रीमान्विक्रमादित्यभूभुजः।
अंशतस्तत्सुतस्यापि कालेभूदिति केचन ॥३६॥
प्रायः कुमारगुप्तस्य समयेद्भुतशक्तिभाक्।
कथां वासवदत्ताख्यां सुबन्धुर्विनिबद्धवान् ॥३७
अस्मिँश्च समये काव्यं जानकीहरणं व्यधात्।
कुमारदासो नृपतिःप्रथितः सिंहलेश्वर ॥३८॥
जानकीहरणं कर्तु रघुवंशे स्थिते सति।
कविः कुमारदासश्च रावणश्च यदि क्षमौ ॥३९॥
शकारिसूनुर्वसुधां त्रिचत्वारिंशतं समाः।
प्रपाल्य विधिवद्वीरो जगामालेख्यशेषताम् ४०
सुतोभूत्स्कन्दगुप्तोस्य हूणवंशदवानलः।
नलोपमः शरीरेण रैणुकेय इवौजसा ॥ ४१ ॥
स्कन्दगुप्तस्य समये जातः कुसुमपत्तने।
ज्योतिर्विदग्रणीर्लल्ल-गुरुरार्यभटाभिधः ॥४२॥
महानाम्नो महावंशो दीपवंशानुगोभवत्।
इतिहासः सिंहलानां स्कन्दगुप्ते प्रशासति ॥४३॥
नैकवारान्विजिग्येसौ हूणाँस्तूलमिवानलः।
विजये च विनीतात्मा बहुविष्णुपूर्त्तमाचरत् ४४

पर्णदत्तः सुराष्ट्रेषु तेन शास्त्रा नियोजितः।
सुदर्शनं नवीचक्रे यत्सुतश्चक्रपालितः ॥४५॥
अन्तर्वेद्यां सर्वनागः कृतस्तेन प्रशासकः।
इत्थं प्रशास्तृभिः सर्वं भारतं प्रशशास सः ४६
स्कन्दगुप्ते यशःशेषे हूणैर्बलमदोद्धतैः।
उपद्रुता भारतभूरशान्त्या पीडिता चिरम् ॥४७॥
चतुर्विंशतिमब्दानां कृतराज्ये मृते ततः।
स्कन्दगुप्तस्य पुत्रोभूत्पुरगुप्तो महीपतिः ॥४८॥
प्रकाशादित्य इत्यन्यामाख्यां दधदसौ नृपः।
विशुद्धस्वर्णमुद्राणां प्रचारमकरोद्भुवि ॥४९॥
स्थिरगुप्ताभिधाप्यस्य दृश्यते यत्रकुत्रचित्।
वत्सदेवी बभूवास्य धर्मपत्नी महामतेः ॥५०॥
कृत्वा पांचाब्दकं राज्यं पुरगुप्ते गतेत्ययम्।
तत्पुत्रो नरसिंहाभून्महादर्वोपातनृपः ॥५१॥
राजदूता भारतीयाः कसतन्तुपुरं ययुः।
नरसिंहस्य समये प्रहिता रामभूभुजे ॥५२॥
ज्योतिर्विदस्य समये पञ्चसिद्धान्तिकां सुधीः।
तथा बृहत्संहितां च वराहमिहिरो व्यधात् ५३
वराहमिहिरात्किंचिदर्वाचीनोभवत्सुधीः।
ब्रह्मगुप्ताभिधो ब्रह्म-सिद्धान्तं प्रणिनाय यः ५४
म्लेच्छान्धतमसादित्यो बालादित्यापराभिधः।
नरसिंहो दधे राज्यं पांचोनार्धशताब्दिकम् ५५
त्वरमाणाख्यहूणोथ शाकलस्य नृपो बली।
मध्यभारतमाक्रामन्नरसिंहेण निर्जितः ॥५६॥
अथ म्लेच्छगणाकीर्णे मण्डले चण्डविक्रमः।
त्वरमाणस्य मिहिर-कुलः पुत्रोभवन्नृपः ॥५७॥
सांनिध्यं यस्य सैन्यान्तर्हन्यमानाशनोत्सुकान्।
अजानन्गृध्रकंकादीन्दृष्ट्वाग्रे धावतो जनाः ५८

दिवारात्रं हतप्राणिसहस्रपरिवारितः ।
योभूद्भूपालवेतालो विलासभवनेष्वपि ॥५६॥
बालेषु करुणा स्त्रीषु घृणा वृद्धेषु गौरवम् ।
न बभूव नृशंसस्य यस्य घोराकृतेर्मृतः ॥६०॥
स जातु देवीं संवीत-सिंहलांशुककञ्चुकाम् ।
हैमपादांकितकुचां दृष्ट्वा जज्वाल मन्युना ६१
सिंहलेषु नरेन्द्राङ्घ्रि-मुद्रांकः क्रियते पटः ।
इति कञ्चुकिना पृष्टेनोक्तो यात्रामदात्ततः ६२
तत्सेनाकुम्भिदानाम्भो-निम्नगाकृतसंगमः ।
यमुनालिंगनप्रीतिं प्रपेदे दक्षिणार्णवः ॥६३॥
स सिंहलेन्द्रेण समं संरम्भादुदपाटयत् ।
चिरेण चरणस्पृष्ट-प्रियालोकनजां रुषम् ॥६४॥
दूरात्तत्सैन्यमालोक्य लंकासौधैर्निशाचराः ।
भूयोपि राघवोद्योगमाशङ्क्य प्रचकम्पिरे ॥६५॥
व्यावृत्य चोलकर्णाट-लाटादींश्च नरेश्वरान् ।
सिन्धुरानिव गन्धेभो गन्धेनैव व्यदारयत् ६६
तस्मिन्प्रयाते प्रासेभ्यः शशंसुस्तत्पराभवम् ।
नगर्यो नरनाथेभ्यस्त्रुट्यदट्टालमेखलाः ॥६७॥
कश्मीरं द्वारमासाद्य श्वभ्रभ्रष्टस्य दन्तिनः ।
श्रुत्वा स त्रासजं घोषं तोषरोमाञ्चितोभवत् ६८
तदाकर्णनसंरम्भे सहर्षोथ विरुद्धधीः ।
शतमन्यद्गजेन्द्राणां हठेन निरलोठयत् ॥६६॥
क्रूरक्रियोसौ मिहिरः पशुमारममारयत् ।
आर्यसिंहादिकान्बौद्धानन्धो बलमदाद्धीः ७०
जातुचिद्यातुधानाभो नभो धूसरयन्नसौ ।
उपदुद्राव मिहिर-कुली मगधकोसलान् ॥७१॥
स्कन्दगुप्तस्य वंश्येन बालदित्येन भूभुजा ।
मालवेशयशोधर्म-देवेन च स निर्जितः ॥७२॥

निष्पिष्य हूणान्मिहिर-कुलो वन्दीकृतोप्यसौ ।
बालादित्येन कृपया मुक्तः कश्मीरकाननगात् ७३
चिरात्राय भुक्त्वा स भुवं भूलोकभैरवः ।
भूरिरोगार्दितवपुः प्राविशज्जातवेदसम् ॥७४॥
प्रजापुण्योदयैस्तीव्रैस्तस्य क्षयमुपेयुषः ।
प्रपौत्रो वसुनन्दोभूत्प्रख्यातः स्मरशास्त्रकृत् ७५
कालेनाल्पेन मिहिर- कुलकुल्यैर्नयातिगैः ।
हारिते विपुले राज्ये चिन्तां सुसचिवा ययुः ७६
अथ प्रतापादित्याख्यस्तैरानीय दिगन्तरात् ।
विक्रमादित्यभूभर्तुर्बन्धू राज्येभ्यषिच्यत ॥७७॥
ततः प्रतापादित्यस्य पौत्रः कश्मीरभूपतिः ।
देव्या वाक्पुष्ट्या सार्धं तुञ्जीनोरञ्जयत्प्रजाः ७८
नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः ।
द्वैपायनमुनेरंशस्तत्काले चन्द्रकोभवत् ॥ ७६ ॥
अथ कालेनोज्जयिन्यां श्रीमान्हर्षापराभिधः ।
एकच्छत्रश्चक्रवर्ती विक्रमादित्य इत्यभूत् ॥ ८०॥
नानादिगन्तराख्यातं गुणवत्सुलभं नृपम् ।
तं कविर्मातृगुप्ताख्यः सभास्थानस्थमासदत् ८१
स सेवमानो नृपतिमुद्योगेन बलीयसा ।
अनिर्विण्णो मातृगुप्तः षड्तूनत्यवाहयत् ॥ ८२॥
चिरसेवनसंतुष्टो हर्षविक्रमभूपतिः ।
मातृगुप्ताय कश्मीर-मण्डलस्वामितां ददौ ॥८३॥
हर्षविक्रमकालेभूत्पारसीकोनुशीलवान् ।
पञ्चतन्त्रानुवादं यः स्वविद्वद्भिरकारयत् ॥८४॥
लब्ध्वाथ विक्रमादित्यात्कश्मीरस्वामितां कविः ।
पितेव पालयामास मातृगुप्तः प्रजा निजाः ॥८५
हयग्रीववधं मेण्ठस्तदग्रे दर्शयन्नवम् ।
आसमाप्ति ततो नापत्साध्वसाध्विति वा वचः ८६

अथ ग्रथयितुं तस्मिन्पुस्तके प्रस्तुते न्यधात् ।
लावण्यनिर्याणभिया तदधः स्वर्णभाजनम् ॥८७
अन्तरज्ञतया तस्य तादृश्या कृतसत्कृतिः ।
भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोर्पणम् ॥ ८८ ॥
त्रिगर्तानां भुवं जित्वा कदाचिद्भूपतिर्व्रजन् ।
विक्रमादित्यमरणात्कालधर्ममुपागतम् ॥ ८६ ॥
तस्मिन्नहनि भूभर्त्रा शोकान्निःश्वसतानिशम् ।
नास्नायि नाशि नास्वापि स्थितेनावनताननम् ६०
अथ वाराणसीं गत्वा कृतकाषायसंग्रहः ।
सर्वं सन्यस्य निर्विण्णो मातृगुप्तोभवद्यतिः ॥६१
वीरः प्रवरसेनाख्यः पूर्वराजकुलांकुरः ।
मातृगुप्ते प्रव्रजिते कश्मीराणां नृपोभवत् ॥६२॥
राजा प्रवरसेनोथ नमयन्नवनीश्वरान् ।
अकृच्छ्रलभ्याः ककुभो वृद्धस्य यशसो व्यधात्६३
शुष्यत्तमालपत्राणि शीर्णतालीदलानि च ।
तत्सेनार्णवतोराणि चक्रिरे स्त्रीमुखानि च ॥६४
वितस्तायां स भूपालो बृहत्सेतुमकारयत् ।
ख्याता ततः प्रभृत्येव तादृङ्नौसेतुकल्पना ॥६५
सिंहासनं स्ववंश्यानां तेनाहितद्धृतं तत ।
विक्रमादित्यवसतेरानीतं स्वपुरं पुनः ॥ ६६ ॥
कीर्त्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।
सागरस्य परं पारं कपिसेनेव सेतुना ॥ ६७ ॥
वैरिनिर्वासितं पित्र्ये विक्रमादित्यजं न्यधात् ।
राज्ये प्रतापशीलं स शीलादित्यापराभिधम् ६८
प्रायोस्मिन्समये राजा श्रीप्रभाकरवर्धनः ।
प्रतापशीलान्याख्योभूत्स्थाण्वीश्वरपुरेश्वरः ॥६६
अथ प्रतापशीलस्य राज्ञो देवी यशोमती ।
सुपुवे तनयौ राज्य वर्धनं हर्षवर्धनम् ॥१०० ॥

पितर्युपरते राज्य-वर्धनो मालवैः सह ।
युध्यमानः शशाङ्केन गौडेशेन हतश्छलात् १०१
निहते कान्यकुब्जेशे ग्रहवर्मणि मालवैः ।
वन्दीकृतास्य राज्यश्रीर्भार्या हर्षस्वसा बलात् १०२
पलाय्य बन्धनाद्विन्ध्यकानने भ्रमतिःस्म सा ।
देवतेव वनस्येोग्र-दावनलभयद्रुता ॥ १०३ ॥
स्वसारं गहनेन्विष्य शात्रवेभ्योतिवाह्य च ।
जित्वा शशांकं गौडेशं हर्षो निर्वृतिमाप्तवान् १०४
वलभ्यां ध्रुवसेनं स नेपालांश्चोग्रविक्रमः ।
जितवान्नर्मदापारे निरस्तः पुलकेशिना ॥ १०५॥
स चित्रवर्णविच्छित्ति-हारिणोरवनीपतिः ।
कृतीव मृगयुश्चक्रे योगं वाणमयूरयोः ॥१०६॥
भट्टारहरिचन्द्रेण तथा क्षुण्णं सुबन्धुना ।
गद्यमार्गं नवीचक्रे वाणो हर्षसभामणिः ॥ १०७॥
सभायां हर्षदेवस्य तीर्थयात्रार्थमागतः ।
मतिमान्हयशृंगाख्यश्चीनश्चक्रे चिरं स्थितिम् १०८
प्रयागे धार्मिकाणां या हर्षेण समितिः कृता ।
उपस्थितोभवत्तत्र हयशृंगो महामतिः ॥ १०६ ॥
अस्मिंश्च समये वृत्तिं काशिकाख्यां प्रणिन्यतुः ।
तौ वामनजयादित्यौ पाणिनीये सुविश्रुताम् ११०
रत्नावलीं तथा नागानन्दं च प्रियदर्शिकाम् ।
रूपकत्रितयं चक्रे श्रीहर्षो निपुणः कविः ॥१११॥
वलभीशो हर्षकाले शीलादित्यो नृपोभवत् ।
स शत्रुंजयमाहात्म्यं चक्रे यस्मै धनेश्वरः ११२
हर्षस्य समये टीकां दुर्विनीतो विनिर्ममे ।
काव्ये किरातार्जुनीये विद्वान्भारविनिर्मिते ११३
श्रीहर्षनृपतेः प्रायः समकालभवोभवत् ।
प्रवीरःपुलकेश्याख्यो दाक्षिणात्यो नराधिपः ११४

निरस्तो यस्य वीर्येण हर्षः सत्त्वोद्धतोप्यसौ।
नर्मदां लंघयामास नावेलामिव तोयधिः ॥११५॥
रविकीर्त्तिकृते लेखे पुलकेशिमहीभृतः।
अभिधा कालिदासस्य भारवेश्च निवेशिता ११६
हर्षदेवेत्ययं याते तदमात्योऽर्जुनाभिधः।
तद्राज्यमात्मसात्कृत्य दुर्नयेन व्यनाशयत् ॥११७॥
अविनीतेर्जुने चीनैः प्रसह्य विनिपातिते।
पतिपुत्रविहीनेव नारी भारतभूरभूत् ॥११८॥
सम्राड्विरहितायां च सुचिरं भारतावनौ।
इतस्ततोभवन्केचित्सामन्ता नातिविश्रुताः ११९
प्राच्यां पालाश्च सेनाश्चोदीच्यां कर्कोटकोत्पलाः।
राष्ट्रकूटाश्च चालुक्या
दक्षिणस्यां नराधिपाः ॥१२०॥
महोदयाश्चेदयश्च परमाराश्च भूभुजः।
प्रतीच्यामभवन्वीराः स्वातन्त्र्यंस्वभुवि श्रिताः१२१
गतवति दिवमित्यनल्पसत्वे-
दभुतकृतिशालिनि वीरहर्षदेवे।
परविवरगवेषणोद्यताना-
मियमवनिश्चिरमामिषं बभूव ॥१२२॥

---

इति तृतीया वीचिः ॥

—:०:-

अर्जुने निहते चीनैः कंचित्कालं प्रतापवान्।
आदित्यसेनगुप्तोभून्मगधेषु बली नृपः ॥१॥
आदित्यसेनसमये समभूद्देवनन्दिनः।
पूज्यपादस्य जैनेन्द्र-व्याकृतिर्विदुषां मता ॥२॥
धरसेननृपश्चास्मिन्कालेभूद्वलभीपतिः।
भट्टिस्वामी यस्य राज्ये भट्टिकाव्यं विनिर्ममे ॥३॥
कर्त्ता वाक्यपदीयस्य सारस्य च महामतिः।
कविर्भर्तृहरिर्भट्टि स्वाम्येवेत्येक ऊचिरे ॥४॥
हर्षदेवे कथाशेषे भारते विप्लवाकुले।
गोपालदेवपालाद्यैः पालैर्गंगा धृताश्चिरम् ॥५॥
आदित्यसेनाच्च गते काले कियति मागधम्।
राज्यं वंगाधिपैः पालैस्तद्वंश्येभ्यो व्यलुप्यत॥६
अत्रान्तरे च कर्कोट-वंश्या भूरिपराक्रमाः।
कश्मीरमण्डले भूपा अजायन्त जिगीषवः ॥७॥
प्रजाप्रियोभवत्तेषां चन्द्रापीडमहीपतिः।
यस्य राज्याभिषेकोभूद् भूवार्धिरसवत्सरे ॥८॥
चन्द्रापीडानुजो जातो ललितादित्यभूपतिः।
मुक्तापीड इति ख्यातं यस्य नामापरं भुवि ॥९॥
नयाञ्जलिषु बद्धेषु राजभिर्विजयोद्यमे।
पार्थिवः पृथुविक्रान्तिर्युधि क्रोधं मुमोच यः ॥१०
विनिःसरज्जनतया भयाद् गर्भानिवामुचन्।
द्विषां वसतयो यस्य निशम्यास्कन्ददुन्दुभिम् ११
क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः।
जिगीषोः प्रायशो यस्य यात्रास्वेव ययौ ययौ १२
करं पूर्वदिशो गृह्णन्प्रतापानल्पमंनिधौ।
अन्तर्वेद्यां महाराजः स्वकीर्त्युणीपभृद्बभौ ॥१३
यशोवर्माद्रिवाहिन्याः क्षणात्कुर्वन्विशोषणम्।
नृपतिर्ललितादित्यः प्रतापादित्यतां ययौ ॥१४॥
मतिमान्कान्यकुब्जेन्द्रः प्रत्यभान्कृत्यवेदिनाम्।
दाम यल्ललितादित्यं पृष्ठं दत्त्वा न्यषेवत ॥१५॥
कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् १६।

यशोवर्माणमुल्लंघ्य हिमाद्रिमिव जाह्नवी।
सुखेन प्राविशत्तस्य वाहिनी पूर्वसागरम् ॥१७॥
वनराजिश्यामलेन दिशं वैवस्वतांकिताम्।
स प्रतस्थेऽब्धितीरेण तन्कृपाणेन तु द्विषः ॥१८॥
तस्योर्ध्वजूटाः कर्णाटाः कृतप्रणतयोऽनयन्।
सुवर्णकेतकीस्त्यक्त्वा प्रतापमवतंसताम् ॥१९॥
पश्चिमाद्रे मरुद्व्यस्त वीचेराविर्भवन्त्यभूत्।
द्वारका तस्य सैन्यानां प्रवेशौत्सुक्यदायिनी ॥२०॥
सर्वतोदिक्कमालोक्य जितप्रायांस्ततो नृपान्।
स प्राविशत्सुविस्तीर्णमपथेनोत्तरापथम् ॥२१॥
आकाशरूपविषयादातुरुष्कभुवस्तथा।
जित्वोत्तरापथं राजा प्रत्यगाद्विपयान्निजान् ॥२२॥
अखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त सः।
मार्त्तण्डस्याद्भुतं राजा द्राक्षास्फीतं च पत्तनम् २३
ललितादित्यनृपतेः समये बौद्धतापदात्।
मीमांसावार्तिकान्यासन्भट्टपादकुमारिलात् ॥२४
भवभूतेः कियन्मात्रमर्वाचीनो महाकविः।
मुरारिर्नाटकं रम्यं प्राणैषीदनर्घ्यराघवम् ॥२५॥
ललितादित्यनृपतेः पौत्रः शत्रुनिवर्हणः।
राजा श्रीमाञ्जयापीडः प्राप राज्यं ततः क्रमात् २६
देशान्तरादागमय्य व्याचक्षाणान्क्षमापतिः।
प्रावर्त्तयत विच्छिन्नं महाभाष्यं स्वमण्डले ॥२७॥
क्षीराभिधच्छब्दविद्योपाध्यायात्संभृतश्रुतः।
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः ॥२८॥
विद्वान्दीनारलक्षेण प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमीभर्तुः सभापतिः ॥२९॥
स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम्।
कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात् ॥३०

मनोरथः शंखदत्तश्चटकः संधिमांस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः ॥३१॥
वामनात्किंचिदर्वाचो जज्ञे दण्डिमहाकविः।
कथा दशकुमाराख्या काव्यादर्शश्च विश्रुतः ॥३२॥
जयापीडस्य समये शंकरः केरलेष्वभूत्।
मयावादपरं भाष्यं ब्रह्मसूत्रेषु योऽकरोत् ॥ ३३॥
हलायुधोऽस्मिन्काले भूत्कविः कविरहस्यकृत्।
सूरिश्च जिनसेनाख्यः स जैनहरिवंशकृत् ॥३४॥
मूकः पञ्चशतीं चक्रे प्रायोऽस्मिन्समये कविः।
भल्लटश्च व्यधात्स्वीयं शतकं विदुषां मतम् ३५
शिशुपालवधं चक्रे माघोऽस्मिन्समये कविः।
अन्येऽपि बहवोऽभूवन्कवयः कान्तकीर्तयः ॥३६॥
ललितापीडनामाऽभूत्ततो वसुमतीपतिः।
देव्यां दुर्गाभिधायां यो जयापीडादजायत ॥३७॥
कल्याणदेव्यां संजातो जयापीडमहीभुजः।
संग्रामापीडनामाथ बभूव भुवनेश्वरः ॥३८॥
श्रीचिप्पटजयापीडो बृहस्पत्यपराभिधः।
ललितापीडजो राजा शिशुर्देश्यस्ततोऽभवत् ३९
रत्नाकरः कविर्यस्यानुजीवी काव्यमुत्तमम्।
हरस्य विजयं चक्रे काश्मीरकजनप्रियम् ॥४०॥
धर्मपालसदस्यश्च भट्टनारायणः कविः।
कालेऽस्मिन्नाटकं चक्रे वेणीसंहारनामकम् ॥४१॥
अभिनन्देन कालेऽस्मिन्हारवर्षसभाजुषा।
कृतः कादम्बरीसारो रामस्य चरितं तथा ॥४२॥
पद्मोत्पलककल्याण-मम्मधर्मैः स मातुलैः।
बालकः पाल्यमानोऽभूत्पृथिवीभोगभागिभिः ४३
निरंकुशं चेष्टमानाः शनकैस्त्यक्तशैशवात्।
ते स्वस्त्रीयान्नृपाच्चाशमकुलीनाः शशंकिरे ॥४४॥

अथाभिचारक्रियया मिथः संमंत्र्य पापिभिः ।
राज्येच्छया तैः स्वीयः स्वामी च सनृपो हतः ४५
सापत्यास्ते बुभुजिरे राज्यं स्वामिविवर्जितम् ।
निर्जने महिषं शान्तं मिथः सेर्ष्या वृका इव ४६
तेषामाक्रान्तदेशानां नाममात्रमहीपतीन् ।
तांस्तान्कर्तुमसामान्यान्विरोधोन्योन्यमुद्ययौ ४७
अथ मम्मोत्पलकयोरुदभूद्दारुणो रणः ।
रुद्धप्रवाहा यत्रासीद्वितस्ता सुभटैर्हतैः ॥४८॥
कविर्बुधमनःसिन्धु–शशांकः शंकुकाभिधः ।
यमुद्दिश्याकरोत्काव्यं भुवनाभ्युदयाभिधम् ।४६।
सचिवैरथ धीमद्भिः प्रजाविप्लवशान्तये ।
उत्पलस्यावन्तिवर्मा पौत्रो राज्येभ्यषिच्यत ५०
अवन्तिवर्मा साम्राज्यं प्राप्य पाटितकण्टकः ।
चकार चरितैश्चित्रैः सतां कण्टकितं वपुः ॥५१॥
विच्छिन्नप्रसरा विद्या तस्य शूरेण मन्त्रिणा ।
सत्कृत्य विदुषः सभ्यान्कश्मीरेष्ववतारिता ५२
गुणैः क्षितिभुजां योग्यैरुह्यमाना महर्द्धयः ।
बुधाः प्रवृद्धसत्कारा विविशुर्भूपतेः सभाम् ५३
मुक्ताकण; शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात्साम्राज्येवन्तिवर्मणः ।५४।
अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः ।
अवन्तिवर्मणः काले सिद्धा भुवमवातरन् ॥५५॥
जयापीडे क्रमाघाते स्वल्पवीर्येषु राजसु ।
सलिलोपप्लवैरासन्कश्मीराः समुपद्रुताः ॥५६॥
अवन्तिवर्मणः पुण्यैर्जन्तूज्जीवयितुं ततः ।
स्वयमन्नपतिः श्रीमान् सूर्यः क्षितिमवातरत् ५७
यत्र यत्र विवेदौघ-वेधं सलिलविप्लवे ।
तत्र तत्र वितस्तायाः प्रवाहान्नूतनान्व्यधात् ।५८।

जम्बालांका स्फुरन्मीना भूर्बभौ सलिलोज्झिता
व्यक्तकार्ष्ण्या सनक्षत्रा निर्मेघेव नभस्थली ५६
स्फुरत्तरंगजिह्वाः स नदीर्मार्गमजिग्रहत् ।
तास्ताः स्वेच्छानुसारेण मांत्रिकः पन्नगीरिव ६०
उद्धृत्य सलिलादुर्वीमेवमादिवराहवत् ।
अनेकजनसंकीर्णान्ग्रामान्नानाविधान्व्यधात् ६१
भट्टनारायणो धीमान् रुद्रटाद्यास्तथापरे ।
प्राय एतेषु कालेषु बहवः कवयोभवन् ॥६२॥
अवन्तिवर्मणः प्रायो नृपस्य समकालिकः ।
कान्यकुब्जेश्वरो भोज मिहिरोभून्महाबल ६३
अस्य चादिवराहाख्यां बिभ्रतः समये कविः ।
विशाखदेवः कृतवान्मुद्राराक्षसनाटकम् ॥६४॥
प्रायोस्मिन्समये श्लेष कविर्भट्टत्रिविक्रमः ।
दमयन्तीकथां चक्रे नलचम्पूपराभिधाम् ॥६५॥
तनयस्तस्य नृपतिर्महेन्द्रसमविक्रमः ।
अभून्महेन्द्रपालाख्यो वाङ्मयाम्भोधिचन्द्रमा ६६
कविः कर्पूरमञ्जर्या बालरामायणस्य च ।
उपाध्यायो महेन्द्रस्य समभूद्राजशेखर. ६७
महेन्द्रपालपुत्रेथ महीपाले प्रशासति ।
आर्यक्षेमीश्वरश्चक्रे चण्डकौशिकनाटकम् ॥६८॥
व्यापन्नेवन्तिनृपतौ वीरे कश्मीरमण्डलम् ।
नृपः शंकरवर्माख्यः प्रशशास तदात्मजः ॥६६॥
तस्य श्रीस्वामिराजस्य तनयोदक्पथप्रभोः ।
पूर्णिमेव क्षपाबन्धोः सुगन्धाख्याभवत्प्रिया ७०
तया समं पुरवरे सुरराजोपमो नृपः ।
स्वीये शंकरगौरीश-सुगन्धेशौ विनिर्ममे ॥७१॥
द्विजस्तयोर्नायकाख्यो गौरीशसुरसद्मनोः ।
चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरम् ॥७२॥

समयेष्वेषु च प्रायो विचित्रप्रतिभाभृता।
सूरिवादीभसिंहेन गद्यचिन्तामणिः कृतः ॥ ७३॥
कालधर्मं गते तस्मिन्नृपे शंकरवर्मणि।
सुगन्धाया अविनयाद्राज्यतन्त्रं व्यशीर्यत ॥७४॥
तुञ्जीनचन्द्रपीडादि-प्रजापालप्रियाः प्रजाः।
पार्थपंग्वादिभिरथ क्षपिता राजराक्षसैः ॥ ७५॥
ईद्दृशैर्नृपवेतालैर्भारते भारपीडिते।
तुरुष्को मोहमोदाख्यः क्षते क्षारवदाययौ ॥७६॥
अनेकवारानुन्मत्तो वारणः कलमानिव।
उपदुद्राव विषयान्भारतीयान्स दुर्ग्रहः ॥ ७७ ॥
मथुरासोमनाथादि-तीर्थान्यर्थैकलोलुपः।
ललुण्ठ मूर्त्तिप्रासाद-वेदिकादिविनाशकः ॥७८॥
गांगेयदेवश्चेदीशः कंचित्कालं ततो वली।
सामन्तैर्भारतस्यासीत्पूजितश्चक्रवर्तिवत् ॥७९॥
कालेऽस्मिन्मालवेशोऽभून्मुञ्ज सीयकसंभवः।
यस्य वाक्पतिराजाख्यो विद्वद्गोष्ठीषु विश्रुतः ८०
अतीते विक्रमादित्ये गतेऽस्तं सातवाहने।
कविमित्रे विशश्राम यस्मिन्देवी सरस्वती ॥८१॥
चोलकेरलकर्णाट-लाटचेदिजयोर्जितः।
चालुक्याहवमल्लेन हतः सीयकनन्दनः ॥ ८२ ॥
कृतं मुञ्जमहीपाल-गोष्ठीरत्नेन धीमता।
धनञ्जयेन नाट्यस्य विषये दशरूपकम् ॥८३॥
धनञ्जयेन सुधिया निबद्धे विदुषां मते।
व्याख्यां चक्रेवलोकाख्यां धनिको दशरूपके ८४॥
प्रायोमुञ्जस्य समये नृगराजस्य कस्यचित्।
सदस्यो दर्शनाभिज्ञो वाचस्पतिरभूत्सुधीः ॥८५
नृपो वाक्पतिराजस्यानुजन्मा मानिनां वरः।
सिन्धुराज इति ख्यातो मालवानशिषत्ततः ८६॥

सिन्धुराजस्य चरितं पद्मगुप्तेन निर्मितम्।
यत्साहसांकचरित-नाम्ना विद्वत्सु विश्रुतम् ८७
हूणांश्च कोशलांल्लाटान्वागडान्मुरलांस्तथा।
विजित्य नागवंश्यांस उपयेमे शशिप्रभाम् ॥८८
तत्पुत्रो भोज इत्यासीत्आसीराक्रान्तभूतलः।
परमारकुलोत्तंसः कंसजिन्महिमा नृपः ॥८९॥
चम्पूरामायणं भोजः कण्ठाभरणमप्यसौ।
निबन्धांश्च बहूनन्यान्निबबन्ध महामतिः ॥ ९० ॥
प्रशासति महावीर्ये धरां भोजधराधिपे।
मिश्रदामोदरश्चक्रे महानाटकसंग्रहम् ॥ ९१ ॥
समयेऽस्मिन्नभूत्सूरि-धनपालो महाकविः।
कृता गद्यकथा येन रम्या तिलकमञ्जरी ॥९२॥
गांगेयतनयः कर्ण-देवः संधाय गुर्जरैः।
जितो निष्पिष्टवान्भोजं स स्वयं कीर्तिवर्मणा ९३
गोपालाख्यो महावीर्यः कीर्तिवर्मचमूपतिः।
कर्णदेवं चेदिराजं जित्वाभूत्कीर्तिभाजनम् ॥९४
प्रबोधचन्द्रोदयकृत्कृष्णमिश्रः कविश्चिरम्।
समादृतः सदस्योऽभून्नृपतेः कीर्तिवर्मणः ॥९५॥
कश्मीरभर्त्तानन्तोऽभूद्भोजस्य समाकालिकः।
क्षेमेन्द्रेण कृता ग्रन्था यस्य राज्ये परःशताः ॥९६
पुत्रोऽनन्तस्य कलशस्ततोऽभून्नृपतिः कविः।
राज्ये यस्याभवत्प्रौढो विल्हणाख्यो महाकविः ९७
अत्रान्तरेऽभूत्कल्याण-पुरे चालुक्यविक्रमः।
विक्रमाक्रान्तभुवनो नृपतिस्तेजसां निधिः ॥९८
चोलान्गौडान्कामरूपान्विजित्य नृपतिर्बली।
मालवेशस्य साहाय्यं चक्रे मानवतां वरः ॥९९॥
काश्मीरकेण कविना विल्हणेन महाधिया।
रचितं विक्रमांकस्य चरितं काव्यमद्भुतम् ॥१००

विक्रमांकसदस्योसौ विज्ञानेश्वरपण्डितः ।
याज्ञवल्क्यस्मृतेष्टीकां निबबन्ध मिताक्षराम् १०१
हर्षदेवे यशःशेषे भारते विप्लवाकुले ।
गोपालाद्यैधृ ता वंगाः पालैरिति पुरोदितम् १०२
प्रसह्य तु महीपालाद्वंगानाच्छिद्य वीर्यवान् ।
नृपो विजयसेनाख्यश्चक्रे राज्यं महामतिः ॥१०३॥
पुत्रो विजयसेनस्य महासेनपराक्रमः ।
वल्लालसेननामाभूद् भूमीभर्त्ता लसद्यशाः ॥१०४॥
प्रशास्ता वंगदेशस्य प्रशस्तविनयः सुधीः ।
वल्लालसेनतनयो नयोर्जितपराक्रमः ॥१०५॥
अभूल्लक्ष्मणसेनाख्यो राजा सेनकुलाग्रणीः ।
यो भोज इव विद्यायामनुरक्तः स्वयं कविः ॥१०६
वाग्भटश्चैव शम्भुश्च श्रीपालश्च महेश्वरः ।
रामानुजो भास्करश्च तथा लीलाशुकादयः ॥१०७
वैज्ञानिका दार्शनिकाः कवयश्च महाधियः ।
समयेष्वेष्वजायन्त जरत्यां भारतावनौ ॥१०८॥
गोवर्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि लक्ष्मणस्य सभाभुवि ॥१०९॥
प्रायो लक्ष्मणसेनस्य नृपतेः समकालिकः ।
कान्यकुब्जेषु गोविन्द-चन्द्रो भून्मदनात्मजः ११०
गोविन्दचन्द्रनृपतेः समकालभवोभवत् ।
कश्मीराधीश्वरो भूपो जयसिंहाभिधो बली ।१११
काश्मीरमितिवृत्तं श्रीजयसिंहे प्रशासति ।
चकार कल्हणकविः शुभां राजतरंगिणीम् ।११२।
अस्मिंश्च समये काव्यं श्रीकण्ठचरिताभिधम् ।
काश्मीरकः कविर्मंखो रमणीयं विनिर्ममे ।११३।
राज्ये गोविन्दचन्द्रस्य चक्रे लटकमेलकम् ।
कविः शंखधरो हास्य निधिं प्रहसनोत्तमम् ।११४।

अथ तस्य प्रपौत्रोभूज्जयचन्द्राभिधो नृपः ।
महासमृद्धिशालित्वाद्बलवीर्यमदोद्धतः ।११५।
प्रणेता नैषधीयस्य खण्डनस्य च पण्डितः ।
श्रीहर्षः कान्यकुब्जेश-जयचन्द्रसदस्यभूत् ।११६।
कालेस्मिन्नेव पुत्रोभून्सिद्धराजस्य धीमतः ।
कुमारपालो नृपतिरणहिल्लाख्यपत्तने ॥११७॥
महाधिया सदस्येन सिद्धराजकुमारयोः ।
कुमारपालचरितं हेमचन्द्रेण निर्मितम् ॥११८॥
सखा लक्ष्मणसेनस्य वटुदासोभवत्सुधीः ।
यत्सुतः श्रीधरश्चक्रे सूक्तिकर्णामृतं कृती ।११९।
यद्थानंगपालेन तोमरेणामरत्विषा ।
इन्द्रप्रस्थस्य निकटे दिल्लीदुर्गं विनिर्मितम् १२०
अनंगपालाद्वर्षाणां शते याते तु तत्कुलात् ।
राज्ञा वीसलदेवेन सराष्ट्रं तज्जितं बलात् ।१२१।
तत्र वीसलदेवस्य भ्रातृजो भीमविक्रमः ।
पृथ्वीराजो जयचन्द्र-प्रतिस्पर्धी नृपोभवत् ।१२२।
जयचन्द्रोथ नृपतिर्मदमानसमुद्धतः ।
राजसूयमखे भूपानाजुहाव समन्ततः ॥१२३॥
दासवत्कर्म कुर्वत्सु नृपेष्वन्येष्वनागतम् ।
पृथ्वीराजमसौ स्वर्ण मय द्वारि न्ययोजयत् ।१२४।
राजसूयावसाने च जयचन्द्रनृपात्मजा ।
स्वयंवरा सभामध्यमाजगाम मनस्विनी ॥१२५॥
निबद्धप्रणया चेयं पृथ्वीराजे श्रुतिं गते ।
विलंघ्य नृपतीन्सर्वास्तन्मूर्त्तौ निदधे स्रजम् ।१२६।
प्रियाप्रणयलेखाच्च वृत्तं जानन्नृपोखिलम् ।
पृथ्वीराजः स्वयं वीरस्तत्र संनिदधे रयात् ।१२७।
आदाय वीरो जयचन्द्रकन्या -
मन्यानवाप्यां महनीयकीर्त्तिः ।

स रुक्मिणीं कृष्ण इव स्वराज-
धानीं परानीकनिषूदनोगात् ॥१२८॥
तं श्लाघ्यसंबन्धमपि प्रसह्य
कन्यां हरन्तं ममृषे न मानी।
काम्बोजराजं च समाजुहाव
रणे जयच्चन्द्रनृपः सहायम् ॥१२९॥
काम्बोजराजश्च सहापदीन
इत्थं समाहूत इहाभ्युपेत्य।
स गंगदत्तेन कृताह्वयस्य
लीलां प्रतेने प्रियमर्दनस्य ॥१३०॥
सहापदीने भरतावनीमिमां
सहापदां भूरिभरैरुपागते।
हतेथ पृथ्वीनृपतौ च तच्छला-
सुरोदरक्ताश्रुधरा वसुन्धरा ॥१३१॥

---

इति चतुर्थी वीचिः॥

—:०:—

द्वादशस्य शतस्याभूच्चतुर्दशसमात्यये।
सहापदीनेन कृतं दिल्लीराज्यविनाशनम् ॥१॥
विनाश्य पृथ्वीराजं च ततो वर्षद्वयान्तरे।
सहापदीनस्तृतोभूज्जयच्चन्द्रनिपातनात् ॥२॥
पृथ्वीराजे कथाशेषे जयच्चन्द्रे च पातिते।
बलात्तुरुष्कैराक्रान्तं दिल्लीराज्यं समृद्धिमत् ॥३॥
तैस्तेषामनुगैश्चैव समस्तं भारतं क्रमात्।
पूर्वान्तान्दक्षिणान्तांश्च हित्वा वीर्याद्वशीकृतम् ॥४॥
दासैश्च खिलजीवैश्च तुग्रैरथ च मुद्गलैः।
प्रत्यन्तसंभवैः पञ्च-शताब्दीं भारतं धृतम् ॥५॥
यत्र तत्र कियत्कालं राजपुत्रादयो धराम्।
तुरुष्कविषसप्रायां बुभुजुर्दीनमानसः ॥६॥
रामपाण्डवचन्द्राद्यैर्विधृतामतुलश्रियम्।
बहुदर्शनविज्ञान-जननीं भारतावनिम् ॥७॥
सहापदीनदासैश्च भुज्यमानां प्रपश्यतः।
जनस्य भुवने कृत्स्ने संमोहो बलवानभूत् ॥८॥
द्वादशस्य शतस्याथ द्वात्रिंशेब्दे महामनाः।
श्रीमान्देवगिरावासीत्सिंहो यादवभूपतिः ॥९॥
जैत्रपालश्च कृष्णश्च महादेवादयस्तथा।
तस्य वंश्या धरां धीरा बिभरामासुरोजसा ॥१०॥
द्वादशस्य शतस्यान्ते हेमाद्रिविदुषा कृतः।
महादेवे चतुर्वर्गचिन्तामणिरधीश्वरे ॥११॥
सिंहस्य यादवेन्द्रस्य प्रायेण समकालिकः।
नृपोभूद्वीरधवलो व्याघ्रपल्लीयवंशजः ॥१२॥
तदाश्रितेन रचिता रुचिरा कीर्तिकौमुदी।
सोमेश्वरेण काव्यं च सुरथोत्सवनामकम् ॥१३॥
समाप्तप्रायपूर्वार्द्धे शतकेथ त्रयोदशे।
नगरे विजयाख्योभूच्छ्रीमान्संगमभूपतिः ॥१४॥
मतिमन्तो हरिहर-बुक्कप्रभृतयश्चिरम्।
अभूवंस्तस्य दायादा वसुधाभोगभागिनः ॥१५॥
संगमस्य च बुक्कस्य तथा हरिहरस्य च।
अमात्यौ विश्रुतावास्तां माधवः सायनस्तथा ॥१६॥
सर्वदर्शनकृच्छ्रीमाञ्छृङ्गेर्यां माधवश्चिरम्।
विद्यारण्याख्ययाख्यातोलंचक्रे शांकरीं बृसीम् १७
वेदभाष्यादिरचना-विश्रुतः सायनोभवत्।
प्रबन्धैर्यस्य जरती भूरेषाद्यापि दीप्यते ॥१८॥
आसीच्छाकम्भरीदेशे कालेष्वेषु महाबलः।
हम्मीरनामा नृपतिश्चाहुवाणान्ववायजः ॥१९॥

तदीयसभ्यमुख्यस्य द्विजाग्रयस्याभवत्सुतः।
श्रीमद्राघवदेवस्य धीमान्दामोदराभिधः ॥२०॥
दामोदरस्य तनयः षोडशोने त्रयोदशे।
शते शार्ङ्गधरश्चक्रे पद्धतिं विदुषां मताम् ॥२१॥
चतुर्दशस्य शतकस्यान्ते शान्तात्मनां वरः।
श्रीवल्लभो दार्शनिकः प्रादुरासीद्धरातले ॥२२॥
मायावादादि संदूष्य शुद्धाद्वैतं सुधीरसौ।
प्रकाश्य भगवत्कृष्ण-मतं पुनरजीवयत् ॥२३॥
अत्रान्तरे कलेर्मोहान्निद्रासुखमुपेयुषाम्।
क्षोभाय भारतीयानां कृत्यं वैदेशिकेष्वभूत् ॥२४॥
पाश्चात्यानां कृतिमतां भारतान्वेषिणां चिरम्।
मेर्वन्तेषु तथान्यत्र यात्राः कत्यभवन्निह ॥२५॥
कुलुम्बो भारतान्वेषी प्राप्ते पञ्चदशे शते।
तुंगाब्धेरपरे पारे धीरः प्रापदमेरिकाम् ॥२६॥
वस्काभिधः पूर्त्तगलाभिजनश्च ततः परम्।
आगाद्भारतमन्विष्यन्दक्षिणाम्बुनिधेस्तटम् ॥२७
दक्षिणाम्बुनिधेस्तीरे कलिकूटं विनाश्य च।
प्रवेशमार्गो वस्केन पाश्चात्यानां व्यधीयत ॥२८॥
ततः प्रभृति पोतानां यूरोपविषयादिह।
गतागतैर्वणिज्यायाः संजाता वृद्धिरुत्तमा ॥२९॥
अत्रान्तरे च त्रिसुरो मुद्गलाधिपतिर्बली।
दिल्लीं विलुठ्य विषयान्निजान्प्रापानिवारितः।३०
अपत्यैस्त्रिसुरस्याथ प्रबलैर्वर्बरादिभिः।
प्राकाशि चिररात्राय दिल्लीवाल्लभ्यमद्भुतम्।३१
आसन्नविंशशेषे च ततः पञ्चदशे शते।
बभूव दिल्लीनृपतिर्मुद्गलोर्कवराभिधः ॥३२॥
तद्वंश्यानां च शिल्पादौ व्ययेनार्जयतां यशः।
जगन्नाथादयोभूवन्सदःसु कवयः किल ॥३३॥
रसगंगाधराद्यैश्च प्रबन्धै रसिकप्रियैः।
प्राप पण्डितराजाख्यां जगन्नाथकविः कृती ॥३४॥
अथ विंशतिशेषे च षोडशे शतके नृपः।
अभूदुरगजिह्वाख्यः कुलेर्कवरभूपते ॥३५॥
क्रूरबुद्धिर्नरेन्द्रोसौ देवमन्दिरनाशकः।
जनानुद्वेजयामास रोगः सांक्रामिको यथा ॥३६॥
तस्य सानुचरस्यालं दुर्नयैर्जर्जरीकृतम्।
तुरुष्कराज्यं देशेस्मिन्व्यशीर्यत शनैः स्वयम् ॥३७॥
नृपस्योरगजिह्वस्य समये शत्रुशातनः।
शिवराजो महाराष्ट्रेष्वभवद्बलिनां वरः ॥३८॥
यस्यावदानैर्दिल्लीशः साम्राज्येपि स्थितश्चिरम्।
न जातु लेभे शंकार्तो निद्रासुखमखण्डितम् ॥३९
शिवराजस्य वंश्यानामबलानां महीभुजाम्।
सचिवैर्विश्वनाथाद्यैर्दध्रे राज्यं कियच्चिरम् ॥४०
वाजिराजमहाराजः शशासोर्जितविक्रमः।
समस्तं भारतं प्रायो मज्जत्क्षोभमहाम्बुधौ ॥४१॥
अथ काम्बोजगान्धार-प्रान्तीयैः क्रूरविक्रमैः।
नृपैः कुरुक्षेत्ररणे महाराष्ट्राः पराजिताः ॥४२॥
इत्थं सप्तदशस्यान्ते शकानां शतकस्य तु।
काम्बोजपारसीकाद्यैर्महाराष्ट्रबले हते ॥४३॥
नाममात्रनृपे दिल्ली-नृपतौ च विलुण्ठिते।
भारतं चिररात्राय दस्युभोज्यमजायत ॥४४॥
शतकेष्टादशे प्राप्ते शकानामथ भारतम्।
अन्योन्यलुण्ठनोद्युक्तैर्नृपाभासैरपीड्यत ॥४५॥
केवलं रणजित्सिंहो देशे पञ्चनदाभिधे।
प्रशशासोर्जितं राज्यं बलशाली नराधिपः ॥४६॥
अतीते रणजित्सिंहे दुर्बले च तदात्मजे।
उपद्रुताः पञ्चनदाः सैन्यैस्तस्यानियन्त्रितैः ॥४७॥

नयपाल्योभवद्वीरः सम्राट् फ्रांसनिवासिनाम् ।
स्वभुजार्जितराज्योसौ कालेष्वेषु महामनाः ॥४८॥
नाममात्रे श्रुते यस्य प्रकम्पोजायत क्षणात् ।
रूष्यांग्लमिश्रशर्मण्यतुरुष्कादिमहीभुजाम् ॥४९॥
यत्सैन्यघोषमाकर्ण्य गोपुरान्ते स्त्रियेश्वरः ।
कन्यां स्वमुकुटं चैव हस्ते कृत्वोपतस्थिवान् ॥५०
आगमिष्यन्नसावेनां प्रवीरो भारतावनिम् ।
पाश्चात्यराजैः संभूय निर्जितश्छलिभिर्बली ॥५१
उदस्य त्वांग्लनीतिज्ञै रखिलान्परिपन्थिनः ।
वणिज्यार्थमिहायातैर्विजिता भारतावनि ५२
प्रायोर्धेथ गते त्वस्य शतकस्य प्रियाप्रजा ।
आंग्लवंशधरा राज्ञी व्यक्तोर्जा वसुधामशात् ५३
अनाथां सर्वतो दस्यु-पृतनापरिवारिताम् ।
राज्ञी सनाथयिष्यन्ती स्वीचक्रे भारतावनिम् ५४
सेनाशीतौ शकाब्दानां याते सप्तदशे शते ।
चत्वारिंशद्वया जाता व्यक्तोर्जा भारतेश्वरी ५५
अनस्तमितमार्त्तण्डमखण्डं राज्यमण्डलम् ।
रत्नेनेव बभूवास्या भारतेनाधिकोज्ज्वलम् ५६
बहुयोजनासाहस्र-व्यवधावपि याः स्थिताः ।
बाष्पानसा च पोतैश्च सुगमास्ता भुवोभवन् ५७
न सरिद्भिर्न गिरिभिर्नारण्यैर्न च सागरैः ।
वाणिज्यपत्रवार्त्तादि-प्रचारः प्रत्यहन्यत ५८
अदृष्टाश्रुतपूर्वेषु गत्वा देशेषु भारताः ।
स्वकुर्विज्ञानरत्नानां संग्रहं स्वगृहेष्विव ॥५९॥
विद्युत्संवादशैली च तथासौ सर्वगाभवत् ।
योजनायुतवृत्तस्य ज्ञानं सद्यो यथाभवत् ॥६०॥
विद्युद्बाष्पादियन्त्राणामाविष्कारान्नृणामभूत ।
स्थले जले च वायौ च प्रायः किंचिन्न दुर्लभम् ६१

धर्मस्य विप्लवं हित्वा यत्राचारे नृणां रुचिः ।
तमेव तेन्ववर्त्तन्त स्वच्छन्दमविशंकिताः ॥६२॥
अन्विष्यान्विष्य निर्धूतोप्यज्ञानमृग उन्मदः ।
शासकैर्वसतिं चक्रे हृद्गर्ते मतवादिनाम् ॥६३॥
प्रतारकाणां मूर्खाणां जातिवेषादिजीविनाम् ।
गतानां तामसीं तन्द्रां शनकैरादरो गतः ॥६४॥
विदुषां सत्वयुक्तानां जनोपकृतिचेतसाम् ।
जाग्रतां कृतबुद्धीनामवर्धत समादरः ॥६५॥
प्रायतन्त प्रशास्तारो यथा विज्ञानवृद्धये ।
तथा विहाय वैमत्यमयतिष्यन्त चेज्जनाः ॥६६॥
नूनं वैज्ञानिकाग्रगाणां महर्धीनां कृतात्मनाम् ।
अभविष्यन्महत्क्षेत्रमचिरेणैव भारतम् ॥६७॥
व्यक्तोर्जया रक्षितायां सुचिरं भारतावनौ ।
प्रज्ञाचक्षुर्महशक्तिरभूद्गोवर्धनः कविः ॥६८॥
गते पण्डितराजे द्यामपुत्रा भारती चिरम् ।
आनन्दिता सुपुत्रेण पुनर्येन महाश्रिया ॥६९॥
आद्यव्रतेन राज्ञाथ व्यक्तोर्जासूनुनाभवत् ।
समृद्धायतराज्येन सनाथा भारतावनिः ॥७०॥
द्विशतोनद्विसाहस्र्यां गतायां सैकविंशतौ ।
शकाब्दानामभूत्सम्राट् श्रीमानाद्यव्रतो भुवि ७१
समयेस्याभवद्युद्धं कर्पूरद्वीपवासिनाम् ।
जिगीषूणां सम रूष्यै रूष्या यत्र पराजिताः ॥७२॥
श्रीजयोर्जनृपेणास्य नृपतेस्तनुजन्मना ।
विजयोर्जितसत्त्वेन वर्तते भारत धृतम् ॥७३॥
शकाब्दानां सहस्रे द्वि-शताढ्ये त्रिंशता युते ।
अतीते श्रीजयोर्जस्य राज्यारम्भोभवद्भुवि ॥७४॥
शर्मण्यानां बलियमो रूष्याणां निचुलो नृपः ।
शास्ता योपिहितश्चाद्य कर्पूरद्वीपवासिनाम् ॥७५॥

अमेरिकाप्रदेशे च फ्रांसदेशे च विश्रुते ।
प्रजाराज्यं प्रजाप्रीति-निध्यनिघ्नं विजृम्भते ७६
साम्राज्ये श्रीजयोर्जस्य काश्यां गंगाधरः कविः ।*
पदवाक्यप्रमाणानां पारदृश्वास्ति संप्रति ॥७७॥
काव्यशक्तिनवोद्भिन्ना चरिते बालशास्त्रिणाम् ।
फलिता यस्य संलपे मधुरेल्लिविलासिनीः ७८
गतार्थोऽपि जगन्नाथो नापेक्ष्योऽप्ययदीक्षित ।
कटुवाग्वेंकटार्योऽपि सति गंगाधारे गुरौ ७६
रवेरिवास्य प्रभया सनाथे
सूर्याश्मनीवास्य जनस्य चित्ते ।
कणा इवाग्नेरभवन्प्रबन्धाः
प्रभोज्वला वाङ्मयवार्धिमुख्याः ८०
पितुरनुकलयञ्श्रीदेवनारायणस्य
प्रथितमपि च मातुः श्रीलगोविन्ददेव्याः ।
गुणगणमिति शिष्यस्तस्य रामावतारो-
ऽप्रथितविबुधवृन्दं भारतस्येतिवृत्तम् ८१
श्रीजयोर्जनृपतिर्महामतिः
पालयत्ववनिमूर्जितां चिरम् ।
घोषिते यदभिषेकमंगले
ग्रन्थरत्नमजनीदमुज्ज्वलम् ८२

इति पञ्चमो वीचिः ॥

समाप्तो भारतीयेतिहासः ॥

---

# महाकविर्माघः ।

—:०:—

"माघे सन्ति त्रयो गुणाः ।"
"माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे ।"

*ग्रन्थनिर्माणकाले सकलशास्त्रपारदृश्वाऽयममासीद् गुरुर्मे । साम्प्रतं यशःशरीरेणावतिष्ठते । शा० स०

विज्ञप्रसविन्या भारतभूमेः प्राचीनकविवृन्दे सोयमनुपमया श्रिया जयति खल्वष्टादशभाषावारविलासिनीभुजङ्गोऽनघो माघः । अनितरसुलभया वर्णनशैल्या, धीरमसृणवाग्गुम्फात्, आदर्शचरित्रलेखनाच्च नूनमलभतासावुच्चमतम्प्रशस्तमतिमहान्तञ्चासनं संस्कृतसाहित्य इत्यत्र नास्ति कस्यापि विमतिः ।

यद्यपि कालिदास,भवभूति,भट्टबाणसब्रह्मचारिणीं दिगन्तवितताञ्चतुरुदधिमेखलायिताञ्च नालिलिङ्गासौ कीर्तिकामिनीम्, नाप्यथ भोजादीनां राजद्वारेऽनव्यवहितञ्च सकम्पञ्चोपस्थितम्प्रतिदिनम्प्राधेन परं श्रीहर्षभारव्योस्तु सर्वथाऽहीनः समकक्षश्चेति मुक्तकण्ठं वक्तव्यमेव सहृदयधौरेयैः । निर्विशयमस्य कृतिः शाकुन्तलोत्तररामचरितकादम्बरीवदखिलोकविश्रुता, समादृता च नाभवदाधुनिकसंस्कृतज्ञे, परं तत्र नास्ति कुकवित्वञ्चरमं कारणम्, प्रत्युत तत्कृते दार्शनिकता, शास्त्रीयता, गाम्भीर्यमितरकाव्यापेक्षया प्रणयपरीणाहराहित्यञ्च मूर्धन्यभूतं कारणमिति मे विश्वासः । "शिशुपालवधम्" महाकाव्यमेवा दस्मीयोत्कृष्टकृतिषु परिगण्यते । काव्ये चात्र नियतम्पराक्रान्तममुना कविकुलनलिनदिनमणिना चित्रितवता सदयप्रणयपीयूषसरसमपूर्वञ्चरित्रचित्रम् ।

कविकुलम्भारतीम्प्रायशः साम्प्रत्यमस्य प्रकृतिमहतो जीवनस्योत्तमगांशं, दारिद्र्याभिभूतत्वात्, राजद्वारप्रवेशस्य दुर्भेद्यत्वात्या दुराशयाऽऽशया वैयर्थ्यापारपारावारे धिनशममं-

ज्ञयन्; परं माघोऽसौ नासीद्विवशः शरणमाश्रयम्बाऽऽहिण्डितुं कस्यापि जनपदस्वामिनः, अस्यागात् समयो मुधैव सहृदयगवेषणे—यतो नासीदसौ भारतीयकविक्रीतया वृतोऽमितो दरिद्रतापिशाच्या । असौ प्रत्युताऽलभत प्रसवमेकस्मिन् महत्यभिजाते धनकुबेरस्य श्रीमती कुले, अतो रसिकान्वेषणस्थाने दरिद्रानाथदुःखितजनतायाः पालनपोषणार्थमत्यवाहयज्जीवनमकरोच्च यावच्छक्यमुपकारन्तेषाम् अकारणबान्धवोऽसौ दरिद्राणामकालजलदोदयश्चानाथानाङ्कल्पपादश्च दीनानान्निर्धनानाम्वाऽऽसीदार्द्रहृदयो माघो महाभागः ।

परं हन्त ! किं कुर्मः ? कमाक्रन्दामः ? अलङ्घनीया नियतिः, ईदृशस्य कविकुलशिरोमणेरादर्शचरित्रफलके दुर्दैवहतकेन सरभसं विनिपातिता चिरायाज्ञानयवनिका ! सुभृशमुत्सहमाना गवेषयन्तश्च नैव वयम्पारयामः साकल्येनाभिज्ञातुम्पावनञ्चरितममुष्य महाकवेः । यत्किञ्चिदपि च जायते चेच्चरिते ज्ञानालोकसम्पातस्तदखिलमपि केवलम्भोजप्रबन्धस्याद्सीयशिशुपालवधस्य वाऽसकृत्परिशीलनेनैव ।

माघस्य जन्मभूमिर्गुर्जरप्रदेश आसीत् । तस्य सम्बन्ध ईदृशेनैकेन सत्कुलेनोपलभ्यते यत्किल धनप्राचुर्यहेतोः, भारतीयनृपतिसमूहमेकतासूत्रे संग्रथनकारणाच्च सविशेषं कीर्तिशाली । "सुप्रभदेवा"ख्यो माघस्य पितामह आसीत्, यो 'धर्मनाभ'राज्ञा स्वामात्यपदे नीतिज्ञत्वात् न्ययोजिषि, माघो धाराधिपतेः संस्कृतप्रणयिप्रवणस्य मालवीयस्य, भोजराजस्य समकालीनः, योऽलंचकार मालव-राज्य-सिंहासनं, ईशाः१०म,शताब्द्याः पर्यवसाने एकादश्या वा प्रारम्भे ।

माघस्य तातो 'दत्तक' नामा कोटिपतिरासीत् । माघस्य प्रसवानन्तरं, दत्तकेन, भारतीयप्रतिद्वीप,देश,प्रान्त,नगरखर्वटेभ्यो महामहिमशालिनो विदितवेदितव्या अधिगतयाथातथ्याः त्रिकालतत्वज्ञा मौहूर्तिकाग्रेसराः सबहुमानमाहूताः, सादरञ्च निवेदिता माघस्य जन्मकुण्डली निर्माणार्थम्—तस्य जीवनविषय उच्चावचमखिलमभिज्ञातुम् । सुविचार्य काश्चन नाड़िकाः सतर्कमिदम्प्रत्युक्तं कार्तान्तिकैः—"देव, आत्मजोऽयं श्रीमत्कः, व्याप्य चिरमगणितवैभवस्य भवत उपभोगं सुसुखं करिष्यति, परं जीवनस्यान्तिमे भागे जराजर्जरितः, केनाप्यसाध्येन—सद्गदङ्कारैरप्यचिकित्स्येन—आतङ्केन, चरणपीड़ाजन्येन, पर्य्यवसानेऽनुभवन्महतीं दुःखपरम्परां, दारिद्र्याभिभूतो लोकपरोक्षो भविष्यति स्वर्गपथपथिकः ।"

दत्तकेन चिन्तितं,—न खलु मनुजः, परःशतं वर्षाणि, उत दिनानि परःषट्त्रिंशत् सहस्राणि—क्षणमप्यस्त्यलमुच्छ्वसितुम्, यतोऽस्त्येव—"शतायुर्वै पुरुषः" इति शासनं श्रुतेर्भगवत्याः । अखिलमिदमाकलय्य, मुक्ताहीरकमाणिक्यवैडूर्याद्यनर्घ्यरत्नशतनिर्मितानि राशीकृत्यालङ्करणानि, सुप्रशस्तपेटिकादिभाण्डेषु सध्यानं विन्यस्य, सुरक्षिते प्रासाद एकस्मिन् न्यस्तानि, स्मारं स्मारं दैवज्ञैरुदाहृतामागा-

मितों गुर्वीमापदमात्मसम्भवस्य, "आपदर्थधनं रक्षेत्" इतिनीतिवाक्यञ्चासकृत्। अथ माघमुच्चकोटेः सभ्यताविद्यादिशिक्षणार्थमध्यापकेभ्य आप्तेभ्यः समर्प्य, गच्छति काले ऽकरोत् परलोकविषययात्रान्दत्तकः! स्वपूर्वतश्चापदर्थरक्षितधनापेक्षया शतवारमधिकम्पुष्कलन्धनपर्य्यायमत्याक्षीन्माघाय दायादरूपेण।

अथारब्धं लेखनं "शिशुपालवध"महाकाव्यस्य माघेन जनकस्य निर्वर्त्यौर्ध्वदेहिकङ्कृत्य सश्रद्धम्। कालिदास,भारवि,श्रीहर्षादिभिरुपनिबद्धानां, रघुवंश कुमारसम्भव, किरात,नैषधाख्यानां महाकाव्यानां गणनायां सादरं गणनार्हम्माघकृतम्महाकाव्यमित्यत्र मन्ये, न कोऽपि विमनायेत सहृदयधौरेयः। कतिपयेष्वंशेषु च तानप्यतिशेतेऽदसीयं काव्यमिति कथयतान्न स्पृशत्यन्तरमतिशयोक्तिगन्धोऽपि। अत एवोदाहृयन्ते भूयो भूयोऽभियुक्तैः—"काव्येषु माघः कविकालिदासः; मुरारिपदचिन्ता चेत्तदा माघे रतिं कुरु; माघे सन्ति *त्रयो गुणाः; माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे," इत्येवंविधवाक्यानि माघापदानवैशिष्ट्यद्योतकानि।

शिशुपालवधञ्चमहाकाव्यमाकरोक्तकाव्यगुणैरशेषैः, सर्वविधश्लेषैः, प्रसादादिगुणैः रूपकोपमोत्प्रेक्षाऽर्थान्तरन्यासादिभिरर्थालङ्कारैः यमकानुप्रासचित्रबन्धादिभिश्च शब्दालङ्कारैर्भृशमलंकृतमतिमात्रमावर्जयति अविनीतिमपि-

* उपमा, अर्थगौरवम्, पदलालित्यञ्च।

मानसं, रसास्वादतरलं ललितस्य रसिकस्य। यद्यपि विवाहकुमारादयवर्णनन्नात्रावलोक्यते प्रत्यक्षतः, परं दिग्दिशा तु तदपि वर्णितमेवोपहासे युद्धेचेति सर्वथा पश्यामो दोषलेशरितुपमनिशमादरणीयममुं काव्यम्।

"माघेन भरवेः किरातस्य सरणिमनुसृत्य, सर्गादौ श्रिय इति, पर्य्यवसाने च 'श्रीः' इति शब्दौ प्रयुक्तौ। किरातस्य षोडशसर्गच्छायामाश्रित्य, शिशुपालवधस्य एकोनविंशसर्गे शब्दचित्रयमकाद्यलङ्कारा विनिबद्धाः। इत्थं सादृश्यमुभयोर्दृश्यते" इति पुरावृत्तव्यसनी कोऽप्यांग्लपण्डित उदलिखत्। परं नातो भारव्यपेक्षया माघस्य न्यूनता द्योत्यते काव्यरचनाशक्तौ, अपि तून्कृष्टनैव तदपेक्षयास्मिन् शब्दचित्राद्यलङ्काराणाम्भूयसां समुपलम्भादित्यनाविलमेवाखिलं सचेतसाम्। तदिदञ्च किमपि सुकर्मणां विशिष्टम्फलम्माघीयानाम्, यदितरमहाकविग्रन्थाः स्वस्वनाम्ना ख्यातिमलभन्त रसज्ञपरिषदि, तद्यथा—रघुवंशम्, कुमारसम्भवम्, किरातार्जुनीयम्, नैषधीयचरितम् इत्यादिः, परं शिशुपालवधमितिवक्तव्ये "माघ" इत्येव सादरमुच्यते रसिकैः। माघस्य दानवीरतैव केवलं स्यात्कारणमित्थम्भूतायाः सुख्यातेरित्यनुमिनोमि। आस्तां यद्वा तद्वा परं माघोऽसौ सर्वेभ्योऽस्मिन् विषये भाग्यशालीति सर्वैरपि निर्मायञ्च निर्विशङ्कञ्च वक्तव्यमेव।

संस्कृत-कविवृन्द-मालायां माघ एवैकं पेलवमस्ति कुसुमम्, यदुपेक्षितं, वञ्चितं,

तिरस्कृतं विस्मृतं वा वरीवर्त्ति पण्डित-जनगुणनिर्जितया प्रणयिन्या वा हताशया दारिद्र्यप्रात्यक्ष्यया। न तेन स्वप्नेऽपीक्षित-र्धनिकानामीर्ष्याकषायितायां दृशः कुटिलं कटाक्षम् उदरदर्पभरणार्थं वा पोषणार्थं वा माघोऽस्मीं न तेषु हतभागधेयेषु कविषु गण-नीयः, ये हि नामात्मवैदुष्यपादपजातस्य पक्वं फल (कृतिरूपं) जीवनकाले नैवास्वादयामासुः, येषाञ्च कवितावनिताऽप्रसाधिताऽनासादित-वरैव सक्लेशमत्यवाहयत्सुखनिदानञ्जीवनम्, निगडिता दृढमप्रसिद्धेः कठिने दुर्भेद्ये च कारा-गारे; सुखमुपभुक्तम्प्रत्युतानुना बोधद्रुमस्य सरसं फलम्, शिशुपालवधप्रणयनसमकाल मेव आवर्जितो भारतीयः कविवृन्दारकणेन। आहिमाचलमाकुमारिकाञ्च विततान कुन्द-धवलं यशः; सरसा, सालंकारा, सुपदन्यासा सुवर्णमयी चाभिनवनाटकोतिथिर्तत्र सूत्रधारी विविधनेपथ्यभूषिताङ्गप्रत्यङ्गामुष्य, कविता न केन सानुरागमुपभुक्ता, सरभसं, निर्विशेषञ्च मुक्तकण्ठं न केन प्रशंसिता?

संस्कृतकल्पपादेन श्रीभोजराजेनाऽपि क-र्णाकर्णिकयाकर्णितम्माघस्य गुणप्रसरम्। 'शिशुपालवध'प्रणयनमुपश्रुत्य सबहुमानमाहूत-स्तेन महाभागो माघः। माघमुखादेवाऽऽद्यो-पान्तमाकर्ण्य काव्यममुं नितरांप्रीतः सञ्जा-तसौहार्दो यावच्छक्यं सभाजयामास महाक-विम्। शनैः शनैश्चाभिन्नमित्रमेवाभवन्माघो भोजस्य। स्वान्तःपुरे शोभने च प्रसादे स्थितेन भोजेन माघाद्वितीयेन व्याप्य चिरम्बहुवि-चारितं संस्कृतसाहित्यविषये। अथ गच्छता कालेन प्रार्थितः श्रीभोजः सप्रश्रयं महाकविना स्वदेशं प्रति प्रस्थानाभिलाषिणा। लब्धादे-शश्च, सादरं न्यमन्त्रयत्काश्यपीशं स्वाति थ्यमुररीकर्तुम्माघः। भोजेन स्वीकृतम्।

श्रीमातापुरनाम्नि नगरे माघीय आसी-न्महाप्रासादः। तत्रैव समाजगाम सादरं साग्रहानुरोधञ्च बहुशः समाहुतो भोज महाराजः। प्रासादश्चासीत् सुसज्जितो नाना-दिग्विदिगानीतैः, रत्नशतैरनर्घ्यैश्चित्रवस्तु-जातैः धनिकोचितालङ्करणैश्चालंकृतोऽत्यर्थम् एकतश्चास्य बृहत् पुस्तकालयमासीत् स्था-पितम्। तत्र प्राचीनानि दुष्प्राप्याणि विविध प्रत्नग्रन्थरत्नानि ससम्मानमासन् रक्षितानि। भोजः किलावलोक्य सत्वरजःसमुद्भूत लक्ष्मी-सरस्वत्योरेकीभावरूपमपूर्वमनितरलभ्यञ्च वि-भवम्माघीयन्नितराममूमुदत्। माघेनापि विविधनाट्यवाद्यभोजनादिद्वारं सत्कृतो भोजः सामन्दानन्दञ्चानुष्ठितं हार्दिकं स्वागतम्। सुदक्षाःसूपकारा भोजस्य भोजसम्पादनार्थं नियोजिताः। यैरसाधारणायाः पाचकताया परि-चयन्ददद्भिरलौकिकैर्भोजनैर्बृंहणैर्हृद्यैः पौष्टि-कैश्च पाकादिभिः सुप्रीणितः स्वामिनोऽसा-मान्योऽतिथिप्रवरः। ये च शाकास्तदा तैः साधिताः, व्यञ्जनानि च यानि सुपाचितानि तानि सर्वथैवाऽसामयिकैरतात्कालिकैश्च कन्द-मूलफलादिभिरासन् सम्पादितानीति नून-मभवत् चित्रितो मनसि, परितृप्तश्चान्तरेण भोजराजः। इत्थं बहुधा समाजित आप्या-

यितश्च धारेशः परिवर्त्तनानुज्ञामयाचन्माघा-द्गाच्च यथागतम् ।

अथैकदाऽविरासीद्भुवनोच्छेदकारी, सर्व-प्राणिभयङ्करो नृशंसतायाः प्रतिमूर्तिः कवलयन्न-नाथान्दलयन्दरिद्रानुपमर्द्दयंश्च दुर्बलान् दुर्भि-क्षराक्षसः । यस्य दंष्ट्राकरालवदने सहस्रशः प्राविशन् सचीत्कारम्परिदेवन्तो बुभुक्षिताः प्राणिनः । अस्मिन् हि दुर्दिने केवलमासी-न्माघ एवैकोऽकालजलदोदयः । प्रलपताम्, निराश्रयाणान्निरालम्बानान्निमज्जनोन्मुखानाञ्च दुर्दैवविषमावर्त्ते शैवालावलम्बः । सहस्रशः प्रतिदिनम्वर्तुलीकृत्यातिष्ठन् याचका दुर्भिक्ष-क्षुब्धाः सदनं माघीयमन्नकामनया । आर्द्र-हृदयेनोदारचेतसा च माघेन बहुदत्तं या-चकेभ्यःनकोऽप्यनभ्यर्थितोऽ सत्कृतोऽपृष्टोऽ-पूर्णकामश्च परापतदभिनवकुबेरभवनात् । अथ नानादिग्देशेभ्यः समागत्यागत्यावेष्टयन् सङ्घशो याचका माघमुदारचरितम् । परं सरि-ताम्पतिरपि यदा शोषितुं शक्यते तर्हि का कथा माघस्य ? इममेवप्रकृतिनियममवलम्ब्य क्रमशोऽगात् लाघवमल्पीयस्त्वञ्च धनपर्य्यायः। गच्छता केलेन निःशेषविश्राणितकोशजातोऽप-रिशिष्टकपर्दको, वितीर्णद्रविणोऽधिकां श्रियं शिश्रिये शरदर्कइव परोपकारैकव्यसनी महा-कविः । याचकानामार्त्तनादं श्रोतुमशक्नुवन् स-र्वतो निरुद्धप्रसरो मर्मणि प्रहृतः प्रदत्तसर्व-स्वोऽभिन्नमैत्र्यं स्मारं स्मारं भोजीयमसकृत्, समुदचलत् धारानगरीम् । तत्र च प्राप्तो नगराद्बहिरेव क्वापि कृतवसतिः प्रेयसीं स्वीया-म्प्राहिणोद्दत्वा पत्रमेकम्भोजोपकण्ठम् । तस्मिन् पत्रे चेत्थमवर्णयत् प्रातः कालवर्णनमिषेण स्वीयन्दैवदुर्विलासं कविवरः—

"कुमुदवनमपश्रि, श्रीमदम्भोजषण्डम् ।
त्यजति मुदमुलूकः, प्रीतिमांश्चक्रवाकः ॥
उदयतिहिमरश्मिर्याति शीतांशुरस्तम् ।
हतविधिलसितानां ही विचित्रो विपाकः!! ॥

इतीममनुवाच्य प्रभातवर्णनपरं भावपूर्णं श्लोकं लक्षत्रयमदायि भोजेन माघपत्न्यै प्रति-ज्ञाञ्च प्रातः काले माघदर्शनार्थञ्चिकीर्षित-पूरणार्थञ्चाकरोत् । माघपत्नोच द्रविणमदाय प्रसरन्ती मध्ये मार्गमावेष्टिता दीनैर्दुःखि-भिश्च परितः, समाकर्ण्य च तेषाम्मुखात् स्वभर्त्तुः शारदपार्वणशशधरांशुगौरान् गुणान्, हृतहृदया, विगलितवेद्यान्तरा, भोजोपहृतन्ध-नमखिलन्तेभ्य एव दत्तवती । नूनमसि साधु-वादार्हा, देवि ! सत्यं निर्व्यूढस्त्वया स्वामि-समाविष्कृतः पन्था,ः उदारस्य भर्त्तुरौदार्यमति-मात्रम् ख्यापितन्त्वयैव धर्मपत्न्या । उदारा-ग्रणीश्चास्याः पतिराकर्ण्य वृत्तमिममुद्वेला-नन्दपयोधावमज्जत्, भूयो भूयश्च तदनुष्ठान-म्पुष्कलधन्यवादवितरणैरन्वमोदयत् । पर पुन-रपि यदाऽपूर्णकामा बहवो याचकाः करुण करुणं रुदन्तो, ऽयाचन्त तदाऽतिष्ठत् किंकर्त्त-व्यविमूढो माघः, न च तान् प्रत्याख्यान वाक्यै-रकरोद्भग्नमनोरथान् ततोऽवशिष्ट वसनम-भिवीक्ष्य माघं सकष्टमुदाजहार कोप्यर्थी—

"आश्वास्य पर्वतकुलन्तपनोष्णतप्तम् ।
उद्दामदावविधुराणि च काननानि ।"

नानानदीनदशतानि च पूरयित्वा, ।
रिक्तोऽसि यज्जलद ! सैव तवोत्तमा श्रीः ॥

याचकोदाहृतामन्योक्तिमाकर्ण्य, दग्धहृदयो दष्टश्चैतसि नैराश्यभुजङ्गेन, सखेदमाह स्वपत्नीं, दानवीरशिरोरत्न महाकविः—

"अर्था न सन्ति न च मुञ्चति मान्दुराशा, ।
त्यागे रतिं वहति दुर्ललितं मनो मे ॥
याञ्चा च लाघवकरी, स्ववधे च पापम्, ।
प्राणाः स्वयं व्रजत, किं परिदेवनेन ? ॥

"दारिद्र्यानलसन्तापः
शान्तः सन्तोषवारिणा ।
याचकाशाविघातान्तर्दाहः केनोपशाम्यति ?॥

हताशाश्च याचका माघस्य चरमामवस्था मवलोक्य विलपन्तः सोरस्ताडञ्चोपक्रोशन्तो दग्धभागधेया यथायथमगुः । याचकाशाविघाताऽभ्युदितान्तर्दाहश्च, यथागतं गच्छत्सु याचकेषु, भग्नप्रतिज्ञोऽन्तिममिममुवाच पद्यं सामन्ददुःखम्माघः—

"व्रजत व्रजत प्राणा अर्थिभिर्व्यर्थताङ्गतैः ।
पश्चादपि च गन्तव्यं, क्व सार्थः पुनरीदृशः? ॥

इति विविधं विलपन्, करुणाभरमन्थरो माघः क्षणादेवात्यजद्दग्धजीवितम् दानवीरतायामूर्तिमानवतारास्तिरोदधे, संस्कृतसाहित्यमन्दिरस्य रत्नजटितः स्तम्भः पर्यस्खलत् ! अलंकारशास्त्राकाशस्य जाज्वल्यमानं नक्षत्रमपर्यपतत् ! भगवत्याः सरस्वत्या विद्याभाण्डारः पश्यत एव हृतो दग्धदैवेन ! संस्कृतभाषाया धुरन्धरो मुखरितलेखनीधरश्चिरायागाद् यशःशेषताम् ! 'सर्वं यस्य वशादगात् स्मृतिपथं कालाय तस्मै नमः । कम्पुनरर्थिनोऽनाथा दुःखिताश्चोपसृत्य मार्गयिष्यन्ति ? गुणज्ञता, कमिवाश्रयत्वेन कल्पयिष्यति ? ओजस्विता, प्रसन्ना च लेखशैली पुनरपिदृष्टिपथमवतरिष्यति पाठकानाम् ? किं कुर्मः ? मरणं प्रकृतिः शरीरिणां, विकृति- र्जीवनमुच्यते बुधैः ।"

हृतसर्वस्वा, पातिव्रत्यप्रतिमूर्तिः, मर्मणि प्रहृता च माघपत्नी समुपरतमवलोक्य प्राणनाथमुच्चैर्विलपन्ती प्राह—

"सेवन्ते स्म गृहे यस्य, दासवद्भूभुजः सदा ।
स स्वभार्यासहायोऽयं, म्रियते माघपण्डित !"

भोजराजश्च सकरुणमाकर्ण्य माघस्य निधनवृत्तान्तं, विज्ञशतावृतो, मौनी, रात्रावेव तदुपकण्ठमगात् । माघपत्नी राजानं वीक्ष्योवाच महाराज पंडितवरोऽयं त्वद्देशस्प्राप्तः परलोकमगात्, अभिन्नहृदयश्चासीन्मित्रम् भवतः, इत्यौर्द्धदेहिकं भवतैव निर्वर्त्यमखिलम् राजा च ओमित्युक्त्वा, माघं विपन्नं नर्मदाकूलं नीत्वा शास्त्रोक्तविधिनाऽन्त्येष्टिसंस्कारमकरोत् पतिव्रतानां धुरि कीर्तनीया च माघपत्नी सहर्ष मनुस्मरन् पतिदेवतां, लोकसमक्षमनुमरणमेवाशरणशरणं मन्यमाना, ज्वलने प्राविशत् । गुणनिर्जितश्च भोजस्तयोः पुत्रवत्सुसम्पादयामास कृत्यशेषमखिलम् ।

श्रीहरिहरगुरूपशर्म्मा शास्त्री ।

---

# अध्यापकःश्रीजगदीशचन्द्रः ।

——:०:——

प्रथितमहिमा वैज्ञानिकशिरोमणिः श्रीजगदीशचन्द्रमहोदयो नवैर्नवैर्वैज्ञानिकतत्वाविष्कारैराश्चर्यमुग्धान् विदधाति वैज्ञानिकप्रवरान्, प्रख्यापयति चात्मनो वैदुष्यम्, विवृणोति च प्रकृतिगह्वरनिलीनं तत्वम्, समुज्ज्वलयति च मुखं भारतस्येति विलोकयन्तः के न प्रेक्षावन्तः प्रमुदिता भवन्ति । श्रीमन्तमध्यापकमहोदयं नाम्ना परिचिन्वन्ति निखिला अक्षरगन्धवन्तो भारतीयाः, परं किमस्य यशोनिदानम्, कथञ्चायं प्रथितः पाश्चात्यवैज्ञानिकसमाजेषु, कथञ्च जगति विश्रुतोद्यमा विपश्चितोऽस्य सबहुमानं साक्षात्कारमभिलष्यन्तीति मन्ये शारदावाचकानां बहूनामद्याप्यविदितमेव स्यादिति प्रबन्धेऽत्राध्यापकमहोदयस्याविष्काराणां संक्षिप्तः परिचयो निर्दिश्यते ।

अध्यापकमहाशयेन हि किमप्यभिनवं यन्त्रमाविष्कृतं यत्र विद्युत्तरङ्गा निर्बाधं प्रतिफलन्ति । एकस्माद्यन्त्रादुत्थिता विद्युत्तरङ्गा छदनच्छादितायां लोहतन्त्र्यां प्रतिफलन्तोऽपरान् विद्युत्तरङ्गान् उद्भावयन्ति । ते च साधयन्ति सुखेन कार्याणि-इतिसत्यं जितमध्यापकस्य वैज्ञानिकानुसन्धानेन ।

शार्मण्योऽध्यापकहार्टजनामा कोऽपि वैज्ञानिकः प्रथमतो विद्युत्तरङ्गाणां परिचयमुपलब्धवान् तदुत्पादनप्रकारञ्च निर्द्धारितवान् । हार्टजसमुद्भावितस्य तत्वस्य परीक्षणमारब्धं विज्ञानिकैः । परं तत्तत्वं प्रमाजितं श्रीजगदीशचन्द्रेणेति विजानन्तः प्रहृष्यामः ।

अध्यापकमहोदयस्य वैज्ञानिका आविष्कारा यथा सुखेनैवाबुध्येरन्निति तदर्थं केचन पदार्था अत्र परिचाय्यन्ते ।

के धातवः, के वा न धातव इति नाद्य प्रथमतो विवेचनीयम् । सुवर्णलोहताम्रादयो धातव इति जानन्त्येव सर्वे । जलं वायुर्वृक्षादयो धातुभिन्ना इत्यपि ननु प्रसिद्धमेव । धातूनां धातुभिन्नानाञ्च पदार्थानां मध्यभागं व्याप्य तिष्ठन्त्याकाशनामकः कश्चन सूक्ष्मः पदार्थः । यद्यप्यस्य स्वरूपनिरूपणमन्तरा बहवो विषयमिममवगन्तुं न पारयेयुरिति सम्भाव्यते, परं नायं तन्निरूपणोपयुक्तः समय इति विरम्यते । अथाप्येतदवश्यमवधेयं, यदेष सूक्ष्मः पदार्थो व्याप्नोति निखिलान् पदार्थान् । सूर्यचन्द्रमण्डलतः प्रभामानीय भूमण्डलमुद्भासयति, तापयति शिशिरयति चैष पदार्थान् इति । सूर्यादिमण्डलस्थाः परमाणवो यदाकाशनामकं पदार्थमिममभिहन्ति, तदैतस्मिंस्तरङ्गा उत्पद्यन्ते, ते च तरङ्गा अस्माकं दृग्गोचरीभवन्ति । दृग्गोचरीभूतानां तेषां तरङ्गाणामाघाताज्जायमानोऽनुभवः प्रभा इति, ताप इति, वा व्यपदिश्यते । एतस्मादनुभवादेवायं सूर्यः, एष चन्द्रः, इयं तारका इति व्यपदिश्यते लोकैः । अयमतिसूक्ष्म आकाशनामकः पदार्थः प्रचुरेण स्थितिस्थापकधर्मेण युक्तो विलङ्घयति कलयाऽपि लक्षक्रोशमितमध्वानम् ।

आलोकप्रभवा शक्तिराकाशतरङ्ग एव,चौम्बकशक्तिर्विद्युच्छक्तिश्चेति द्वेऽपरेऽपि शक्तयस्माकं परिचिते। आसां शक्तीनां परस्परं सम्बन्धो ऽस्ति न वेति सप्ततिवर्षाणां पूर्वं न कस्यापि ज्ञातमासीत्। परं प्रसिद्धवैज्ञानिकस्य माइकेलफारडोरमहोदयस्याविष्कारपरम्पराभिः प्रकाशितोऽयमर्थो यद् विद्युच्चुम्बकशक्त्योराधारभूत आकाशनामकोऽतिसूक्ष्मः पदार्थ एवेति।

इत्थं हि क्रमेणाकाशतरङ्गैर्मानवानां सञ्जातः परिचयः। वैज्ञानिकैराविष्कृतानि तत्वान्युपष्टभ्य माइकेलफारडोरमहोदयः प्रामाणयद्यदाकाशनामकः पदार्थो यदा पदार्थान्तरेण भाराक्रान्तो भवति, तदा तस्मादुदेति विद्युच्छक्तिः, तत्र सञ्जातघूर्णनेन च चौम्बकशक्तिरुत्पद्यत इति। इदमत्रावधेयम् एकस्य ताम्रभाजनस्योपरि शीसकभाजनं यदा निहितं भवति, तदोभे—आकाशतरङ्गोत्पन्नविद्युच्छक्त्या विजडिते भवतः। सा हि शक्तिरुभयोर्विच्छेदकालेऽनुभूयतेऽस्माभिः। तयोर्भाजनयोः संयोगकाले उभयोर्मध्यभागव्याप्त आकाशे भारो निपतति। स हि भारो वायुमध्यस्थ आकाश एव निपतति। वायुप्रतिमेषु धातुभिन्नेष्वन्येषु च पदार्थेषु पदार्थान्तरभारस्तन्मध्यस्थ आकाश एव निपतति। धातुसम्बन्धवत्याकाशे न संक्रान्तो भवति भारः। अस्मान्न तत्र स्थितिस्थापकधर्मो विद्यत इति निश्चीयते। धातुभिन्नपदार्थान्तरगत आकाशो हि भारसहः। इत्थमाकाशस्य भारसहत्वासहत्वाभ्यामुत्पद्यन्त आकाशप्रवाहाः।

एषामाकाशप्रवाहाणामेव प्रसादात् साम्प्रतमस्माभिस्तन्त्रीसंवादाः प्रेष्यन्ते, योजनान्ते स्थितैरपि कथोपकथनं विधीयते, तडिद्दीपिकाश्च प्रज्वाल्यन्ते।

यदायं विद्युत्प्रवाहस्तन्त्रीमार्गेण गच्छति, तदा तस्य परितो वायुमध्यस्थ आकाशे समुत्पन्नो भवति कोऽप्यावर्तः। तदा तत्र विनिःक्षिप्ता लोहशलाका, परमाणुभ्रमात्परिभ्रमति। एष हि चौम्बकशक्तिकृतो व्यापारः, सा शलाका दिग्दर्शनशलाकेत्युच्यते।

माइकेलमहोदयो व्यजानात्, यत्तस्याकाशस्यैकोऽप्यंश पूर्वभारपिहितः, ततश्च तन्निर्मुक्तो यदा भवति तदा स कियत् क्षणं भ्रमिमेति। इत्थमाकाशस्य सर्वगत्वात्तस्य कस्मिन्नप्यंशे समुद्भूतभ्रमिरुत्पादयितुं शक्नोति दिगन्तव्यापिनीं भ्रमिपरम्पराम्। यदा प्रभातरङ्गा आकाशमार्गं परिभ्रमन्तः कलयापि लक्षयोजनमितमध्वानमतिक्रामन्ति, तदा विद्युत्तरङ्गाणामपि तथाविध एव वेगो भविष्यतीति सम्भाव्यते। किञ्चाकाशेनैव समुत्पाद्यन्ते विद्युच्छक्तयः। आकाश एव लघवः प्रभातरङ्गाः प्रचरन्ति, अत एवाकाशे बृहतामपि विद्युत्तरङ्गाणां गमनं सम्भाव्यत इति व्याजहार माइकेलफारडोर महोदयः।

सम्भाव्यत इतिसत्यमुच्यते, परं सम्भावनं प्रमाणत्वेनाङ्गीकर्तुं नोत्सहते कश्चित्सचेतनः। आकाश एव विद्युत्तरङ्गाणामाधारः, तत्रापि

बृहन्तस्तरङ्गा उद्भवितुं शक्यन्त इत्यन्तरा प्रत्यक्षप्रमाणं न कोऽप्यत्रास्थामाधातुं क्षमते विज्ञानप्रवणः । प्रमाणैः सञ्जातनिर्णयः पदार्थ एव प्रमेयत्वेन गृह्यते धीमद्भिः । प्रभासञ्चालक एवाकाशो विद्युच्छक्तीनामप्याधार इति नाय विषयः प्रमाणीक्रियते । विद्युच्छक्तीनामाधारभूत आकाश एतस्मादाकाशाद् भिन्नो भवितुमर्हति, आकाशतुल्योऽपरो वा कश्चन पदार्थ इत्यपि वा वक्तव्यम् । किञ्चाकाशतरङ्गा अपि कल्पनासादितविग्रहा न केनापि प्रमाणेनाद्ययावत्प्रमाणिता इति कथं तदाधारान्वेषणे प्रयत्नपराः श्रीमन्तः ।

शर्मण्यदेशीयेन हार्टजनामकेन विदुषा आकाशतरङ्गसत्तायामुपन्यस्तं किमपि प्रमाणम्, तद्धि प्रत्यक्षमेव प्रमाणम् । तस्मै प्रत्यक्षप्रमाणाय हि यन्त्रद्वयमपेक्षितं भवति । एकेन यन्त्रेणोत्पादिता भवन्त्याकाशतरङ्गाः, अपरेण च तत्सत्ता प्रमाणीक्रियते । प्रथमे यन्त्रे चालनप्रक्रियाविशेषेण यदाकाशो भाराकान्तो भवति, तदा तत्र भ्रमिरुत्पद्यते, सा भ्रमिर्हि प्रसर्पन्ती द्वितीययन्त्रमाहन्ति । शक्यत इत्थमनुमातुम्, प्रथमं यन्त्रं तावद्दीपशिखा, तत्रैवाकाशसङ्घर्षात् समुत्पद्यन्ते प्रभातरङ्गाः, द्वितीयं यन्त्रमस्माकं नयनं भवितुमर्हति, ते तरङ्गास्तत्रागता ननु प्रमाणयन्त्यात्मनःसत्ताम् ।

इयमाकाशाघातप्रक्रिया न नवीना, मेघमण्डले यदा विद्युत् स्फुरति, तदा सहसैव भवत्याहत आकाशः, इत्थं यदा वा विद्युद्यन्त्रे स्फुलिङ्गा उत्पद्यन्ते, तदाप्याकाश आहतो भवत्येव, इत्थमियं रीतिः प्राकृतिकीति युक्तमुक्तं भवति ।

अध्यापको हार्टजपण्डितोऽहि द्वितीयं यन्त्रमाविष्कृत्य बहूपकृतवान् वैज्ञानिकमण्डलम् । विद्युत्तरङ्गाणां ग्रहणे यन्त्रमिदं किमपि चक्षुरिति नात्युक्तिः । सुदूरमपिलब्धजन्मनां बृहतां तडित्तरङ्गाणां सुखेनाकाशे प्रवहतामाघातमेत्य यन्त्रमिदं किमपि क्रीडनकमारभते । तस्य क्रीडनकस्य च बहूनि फलानि प्रत्यक्षीक्रियन्ते । दीपिकाप्रज्वालनमारभ्य रथसञ्चालनं यावत्तस्यैव क्रीडनकस्य फलम् ।

इममभिनवं यन्त्रमाविष्कृत्याकाशे प्रवहन्ति विद्युत्तरङ्गा इति प्रामाणयत् हार्टजमहोदयः । दूरस्थेऽपि कस्मिंश्चिद् धातुपृष्ठे नृत्यन्तौ विद्युत् वायुमध्यस्थां प्रत्यक्षाविषयामाकाशव्यवहितिं विभिद्य यथेच्छमन्तरिक्षे सञ्चलन्तौ दूरस्थेऽपि धातुपृष्ठे तडित्प्रवाहानुत्पादयति, तद्धि विद्युत्स्फुरणफलं ननु दृग्गोचरीक्रियते निखिलैः । माइकेलमहोदयेन ज्ञानचक्षुषा विनिर्णीतः पदार्थो हार्टजमहोदयेन निखिलानां चर्मचक्षुषोर्विषयीकृतः स एव पदार्थ इति ।

आकाशे बृहन्तः सूक्ष्माश्च तरङ्गा उत्पद्यन्ते । ते च कलामितेन कालेन लक्षक्रोशमपि गन्तुं पारयन्ति । सूक्ष्मास्तरङ्गा हि प्रभातरङ्गा इत्युच्यन्ते, बृहतां च तेषां विद्युत्तरङ्ग इति नाम भवति । सर्वेऽप्येत आकाशतरङ्गाभिधानेनाभिधीयन्ते । तरङ्गनिर्देशकयन्त्रसाहाय्यादस्माभिरपि ते तरङ्गा आविष्कर्तुं शक्याः । अस्माकं चक्षुर्हि क्षुद्राणां तरङ्गाणां

ग्रहणे यन्त्रवत्सहकरोत्यस्मान्। नासीदुपयुक्तं तरङ्गनिर्द्देशकं यन्त्रमिति हार्टजमहोदयो बृहतामाकाशतरङ्गाणां सत्तामाविष्कर्त्तुं नाशकत्।

परं हार्टजमहोदयस्य परवर्तिनि समये तरङ्गनिर्देशकयन्त्रं हि सकलाङ्गं संवृत्तम्। साम्प्रतं तेन बृहन्त आकाशतरङ्गाः प्रत्यक्षीकर्त्तुं शक्याः। कापि नलिका यत्र लोहचूर्णं प्रपूरितं भवति, तन्नालिकामध्यतस्तडित्प्रवाहो निर्गन्तुं न शक्नोति। परं यदा दूरत आकाशतरङ्गास्तन्नलिकामुखोपरि निपतन्ति तदा तस्य लोहचूर्णस्य तरङ्गप्रतिरोधिका शक्तिः कथं कुत्रचिद्विलीना भवतीति न ज्ञायते, तदा तन्नलिकामध्यतो निष्क्रामन्ति ते तरङ्गाः। तैर्हि साधयितुं शक्यन्ते बहूनि कार्याणि, एतेन लोहचूर्णेन तरङ्गनिर्द्देशकयन्त्रसाध्यानि कार्याणि विधीयन्ते। एतद्यन्त्रं हि (Coherer) इत्युच्यते।

राशीकृता हि धातुचूर्णकणिका व्यवधानवत्यो भवन्ति। आकाशतरङ्गश्च कठिनस्यैव पदार्थस्य मध्यतः परं पारं गन्तुं शक्नोति। अत एव चूर्णीभूते धातौ तत्कणिका व्यवहिता भवन्तीति न तत्समीपस्थस्तरङ्गस्तन्निर्भिद्य बहिर्गन्तुं पारयति। अध्यापकलजमहोदयो भणति—तेषामाकाशतरङ्गाणां प्रभावात् व्यवहिता अपि धातुचूर्णकणिकाः परस्परं संहता भवन्ति, ततः सुखेन विद्युत्तेन पथा प्रवहति। द्वितीयं यन्त्रं संहत्य "Cohesion" निर्वर्तयति कार्याणीति तस्य "Coherer" इति नाम निर्द्दिष्टं भवति।

धातुकणिकाभिरेवेदं यन्त्रं प्रस्तुतं भवतीति नायं नियमः। अध्यापकजगदीशचन्द्रमहोदयस्य तद्यन्त्रं तन्त्रीभिर्विनिर्मितम्, तन्त्रीश्च परस्परं संबद्धा इति तत्र तडित्तरङ्गाणामाघातादुत्पद्यते प्रवाहोत्यादिका शक्तिः।

विद्युत्तरङ्गाणामाघातात्स्थिरमपि वस्तु चाञ्चल्यमाधत्ते, पदार्थानां दुष्टा गतिर्वा शोभनत्वमेति, तरङ्गनिर्द्देशकयन्त्राणामेष एव प्रधानो धर्मः।

श्रीमता मार्कनिमहाशयेन निर्मितं यन्त्रं चत्वारिंशत्क्रोशतोऽप्यधिके दूरे जायमानान् विद्युत्तरङ्गान् सुखेनैव गृहीतुं पारयति।

इटालिदेशीयो मार्कनिमहोदयोऽध्यापकः श्रीजदीशचन्द्रश्च समकालमेव विनापि तन्त्रीः संवादप्रेरणरीतिमाविरकुरुताम्। साम्प्रतं हि प्रसिद्धो मार्कनिमहोदयस्तन्त्रीर्विना संवादप्रेरणे। तथा जगदीशचन्द्रस्य नास्मिन् कर्मणि प्रसिद्धिरिति। अतो विमनायमाना दृश्यन्तेऽध्यापकमहोदयस्य सुहृदः। परमेतेऽपि काले जगदीशचन्द्रस्य माहात्म्यमवगन्तुं पारयेयुः। वीततन्त्रिसंवादप्रेरणव्यवसाये भवेन्नाम समागमो धनस्य परं साम्प्रतं यथा अध्यापकमहोदयेन विहिता आविष्कारपरम्परा विमोहयन्ति वैज्ञानिकान्, प्रथयन्ति च कीर्तिं मनुष्यवैदुष्यस्य, प्रीणयन्ति चास्मान् यथा व्यवसायव्यापृतेऽध्यापके तासामाविष्कारपरम्पराणां दर्शनमपि दुर्लभं स्यात्।

तदात्वे जगदीशचन्द्रनिर्मितं तरङ्गनिर्देशकयन्त्रं किमप्यद्भुतं कौशलं विज्ञानानुस

न्धानस्येति वैज्ञानिकेषु गृहीतममवत्। तद्धि तथाविधानां निखिलानां यन्त्राणां मूर्द्धन्यभूतमिति स्थिरीकृतमभूद् वैज्ञानिकमण्डले। तत्साहाय्यादध्यापकमहोदयो विविधानाकाशतरङ्गधर्मान्निर्णेतुं प्राभवत्, प्राचारयच्च प्रकृतिगह्वरनिलीनं नवं तत्वम्। साम्प्रतमेवैतत्प्रमामाणीभूतं यदाकाशगा विद्युत्तरङ्गा आलोकतरङ्गाश्चोभयोर्नास्ति तात्विको भेदः।

सन्ति चालोकतरङ्गे केचनासाधारणा धर्माः धातुपदार्थेष्वालोकतरङ्गाणां प्रवेशो भवति, अत एव प्रायो धातव अनाविला न भवन्ति आलोकतरङ्गाः प्रतिफलन्तोऽपि परावृत्ता भवन्ति, कठिनेषु च पदार्थेषु ते तिर्यङ्निपतन्ति। आकाशतरङ्गेऽपि तावदेत एव धर्माः प्रत्यक्षीकृताः।

एतद्यन्त्रसाहाय्यादाविष्कृता अज्ञातपूर्वा आलोकतरङ्गधर्माः परिचिताः। आलोकतरङ्गैर्विधीयमानानि कार्याणि साम्प्रतं प्रत्यक्षीक्रियन्ते निखिलैः। आलोकतरङ्गाः साम्प्रतमुपभुज्यन्ते ऽनुभूयन्ते च ते ह्यधुना प्रत्ना इति निर्द्दिश्यन्ते अध्यापकमहोदयेनाविष्कृता अभिनवा विद्युत्तरङ्गधर्मा निर्द्दिश्यन्तेऽत्र पाठकानामवबोधाय।

धातुचूर्णानि विद्युत्प्रवाहमुद्भावयितुं न क्षमन्ते। परं विद्युत्तरङ्गाणामाघातात्तान्यपि परिचालनक्षमाणि सम्पद्यन्ते, तदा तद्धातुचूर्णमध्यतः प्रवहन्ति विद्युत्तरङ्गाः अय हि प्रत्नः सिद्धान्तः। एतत्सिद्धान्तोपष्टम्भेनैव तरङ्गनिर्द्देशकयन्त्राणि निर्मीयन्ते। विद्युत्तरङ्गाघातात् धातुचूर्णकणिकासु कापि विकृतिरुत्पद्यते, येन हि तन्मध्यतो निर्बाधं प्रवहन्ति विद्युत्तरङ्गाः। ताः कणिकाः पुनः प्रकृतिमापादयितुमपेक्ष्यते कश्चित्प्रयत्नविशेषः।

साम्प्रतं जगदीशचन्द्रमहोदयेन प्रमाणितं यत्कणिकानां प्रकृत्यापादने न कोऽपि प्रयत्नोऽपेक्षितो भवति। सन्ति तथाविधा बहवो धातवः, ये विलैशायासमात्मनः प्रकृतिमापद्यन्ते। नम्रीकृता कापि तन्त्रीर्भूयोऽपि पुरातनीमात्मनोऽवस्थामासादयतीति।

स्थितिस्थापकधर्मवतां पदार्थानामापेक्षिकः स धर्म इति स्वीकर्तव्यम्। तन्त्री प्रयत्नविशेषमासाद्य नम्रीभवति, परं स्थितिस्थापकधर्मवशात् सा तन्त्री स्वत एव नम्रीभावं जहाति। परसीमानमनुल्लङ्घ्य विहिते नम्रीभाव एव तन्त्री सरला भवति, सीमोल्लङ्घनपुरःसरं विहिते नम्रीभावे न सा तन्त्री पुनः स्वयं सरला भवितुं शक्नोति। एष एव लोहशीशकयोर्भेदः। कुञ्चितो लोहः स्वत एव नक्रतां त्यजति, न तथा शीशकः।

धातूनां परमाणवोऽपि स्थितिस्थापकधर्मवन्तः। विद्युत्तरङ्गाघाताच्च ते परमाणवः स्वस्थानसमुत्सारिता भवन्ति, पुनः स्वत एव स्थितिस्थापकधर्मयुक्ता इति स्वस्थानमधिकर्तुं प्रयतन्ते। अधिसीमं विहिते आघात एव ते पुनः स्वरूपानमधिकुर्वन्ति, इतरथा तु तान् प्रकृतिमारोपयितुं प्रयत्नो ऽपेक्षितो भवति।

अध्यापकमहोदयस्यापरमाविष्कारमुपश्रुत्य चित्रीयते चित्तं वैज्ञानिकानाम्। अद्य यावदज्ञातमासीद् यद्विद्युत्तरङ्गाणामाघातादेव धातुचूर्णेषु विद्युत्प्रवाहपरिचालनशक्तिरुदेतीति। परं जगदीशचन्द्रमहोदयो निर्दिशति केषाञ्चित् पदार्थानां विद्युत्तरङ्गाघातात्सा शक्तिः परिवृद्धा भवति केषाञ्चिच्च पदार्थानां सा शक्तिर्ह्रासमेति इत्थं हि निखिलानां धातूनां परीक्षणविधया जगदीशचन्द्रः प्रत्यपादयत्, यद् द्विधा विभक्तुं शक्यन्ते निखिला धातवः विद्युत्तरङ्गसंक्षोभात् केषाञ्चित् पदार्थानां शक्तिः परिवृद्धा भवति, केषाञ्चिच्च सा शक्तिरुपक्षीयत इति। अयमभिनव आविष्कारोऽध्यापकमहोदयस्य। तदानीमपि यूरोपीयविदुषामविदित एवायमासीदभिनवस्तथ्यः। विद्युत्तरङ्गकृतायाः परिचालनशक्तेरेष सम्बन्धो न केष्वेव धातुषु निहितो वर्तते, अपि तु निखिलेषुपदार्थेषूपपदार्थेषु चेयं परिचालनशक्तिरुत्पद्यते विद्युत्तरङ्गाणां सक्षोभात्। अस्य तत्वस्याविष्कारादभिनवः कश्चन जडपदार्थानां धर्म आविष्कृत इति निर्विशङ्कं वक्तुं शक्यते। माइकेलफारडोरमहोदयेन हि बहुपूर्वं निखिलेषु पदार्थेषु चौम्बकत्वमासीदिति प्रतिपादितमभवत्। अयमभिनवाविष्कारस्तेन प्रत्नाविष्कारेण समं तुलयितुं शक्यत इति विमर्शः प्रेक्षावताम्।

अद्य यावद् यावन्तो मूलभूताः पदार्थाः परिगृहीता वैज्ञानिकै, तेषु निखिलेष्वपि विद्युत्तरङ्गाघातात् परिचालकत्वमुत्पद्यते इति साम्प्रतं प्रमाणीभूतम्। केषाञ्चिच्च पदार्थानां सा शक्तिरधिकं परिवर्द्धते, केषाञ्चिच्च सा शक्तिर्न्यूनं ह्रसते। इत्थमेषां पदार्थानां ह्रासवृद्धितारतम्यमनुसृत्य श्रेणीकृतेषु मूलभूतपदार्थेषु किमपि विस्मयकरं वैचित्र्यमाविर्भवति नयनयोः पुरः।

रासायनतत्वज्ञो रूष्यो मेन्देलिएफपण्डितो हि परमाणूनां गुरुत्वानुसारं मूलभूतान् पदार्थान् श्रेणीकृत्य तेष्वभिनवः कश्चन यौनसम्बन्ध आविष्कृतोऽभवत्। मूलभूतेषु तेषु पदार्थेषु वर्तमानः स सम्बन्धः प्रमाणीकृतोभवन्मेन्देलिएफमहोदयेन। क्रूकसपुरोगाः पण्डिता सम्बन्धमिममनुसन्धाय ते मूलपदार्था अप्येकस्मादेव मूलभूतात्पदार्थादुत्पन्ना इति प्रमाणयितुं प्रायतन्त। दारुवीणमहोदयो यथा प्राणिनामुद्भिज्जानाञ्च पारस्परिकमेकजातीयसम्बन्धं व्यवस्थापयन्, तथा पदार्थानामपि सम्बन्धान्वेषणे प्रयत्नपरा वैज्ञानिकाः। नाद्य यावद्वैज्ञानिकानामेष सम्बन्धान्वेषणप्रयासः फलेग्रहिः समभवत् परं जगदीशचन्द्रमहोदयेन कृत आविष्कारस्तेषां सम्बन्धान्वेषिणां बहूपकरिष्यतीति दृढा प्रत्याशा।

विद्युत्तरङ्गाणामाघातात् केषामपि पदार्थानां परिचालकत्वमुपचीयते, केषाञ्चिच्च तदपचीयते। कदाचिच्चैकस्मिन्नेव धातावाघातप्राचुर्यहेतोरुपचितमपचितञ्च भवति तदीय परिचालकत्वम्। किञ्च येषां पदार्थानां परिचालकत्वमल्पप्रयासेनैव परिवर्द्धते, नापक्षीयते तेऽपि धातव यदा उत्त्‍ञ्जिता भवन्ति, तद

तेषामपि तत्परिचालकत्वं वर्द्धते चोपक्षीयते च । पूर्वं परमाणवो विजड़िता आसन्, उत्तापमासाद्य, परित्यक्तसार्थास्ते परिभ्रमन्तीव परितो विलोक्यन्ते ।

न केवलं मूलभूतानां पदार्थानामेव तरङ्ग-संक्षोभाद्विकृतिरुत्पद्यत इति, किन्तु योगजा अपि पदार्थास्तरङ्गाभिघातमेत्य प्रतिक्रियामुत्पादयितुं क्षमन्ते । जगदीशचन्द्रमहोदयो हि लौहभस्मविद्युत्तरङ्गै राहत्य तदीयान् परमाणून् नर्तयतीति विलोक्य यत्सत्यमभिनन्दन्ति तदीयं वैज्ञानिककौशलं प्रेक्षावन्तः ।

तरङ्गाघातेन धातुचूर्णेषु परिचालकत्वं वर्द्धत इत्यवलोक्य प्रसिद्धो वैज्ञानिको लज-महोदयः सिद्धान्तमेकं व्यवस्थापयत् । यो हि निर्दिष्टोऽस्माभिः पूर्वमेव । विद्युत्तरङ्गाघाताद्धातुचूर्णकणिकापरमाणवः परस्परं संहताः सन्निकृष्टाश्च भवन्ति । अतस्तत्र परिचालकत्वमुत्पद्यते ।

परं साम्प्रतं केषाञ्चित्पदार्थानां परिचालकत्वं वर्द्धते, केषाञ्चन चापक्षीयते, कदाचिच्चैकस्यैव पदार्थस्य परिचालकत्वमुपचीयतेऽपचीयते चेत्येव द्रढीभूतः । इत्थं संहतिमूलिका व्याख्याऽमूलिकेति वक्तव्यम्, लजमहोदयेन च व्यवस्थापितः सिद्धान्तः सुतरां निर्मूल इत्यनिच्छतापि वक्तव्यमेव ।

विद्युत्तरङ्गाघातान्निखिलानां पदार्थानां प्रश्लाद्देशस्थाः परमाणवो विचलिताः स्थानभ्रष्टाश्च भवन्ति, इतस्ततो विक्षिप्ताश्च जायन्ते । इतो विक्षिप्तेषु परमाणुषु तस्य पदार्थस्य परिचालकत्वं वर्द्धते, ततो विक्षिप्तेषु च परमाणुषु तद्ध्रसत इति साम्प्रतमियमेव व्याख्याधिकं रोचते वैज्ञानिकानाम् ।

किञ्च स्थानभ्रष्टा विचलिता वा परमाणवः स्थितिस्थापकधर्मवशात्पुनः पूर्ववद्भवन्ति । पूर्वं विचलिता अपि स्वयमेव स्वस्थानमधिकुर्वन्ति परमाणवः, लभन्ते च स्वाभाविकीं परिचालनशक्तिम् प्रबलतरङ्गाघाताश्च परमाणवः स्थितिस्थापकसीमानमतिक्रामन्ति, अतो न ते स्वयं स्वस्थानमधिकर्तुं पारयन्तीति ।

अध्यापकजगदीशचन्द्रमहोदस्यापर आविष्काराः प्रबन्धान्तरे सङ्कलय्य पाठकमहोदयेभ्य उपहरिष्याम इति निश्चित्य साम्प्रतं विरमामः ।

---

## नवतनुः ।

—:०

एष महात्मा पाश्चात्येषु कोऽपि परमो विज्ञानवेत्ता संबभूव । अयं हि सरआईजक न्यूटननाम्नाभिधीयते तेषु देशेषु । काल-स्वार्थ नामके ग्रामे १६४२ खीष्टाब्दस्य दिसम्बरमासीयपञ्चविंशे दिवसे महात्मनोऽस्य जन्माभवत् । अयं न कस्यापि धनिकस्य कुलमात्मनो जन्मना समुद्भासितवान् । अपि त्वेनस्य पिता भूमिकर्षणवृत्तिमवलम्ब्य निर्वाहयति स्म गृहकृत्यम् । कोपर्निकसगालिलियप्रभृतीनां वैज्ञानिकानां सिद्धान्तं प्रचार-

यितुमेष जन्मपरिग्रहमकरोदिति तत्रत्यानां विश्वासः।

एतस्य शिक्षणं स्नेहमय्या जनन्यैव बाल्ये प्रारब्धमभवत्। ततो द्वादशवर्षदेशीयेऽयं ग्रन्थामनगरे कस्यामपि लाटिनपाठशालायां प्राविक्षत। तत्र हि शिल्पकलादिषु नवनवमात्मनः पाटवं प्रदर्शयन् त्वरितमेवाध्यापकानां मनांस्यावर्जयदेष। अस्य तादृशं कौशलं विलोक्य के न विस्मिता-स्तदानीन्तनास्तदीयमतीर्थ्याः। अयं न कदापि क्रीडापरवशः सम्बभूव। यदा एतस्यापरे सहाध्यायिनः क्रीडन्ति स्म तदायं अवहितो घरट्टयन्त्रादीनां निर्माणकौशलं विलोकयति स्म। अयमेकदा पठनसमये जलघटीयन्त्रं निर्मितवान्, यस्य हि समयबोधकः शङ्कुः परितो भ्रमता जलेन परिचालितो बोधयति स्म यथावत्समयम्।

अध्ययनं समाप्य पित्रावलम्बितां वृत्तिमयमपि वर्तयिष्यतीत्यासीत्पूर्वं निश्चयः सकलानाम्। अयं कृषिक[illegible] दीक्षितश्चाभवत्। परं त्वरितमेवायमसमर्थस्तत्रेति निश्चिक्युः सकला जनाः यतोऽयं भूमिकर्षणभृत्यपर्यवेक्षणादिषु सर्वदा ग्रन्थसंलग्नदृष्टिरेवाभवत्। वस्तुविक्रयसमये च कस्यापि भृत्यस्योपरि तद्भारं विनिक्षिप्य यत्र कुत्रापि सन्निविष्टो गणितप्रश्नसमाधाने मतिमधत्त। पुत्रस्य विद्याभ्यासे समौत्सुक्यं निरीक्ष्य तदीया जननी भूयोऽपि तमध्ययनाय पाठशालायां प्रेषितवती। ततः १६६० खृष्टाब्दे केम्ब्रिजविश्वविद्यालयायत्ते त्रिनीतिनामके विद्यालयेऽयं प्रवेशमकरोत्।

अयं हि परिश्रमेण, प्रज्ञया, शीलेन, अहमिकाशून्येन सदाचारेण चाध्यापकानां सहाध्येतॄणाञ्च कोऽपि प्रशंसनीयः शिष्यः प्रणयी सखा च संवृत्तः। न्यायशास्त्रं, दृष्टिविज्ञानं, चलनगणितञ्च यथावदधीतवान्। डेकार्टनिर्मितं रेखागणितमयं परमेण परिश्रमेणानुशीलितवान्। प्रत्नानां गणितज्ञानां निखिला ग्रन्था न तेनाधीता इत्यासीत्तस्य महान् विषाद इति कथयन्ति स्म तत्सामयिकाः। केम्ब्रिजविद्यालयाध्ययनकाले आलोकतत्त्वनिर्णयाय महान्तं प्रयासमन्वतिष्ठत्। अस्मात् पुराभवानां विदुषामासीदल्पमेव ज्ञानमालोकतत्त्वस्य प्रथितमहिम्नां। पण्डितडेकार्टमहोदयेन सिद्धान्तोऽयं स्थिरीकृत आसीत् यदस्त्यन्तरिक्षव्यापी स्थितिस्थापकगुणोपेतश्च कोऽप्यतितरलः पदार्थो नाम। यस्य हि सञ्चालनविशेषादुत्पद्यत आलोकपरम्परा। परं सिद्धान्तोऽयमपसिद्धान्त इति प्रामाणयत्तैस्तैर्वचनोपन्यासैः श्रीमान्नवतनुः स हि कस्याप्यन्धकारपूर्णस्य गृहस्य कपाटमध्यस्थं छिद्रं केनापि बहुकोणवता काचखण्डेन पिहितमकरोत् तत्र काचखण्डे प्रतिफलिताः सूर्यरश्मयो गृहमध्यं सप्तधारेण प्राविशन्। एवंविधाभिः परीक्षाप्रक्रियाभिस्तेन महोदयेन कतिचन सिद्धान्ताः स्थिरीकृताः। अयमालोकपदार्थः किरणात्मकः, किरणानि च विभाजयितुं शक्यन्ते। शुक्लस्याप्यालोकस्य किरणानि रक्त-

पीतनीलवर्गैः किरणैरुत्पाद्यन्ते । इमानि त्रिविधान्यपि किरणानि भङ्गुराणि । नवतनोरेष अभिनवाविष्कारो दृष्टिविज्ञानशास्त्रस्य मूलसूत्रमित्यङ्गीक्रियते प्रेक्षावद्भिः ।

१६६५ खृष्टाब्दे केम्ब्रिजनगरं सहसैव भयङ्करेण मारीभयेनोपद्रुतमभवत् । तत्रत्याश्छात्रा अपि तन्नगरं परितत्यजुः । नवतनुरपि तन्नगरं परित्यज्य स्वगृहं समाश्रयत् । तत्र न कोऽपि पुस्तकालय आसीत् यत्र पुस्तकान्युपलभ्येरन् । नापि विश्रुतोद्यमाः केऽपि विपश्चित आसन्, यै. कोऽपि शास्त्रचर्यावसरः समुपलभ्येत, नवतनोः । परमथापि तस्मिन्समये जगद्विस्मयकरं कमप्यनिभवं सिद्धान्तमयमाविरकरोत् । अस्मिन्नेव समये पृथिव्या गुरुत्वाकर्षणशक्तिरेतेन पाश्चात्येषु प्रथमं दृष्टा। एष एवाभिनवसिद्धान्ताविष्कारो नवतनोः श्लाघ्यतमप्रयत्नस्य प्रधानं फलम्—विज्ञानशास्त्रस्य किमप्युज्ज्वलतरं मनोहरञ्च रत्नम् ।

कदाचिदयमुपवनमध्यगतः कस्यापि तरोश्छायायामुपविष्ट आसीत् । तदैव तस्माद्वृक्षादेकं फलं भूतले विपतितमभवत् । तद्दर्शनसञ्जातसमुत्कण्ठो नवतनुः पतनकारणं निर्णेतुं प्रवृत्तः समभवत् । निर्णीते च तत्कारणतत्वे सिद्धान्तममुं व्यवस्थापयदेष यत् येन हेतुना वृक्षत्फलानि भूतले पतन्ति तेनैव हेतुना चन्द्रो ग्रहाश्च नियमिताः सन्ति । साकाऽपिशक्तिः । यया नियमितं निखिलं जगत् । एतत्सिद्धान्ताविष्कारेण ज्योतिर्विद्याया महानुपकारः समजनीति कोऽत्र संशयीरन् तज्ज्ञाः ।

एष १६६७ खृष्टाब्दे पुनः केम्ब्रजनगरं प्रत्यावृत्तस्त्रिनीतिविद्यालयत उपलब्धवान् पारतोषिकम् । ततो व्यतीते वर्षद्वये कस्यापि गणिताध्यापकस्य पदं रिक्तमभवत्, तत्र नवतनुरेव नियोजितस्तदध्यक्षैः । प्रथममात्मना प्रकाशिता दृष्टिविज्ञानविषयका नियमाः समुपदिष्टाः समभवन् महाभागेन नवतनुना । अयमात्मनोऽभिनवं सिद्धान्तं तथा विवरीतवान् येन निखिलाश्छात्राः सुखेनैवावगन्तुं पारयेयुः ।

महात्मा नवतनुः १६७१खृष्टाब्दे राजकीयसदसः सदस्यो वृत्तोभवत् । परमयं तत्र प्रतिमासं दीयमानं धनन्दातुमसमर्थ इति विज्ञापितास्तेन तन्मोचनाय तदध्यक्षाः। नासीत्प्रचुरो लाभ इति नासील्लेशतोऽपि विषादो मनस्येतस्य । अयं स्वल्पेनैव लाभेन सन्तुष्टो ग्रन्थानुशीलनपर एव यापयति स्म समयम्।

१६८३ खृष्टाब्दे महात्मनानेन ग्रथितः कोपि ग्रन्थः । यो हि "प्रिन्सिपिया" नाम्नाऽद्यापि प्रथते । अत्र गणितसिद्धान्तानुसारं मीमांसिता पदार्थविद्या । १६८८खृष्टाब्दे केम्ब्रिजविश्वविद्यालयप्रतिनिधिरूपेण प्रधानराजकीयसभायाः सदस्यतामवलम्बितुमेष प्रोत्साहितोऽभवत् । १७०१खृष्टाब्दे चायमलभत लोकोत्तरयोग्यतानिष्क्रयं तत्पदम् । ये ये महान्तो नवतनुगुणनिर्जिता आसन्, तेषां प्रयत्नेनायं राजकीयमुद्रानिर्माणशालाया अध्यक्षपदे वृतः

समभवत् । यावज्जीवनमयमत्रपदे प्रतिष्ठितो विस्तारयामास कुन्देन्दुशुभ्रं यशः ।

साम्प्रतं हि फलित नवतनोस्तपःपाद पेन । निखिलस्यापि देशस्यावर्जितंहृदयमेत-दीयेन गुणेन । सर्वत्रैवाय पुरस्कृतः सम्मानितश्चाभवत् । परोत्कर्षमसहमानानां हृदयमनिशं तप्यते दुर्विषहेण मत्सरानलेन । लेविनजनामकः कश्चन पण्डितो नवतनुयशोभानुसमुदयविवर्णवदनारविन्दस्तद्विलोपाय सततं प्रायतत् । तेन हि कमपि विषयमधिकृत्य पृष्टो नवतनुः । नास्य समाधानं कर्तुं समर्थः स इति लेविनजपण्डितेन निर्द्धारितमासीत् । परं तन्निर्द्धारणं प्रतीपं परिणतम् । त्वरितमेव तस्य प्रश्नस्योत्तरमदान्नवतनुः । अतः परं नीरूजीभूतं नवतनुयशो निचयेन । एतस्य तात्त्विकं रूपं तदा प्रतिफलितमभून्निखिलानां हृदयेषु । ततः परं न कोऽप्यस्य कीर्तिविलोपाय प्रायतत । १७०५ खृष्टाब्दे राजोपाधिना भूषितोऽयमभवदाङ्लराज्ञ्या । महत्पदप्राप्त्याप्यस्य हृदयं नाभिमानकलङ्काकलितमभवत् । प्राकृतैर्महद्भिश्चास्यासीत् समानो व्यवहारः । अत एवायं मनो जहार निखिलानाम् ।

असमोऽयं दयालुर्दाता चासीत् । अदत्तां जोवनमेव निष्फलमित्यासीद्विश्वास एतस्य । वार्द्धक्येऽप्यस्य बुद्धिर्न कालुष्यमुपययौ । मिताहार प्रसन्नाननञ्च त जरा नाभिभवितुमशकत् । नास्य दृष्टिशक्तिः क्षीणाऽभवत् । प्रयाणकाले चायं महतीं शरीरयातनामनुभूतवान् । चतुरधिकाशीतिवर्षमिते वयस्ययं परलोकमगात् ।

नवतनोर्हि चरितं केनापि भासा समुद्भासितमासीत् । कथमयं प्राधान्यमासादितवान् समाज इति पर्यालोचनं महते फलाय कल्पते । एवंविधानामेव जीवनचरितमुपदिशति कर्तव्यपथम् । तेन हि ग्रहाणां गतिः समुद्रतरङ्गा. धूमकेतूनामवस्थितिरित्यादयो विषयाः सुस्पष्टं परिष्कृताः, आलोकवर्णस्वरूप निर्णयश्चविहितः । असमेनायासेनानुपमया च प्रज्ञया सृष्टेर्याथातथ्यं निरूपितम् । नवतनुप्रतिमा वैज्ञानिका एव भगवतो महिमानं प्रथयन्ति ।

नवतनुर्लोकवरेण्योऽपि विनयी सम्मानितोऽपि सम्मानयिता लोकस्यासीत् । मरणशय्यामधितिष्ठताऽनेन कोऽपि मन्त्र. समुपदिष्टः । स चायं मन्त्रः "यावज्जीवं ज्ञानरत्नाकरमनुसन्धातुं प्रयस्यतापि न तद्दर्शनमासादितम्, किन्तु तद्वेलायामुपलखण्डनिचय एवातिवाहितोऽशेषः कालो मया" इति ।

---

## कौशाम्बी ।

—:०:—

प्रयागादनतिदूरे कौशाम्बीनगरी समुपवर्णिता पुराणेषु । इयं हि प्रथितयशसां महीयानां राजधानी समभवत्समये समये । कदाचिदियं कौशाम्बीनाम्ना, कदाचिच्च

कौशाम्बीमण्डलनाम्ना सुप्रसिध्यति स्म। साम्प्रतं "कोसम" नाम वहन्ती कापि पल्ली कौशाम्बीनगर्या ध्वंसावशिष्टो भाग इति विश्वसन्ति बहवः प्रत्नतत्वज्ञाः। रामायणे विश्वामित्रमुखेन वर्णिता दृश्यत इयं नगरी। सलक्ष्मणेन रामेण समं मिथिलां प्रति प्रस्थितवता महर्षिणा विश्वामित्रेण वर्णितास्ते ते जनपदादयः। तत्रैव कौशाम्बनगरस्यापि समुल्लेखो दृश्यते। महर्षिर्निर्दिशति पुरा प्रसिद्धः कुशनामकः कश्चिद् ब्रह्मतनयः। तस्य दयिता वैदर्भी, कुशः कुशनाभोऽमूर्तरजा वसुश्चेति चतुरः पुत्रान् प्रासोष्ट। तैर्हि चतस्रो नगर्यः प्रतिष्ठापिताः। कुशाम्बः कौशाम्बीं, कुशनाभो महोदयम्, अमूर्तरजा धर्मारण्यं, वसुश्च गिरिव्रजपुरं निर्मितवान्। साम्प्रतं कौशाम्बी "कोसम" नाम्नाभिधीयते, महोदयनगरस्य "कनौज" इति नामाभवत्; गिरिव्रजपुरं वसुमती नाम्ना प्रसिद्धिमागतम्। इदं गिरिव्रजपुरमेव मगधराज्यस्य राजधानीति विद्वांसो निश्चिन्वन्ति, रामायणेऽपि तत्पुरं "मागधी" नाम्ना वर्णितं दृश्यते। नोपलभ्यते धर्मारण्यविषकः कोऽपि निश्चितो वृत्तान्तः।

महाराजस्य पुरूरवसो दशमपुरुषपर्याये कुशाम्बुनामकः कश्चन नरपतिरभवत् तेनैवेदं नगरं प्रतिष्ठापितमित्यपि वर्णितं कुत्रचित्पुराणेषु। विष्णुपुराणे दृश्यते, गङ्गाम्भसि निमग्ने हस्तिनापुरे कुरूणां राजा नेमिचक्रः कौशाम्बीमेवाधितष्ठौ। तदेदं नगरं कुरूणां राजधानीति महतीं प्रसिद्धिमापत्। महाकविना कालिदासेन च मेघदूतनामके ग्रन्थे उदयननामकः कौशाम्बीनरेश्वरो वर्णितो दृश्यते बौद्धग्रन्थेष्वप्ययं प्रथितः समुपवर्णितः कौशाम्बीनायक उदयनः, "महावंश" नामको बौद्धग्रन्थः पञ्चमशताब्द्यां विनिर्मितः तत्र वैशालीनगरीतः पलाय्य महानुभावेन यशोनामकेन नरपतिना कौशाम्बीनगर्यां समाश्रिता बौद्धसभेति लिखितं विलोक्यते। ललितविस्तरनामको निबन्धो बौद्धानां मान्यः प्रबन्धः, खृष्टाब्दस्य ७०-वर्षे ग्रन्थोऽयमनुदितोऽभवच्चीनभाषया, अतोऽयं ग्रन्थः खृष्टाब्दारम्भतः पूर्वमेव विनिबद्ध इति निश्चीयते। तत्र कौशाम्बीनरेश्वरतनयस्योदयनवत्सस्य जन्मदिनमुल्लिखितं दृश्यते। भगवतो बुद्धस्य जन्मदिनमेतस्यापि जन्मदिनमिति तत्र स्फुटम्। सिंहलीये ग्रन्थे भारतस्योनविंशतिनगराणि वर्णितानि, तत्र कौशाम्बीनगर्यपि वर्णितेति। रत्नावलीनाटिकायां कौशाम्बीप्रजानाथस्य वत्सेति नाम विनिर्दिष्टम्, तद्राज्यञ्च वत्स्यपत्तननाम्ना परिचितम्। भगवान् बुद्धो बौद्धत्वोपलम्भात्पर षष्ठो नवमश्च वत्सरः कौशाम्बीनगर्यामेवात्यवाहयत्। चीनपरिव्राजको हुएनत्सङ्गो निर्दिशति—"चन्दनकाष्ठरचिता विद्यते कापि प्रतिमूर्तिर्भगवतो बुद्धस्य कौशाम्बपुरे, सा हि बुद्धावस्थानकाल एवोदयनमहाराजेन निर्मापिताभवत्। राजप्रासादाभ्यन्तरे प्रस्तरपेटिकायां सा बुद्धप्रतिमूर्तिर्निहितासीत्। रत्नावलीनाटिकायां वर्णितं कौशाम्बनगरम्। इयं नाटिका हर्षदेवेन विनिर्मिता, कान्यकुब्जा-

धीश्वरोऽयं हर्षदेवो, न रत्नावलीकारः, अपि तु काश्मीराधीश इति केषाञ्चिन्मतम्। कनिंहममहोदयस्तु कान्यकुब्जाधीश्वर एव रत्नावलीकार इति स्वीचकार। षष्ठशताब्द्यां रत्नावली ग्रथिता कान्यकुब्जेश्वरेण। "खारा" दुर्गे कापि प्राचीनलिपिरुपलब्धा प्रत्नतत्वज्ञैः। तत्र १०३५ खृष्टाब्दे कौशाम्बीनरेश्वरः कान्यकुब्जेश्वरकरदभावं निरस्य स्वातन्त्र्यमवलम्बत इति लिखितं दृश्यते। अतः कौशाम्बीकान्यकुब्जेश्वरयोर्हर्षदेवहर्षवर्द्धनयोर्न वस्तुतो भेद इति प्रतीयते।

पाण्डुवंश्यानां राजधानी कौशाम्बी विलुप्ता। साम्प्रतं न तत्र हुयेनत्सङ्गपरिदृष्टा बौद्धप्रतिमूर्तिर्विलोक्यते। नापि तन्मन्दिरं विलोभयति मनो मनस्विना परिव्राजकाणाम्। साम्प्रतं तत्र स्थिता "कोसम" इति प्रसिद्धा पल्ली समाश्वासयति कौशाम्बीदर्शनोत्सुकान्। अत्रैव कौशाम्बीनगरी पुरा प्रतिष्ठिताऽभवदिति वदन्ति तज्ज्ञाः।

प्रयागदुर्गात्सार्द्धपञ्चदशक्रोशान्तराले वर्तते तदिदं कोसमनामकं नगरम्, यद्धि कौशाम्बनगरस्यैवावस्थितिं सूचयति। कौशाम्बीप्रयागयोरन्तरालदेशनिर्देशादिदं कोसमनगरमेव कौशाम्बनगरस्य ध्वंसावशिष्टं रूपमिति निश्चीयते। अद्याप्यत्र प्रत्नानि भग्नप्राकारखण्डानि विलोक्यन्ते यानि समर्थयन्ति तत्र कस्यापि समुन्नतो नगरस्यावस्थानम्। ततोऽनतिदूरे प्रभासनामक एको गण्डशैलो विलोक्यते, तत्रैव पुरा राजभवनं निर्मितमभवदिति बहूनां विश्वासः। कौशाम्बीमण्डलस्य परिधिः सार्द्धैकशतयोजनमित इति निर्दिशति चीनसंन्यासी हुयनत्सङ्गः। परं प्रत्नतत्वज्ञः कनिंहमपण्डितस्तु नात्र विश्वसीति मण्डलस्यास्य पञ्चविंशतियोजनानि परिधिरिति निर्दिशति च। मुद्गल्यसम्राजाकबरेण कोसमनगरे कोपि प्रस्तरस्तम्भो निर्मापितोऽभवत्। तत्र हि कौशाम्बीपुरमिति नाम विनिर्दिष्टम्। कौशाम्बीकोसमनगरञ्चोभावेक एवेतीत्थं निश्चीयते।

---

# संस्कृत-साहित्य-सम्मेलनम्।

नेदमाश्चर्यम्! पाठकाः नेदमाश्चर्यम्! सत्यं ब्रवीमि, विश्वस्यतां मद्वचसि, आगामिनि ज्येष्ठशुक्लपक्षे, दशम्यां तिथौ "संस्कृतसाहित्यसम्मेलन"म्भविता। कस्मिन् स्थाने, कस्य च प्रबन्धेनेति—पश्चाद् वक्ष्यामः, प्रथमं श्रूयतामस्य संक्षिप्त इतिहासः।

गतवत्सरे, ज्येष्ठशुक्लदशम्यां, ऋषिकुलब्रह्मचर्याश्रमहरद्वारस्य वार्षिकोत्सवे वयमपि समगच्छाम आहूताः। गुरुकुलस्येवास्मिन्नपि विविधाः परिषदोऽन्तर्हिताः—"ज्योतिषसम्मेलन विद्वत्समित्यादयः"।

गुरुकुलीयास्तु स्ववार्षिकोत्सवावसरे, समागतान् आर्यसामाजिकपण्डितान्, ब्रह्मचारिणश्चैकीकृत्य "सरस्वतीसम्मेलनं" सम्पा-

दयन्ति । हिन्दसंस्कृतलेखान्, भाषणादींश्च वितीर्य ते सूपकुर्वन्ति मातृभाषाम् । ऋषिकुलीयाश्च तेषामनुकरणं समानतां वा सम्पादयितुं बद्धपरिकराः, स्वमण्डपेऽपि पण्डितानाहूय "विद्वत्समितिं" निर्वर्त्तयन्त्येव यथासाध्यम् । दैवात् गतवर्षे म० म० पं० शिवकुमारशास्त्रिणोऽपि सममिलन् सभायाम् । त एव च सभापतित्वमत्यवाहयन् ।

परं वयमिमां दुर्दशां वीक्ष्य सर्वनमस्कृतायाः सुरसरस्वत्या नितरां हृदि दह्यमाना अन्तःसन्तापेन, मौनमेवावलम्ब्य स्थिताः । दैवात् समागत उद्धारस्यात्मवायोःप्रकाशमयः समयः । व्या०वा०पं०दीनदयालुशर्म्मणः पुरत आसन् विचारयन्तो विषयमिममेकदिने म०म० हरनारायणशास्त्रि, पं०बुलाकीरामविद्यासागर, प०गिरिधरशास्त्रिप्रभृतयो महामतयः । अलभ्यमिममवसरमाकलय्यास्माभिरुक्तम् सविनयञ्च, सानुरोधञ्च यत्—सवथाऽसाम्प्रतम् तेषामिदमनुष्ठानम् , 'सरस्वतीसमेलन, विद्वत्समितिश्चैकस्मिन्नेव स्थाने पृथक् पृथक् भवत इति नूनं कुलक्षणम्, नेत्थं संस्कृतोन्नतिः स्वप्नेऽपि सम्भाव्यते, अपि तु अवनतिरेव सुसाधिता स्यादेवम्भेदवादे प्रवृद्धिमुपगते । बङ्गला,मराठी,हिन्दीप्रभृतिसंस्कृतजातभाषाणाम् संमेलनानि प्रतिवर्षमतिद्धयेनोत्साहेनापूर्वेण सम्भारेण, सम्भूय सर्वैः परित्यज्य भेदधियमेकतासूत्रमवलम्बमानैर्विद्वद्भिर्यदा सुसम्पाद्यन्ते, तत्किन्न संस्कृतस्यापि भारतीयं साहित्यसम्मेलनं यस्मिन् कस्मिन्नपि प्रसिद्धे नगरे तीर्थस्थाने, विद्यापीठे वा प्रतिवर्षं क्रियते गीर्वाणवाणीप्रणयिभिः ? 'विद्वत्समित्यादि संकुचितनाम्नां तीव्रप्रतिवादं कुर्वता, "संस्कृतसाहित्यसम्मेलन"मितिसर्वबोधगम्यं, सार्वत्रिकं, व्यापकं, प्रचलितञ्च नामकरणं कर्त्तुमनुरुध्यन्ते सप्रश्रयं विज्ञवराः । सर्व एव ते प्रस्तावमिममेककण्ठेनान्वमोदयन् , विद्वत्समित्याश्चाधिवेशन उक्तनामादिकं समकुर्वन् । तत्समय एवैका कार्यकर्त्री सभा संगठिता, यस्या मन्त्रिपदं पं०बुलाकीरामविद्यासागरैः सहायकमन्त्रिपदञ्च सूर्यनारायणशास्त्रिभिरलङ्कृतम् ।

ज्ञात्वेदं नितरां वयम्प्रसीदामो यत्सा सभा भ्रियतेऽद्यापि सम्मेलनार्थञ्चोद्देश्यनियमादि निर्माणे दत्ताऽवधाना वरीवर्त्ति । स्थायीसमितिरपि संगठिता, प्रथममधिवेशनञ्च हरद्वार एव निर्वर्त्यत । समयो ज्येष्ठशुक्लपक्ष एव ।

संमेलनमन्त्रिणाऽस्माकमपि समीपे नियमादयः प्रेषिताः । तत्रोद्देश्यानि सप्तकं षट्कम्वेति न ज्ञातुं पार्यते ऽपरिणतबुद्धिभिः । द्वितीयोद्देश्यकीर्त्तनसमकालमेव चतुर्थमुक्तम्महात्मभिरवलम्ब्य मण्डूकप्लुतिम् । तदिदं किमपि रहस्यमुत मुद्रकप्रमादश्चेति नाद्यापि निर्णेतुं शक्नुमः । संस्कृतस्य 'मृतभाषा'— Dead language इति व्यपदेशापाकरणं, संमेलनस्योद्देश्येषु न चरमस्थानीयमितिकष्टम् ।

नियमाश्च नव । यद्यपि न तेऽद्य यावत् सभया स्वीकृतास्तथापि तृतीयनियममुद्धृत्य किमपि निवेदयामः

"अस्य समेलनस्य वार्षिकोत्सवः प्रतिवर्षं कुत्रचिद्बहुसभ्यानुमोदिते प्रसिद्धे तीर्थस्थाने, नगरे वा स्यात्। परं द्वित्राणि वर्षाणि प्रबन्धसौकर्यमनुरुध्य, श्रीहरिद्वार क्षेत्र—ऋषिकुलब्रह्मचर्यविद्यालय एवास्य वार्षिकोत्सवः स्यात्।"

नात्र वर्ष एव, अपि तु "द्वित्रवर्षाणि" "प्रबन्धसौकर्यमनुरुध्य" इति परोप गण्डस्योपरि विस्फोटः। नियमे नामकीर्त्तन सर्वथाऽसमञ्जस सञ्जातम्। युक्त त्विदमासीत् यदाद्यं संस्कृतसम्मेलन भारतीयविद्यापीठे, प्रणतप्रियंकरस्य भगवतः शंकरस्य त्रिशूलोपरि स्थितायां विनष्टवैभवानां हिन्दूनां गौरवरूपिण्यां च श्रीवाराणस्यामेव भवेत्; परतो हरद्वारादिषु यथाकामम्। हिन्दीसाहित्यसमेलनन्तु काश्यां जनि गृण्हाति, संस्कृतसमेलनञ्च हरद्वारमिश्रित्य सावहेलं सावज्ञं, सोपेक्षञ्चेक्षतीव, तिरस्कुरुतीव चास्या अद्वितीयतां प्रधानतां संस्कृतबाहुल्यञ्च स्वेनानेन कुव्यापारणेति न खलु नास्त्ययं दुःखहेतुः।

अथ 'प्रबन्धादिसौकर्यमनुरुध्य, नैव हरद्वारं त्यक्तुमभिलषति संमेलनसामितिस्तर्हि ऋषिकुलभूमिषु, तत्प्रबन्धेन च नैव कदाप्यनुष्ठेयमिति विचार्योऽयं विषयः। ऋषिकुलवा स्याद् गुरुकुलं वा नामतो ग्रहणेऽवश्यं साम्प्रदायिकताया अचिकित्स्य आतङ्कः संक्रान्तः स्यात्। न च कोऽपि, कथमपि रोगमिमं प्रशमयितुं प्रभवति। साहित्योन्नतिविषये साम्प्रदायिकतायाः सर्वात्मना परित्याग एव श्रेयस्करः। मतविरोधे हि समुपस्थिते विषायते ऽमृतेन, परिणामरमणीयकं खपुष्पायते च। परं न जानीमः संस्कृतसम्मेलनस्य कृते कोऽसावभिनव एव द्वेषानलस्तप्यते प्रज्वाल्यतेच व्यर्थमेवाजस्रं कुनियमघृतधाराऽभिसम्पातैः! अथ नैव कथमपि ऋषिकुलतपोभूमिपरित्यागं सोढुं शक्नुवीरन् स्थायिसभ्याः, तर्हि कृपया नियमेषु तु नैव लिखन्तु 'प्रबन्धसौकर्य'मात्रमेवानुरुध्य 'द्वित्रवर्षाणि' यावत् ऋषिकुल एवानुष्ठेयं समेलनमिति; तथा सति ऋषिकुलवार्षिकोत्सवाङ्गीभूतोयं न स्वप्ने पि पुष्पितुं, फलितुं, साहित्यमहावृक्षायितुञ्च शक्नुयात्, आविद्वदङ्गनमागोपालपामरञ्चास्याकांक्षितः प्रचारो दुःशकः सन्दिग्धश्च सञ्जायेत। परं मन्ये सरस्वतीसम्मेलनस्य सञ्चालका विहाय द्वैतधियमेकतासाम्राज्यं स्थापयितुं भारतस्योपेक्षिताया मातृभाषायाः साहित्याभिवृद्धिमहायज्ञे 'विद्वत्समिति'सञ्चालकानां यावच्छक्यं कुर्य्युः साहाय्यम्।

एतत् खलु विशेषतो विवरीतुमनावश्यकं यत्तत्तासां भाषाणामभ्युदयाय सर्वतो बहुपरिकरेष्वपि तत्तद्भाषाप्रणयिषु संस्कृतभाषाप्रणयिनोऽद्याप्युदासत एव, तत एव चानुदिनमधिकाधिकमवनमत्येव सेयं भगवती गीर्वाणवाणी, न खल्वेतदस्माकमार्यवंश्यानामौचित्यमावहत्याचरितम्। ततोऽस्माभिरपि स्वस्य गौरवलेशमप्यभिरक्षितुकामैर्यावद् बुद्धिबलं विचेष्टितव्यमेव स्वोपजीव्यायाः संस्कृतभाषाया

भूयसेऽभ्युदयाय—इति समेलनमन्त्रिणामादेशमन्तरेणोररीकृत्यसामन्दानन्दं, सानुरोधं, सप्रश्रयञ्च विज्ञापयामः सुरसरस्वतीरसिकान्—"उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत" समयानुगुणमेव सम्पाद्यं कर्मेति सत्यं कर्तव्यमापतितं संस्कृतज्ञानां संमेलनानुष्ठानम्। अन्यथा हि 'मृतभाषा" इति कथयतां रसनाभुजङ्ग्याऽवलीढाः कथममन्त्रा मनागपि प्राणितु वयं शक्ष्यामः ?

करुणावरुणालयस्य, मंगलमयस्य भगवतः परया कृपया स्त्येवाद्यापि संस्कृतस्य बहुलः प्रचारः। आजन्मनिधनं, गर्भाधानमारभ्यान्त्येष्टिपर्यन्तं षोडशसंस्काराणि सम्पाद्यन्तेऽद्यापि संस्कृतयैव गिरा; भारतप्रदेशेषु वर्त्तन्ते साम्प्रतमपि शतशः संस्कृतपाठशाला विद्यालयाश्च; भारतराजकीयाः परीक्षा अपि शास्त्रीय विविधविषयेषु प्रतिवर्षम्भवन्त्येव; विश्वविद्यालयेभ्यश्च सम्मानपुरःसरं प्रमाणपत्रमुत्तीर्णाःपरीक्षयाः प्राप्नुवन्ति; पञ्चापविश्वविद्यालयस्तु शास्त्रिणः'स्नातकसम्मेलने Convocation) सबहुमानमाहूय प्रतिष्ठापत्रं (Title) वितरति, राजकीयविद्यालयेषु (Colleges) द्वितीयभाषारूपेण पाठ्यते; संस्कृतज्ञा एव च "महामहोपाध्याय"विरुदाऽलङ्क्रियन्ते, पञ्चषपत्राण्यपि यथाकथमप्युच्छ्वसन्तो मासिकत्वेनात्मानं ख्यापयन्ति; मनःसन्तोषार्थं साप्ताहिकमपि पत्रमेकमस्त्येव; अतो नैव वयं स्वप्नेऽप्युपेक्षितुं, गजनिमीलिकया वा तिरस्कर्तुमुत्सहेम गैर्वाणीम्, नाद्य यावत् तस्याभ्युदयलक्षणानि जीवनचिन्हानि च निधनम्प्राप्तानीति सगर्वमुदाहरामः। अतोऽयि, सुरसरस्वतीप्रणयिनो महानुभावाः, सहृदयधौरेयाः! अयि भारतधर्मस्य, भारतवर्षस्य, भारतसभ्यतायाश्चाभ्युदयाकांक्षिणो महामहिमशालिनः! उत्तिष्ठत परित्यज्येोच्चावचमखिलम्, जाग्रत विहाय प्रकृतिमित्रमालस्यहतकम्, भवत च सन्नद्धपरिकरा अमरभारतीचरणारविन्दमिलिन्दायितुम्; प्रसार्य चक्षुषी पश्यत सप्रणिधानम् बहु सुप्तं सुखं प्रमोदपल्यङ्के वर्षशतम्, परमिदानीम्—"उत्थातव्य, जागृतव्यं, योक्तव्यं भूतिकर्मसु, भविष्यतीत्येव मनः कृत्वा सततमव्यथैः। 'शिवानि वः सन्तु पन्थानः'।

उत्कटमाशास्महे यत् शैव, वैष्णव, शाक्त, गाणपत्य, सौर, रामानुज, वाल्लभ, माध्व, नैम्बार्क, आर्य-ब्रह्म-समाज, दादू, नानकादिविविधमतमतान्तराणामर्चनीयचारित्रा आचार्य वर्याः, सशिष्याः, साम्प्रदायिकतायाः सकामिकां विषदिग्धां दग्धधियं स्वस्वमठस्य समाजस्य वाऽन्धश्रद्धया तमसा वाच्छन्ने प्रकोष्ठकेऽनाथदशायां सोरस्ताड विपलन्तीं निर्दयतया परित्यज्य, नियतम्मातृभाषाया उन्नतमस्य, गम्भीरस्य, भावावृतस्य च महतः साहित्यस्याभिवृद्धिमहासत्रे सुखेनागत्य सनाथयिष्यन्त्युत्सवम्। जैना अपि विस्मृत्यैकपदमेव स्वधार्मिकविवादमवश्यं संस्कृतसेवित्वेन सम्मिलिष्यन्तीति दृढमाशास्यते। जैनानां कियदुपकृतवती भगवती देववाणीति न खलु नाविदितमैतिहासिकानाम्। त्रिवि-

ष्टपस्थयौद्गुरूणां कर्णकुहरम्पुमीयात् यदि वृत्तमिदम्, तत्तेपि नाम त्रिगुणयन्तु सुषमां सम्मेलनस्य शुभागमनैः । सुदृढमाशास्यते च यद्वैदेशिकाः—जर्मनी, जनावा, इंग्लंड, फ्रांस, अमेरिका, चीन, जापानादिषु स्थितः संस्कृतस्य गुणनिर्जितः प्रणयिवर्गः सति समयेऽवश्यमलङ्करिष्यति साहित्यसमेलनमण्डपम् । यं काल वयं प्रतीक्षामहे, कल्पनायामेव यदाऽपूर्वलावण्यम् लोकोत्तरम्मधुरिमाणं, परमञ्च रामणीयकन्धत्तेऽसौ नूनन्तहि प्रत्यक्षदर्शने तु ततोऽप्यधिकां श्रियं च प्रसन्नताञ्च धारयिष्यतीति अपरिच्छेद्यस्य, वर्णनानर्हस्याप्रमेयस्य, निरवधिकस्य च तत्कालोनपरमानन्दस्यानुभवैकवेद्यस्य प्रागेव वर्णनमयौक्तिकञ्चासम्भवञ्च ।

संमेलने किं भाव्यम् ? के के विषया विचारणीयाः ? काश्च न्यूनता वर्तन्तेऽद्यापि संस्कृतसाहित्ये निराकरणार्हाः ? इत्यादिष्वेवं विधान्येषु विषयेषु चाकृतकालातिपातं प्रवर्तितव्यं स्थायिसमित्येतिनिवेदयामः । उपयोगिविषयेषु लेखाः रुचिराः प्रबन्धाः, सिद्धहस्तेभ्यो मुखरितलेखकेभ्यो याचनीयाः । लेखपद्दिकाच तूर्णम्बहिरवतार्या । नियमादयश्च संशोध्याः, निर्णयं सार्वजनीनं कर्त्तव्यम् । अन्यदपि कार्यजातं यथाविधिरवश्यं सम्पाद्यमेव । सभापतिनिर्वाचनं सपद्येवानुष्ठेयम् । समागत एव समयः शिरसि, मा नाम पण्डितसुलभा दीर्घसूत्रता पिशाची प्रभवतु ।

अस्मत्प्रार्थनासु मन्येऽवश्यं विचारयिष्यति स्थायिसमितिः, कार्यञ्च तथा सम्पादयिष्यति न यथा प्रथमग्रास एव स्यान्मक्षिकापातः । विशिष्टवक्तव्यं सत्यवसरे पुनर्निवेदयिष्यामः ।

श्रीहरिहरसुरूपशर्म्मा शास्त्री ।

---

# संशिति परिहारः ।

—:०:—

श्रीमत्याम्मञ्जुभाषिण्याम् श्रीश्रीनिवासशास्त्रिणाम् "काचन संशितिरितिकृतशीर्षको लेखोऽस्मद्दृक्पथमारुढः । तत्र कादम्बर्याम्" विन्ध्याटवीवर्णनप्रस्तावे "अम्बरश्रीरिव व्याधानुगम्यमानतरलतारकमृगेति श्लिष्टोपमायामुपमानपक्षे कथमर्थः ? तत्र चानुसन्धेया का कथेति जिज्ञासन्ते शास्त्रिमहाभागाः समादधच्च कश्चन पण्डितप्रवरः परम् प्रमाणोपन्यासपुरस्सरं न सुविशदीकृतोऽयमर्थः यथा कादम्बरीव्याख्यायान्तु प्रकृतस्थले खल्वेवं विलोक्यते "व्याधेति व्याधैरनुगम्यमानास्तरला भयविह्वला तारकमृगा विचित्रमृगाः यस्यां सा, पक्षे व्याधेनानुगम्यमानतरलतारकमृगश्चन्द्रनक्षत्रम्(?)यस्यामिति विग्रहः महादेवेन व्याधरूपधारिणा हतं (?) तस्यार्धमृगनक्षत्रमितिप्रसिद्धम् इतिवाक्यानुपूर्वी मनागशुद्धा स्यादिति च भावयामो वयम्, मुद्राक्षरैरपि केनचिदङ्कनविशेषेण तत्रत्येनेयमशु

द्विशङ्का दृढीकृता भवति अस्तु तद्यथा तथा वा। मृगव्याधाभिधानः कश्चन नक्षत्र विशेषोऽस्त्याकाशे (अस्माभिरविदितनामानि सप्ताष्टनक्षत्राणि सन्त्याकाश इत्याचक्षते सुधियः) तच्च मृगव्याधनक्षत्रं मृगशीर्षनक्षत्रस्य पूर्ववर्ति भवति। "व्याधानुगम्यमाने" त्यत्र व्याधेतिनामैकदेशग्रहणम्। अन्ततश्च मृगेति तथा मृगशीर्षमिति यावत् भीमेति भीमसेननामैकदेशग्रहणवत्। विन्ध्यटवीपक्षे च व्याधैरनुगम्यमानास्तरलतारका ये मृगास्तद्वतोत्यर्थो भाव्यः तरला ये तारकमृगा इति तु न स्वारस्यमश्नुते। व्याधानुगम्यमानमृगाणां तरलतारकत्ववर्णनमेवेह कवेरभिमतमिति नात्र कश्चिदपि सन्देह इति। परङ्कोयम् व्याधः कुत्र चास्यावस्थितिः का चात्र कथानुसन्धेये.ते समुदेति जिज्ञासा साहजिकी विविदिषूणाम्। अस्त्यनुयोगश्चायं संशितिकृतः का च कथात्रानुसन्धेयेति विभावयन्नहङ्किञ्चिद्विवक्षामि विषयेऽस्मिन्। अत्रेयमैतरेयब्राह्मणस्था कथानुसन्धेया यथा "प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये तामृश्यो भूत्वा रोहिभ्भूतामभ्यैत् तं देवा अपश्यन्नकृतं वै प्रजापतिः करोति ते तमैच्छन् य एनमारिष्यत्येतमन्योन्यस्मिन्नाविंदंस्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरस्ताः संभृता एष देवो भवत् तदस्यैतद्भूतवन्नाम, भवति वै स योऽस्यै तदेवन्नाम वेद तं देवा अब्रुवन्नयं वै प्रजापतिः अकृतमकरिमम् विध्येति स तथेत्यब्रवीत्। सवै वो वरं वृणा इति वृणीष्वेति स एतमेव वरमवृणीत पशूनामाधिपत्यम् तदस्यैतत् पशुमन्नाम पशुमान् भवति योऽस्यैतदेवन्नाम वेद। सः (पशुपतिः) तमभ्यायत्याविध्यत्। सः (प्रजापतिः) विद्ध ऊर्ध्व उदप्रपतत्तमेतं मृग इत्याचक्षते। य उ एवं मृगव्याधः स उ एव सः (व्यद्धा) या रोहित् सा रोहिणी यो एवेषुस्त्रिकाण्डः सो एवेषुस्त्रिकाण्डः ( आकाशे दृश्यमानः) ऐ० ब्रा० पं०३ खं०३३। तथैव प्रजापतिः किल विद्धो रुद्रेणेषुणेति कथा शतपथेपि २।१।२।८ तत्रत्य सायणभाष्ये "इषुणा तस्य शिरश्चिच्छेद......इषुः शिरश्चेत्युभयमन्तरिक्षमुत्प्लुत्य नक्षत्रात्मनावस्थितं दृश्यते" इत्यादिश्रुत्यथपर्यालोचनायाम् रोहिणीमृग(शीर्ष)मृगव्याधाः नभसि नक्षत्रात्मनाऽवस्थिता एवात्रापवर्णिता इति स्फुटीभवति नात्र सन्देहावसरः। अयमर्थः मृगनक्षत्ररूपी प्रजापतिः स्वां दुहितरं रोहिद्भुतां रोहिणीनक्षत्ररूपामनुगच्छन् त्रिकाण्डबाणेन मृगोदरे दृश्यमानेन नक्षत्रत्रयरूपेण विध्यते व्याधेन नक्षत्ररूपिणा रुद्रेणेति का चात्र कथा नुसन्धेयेत्यस्योत्तरमिदम्।

तमिस्रायां निशि किल विमलाम्बरकटाहे दृष्टिं विकिरतः स्थूलमुक्ता- फलाभाः सूक्ष्मतमाश्चाविरलविरलतरलतारका अभिवीक्षतः कस्य हि विचक्षणस्याविचक्षणस्य वा न चित्रीयते चेतः तत्रापि किल मनोहरः प्रेक्षणीयतमो मृगशीर्षनक्षत्रपुञ्जः

केन सकुतुकम् सादरं।न्मेषश्च न सन्दृश्यते कस्य च न समुद्भवत्यमन्दानन्दम् । यदधुनापि, बह्वोः कालात् प्रत्यहम् प्रेक्ष्यमाणोप्ययम् हृदः कामपि चेतश्चमत्कृतिं जनयन्नास्ते जनतायाः । तदा सृष्टेरादिमावस्थायाम् प्राचां रूपककल्पनाविषयीभूतत्वेऽस्य नाश्चर्यं बीजम् यतो हि वैदिकर्षयः सृष्टितत्त्वान्वेषणे दत्तचित्ताः विष्णुपदे (आकाशे)सगवेषणदत्तदृष्टयश्चासन् उक्तं हि तद्विष्णोः परमं पदम् सदा पश्यन्ति सूरयः तथाहि "अमी य ऋक्षा निहितास उच्चा नक्तं ददृशे कुहचिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ ऋ० १—२४—१० इति

प्रियसुहृदः ! पश्यतामम्बरतले मृगशीर्षनक्षत्रपुञ्जम् ततः प्रतीच्याम् सन्निहिता एव रोहिणी । मृगाद्दक्षिणस्यान्दिशि सन्निहितमेव दरीदृश्यते देदीप्यमानं यन्नक्षत्रमस्यैव मृगव्याध इति रुद्र इति वा नामास्ति कुत्रचास्यावस्थितिरित्यस्योत्तरमिदम् । अयं मृगव्याधः रुद्र एवेति वयं निश्चप्रचमुद्गिरामहे । तत्र प्रमाणान्तराण्यपि उपन्यस्यन्ते यथा अस्य मृगव्याधरूपरुद्रस्य रुद्रदैवत्याया आर्द्रायाश्च सन्निकटे गगनमेखलीभूता लघुतारकामयी या दृश्यते शुभ्रवर्णप्रवाहाकृतिरूपेणाकाशगंगा इयमेव शिवशिरःस्थिता गंगा तथाचोक्तं महाभारते "तां दधार हरो राजन् गंगां गगनमेखलाम् ॥६॥ वनपर्व० अ०१०६ अत्र गगनमेखलामित्युक्तया आकाशगंगैव गृह्यते तथा महापुण्यां च गगनात् पतन्तीं वै महेश्वरः दधार शिरसा गंगा तामेव दिवि सेवते । महाभार० अनुशासन प०अत्र तामेव दिवि सेवते इति वर्तमानकालिकोक्तिद्वयं तलस्थनक्षत्ररूपरुद्रमनुलक्ष्यैवाकाशगंगापरैवेति । तथा साक्षात् भगवत्पदीत्यनुपलक्षितवचोभिधीयमानाऽतिमहता कालेन......दिवो मूर्धन्यवततार यत्तद्विष्णुपदमाहुः (वियद्विष्णुपदम्) यत्र......औत्तानपादिः... अधुनापि परमादरेण शिरसा बिभर्ति ततः सप्तऋषयः ...... अद्यापि जटाजूटैरुद्वहन्ति ततो......ततो देवयानेनावतरन्तीन्दुण्डलमावार्यब्रह्मसदने (मेरौ) निपतति ॥१-४ श्रीमद्भागवते- पंचमस्कन्धेअ०१७ आकाशमण्डलादुत्तरभागे ध्रुवसप्तर्ष्यादीनाप्लाव्य मेरौ पतन्तीव भासमानामाकाशगङ्गामनुलक्ष्यैवेयमुक्तिरितीदन्तावदविवादम् तामेव दिवि सेवते इतिभारतीयवचनेन मृगव्याधस्य रुद्रत्वं व्यज्यते । तथा च शिवमहिम्नः स्तोत्रेपि "वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते जगद्द्वीपाकारं जलधिवलयं तेन कृतमीत्यनेनैवोन्नेयं धृतमहिमदिव्यं तव वपुः" ॥१७॥तारागणैः गुणिता वर्धिता फेनोद्गमरुचिर्यस्य एतादृशो वियद्व्यापी वारां प्रवाहः आकाशगङ्गारूपः स ते शिरसि पृषतलघुदृष्टः इत्यर्थः । पद्येऽत्र दिव्यं तववपुरित्युक्तम् दिवि भवं दिव्यम् आत्राकाशस्थमृगव्याधनक्षत्ररूपिणः रुद्रस्य शिरोदेशस्थाकाशगङ्गाया एव वर्णनमिदम् यतोऽग्रेत्रैववक्ष्यते "प्रजानाथं नाथप्रसभमभिकं स्वां

दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसन्तन्तेऽद्यापि त्यजति न मृगव्याधरभसः ॥२२॥ प्रजापतिररतिकामुकत्वेन रोहिद्भूतां स्वसुतां मृगरूपेण रन्तुङ्गतः। अतो दिवमपि यातमधर्माणमेनं शरेण हन्तुमीश्वरो मृगयुः (व्याधः)भूत्वा अद्यापि अनुयाति सपत्रशरोऽस्य मृगरूपप्रजापतेः शरीरे प्रवेशितोऽद्यापि दृश्यते इत्यर्थ। कथेयमैतरेयानुसारिणीतिस्फुटमेव। मृगानुसारिणम् साक्षात् पश्यामीव पिनाकिनम् इति शाकुन्तलेपि। महाभारतेपीयङ्कथा प्रकारान्तरेणोपवर्णिता यथा "ततः सयज्ञं विव्याध रौद्रेण हृदि पत्रिणा, अपक्रान्तस्ततो यज्ञो मृगो भूत्वा स पावकः"। स तु तेनैव रूपेण दिवं प्राप्य व्यराजत, अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले इति मृगव्याधस्य रुद्रत्वदृढीकरणमूलकम्। तच्छिरोदेशस्थाकाशगंगाया गंगान्वोपपादकम् प्रमाणान्तरमपि दीयते तथा च रुद्रतनयकार्तिकेयोत्पत्तिप्रसङ्गे—इयमाकाशगंगा च यस्यां पुत्रं हुताशनः, जनयिष्यति देवानां सेनापतिमरिंदमम् ॥७॥ वा० रा० बालकाण्डे अ० ३७ अत्राग्निराकाशगङ्गायाम् देवासेनापतिं कार्तिकेयञ्जनयिष्यतीत्युक्तम् मृगादुत्तरे आकाशगङ्गायास्सन्निकटे एव अग्निनामकमृक्षं वर्तते, रुद्रस्य रेतो गृहित्वा तद्गंगायाम् प्राक्षिपदग्निः ततोगङ्गायास्सकाशाच्च समजनि स्कन्दः स च षट्कृत्तिकानामपत्यम् षाण्मातुरः कार्तिकेय उच्यते अग्निभूश्च कोशे कार्तिकेयो महासेनः ······ षडाननः······ अग्निभूर्गुहः ॥ ३९ ॥ बाहुलेयस्तारकजित्······षाण्मातुरः ॥ ४० ॥ कार्तिकेयो देवसेनानीर्भूत्वा तारकामये युद्धे तारकमजयत् इदमपिरूपकमेवेति न परोक्षम्प्रेक्षावताम्। कृत्तिकारोहिणीमृगशीर्षमृगव्याधादिनक्षत्राण्यनुपलक्ष्य रूपकमयमिदम् कथानकं विरचितम् अन्ततस्त्वयमर्थो निष्कान्तः व्याधनक्षत्रेण (रुद्रेण)मृगः (प्रजापतिः)रोहणीं (रोहिद्भूतांस्वदुहितरम्) अनुगच्छन् त्रिशास्करूपेण (त्रिकाण्डबाणेन) विध्यते इति प्रत्यपादि यथामतिवैभवम्।

राधाकृष्णशर्मा पौराणिकः
माहिष्मतीयः ॥

---

# पातालपरिभ्रमणम्
## पूर्वतोऽनुवृत्तम्।

---:०:---

तारापुरप्रणालिका

साम्प्रतं वयं पातालविवरं प्रवेष्टुं सन्नद्धाः। इतः परं गच्छद्भिरस्माभिः पातालगह्वरस्था महाकविभिरप्यवर्णिता चतुरशिल्पिभिरप्यचित्रिता न ते निसर्गमनोहराः पदार्था प्रत्यक्षीकर्तुं शक्याः। परं नासीत् पन्था सुप्रवेशः।

पातालमुखं न मया विलोकितमभवत्, साम्प्रतं तत्र प्रवेष्टुमुद्यते उपाध्याये, तद्भृत्ये

चाहमपि साहसमाधाय व्यलोकयम् गुहामुखम्। दृष्ट्वैव मे हृदि सञ्जातः कोऽपि परिवर्तः, नाहमुपाध्यायेन सह मृत्युमुखं प्रवेष्टुं शक्नोमीतिनिरधारयम् । परमुपाध्यायभृत्यस्य साहसमवलोक्य ममापि हृदि निहितं पदं साहसेन। तदा हि स निर्भयः प्रसन्नाननश्च परिदृष्टोऽभवत् । पातालविवरं प्रवेष्टुमुद्यतं हंममवलोक्याहमपि तत्र प्रवेष्टुं समुद्यतोऽभवम्।

एतस्य पातालमुखस्य व्यासः क्रोशार्द्धमित आसीदिति पूर्वमेवोक्तम्, अहमवनतशिरोभरो भूत्वा पातालविवरमुखमवलोकयम् अवलोक्यैव मे हृदयं वीतसाहसमभवत्, घूर्णितश्च मस्तिष्केन समं हृदयम्। पुनः कथं कथमपि प्रकृतिस्थोऽभवम्, पातालमुखभित्तिर्नासीद्धक्का, तत्रहि स्वतो निर्गतैः प्रस्तरखण्डैः कापि सोपानपङ्क्तिरिव रचना दृश्यतेस्म। तत्रैव रज्जुबन्धनंविधाय तत्साहाय्यादस्माभिरधो गन्तुंशक्यतेस्म । परं पश्चात् को बन्धनं निर्मोचयिष्यति ?

उपाध्यायेनाविष्कृता कापि नवावरोहणरीतिः । तया दूरीभूता निखिला अवरोहणबाधाः । उपाध्यायेनैका बृहतीरज्जुरेकस्योपलखण्डस्योपरिनिधायाधो लम्बिता विहिता । तदाश्रयादेवास्माकं पातालमुख प्रवेशः सुकर इव परिलक्षितोऽभवत् तदा वयं सन्नद्धा अधोगन्तुम् । यात्रोपकरणानि च त्रिधा विभज्योपाध्यायेन हंसेन मया च तानि गृहीतानि । अपराणि चैकत्रीकृत्य विक्षिप्तान्यभवन् पातालमुखे । तेषामधोगमनं महता समुल्लासेन द्रष्टुं प्रवृत्त उपाध्यायः। दृष्टिपथमतीतेषु तेष्ववददुपाध्याय, राजेन्द्र, साम्प्रतमस्माभिर्गन्तव्यम् ।

उपाध्यायेन सूक्ष्मयन्त्राणि गृहीतानि, मया भृत्येन चापराणि वस्तूनि गृहीतानि। प्रथमं भृत्यः पातालमुखं प्राविशत्, तत उपाध्यायस्ततश्चाहम्।

सम्प्राप्तो मदीयः पातालप्रवेशावसरः । चक्षुषी निमिल्याहमपि मृत्युमुखं प्रवेष्टुं समुद्यतोऽभवम् । रज्जुसाहाय्यादहं शनैः शनैरधोगन्तु प्रवृत्तः । तदा कापि चिन्ता मे मनःसमारुह्य मां वीतधैर्यमकरोत् । अहमचिन्तयम्, यदि रज्जुसंलग्नमुपलखण्डं भग्नं सदुपरि निपतेन्मम शिरसि तदा का गतिर्भविष्यत्यस्माकम् ।

पातालमुखप्रवेशोऽस्माकं प्रारब्धः समभवत् । चरणतलस्थान्युपलखण्डानि तत इतः स्खलितान्यभवन् । परमासीदुपाध्यायस्य भृत्यः कार्यदक्षः । तेन हि मार्गस्थान्युपलखण्डानि पूर्वमेव पातितान्यभवन्, यस्माद्दूरीभूता प्रस्तरखण्डानां निपातशङ्का, अन्यथोपरिस्थानां चरणताडितानि प्रस्तरखण्डानि निपत्य शमनसदनातिथिं विदध्युरधःस्थितान् ।

त्वरितमेवास्माभिः प्राप्तमेकं शिलातलम् तद्धि भित्तिविनिर्गतं पातालमुखे दशनवत् प्रत्यक्षीकृतमस्माभिः । तत्र क्लमापनयनाशाय वयं स्थिताः । भृत्यस्तु रज्जुमाकृष्टवान्

तदाकर्षणसङ्घर्षात् निपातितं धातुभस्म । येनाहं क्षणमन्धः संवृतः ।

अहं तस्मात् शिलातलादधोवलोकयम् परमथापि न दृष्टिपथमुपनत तद्विवरतलम्। क्षणं विश्रम्य भूयोऽपि वयमधोगन्तु प्रवृताः।

अधोगच्छन्तो वयं यां दुरवस्थामनुभूतवन्तः, यद्वा काठिन्यमुपनतमस्मासु, तत्र निपतित उन्मत्तोऽपि भूतलतत्ववेत्ता न हि प्रस्तरखण्डानां जातिवयोदशादिपरीक्षणे प्रवृत्तःस्यात् कोऽपीति तर्कये । मयातु तत्र न कोऽपिभेदः परिलक्षितोऽभवत् । परमुपाध्यायस्य तदापि वैज्ञानिकमनुसन्धान प्रवृत्तमासीत् । स हि तत्र तत्र स्थित्वा निर्निमेषं विलोकयतिस्म, यन्त्रसाहाय्यत्परीक्षते स्म च धातुभस्म । उपाध्यायस्येदृशीमवस्थामवलोक्य मे मनसि समभवत्, यद् वैज्ञानिका न मनुष्याः किन्तु ते देवा राक्षसा वा भवितुमर्हन्तीति । गच्छन्नेवोपाध्यायोऽवदत् पातालमुखस्थान् पदार्थानवलोक्य मनसि मदीयः सिद्धान्तोऽधिकाधिकं दृढीभवति । तरक्षुहैहयेन व्यावस्थापितः सिद्धान्तः साम्प्रत सत्यतया स्फुटीभवति । साम्प्रतं वयं प्राथमिकोपलेषु ( Primitive ) गच्छामः । एषु ता एव रासायनिकाः क्रियाः परिलक्षिता भवन्ति, या धातुपरमाणूनां जलस्य च सयोगादुत्पद्यन्ते । केन्द्रस्थाग्निसिद्धान्तो न मया स्वीक्रियते । त्वरितमेवैतत्प्रमाणिका युक्तयः स्फुटीभविष्यन्ति ।

इत्थमेव सर्वदोपाध्यायो वदतिस्म । स्वयं व्यवस्थापितान् सिद्धान्तानेव निर्दोषान् मन्यते स । तूष्णींभूतेन मया तद्वचन श्रूयतेस्म । अवरोहतामस्माकं घटिकात्रयमतीतं तथापि नोपलब्धं प्रणालिकातलम् । परमधोभागे प्रणालिकाभित्तयः परस्परं सलग्ना इव दृश्यन्ते । प्रणालिकातलञ्च तमसावृत्तम् ।

तथाप्यस्माकं यात्रा न प्रतिरुद्धाभवत् । अस्माकं पदसङ्घर्षादधः पतितानां प्रस्तरखण्डनां शब्दो बोधयति यदनतिदूरे वर्तते प्रणालिकातलमिति ।

इत्थं गच्छद्भिरस्माभिर्दशघटिकामितेन समयेन प्राप्तं प्रणालिकाया अधस्तलम् । भृत्यस्त्वरितमेवावदत्, साम्प्रतं प्राप्तास्म गुहातलम् । तद्वचनं निशम्याहम् तत्रैव स्थितोऽवदञ्च किं नातः पर गन्तव्यमार्गोऽवशिष्यते । अस्ति मार्गः परं गुहासमाप्ता, अनतिदूरे किमपि गह्वर विलोक्यते । परं साम्प्रत क्षुधा व्याकुलयतीत्यत्रैव विश्रामः कार्यः ।

तदान्वेऽप्यासीद्गुहातले प्रकाशः, तत्रैव स्थित्वास्माभिराहारो विहित. । अद्य नगन्तव्यमिति निश्चतमभवत् ।

---

## नवोन्मेषः ।

श्रीमन्तो महाभागाः शारदावाचयितारः ! चिरेणालसा मे लेखनी कञ्चिद् गभीर दुरूहं वा विषयं विशदयितुं नोद्योगं कृतवती, किन्तु किमपि सामयिकं प्रकाश्यं प्रकाशयितुं स्वान्ते

लब्धावसरेव प्रतिभाति। नन्नु दरीदृश्यतां नैसर्गिकालस्यायाः अस्या उच्छृङ्खलं विजृम्भणम्।

पुरा देशस्यास्योन्नतदशा कीदृशी बभूवेति लेखितु बहुलः कालोऽपेक्ष्यते तथापि तद्विषयकं किमपि प्रोच्यते तन्निशम्यतां सहृदयैः। तदानीं वैदिकमार्गस्य सर्वत्र प्रचारोऽभूत्कदाचित्कोऽपि जीवितहेतोरपि धर्मं नात्याक्षीत्. प्राणपणेन धर्म सेवमानो जनो न च्युतः स्वकर्तव्यकर्मणः, धर्मनिष्ठो राजा स्वकीयधर्ममनुसृत्य पालयाम्बभूव प्रजा चातुर्वर्ण्यं स्वं धर्मं सेवमानं समीहितभाक् समपद्यत, चातुराश्रम्यं स्वकीयामितिकर्त्तव्यतां प्रतिपालयदानन्दस्य पराकोटिमस्पृशत्, दम्पत्योर्व्यवहारस्तौ सुखाकरोत्, गुरुशिष्यप्रणाली लोकोत्तरामीत्, पितापुत्रयोर्व्यापारो धर्मानुबन्धी समजनिष्ट, सर्वे जनाः परोपकारैकव्रता आसन्, चौर्य्यादि दुष्कृतानि वाचकेष्ववस्थितानि। दाम्भिकानां नृणां चर्चाचर्चाप्यश्रूयत नैवात्र, सर्वत्र वेदपठनपाठनध्वनिः श्रूयते स्म, सर्वतो यज्ञानां सम्भाराः सम्भ्रियन्ते स्म, पञ्चयज्ञनिरताश्च बभूवुर्नराः, कियद् वच्मि षोडशांशोऽपि मया बहुना कालेन वक्तुं न पारयिष्यते। पुरातनीं दशां स्मारं प्रसीदामि, परमिदानीन्तनीं दृष्ट्वा श्रुत्वा च रोमाञ्चितवपुः सीदामि। इदानीं सर्वं विपरीतं समजनि। दम्भपराणां पुरुषाणामधुना लोकेऽनुपम विजृम्भणम्। अस्य देशस्य हतभाग्यतया दैवदुर्विपाकाद्वा देशमेनं धीश्रियौ त्यक्तवत्यौ, तयोरभावे कुतः सुखावाप्तिः सम्भवति। असंख्यातानि मतान्यत्र नीवृति प्रादुरासंस्ततस्था मानुषा अहर्निशं कलहायन्ते। अत्र त्या नरो धर्मं धर्मपदार्थं वा कथमपि ज्ञातुं न प्रयतन्ते। पूर्वं पुरुषेषु व्यापृता अप्यनिशं साम्प्रतं निर्गता धैर्य्यक्षमादमशौर्य्यशौटीर्यादिगुणाः। सर्वतोभावेन वेदानामप्रचारोऽवृनत, वेदाङ्गानाञ्च सर्वेषां नामज्ञानेनापि न भूयते एतादृशि ज्ञानेतरबहुले काले करुणैकनिलयस्य जगत्पितुः परमात्मनः परमानुग्रहेण वैदिकपाण्डित्यपाथोनिधिः श्रीपरिव्राजकाचार्यवर्य्यः स्वामिदयानन्दः समस्तस्य जगतः सुखोत्पत्तिहेतवे प्रादुरभवत्। तस्य प्रातःस्मरणीयस्य महात्मनश्चरितमाबाल्यकालाल्लेखितुं दुःशकमेवेतिज्ञेयम्। परं तदीयगुणगौरवं मां तद्विषयकं किमपि वक्तुं मुखरीकरोति। तेन महात्मना कष्टपरम्परां सोढ्वा तुरीयाश्रमस्थेन लोकोत्तरो लोकोपकारोऽकारि, विख्याता वावदूकाः प्रतिपक्षनेतारः सभायां सपदि विच्छायवदनत्वं प्रापिताः। काशीं गत्वा तेन वेदविदुषा सर्वे तत्रत्या मुख्या विपश्चितो वादे प्रत्युक्ताः। तस्य ब्रह्मचर्यं कीदृगभूदिति कथयितुं नावश्यकता जागर्त्ति। हतभाग्यत्वेन सर्वे स्वकर्तव्यकर्मसु शयिता अभूवँस्तस्य वैदिकधर्मनिष्ठस्य सिंहनादेन जागरं तेऽवाप्ता इदानीं केऽपि स्वपाण्डित्यं प्रकटयन्तु तस्याग्रे तु मूकत्वं लेभिर इति श्रूयते। तत्कृतमुपकारं हृदि जानाना अपि केचिद्धनलिप्सयाऽन्ये कृतघ्नतयापरे दुराग्रहवश्यतयैके हतभाग्यतयाऽपरे बुद्धिलाघवेन तं स्वीकर्त्तुं प्रकटयि

वा मनो न दधते, परं येहि वस्तुतो विद्वांसस्ते तु तं पुरुषर्षभं मनसा मन्वते । पाठकगण ! मदीयवचोऽवधार्यतां निश्चयेन ये पुरुषास्तं प्रकृतं प्रतीक्ष्यमादरबुद्धया न ध्यायन्ति ते के सन्तीति हृदयवन्तो विचारयन्तु । तेनैव मेधाविना पुरातनी गुरुकुलप्रणाली जीर्णोद्धृता । तस्य सत्यव्रतस्याशामात्महितां मन्यमानया युक्तप्रान्तस्थया श्रीमत्याऽऽर्य्य प्रतिनिधिसभया मथुरानिकटवर्त्तिनि वृन्दावने वैदिकमार्गरक्षायै गुरुकुलं स्थापितं तत्र प्रत्नं समयं स्मृतिपथं नयन्तो वर्णिनो वेदान्वेदाङ्गानि चाधीयतेऽध्येष्यन्ते च । विश्वस्यतामार्य्यजनतयाऽत्र गुरुकुले लब्धवेदवेदाङ्गबोधा अन्तेवासिनः स्नातकत्वमाप्नुवन्तो जगति खल्वाश्चर्यास्पदां धर्मधुरं वक्ष्यन्तीति । ये केचिदत्र सशेरते तेषां सर्शातिं त एव व्युत्पन्ना विद्याव्रतस्नातका उन्मूलयिष्यन्ति । देशस्य सैव स्मरणीया दशा बोभविष्यति यां स्मृत्वा वय स्वात्मनि न प्रभवामः । एतद्देशोपजीविनोऽन्ये जनपदा एतदीयसम्पर्कत एव धर्मविषये परामुन्नतिमाप्ता नात्र सन्देग्धव्य कविभिः । वैदिकमार्गप्रसरे सति सर्वत्र वास्तविकी शान्तिविराजिष्यत इत्यत्र नास्ति सशयगन्धोऽपि । क्रमेण सैव शान्तिराप्स्यते यस्या वर्णनमुपनिषदादि सद्ग्रन्थेषु बाहुल्येनाकृत परमर्षिभिः । सर्वस्यास्य वाग्जालस्याशयोऽवबुद्धयतां यदत्राविद्यानाशेविहिते विद्या सूर्ये च समुदिते तमइवाज्ञानजन्या सर्वथा निमङ्क्ष्यति दु:खसंततिः । वर्णिनो देववाण्यां राजभाषायां समयोपयोगिषु विषयान्तरेषु च लब्धनैपुणाः सन्तो देशेदेशान्तरेषु च वैदिकं वास्तविकं धर्मवर्त्म स्थापयिष्यन्ति, क्रमेणैवं वैदिकेऽध्वनि सर्वतः प्रक्लृप्ते सांसारिकं सुखं तापत्रयोन्मूलनं च सुतरां स्थिरीभावि । पूर्वेषा मृषिमुनीनां पद्धतिमनुसृत्य पदवीं वटवो नितरां कठिनां तपश्चर्या विदधतो विद्याभ्यासतत्परा वरीवृत्यन्ते वरेण्यास्तेषामवलोकनं कार्यं हृदयवद्भिः । ब्रह्मचर्याश्रमपालनमपि धर्म्यमेव, यतो "धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः" इति मनुनाप्यभाणि । विशेषमस्य कियन्तं वर्णयेयं वस्तुतो मया स भणितुमेव न शक्यते । निश्चिनोम्यस्य देशस्य सौभाग्योदयावसरेण सम्प्रापीति यदस्मिन्महात्मना वेदविद्यानदीष्णेन पुण्यश्लोकेन स्वामिदयानन्देन मुनिना स्वार्थत्यागं विधाय गुरुकुलप्रथाऽप्रथ्यत । पूर्णत्वेनाश्वास्यन्ते मनुजा यदेषां गुरुकुलप्रथा देशमुद्धरिष्यति परितः सुखसञ्चारं विधास्यति देशदशामावर्त्तयिष्यति चेति । अस्माद्धेतोरस्य गुरुकुलस्य महत्साहाय्यं समारम्भणीयम् ।

श्यामलालशर्म्मा ।

---

# । श्रीहरिस्तोत्रम् ।

( चित्रकाव्यम् )

स्वम्वादि वृन्दारकवृन्दवन्दितः
सर्व्वत्र सर्वं घटयस्तिङीव लट् ।
पाण्यन्त रोक्षित सुदर्शनायुधो
मलम्प्रणुद्यात्मन आदिपुरुषः ॥ १ ॥

अदादि भूमध्यङ्कुतान्तशक्तिकं
स्वभक्तचेतोमधुलिट् श्रिताश्रयम् ।
शेषासनन्तत्वमयं चिरन्तन
त्रिमूर्त्तितो मध्यमपूरुषम्भजे ॥ २ ॥
भौमासुरा ादि विदारिणारिणा
तद्रक्त पङ्काङ्कवि लुट् खराश्रिणा ।
यङन्त दीपरूपविशेषणत्विषा
पाल्या जना उत्तमपुरुष त्वया ॥ ३ ॥
लीनेषु कल्पे त्रिदिवादि धामसु
चकास्ति शेषेऽस्य वपुर्यथैवलट्
विश्वं लुङन्त प्रकृतीयते यतो
नमोऽस्तु तस्मै रवि कोटिवर्च्चसे ॥ ४ ॥
स्वादि ष्ठपीयूषममुष्य तेजसा
सुरव्रजोऽलेट् परिभूय दानवान् ।
कोनामधातुर्जगतां ततोऽपरः
पूज्यः क्षितौ चन्द्रकलाधरार्च्चितात् ॥ ५ ॥
विधुं तुदादि त्रिदिवद्विषां यउ
विरूपकोऽभूदिव लोट् स्वरूपिणाम् ।
कण्ड्वादि रुग्गन्धकलेपना यथा
ह्यमङ्गलन्नश्यति तस्य नामभिः ॥ ६ ॥
वक्षोरुधादि व्यमणिश्रियाश्रिते
पीतांशुकालङ् कृतनीलविग्रहे ।
हरौ रतिर्मोक्ष पदव्यवस्थिति
न्दद्यात् किलैवं बुधपुङ्गवैजगे ॥ ७ ॥
वर्षाम्बुमुग्गर्ज्जि तनादिशङ्खभृत्
पद्मालयालिङ्गितपाद पङ्कजः ।
स्वभावकर्म्म—प्रतिबद्धबन्धन
जगद्गुरुर्मोचयतान्निजं जनम् ॥ ८ ॥
शाक्यादि केष्वप्यपकारकारिषु
सदा दयालुङ—कलये हृदम्बुजे ।
समर्च्चनीय शुभकर्म्मकर्त्तृ भि
स्त शुक्र शिष्यान्वयनाशिन हरिम् ॥ ९ ॥
लेभे यतः श्री प्रचुरादितेः सुतैर्
लङ् सन्निकर्षा त्प्रकृतिर्यथा स्वयम् ।
विभू लकारार्थ—मशेष पाप्मनां
भजे सदा त कलुषद्रुमाशनिम् ॥ १० ॥

---

## वार्ता: सम्पादकाभिप्रायाश्च ।

**रदीयकथा**—महता परिश्रमेण लब्धं शाश्वतप्रकाश रदीयद्रव्यं कदाचित् कूरीदेवी पारसीकाधिपाय फ्रांसदेशं गताय दर्शयामास । समुद्गकान्निर्गच्छत्येव प्रकाशमये रदीये चकितचकितः पारसीकेश्वरः सम्भ्रमात् पट्टिकां स्थानच्युतां चकार । तस्मिन्नेव संभ्रमे सूक्ष्मं रदीयखण्डमपि पट्टिकातः क्वापि निपपात । चिरमन्विष्यद्भिश्च नालभ्यत । अपराद्धमात्मान मन्यमानः परसीकेश्वर आभरणानि रत्नमयान्युत्तार्य कूरीदेव्यै समर्पयितुमुद्यत आसीत् । अत्रान्तरे च रदीयखण्ड पुनः प्राप्तं कूरीदेव्या नृपस्याभरणानि च न स्वीकृतानि ।

**भूगोलविद्यायां गन्धवार्ता**—राजकीयभूगोलविद्यासमितौ व्याख्यानावसरे किपलिङ्गमहाशयः प्रसिद्धः कविरुपन्यासलेखकश्च देशविदेशेषु जनविशेषेषु च गन्धविशेषास्तल्लक्षणभूताः सन्तीति महता प्रपञ्चेन दर्शयामास । तस्यैव व्याख्यां प्रढयन् महात्मा यात्रिकः शकतनुर्दक्षिणमेरुदर्शी वदति मलय·

प्रदेशेषु परिणमत्फलगन्धो वैशेषिकः' सिंहलेषु ताम्बूलगन्धः जापानप्रदेशेषु वेशवार गन्धः मरिचद्वीपे पुष्पगन्धः आरव्येषु पर्युषितहैयङ्गवीनगन्धः हूणगृहेषु गोष्ठगन्धः सागरे स्वयं गन्धाभाववत्यपि पीतवर्णकस्याङ्गारतैलस्य विलक्षणो गन्धः । भारतीयनगरेषु धूलिगन्ध नालिकागन्धश्चेति पाश्चात्यैर्महात्मभिः प्रमादान्नोक्तं मन्ये ।

**कुमेरुयात्रा**—दक्षिणमेरुर्भास्कराचार्यादिदिभिर्वडवानल* इति व्यपदिष्टः, सुधाकरादिभिरर्वाचीनैर्मुनिभिः कुमेरुरित्युच्यते । पङ्गुपक्षिमात्रशरणीकृतप्रान्ते प्रालेयदुर्गमेऽस्मिन् प्रदेशे पाश्चात्यवीराणां कतिचन यात्रा अभवन् । परुत्किल सुकुरमहाशयः कुमेरुं दृष्ट्वा प्रतिनिवर्तमानो नवजीवभूमिं प्राप्तुमिच्छन् मार्ग एव सह सहचरैर्बहुभिर्विपन्नः । ततः पूर्वमेव शक्रतनुमहाशयः कुमेरुं दृष्ट्वा जीवन्नेव प्रत्यागच्छतिस्म । अयमेव शक्रतनुर्महात्मा तपोनिष्ठः पुनरपि कुमेरुमभिनवेन मार्गेण गन्तुं प्रवृत्तः । वदरसागराद्रससागरं प्रतिगच्छन् मार्गे कुमेरुमयं प्राप्स्यति, बहूनां वैज्ञानिकानां सहचारिणां साहाय्येन च बहुविधं वैज्ञानिकमनुसन्धानमयं विधास्यति ।

**जन्तुजन्म**—गर्भे जन्तवः प्रथमं हृदयमारभ्य शिर आरभ्य वा समुद्भवन्तीति सुश्रुतादयः पुरातना ऋषयो बहुभिर्विकल्पैर्विचारयन्तिस्म । अर्वाचीनास्तु विकाशवादिनो विद्वांस उदररूपेणैव प्रथमंजन्तुरुद्भवति, पश्चात्तत एवोदरपिडरान्निःसरद्भिः करचरणादिभिः सम्पूर्णाङ्गो भवति । प्रथमं कलल रूपो जन्तुः सूक्ष्मात् कोशात् स्वयंविभज्य विभज्य पुष्कलतामापद्यमानात् कललकोशमालामय उदराकरः समुद्भवति, ततश्च क्रमान्मुखाद्याविर्भाव इति दारुवीण महोदयस्यानुगामिनः सिद्धान्तयन्ति ।

**नरार्थं तृणानि**—यथाऽन्येप्राणिनोऽश्ववृषादयस्तृणेन जीवन्ति, तथा मनुष्यास्तृणं भक्षयित्वा कथन्न जीवन्तीति प्रश्ने कश्चित् पाश्चात्यवैज्ञानिकः प्राह तृणेषु पुष्टिकारकं द्रव्यं कठिनतरेण बाह्यकोशेनाच्छन्नं तच्च महति पशुजठरकटाहे गलतस्तृणाद्बहिर्भूय पशून् पुष्णाति, नरोदरेतु न तादृशीशक्तिर्यया बाह्यस्य तृणकोशस्य सम्यग्गलनं भवेत्, अतो नरा न तृणेन जीवितुं शक्नुवन्ति सामान्यतः, किन्तु वैज्ञानिकैः सम्प्रति तृणानि परिणमय्य किमप्यपूर्व भोज्यं निष्पाद्यते, यन्नरोदरेऽपि पतितं पुष्टिमावक्ष्यति । प्रयागप्रान्ते तृणविना म्रियमाणाःपशवो नरेष्वपि तृणभक्षिषु सुतरां मृताः-

**अस्माभिर्विधेयम्**—अत्रहि परमुखापेक्षिणो धिक्क्रियन्ते कर्मनिपुणैः दूरमुत्सार्यन्ते च भगवत्या सततं कार्यप्रवणया प्रकृतिदेव्या, विगर्ह्यन्ते च विद्वद्भिः । साम्प्रतं भारतीयानां विशेषतः संस्कृतज्ञानां दुरवस्थामवलोक्य हृदयमुत्तप्तं भवति, नयने वाष्पाकुले भवतः । पूर्वजानां विद्यां लोकोपकारित्वमनुसन्धानप्रयत्वञ्च वर्णयन्तोऽप्येते साम्प्रतं नोत्सृजन्ति सर्वथा विनिपातकरमालस्यम् नाश्रयन्ति भगवदुपदिष्टं कर्मपद्धतिम् न चेष्टन्ते दूरीकर्तुं तमोनिकरम् नोपासन्ते विवेचनाम्, नाराधयन्ति भगवन्तं सर्वात्मानम्, नानुतिष्ठन्ति तपः । अतः साम्प्रतं किं विधेयमस्माभिरित्यारोहति स्वतएवायं प्रश्नो विदुषां चेतःपद्धतिम् ।

---

*लङ्काकुमध्ये यमकोटिरस्याः प्राक्पश्चिमे रोमकपत्तनञ्च । अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथयाम्ये बडवानल श्चेतिसिद्धान्तशिरोमणौ ।

साम्प्रतं हि महात्मभिः पाश्चात्यैर्भारतीयानां सम्पर्को दिनाद्दिनं वृद्धिमेति । अतएव च भारतीयेषु कर्मप्रवणत्वं पदमाधातु प्रवृत्तमिव लक्ष्यते, नामशेषतामासादयितुं प्रवृत्तेव तमःसन्ततिः, परितः स्फुरति सत्वविशुद्धं रजः । आमूलत आत्मन आचारान् संस्कर्तु प्रयतन्ते भारतीयाः, शिल्पकलानुशीलन प्रवणमेषां मन, साम्प्रतं स्मृतिपथमुपारूढमेषामात्मनः पूर्वजानां गौरवम् । पूर्वगौरवप्रणोदिता एते कर्तव्ये कर्मणि व्यापृता भवन्ति । पूर्वगौरवप्रकाशेनैवापनीता भवति नैराश्यान्धकारसन्ततिः । साम्प्रतं लौकिकविद्यानुशीलनमेषां कृते बहु फलप्रदं विनिश्चितम् । पाश्चात्यैः समुद्भावितानां वैज्ञानिकतत्वानां प्रचुरप्रचारो भारते यथा भवेत्तदर्थं विधेयः प्रयत्नोऽस्माभिः ।

**भारतीयानां धर्मः**—निसर्गतएव मानवः कार्यदक्षः । भारतीयेषु महत्वं देवत्वं कार्यदाक्ष्यञ्च स्थापयितुं प्रयतते भगवान् सनातनो धर्मः । महर्षय उपदिशन्ति निखिलानां शक्तीनामाधारभूतो भगवान् त्रिधाआत्मनः कर्मदाक्ष्यं परिचाययति—

ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि,
रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः सयम्भुवः ।

सहि भगवान् सृजति पालयति संहरतिच । यन्नास्ति तस्योत्पादनं सृष्टस्य वस्तुनो रक्षणं, विकृतस्य वस्तुनो रूपान्तरापादनञ्चेत्यदयः कर्मदक्षस्य परमात्मनः कृत्यम् । परमात्मगुणानुकरणमेव मानवानां धर्म । भारतीयानां मनुष्यत्वं तदैव परिलक्षितं भविष्यति यदैते नवानि कार्याणि विधातुं पारयिष्यन्ति, सृष्टानि च कार्याणि पालयिष्यन्ति, नवीकरिष्यन्ति च विकृतं वस्तु । अपि शक्ष्यन्ति भारतीया नवनवान् आविष्कारान् विधातुम्, सामाजिकान् दार्शनिकान् वा रहस्यान् प्रकटीकर्तुं प्रभविष्यन्त्येते । भारतीया धर्मं समाजञ्चोन्नमयितुं पारयिष्यन्ति धनमुत्स्रष्टुम् । सादरमेते साम्प्रतं समयेनानुयुज्यन्ते, अपि प्रयोजनानुसारं प्रत्नान् विषयान् परिवर्तयितु मुत्सहिष्यन्ति श्रीमन्तः ? उत्पादनपालनदाक्ष्यमेव भारतीयानां प्रधानो धर्मः,

**आयुर्वेदप्रतिष्ठा**—साम्प्रतमेव राजकीयायुर्वेदसमितौ वेलसप्रदेशस्थः कश्चन चिकित्सको भारतीयायुर्वेदशास्त्रमधिकृत्य किमपि निपुणं व्याख्यातवान् । तत्रप्रोक्तं तेन महाशयेन, पुरा सभ्यतोन्मेषेण सहैव भारतीयानामायुर्वेदज्ञानं प्रवृद्धमभवत् । प्रत्नासु जातिषु भारतीया एव शवच्छेदपूर्वकं चिकित्साविज्ञानमाविरकुर्वन् । एभिरेव खनिज द्रव्याणामौषध्यर्थं व्यवहार आविष्कृतः । पूर्वैर एव वीजाणुतत्वरक्तसञ्चालनादीनां रीतिरेषां विदिताऽभवत् । सर्पदंशनचिकित्सितं निरीक्ष्यालीकचन्द्रः परं मुग्धोऽभूत् । अस्त्रचिकित्सायामप्येते दक्षा अभवन् । बुद्धदेवाविर्भावात् परं भारतीयानामस्त्रचिकित्सा पाटवं तिरोदधे, किन्त्वौषधप्रयोगचिकित्साधिकतरमुन्नताभवत् । तदैव तत्र तत्र बहवश् चिकित्सालया स्थापिता अभवन् । भारतीय चिकित्सातत्वमधीत्यारव्यैस्तत्पाश्चात्ये प्रचारितमभवत् । अतः पाश्चात्या भारतस्य शिष्य आयुर्वेदविज्ञान इति ।

पश्यन्तु भारतीया आयुर्वेदविद्वांसो, यत् तेषां पूर्वजानां निर्निमित्ततपः समुद्भूतं कीर्ति मुद्घोषयन्ति गुणप्रणयिनः पाश्चात्या महात्मानः, परमेभिस्तु किं विधीयते ।

---

मासिकी संस्कृतपत्रिका ।

विद्ययाऽमृतमश्नुते ।

प्रथमे वर्षे | १९७० विक्रमाब्दाः, माघः | चतुर्थी संख्या,

## ईशप्रशस्तिः

(१)

यस्येच्छयानलसमुत्थितबाष्पपिण्डात्,
जाता विवर्तनवशाच्छुभदा धरित्री ।
यस्यैव शैवविधयः प्रभवन्ति लोके,
वर्वर्ति सोऽत्र भगवान् जगदीश्वरोऽयम्

(२)

यन्मायया जड़मयात् परमाणुपुञ्जात्,
जातं सुसंयतमिदं नरजीवितं च ।
यस्यैव देवचरितं मनसाप्यबोध्यम्,
वर्वर्ति सोऽत्र भगवान् जगदीश्वरोऽयम्

(३)

यद्गौरवेण गुरुणा मलिना तमिस्रा,
ज्योतिष्कभास्वरवपुर्महसा बिभर्ति ।
यस्यैव दीप्तिरमला निखिले चकास्ति,
वर्वर्ति सोऽत्र भगवान् जगदीश्वरोऽयम्

(४)

यल्लीलया नरगृहे सुलोभनीया,
प्रीतिः परामृतमयी मरतां निहन्ति ।
यस्यैव रूपमतुलं प्रतिभाति चित्ते,
वर्वर्ति सोऽत्र भगवान् जगदीश्वरोऽयम् ॥ ४ ॥

श्रीविजयचन्द्र मजुमदार ।

# चक्रवर्ती चन्द्रगुप्तः ।

—:०:—

पुरा बहुषु खण्डराज्येषु विभक्तमासीदिदं भारतम् बहवः शासकाः स्वीयमेव प्राधान्यं व्यवस्थापयितुं समीहमाना न केवलमात्मानमेव निन्दितं व्यदधुः, अपि तु निखिला भारतीयाः प्रजा अपि मलमल्लकशेषाश्चक्रुः। परस्परं युध्यमानैस्तैर्भारतनरनाथैर्व्याकुलितमिवाभवदिदं समन्ततो भारतम्। स्वल्पेनापि बलेन भेदोपजापजर्जरितान्तरङ्गं परराष्ट्रं स्वायत्तीकृत्यात्मानं चक्रवर्तिनं प्रथयामासुः केचन नरपतयः, ते ह्यश्वमेधप्रभृतिभिर्यज्ञैरात्मनः प्रभुत्वं प्राधान्यञ्चैव द्रढयामासुः। इत्थमनिरनयज्ञैर्नरनाथैः शोच्यां दशां गमितमिदं पूर्वंराजनाथैः पालितं भारतम्। पुराणवर्णितचरित्रा युधिष्ठिरप्रभृतयो नरनाथाश्चक्रवर्तिनोऽभवन्, तत्परवर्तिषु चन्द्रगुप्त एव प्रथमश्चक्रवर्ती, एतेन हि महद्राज्यं प्रतिष्ठापितम्, शासनौपयिकास्ते ते विभागाः स्थिरीकृताः। अथ हि मत्सरिभिर्नन्दैः सनिकारं निर्वासितोऽपि बुद्धिकौशलेनानुपमेन धैर्येण लोकेत्तरेण वीर्येण च महद्राज्य प्रतिष्ठापितवानिति चक्रवर्ती चन्द्रगुप्तः सस्पृहया दृष्ट्या निरीक्ष्यत इतिहासतत्त्वज्ञैः प्रेक्षावद्भिः।

कोऽस्य समय इति साम्प्रतमनुसन्धित्सुभिः कथञ्चन प्रमाणीकृतम्। प्रथितो दिग्जयी वीरविक्रमोऽलीकचन्द्रो यदा भारतमभ्यषेणयत्, तदैव निर्वासितो नन्दैश्चन्द्रगुप्तोऽलीकचन्द्रं साक्षात्कृतवानिति तद्यात्रावर्णनपुस्तकतोऽवसीयते, अतोऽयं खृष्टाब्दारम्भतः पूर्वं चतुर्थे शतके समुत्पन्न इति निश्चयः। अयमात्मनो जन्मना तदानीन्तन मगधराजकुलं मण्डितवान्। एतस्य जननी न कस्यापि राज्ञस्तनया, अपि तु कस्मिन्नपि अप्रथितवंशे समधिगतात्मलाभा मुरा नाम मगधेश्वरस्य प्राणवल्लभासमभवत्। सैव चन्द्रगुप्तस्य जननी, उपपत्नीतनय इति नाय सम्मानमलभत राजकुले। सावहेलमभिदधे चायं मौर्यनाम्ना। परं स्पृहणीयेन चरित्रेण लोकोत्तरेण कौशलेनाप्रतिमेन षाड्गुण्यदाक्ष्येणास्य तदेव मौर्य नाम प्रथितमभवत्।

राज्याधिकारिणो हि सदा सशङ्कमेव तिष्ठन्ति। गुणिन एवैषां शङ्कास्थानम्। चन्द्रगुप्तोऽपि राज्ञः कोपानले न्यपप्तत् केनापि कारणेन, निर्वासितश्चाभवद्राजशासनेन। राजशासनमनुरुध्य देशान्निर्यतोऽलीकचन्द्रं साक्षाच्चकार, मगधाक्रमणाय तं प्रोदसाहयच्च। परं तदा हतवीर्याः सैनिका इति चन्द्रगुप्तानुरोधमङ्गीकर्तुं नाशकदलीकचन्द्रः। त्वरितमेव च स स्वदेशं प्रत्यगात्, ततोऽचिरादेव विगतचेतनोऽभवद् महावीरोऽप्यलीकचन्द्रः।

तदा भारतस्य पश्चिमोत्तरप्रान्तेषु ग्रीकाधिपत्यं विजृम्भितमासीत्। चन्द्रगुप्तोऽपि तत्र स्थितो ग्रीकाधिपत्यसमुच्छेदायावसरमन्विष्यमाण आसीत्। निधनतामुपगतोऽलीकचन्द्र इति सहसैवायं सवादः सर्वत्र भारते प्रसृतोऽभवत्। समुपलब्धोऽयमवसर इति निश्चित्य पर्वतप्रान्तचराणां कामपि सेनां व्यरचयच्चन्द्र-

गुप्तः। समजनि सेनयोरुभयोः शरीरानपेक्षं जन्यम्, वृतश्चाभवत्तत्र विजयलक्ष्म्या चन्द्रगुप्त एव।

इत्थं भारतस्य पश्चिमोत्तरप्रान्ते प्रभुत्वमास्थाप्य सम्पाद्य च कोशवले मगधराज्याक्रमणाय प्रयत्नमारब्धवांश्चन्द्रगुप्तः। उद्यमनिषण्णो लभते साहाय्यकम्। तदैव मगधराजेन विप्रकृतः कौटिल्यनामकः कश्चन दण्डनीतिनिपुणो ब्राह्मणो नन्दान्वयोन्मूलनबद्धदीक्षो दृष्टश्चन्द्रगुप्तेन। स्वाभाविकः समानलक्ष्ययोः प्रणयः। कौटिल्यश्चन्द्रगुप्तश्चोभौ मिलितौ नन्दकुलद्रुमोन्मूलने मतिमधत्ताम्। चन्द्रगुप्तेन न्ययुज्यत कौटिल्योऽयं मन्त्रिपदे। कस्तावद् वात्या समिद्धमुदर्चिषमनलं पटान्तेन वारयितुं शक्नोति। कौटिल्यसहायेन चन्द्रगुप्तेन मगधराज्यं स्वायत्तीकृतम्, उन्मूलितञ्च नन्दकुलम्।

खृष्टाब्दारम्भतः ३२२पूर्वं मगधराज्यं चन्द्रगुप्तेनाधिकृतमभवत्। ततः प्रभृति प्रसृतं तत्प्रभुत्वं निखिलेऽस्मिन् भारते वर्षे। बङ्गोपसागरमारभ्यारवसागरं यावदशिषन्मण्डलं चक्रवर्ती चन्द्रगुप्तः।

यदा भारतस्योत्तरप्रान्ते चन्द्रगुप्तोऽप्रतिहतमात्मनः शासनं प्रतिष्ठापयितुकामः प्रयतते स्म, तदैवालीकचन्द्रस्य कश्चन सेनापतिः शैलाक्षो नाम पञ्चाम्बुप्रदेशे भूयो ग्रीकाधिपत्यस्थापनाय प्रयतमान आसीत्। खृ०पू०३०५ अब्दे सिन्धुनदमतिक्रम्य भीमविक्रमेण शैलाक्षेण समाक्रान्तमभवद् पञ्चाम्बुमण्डलम्। एतन्निशम्य त्वरितमेव तदानीमेव विरचितया सेनया शैलाक्षसमाश्वासनाय तत्समीपमगमत्, तदोभयोर्लोकक्षयकरो युद्धः प्रवृत्तो न वेति न शक्यते निश्चित्य वक्तुम्, परं चन्द्रगुप्तवरूथिनीदर्शनविगलितधैर्यस्त्वरितमेव विधाय सन्धिं स्वदेशं प्रतिनिवृत्त इति निश्चितमभिधीयते। किञ्च केचन प्रदेशा अपि समं कन्यया समर्पिताः शैलाक्षेण चक्रवर्तिन इत्यपि निश्चिन्वन्त्यैतिहासिकाः, चन्द्रगुप्तेन च पञ्चशतं करिणः प्रसादीकृताः शैलाक्षाय।

ततः परं मृगास्थिननामकः कश्चन ग्रीकदूतश्चन्द्रगुप्तसभायां समागच्छत्। अयं हि निपुणः सूक्ष्मदर्शी सत्यवादीति प्रसिद्धः सर्वत्र। एष षड्वर्षाणि पाटलिपुरे न्यवसत्, अरचयच्चैकं ग्रन्थम् यत्र वर्णितमभवत्तदानीन्तनं राज्यवृत्तम्। ग्रन्थोऽयं बहूपकरोति तदानीन्तनभारतीयवृत्तान्तावबोधने। तत एव चक्रवर्तिनश्चन्द्रगुप्तस्य किञ्चिच्छासनवृत्तान्तमुद्धृत्योपह्रियते पाठकेभ्यः।

खृष्टाब्दारम्भतः पूर्वं पञ्चमशताब्द्यां लिच्छवीनां दमनाय नरपतिनाजातशत्रुणा गङ्गातीरे पाटलिपुरनामकं किमपि सुदृढं च मनोहरञ्च दुर्गं निर्मापितमभवत्। तत्पौत्रेणोदयेन तद्दुर्गं ततोऽपि दृढतामापादितम्। चन्द्रगुप्तराज्यसमये चेदं नगरं प्रधानं नगरमभवन्निखिलेऽपि भारते। तदास्य नगरस्य योजनद्वयतोऽप्यधिकं दैर्घ्यमासीत्। नगरभित्तयश्च काष्ठनिर्मिताः। चतुःषष्ठीर्गोपुराणि। नगरभित्तिं परितो जलपूरिता परिखा चासीत्।

राजप्रासादोऽपि काष्ठनिर्मित एवासीत्। परं अतीवमनोहरो विलोभयति विलोचनं प्रेक्षकाणाम्। उपराजप्रासादमेकं सर आसीत्।

राजसभायाः शोभा किमु शक्यते वर्णयितुं यत्र हि स्वर्णरौप्यमयानि भाजनान्यासन् रत्नखचितान्यपराणि च भाजनानि राजवैभवं सूचयामासुः। रत्नखचितशिविका चक्रवर्तिनो बहिर्भ्रमणाय निर्दिष्टासीत्, करिणमारुह्य गच्छति स्म चक्रवर्ती ग्रामान्तरं नगरान्तरं वा, अश्वोऽपि राजवाहनत्वेन कल्पिताऽभवत्।

तदान्वे राज्ञां मृगयैव मनसो विनोदस्थानमासीत् कस्मिन्नपि मञ्चे धृतशस्त्रो नरपतिः सहाङ्गनाभिस्तिष्ठति स्म, तत्रैव मृगयुभिः कौशलेनानीतं व्याघ्रं सुखं व्यापादयतिस्म राजा। कदाचिच्च वारणपृष्ठाधिरूढो मृगयां गच्छति स्म। राज्ञो वनगमनाय कोऽपि मार्गो निर्मीयते स्म, स मार्ग उभयपार्श्वतश्चिन्हितो विधीयते स्म। यदि कश्चन तस्मिन् मार्गे समागच्छत्, स नियत प्राणदण्डेन दण्ड्यते स्म।

चन्द्रगुप्तः प्रायोऽन्तःपुरिकाभिरेव निवसति स्म, सति कार्ये स बहिर्निर्गच्छति स्म,। प्रत्यब्दं राज्ञो जन्मदिनमहोत्सवो भवति स्म, तदा सर्वत्रैव महोत्सवो विधीयते स्म,

तस्य राज्यतन्त्रं द्विधा विभक्तमासीत्, एकः सैन्यविभागोऽपरश्च साधारणविभागः। सैन्यविभागसमुन्नयनाय। बहुधनं विनियुज्यते स्म,। तस्य चेत्थ सैन्यसंख्या आसीत्, ६०००० पदातयः, ३०००० अश्वसादिनः, ६००० मातङ्गा, ८००० रथाः। अनयैव वीरवरूथिन्या चन्द्रगुप्तश्चक्रवर्तित्वमाप्तवान्।

सैन्यविभागपर्यवेक्षणाय षट्परिषदः स्थापिता आसन्। एषां सम्पादनीयानि कार्याण्यपि विभक्तान्यासन्। कापि समितिर्जलसेनां पर्यवेक्षते स्म, कापि समितिरन्नसस्थानं विदधाति स्म,। हस्त्यश्वरथपत्तीनां कृते पृथगेकैका समितिः स्थापिता आसीत्। इमाः समितय आत्मनः कार्यं सुचारु निर्वर्तयन्ति स्म।

साधारणविभागीयकार्यपरिदर्शनायापि समितयो निर्दिष्टा आसन्, एका समितिः शिल्पकलादीनां पर्यवेक्षणाय स्थापिताभवत्। योग्यतानुसारं भृतिव्यवस्थापनं शुद्धवस्तूनां परीक्षणं शिल्पिनां कार्यपर्यवेक्षणञ्चास्याः समितेरधीनमभवत्। प्रायो निखिलाः शिल्पिनो नरपतिगृह एव कार्याणि कुर्वन्तिस्म। शिल्पिनां विरुद्धमाचरन्तस्तान् पीडयन्तश्च प्राणदण्डेन दण्ड्यन्ते स्म।

द्वितीया समितिर्वैदेशिकानां कृते स्थापितासीत् तेषां वसतिप्रदानं, रक्षणं चिकित्सकादिनियोगश्चास्याः समितेःप्रधानं कार्यं निर्दिष्टमभवत्। राजकर्मचारिणो हि वैदेशिकान् बहुसम्मानयन्ति स्म। निधनतामुपगते कस्मिन्नपि वैदेशिके तस्यान्त्येष्टिसंस्कारोऽनयैव समित्या निर्वर्त्यते स्म, तद्रिक्थं दाया-

देभ्यः प्रवर्तते स्म । अतिथिपूजनं हि राज्ञः परमो धर्मः समाम्नायते स्म ।

तृतीया समितिर्जननमरणसूचनिकां निर्माति स्म, अनयैव सूचनिकया लोकसंख्या करव्यवस्था च व्यवस्थाप्यते स्म । चतुर्थी समितिर्वाणिज्यव्यवस्थायै निर्यमिताऽभवत् । क्रयविक्रयनिर्धारणं मानप्रस्थपरीक्षणं समित्यानया विधीयते स्म, वणिजां कृते कोऽपि राजकरो निर्धारित आसीत्, बहुविधानां वस्तूनां विक्रयिणः सकाशात् द्विगुणं शुल्कमादीयते स्म ।

पञ्चमी समितिः पण्यद्रव्याणां कृते व्यवस्थापिताऽभवत् नूतनाः प्रत्नाश्च पदार्थाः पृथक्पृथक्रक्षणीयाः । अनयोः साङ्कर्ये दण्डो व्यवस्थापित आसीत् । विक्रयलब्धस्य धनस्य दशमो भागो राज्ञे प्रदेयः । करग्रहणादिकं षष्ठ्या समित्या विधीयते स्म ।

इयमुपरि निर्दिष्टा व्यवस्था पाटलिपुर एव न केवल व्यवह्रियते स्म, अपि तु तक्षशिलागान्धारप्रभृतिषु प्रदेशेष्वपि नियमोऽयं व्यवहृत इति शक्यते वक्तुम् । आसां परिषदां सदस्याः सम्भूयैवापराणि कार्याण्यालोचयन्ति स्म ।

चद्रगुप्तराज्यं त्रिधा विभक्तमासीत्, ते च प्रदेशा, मगधो गान्धारोऽवन्ती च । पञ्चाम्बुकश्मीरप्रदेशा गान्धारराज्येऽन्तर्भूताः, गान्धार राज्यस्य राजधानी तक्षशिलानगरं निर्दिष्टमासीत् । "रावलपिण्डी" नगरसमीपे पुरा तक्षशिलानगरमभवदिति प्रत्नतत्त्वज्ञा वदन्ति । अवन्तिराज्यस्य राजधानी समभवदुज्जयिनीनगरी । अत्रैव स्थितेनाध्यक्षेण पश्चिमभारतं शासितमभवत् पाटलिपुरे स्थितश्चन्द्रगुप्तोपरान् प्रदेशान् अशिषत् ।

इत्थं निखिलेषु विषयेष्वप्रमत्तश्चन्द्रगुप्तश्चतुर्विंशतिसमा राष्ट्रं शशास । ततश्चाधन्यतया वियुक्ताः प्रजा तादृशेन धीरेण, प्रजापालकेन, चक्रवर्तिना ।

श्रीवन्ध्रुवशर्मा ।

---

# वाङ्मयार्णवीयेतिहासकाण्डे वैदेशिकेतिहासतरङ्गः

—:०:—

## अजपुत्रेतिहासवीचिः

कुरूणां पाण्डवानां च काले प्रायो भवन्भुवि ।
असुरा अजपुत्राश्च पार्श्वयोर्लोहिताम्बुधेः ॥१॥
तीरे नीलनद्स्यासन्नजपुत्रा महोद्यमाः ।
आरब्यानुत्तरेणासन्नसुरा उत्पथा तटे ॥२॥
ते शल्यालपयो जीवालिपयश्च यथाक्रमम् ।
शरत्सहस्रद्वितयमशिषन्विषयान्निजान् ॥३॥
अवसानेस्य कालस्य महनीयपराक्रमैः ।
पारसीकैरभीकैस्ते हीनवीर्याः पराजिताः ॥४॥
रम्ये नीलनदोपान्ते पिण्डीखर्जूरिकोर्जिते ।
सुखेन कालमनयन्नजपुत्रा महौजसः ॥५॥
शुम्भाभिधोजपुत्राणां भूमिपालो महाबलः ।
काणागारं महायामं निममे मम्मपत्तने ॥६॥
प्रायः पञ्चशताब्दान्ते भ्रमद्भिर्वृष्णिपालकैः ।

शुम्भराजस्य वश्यानां राज्यमास्कन्दितं बलात् ७
पुनः पञ्चशताब्दान्ते बलान्निर्वास्य वृष्णिपान् ।
अजपुत्राः स्वतन्त्रास्ते समजायन्त मानिनः ॥८॥
दोषाख्यनामा रामेशस्तेषां राजा बलोद्धतः ।
स्थवीयसि पुरे राज्यं कुर्वन्नाक्रान्तवान्परान्॥९॥
ततो वर्षसहस्रान्ते कान्येशाख्य महाबलम् ।
पारसीकाधिपं प्राप्य तत्स्वातन्त्र्यं व्यलुप्यत १०
आच्छिद्य पारसीकेभ्यो याते वर्षशतद्वये ।
वीरेणालिकचन्द्रेण विषयास्ते वशीकृताः ॥११॥
पुरीमलिकचन्द्रीयां तेन वीरेण निर्मिताम् ।
राजधानीं चकारास्य पुलोमाख्यश्चभूपतिः॥१२॥
अतीतेलिकचन्द्रे च पुलोम्नास्य च वंशजैः ।
चिरं नीलनदीप्रान्ते कान्ते राज्यं व्यधीयत १३
अथाजपुत्राः पौलोम्या देव्या श्रीपत्रया किल ।
शरच्छतत्रये याते रामकेष्वपहारिताः ॥१४॥
ब्रह्मक्षत्रविशस्तिस्रस्तेष्वजायन्त जातयः ।
कोट्यर्धमानाश्चाभूवन्सुभिक्षसुखिनो जनाः १५
कोणागारैर्महायामैर्भूपतिप्रेतवेश्मभिः ।
प्रख्यायतेजपुत्राणां वास्तुनिर्माणकौशलम् १६
महाकोणस्य तुङ्गत्व पदमार्धचतुःशती ।
सार्धशप्तशतप्राया चतुरस्रास्य मूलभूः ॥१७॥
अत्र लक्षमणिप्रायाः पाषाणास्तेषु चार्पिताः ।
त्रयो महान्तोयाम्येषां सप्ततिर्लघवः स्थिताः १८
लिपिः प्राणप्राकृतिमाया स्तम्भपात्रादिवस्तुषु ।
तथा प्रपीडपत्रेषु तेषामद्यापि लभ्यते ॥१९॥
अदृश्यमीश्वर जीवममर विबुधान्बहून् ।
सूर्यचन्द्रमुखानेते भक्तिपूर्वमपूजयन् ॥२०॥
विडालकुक्कुरश्येनवृषवत्सादिकान्पशून् ।
अपूजयंस्ते तद्घातपातकिप्राणहारिणः ॥२१॥

प्रतिपालयतः प्रेतान्क्रमं निर्णयवासरम् ।
वेशवारैः कृमिघ्नैस्ते रक्षिताङ्गानतिष्ठिपन् ॥२२॥
वर्णकाचमणिक्षौमधातुशिल्पेषु कौशलम् ।
ज्योतिर्गणितभैषज्यज्ञान चैषामभूत्क्रियत् ॥२३॥
समकोणश्रुतेर्वर्ग भुजवर्गयुतेः समम् ।
पृथुगौराजपुत्रेभ्योधिजगे यवनः सुधी ॥२४॥

अथाजपुत्राः किल सभ्यताधुरं
समर्प्य यथोग्यतरासु जातिषु ।
क्षय शनैर्भेजुरुदारविक्रमा
न चित्रमेतत्प्रकृतिर्हि तादृशी ॥२५॥

इत्यजपुत्रेतिहासवीचिः ॥

## असुरेतिहासवीचिः ।

अकृष्टच्यगोधूमे खर्जूराजंस्वलोवरे ।
स्तिग्रियोतपथयोर्मध्ये न्यवसन्नसुराः सुखम् ॥१॥
ग्रहताराचकाः शल्यलिप्यो ज्योतिषप्रियाः ।
वाणिज्यवल्लभा भव्यल्लूने राज्यमकुर्वत ॥२॥
प्रायो वर्षसहस्रान्ते ते निह्नवपुरासुरैः ।
पराजीयन्त बलिभिः क्रमाद्दौबल्यविक्लवाः ॥३॥
त्रिगर्तेन्द्रपालाद्य यन्निह्नवपुरासुरैः ।
अर्जित भव्यल्लूनीयलक्ष्मणेनार्जित पुनः ॥४॥
भूयस्त्रिगतपालेन तत्साम्राज्यं स्थिरीकृतम् ।
षड्गुणश्रमणेशाद्यैः शून्यगर्भेण चार्जितम् ॥५॥
प्रयाते शतषट्केथ शरदामासुरं बलम् ।
साहसैकप्रियैर्नीतिं वीरैर्निह्नववासिभिः ॥६॥
नाशितं भव्यल्लूनीय-नवपालसहायकैः ।
मेदिकासैनिकैः काय क्षारनीतैर्मदोद्धतैः ॥७॥
कायक्षारनृपात्प्राप्यासुरराज्यं महामतिः ।
नवपालश्चिरं भव्यल्लूने राज्यमथाकरोत् ॥८॥

नवपालस्य तनयो नवचन्द्रो महाबलः ।
अजपुत्रांश्च सौराश्च जारूषांश्च व्यजेष्ट सः ॥९॥
सपञ्चनन्दनाथामुत्पथापूरकर्णकम् ।
शतार्धकरगाम्भीर्यैः शतद्वयकरोच्छ्रितैः ॥१०॥
सहस्राट्टालविस्फारैरारकूटोच्चगोपुरैः ।
प्राकारैः परितोयुक्तं प्रासादशतसंकुलम् ॥११॥
कृत्रिमारण्यशैलाढ्यं चतुरस्रं समृद्धिमत् ।
भव्यलूनपुरं नव्यं नवचन्द्रो विनिर्ममे ॥१२॥
अथवंशधरादस्य विलासासुरभूपतेः ।
पारसीकाधिपः कारुरासुरं राज्यमाच्छिदत् १३
ततश्चालिकचन्द्रेण याते वर्षशतद्वये ।
परानिवासुराञ्जित्वा भव्यलूनं वशीकृतम् ॥१४
भव्यलूनपुरीं मानी राजधानीमुशन्नसौ ।
नवोचिकापुरेवैनां कालेन कवलीकृत ॥१५॥

निधनमुपगते तदिव्यकाण्डेऽ-
तुलविभवे ऽलिकचन्द्रभूमिपाले ।
असुरनगरमुत्कटामभूयो,
भ्युदयविपत्तिमधत्त भव्यलूनम् ॥१६॥

इत्यसुरेतिहासवीचिः

पणीशजारूषेतिहासवीचिः

समानामर्धसाहस्रे कुरुपाण्डवतो गते ।
अब्रह्मनामा जारूषः सकुटुम्बो भ्रमन्महीम् ॥१॥
शरदामथ संयाते तत्स्थितेः शतसप्तके ।
तद्गोत्रमजपुत्रेभ्यः सनिकारं निराकृतम् ॥२॥
प्राच्यान्ते मध्यजलधेरवसंस्ते वणिज्यया ।
देवादेशाद्वृतैर्दिव्यशासकैः कृतशासनाः ॥३॥
अतीते शम्बरे दिव्यशासके चरमे नृपाः ।
चत्वारिंशतमब्दानां शवलस्तानशाद्वली ॥४॥
देववित्तस्य जामाता तस्माद्राज्यमघासवान् ।
सुलोमा तनयस्तस्य ततोभूमृपतिर्बली ॥५॥
तयोः प्रातापाद्बलिनोर्यत्साम्राज्यं व्यजृम्भत ।
तद् व्यशीर्यत तद्वंश्य नृपदुर्नयजर्जरम् ॥६॥
नवचन्द्रेण विध्वस्तकारणाथ वशीकृतम् ।
बलिनालिकचन्द्रेण स्वराज्येऽङ्गीकृतं ततः ॥७॥
रोमकानीकिनीनाथ-पम्पियेनाथ विक्रमात् ।
जितं रोमकसाम्राज्य-प्रान्तत्वं प्रत्यपद्यत ॥८॥
मध्याब्धेर्लवणाद्रेश्च मध्यतो विहिताश्रयाः ।
पणीशा वणिजोभूवन् जारूषप्रातिवेशिकाः ॥९॥
मध्याब्धिं दक्षिणेनैषां करध्वजपुराह्वयः ।
सुस्फीतोपनिवेशोभूद्रोमपत्तनभीतिकृत् ॥१०॥
मध्यसागरपाश्चत्यमुखे गाधिजनामकम् ।
पुरं वणिज्याविस्तारहेतवे ते न्यवासयन् ॥११॥
आतुङ्गनगरावासाच्छ्वेतद्वीपान्महोद्यमाः ।
आभारतमहाम्भोधिनिलयात्सिंहलादपि ॥१२॥
पणीशाः सर्वतश्चेरुस्ते सांयात्रिकवृत्तयः ।
निजाक्षारसमाम्नायमध्याप्य यवनानमो ॥१३॥
रोमकादिषु संप्रापुर्विद्याविस्तारहेतुताम् ।
प्रथमं सूदनपुरं द्वितीयं तीरपत्तनम् ॥१४॥
राजधानी क्रमादासीत्पणीशानां महौजसाम् ।
नवचन्द्रासुरेणाथ काम्येशेन ततः परम् ॥१५॥

रोमसाम्राज्यवारांनिधाविलयं
प्रत्नजात्यापगानां लयोजायत ।
शाश्वते संसृतिस्रोतसि प्रत्यहं
क्षीयते कश्चिदन्यो वहत्युन्नतिम् ॥१६॥

पाण्डेय रामावतार शर्मा एम. ए. ।

---

# अथ रावणवधम्।

—:०:—

## प्रथमः सर्गः।

रमाधवो माधवमासि भूषयन्,
धरातलं सद्मनि कोशलापतेः।
मुदा चरित्रैर्विजहार पावनै-
र्नयन् दिनान्यद्भुतकेलिविभ्रमैः ॥१॥

सहानुजोऽसौ वनमेत्य रक्षसां,
कुलेषु दण्डं वितरन्मुनिप्रियः।
प्रसाद्य देवान् विनिपात्य ताडकाम-
धर्म्मनामापि निनाय संक्षयम् ॥२॥

प्रचण्डकोदण्डमथ स्वयम्वरे,
विदेहजायाः कमनीयतावधेः।
विभज्य मानं द्विषतां हरन्नयं,
तुतोष धिन्वन्मिथिलेशनन्दिनीम् ॥३॥

विमुच्य राज्यं विपिनं विभूषयन्,
विमातृदुष्टेहितसंविधित्सया।
नयन्नयं शूर्पणखां कुरूपतां,
विनाशवीजं वपति स्म रक्षसाम् ॥४॥

विरच्य युद्धं खरदूषणादिभि-
र्विधाय तद्दण्डकमस्तकण्टकम्
दशाननाय प्रतिपक्षरक्षसे,
बलस्य बाह्वोर्वरघोषणां ददौ ॥५॥

अथ स्वसुस्तां विनिशम्य दुर्दशां,
वधं भटानामविषह्यतेजसाम्।
स्ववैरनिर्यातनलोलुपोऽधिपो,
निशाचराणां कपटे मतिं न्यधात् ॥६॥

नियुज्य मारीचमयं निजानुगं,
प्रतारणायां कुशलं दशाननः।
बभूव सीताहरणे कथञ्चन
क्षमोवनान्ताद्रघुनन्दनोज्झितात् ॥७॥

विचित्रवर्णैस्सुमनोभिरञ्चिता,
विभूषिता विभ्रमशालिभिर्द्रुमैः।
विडम्बयन्ती वरनन्दनश्रियं,
मनोविनोदाय बभूव वाटिका ॥८॥

इतो निवासाय विसर्जिता रमा,
निशाचरीवृन्दसहस्ररक्षिता।
मनाङ्मनस्याप मुदं न वञ्चिता,
स्ववल्लभक्रीडनलोलसम्मदात् ॥९॥

निहत्य मायामृगमस्त्रलाघवात्,
कुटीं समासाद्य सहानुजो विभुः।
मुहुर्विर्तने प्रियया विनाकृतो,
विलापसन्तानमिवाल्पधीर्जनः ॥१०॥

ततः प्रियान्वेषणदत्तमानस-
श्चचाल रामो विरहव्यथातुरः।
गुहासु वापीषु लतासु जानकीं
विमार्गयन् सद्घनवृक्षराजिषु ॥ ११ ॥

बभूव दिष्ट्या बलिनोऽग्रतो विभुः,
कपीश्वरेण प्रबलेन संगतः।
अवाप्य सख्यं सह येन जानकी-
पदाञ्चितायामवनौ पदं न्याधात् ॥१२॥

कपीशभल्लूकमयी वरूथिनी,
समेत्य लङ्कामभितः प्रसारिणी।
दशास्यलास्यादिषु कण्टकायिता,
व्यधत्त मोदं हृदि जानकीपतेः ॥१३॥

क्व वर्त्तते सा मम नेत्रकौमुदी,
यया विना मे वसुधा मुधास्ति हा।

इति प्रियादर्शनलालसो व्यधा-
द्विभुर्व्यथां लोकजनोचितानुगाम् ॥१४॥
निशम्य वक्त्रात्परिदेविताक्षरं,
जगत्पतेस्ते व्यथितान्तरा भटाः ।
व्यधुर्महाघोररवैर्विकम्पिता-
मजातशङ्कामपि शात्रवीं पुरीम् ॥१५॥
अहो किमेते द्रुमचारिणो मृगा
नदन्ति, सिंहा इव वीतसाध्वसाः ।
सुरारिपुर्यां प्लवगोत्थकिल्बिलं
व्यनक्ति दैवस्य हि दुष्टचेष्टितम् ॥१६॥
इतितदननुकूलं दत्तशूलं मनोऽन्त-
श्शकुनमशुभमूलं चिन्तयन्निर्जरारिः ।
प्रकटितमहिमानं शत्रुमानाशनिं तं
निजपुरिकृतयानं रामचन्द्रं विवेद ॥१७॥

इति रावणवधे प्रथमः सर्गः ।

## द्वितीयः सर्ग ।

इतिविचिन्तनसंव्यथितान्तर-
स्स्वदयितासदनं प्रविवेश सः ।
वदनकान्तिमथास्य समीक्ष्य सा
हततरा ततरागमुवाच तम् ॥१॥

कथय नाथ कथं विगतप्रभं
तव शरीरकदम्बकमीदृशम् ।
मनसि मे समुदेति महद्भयं
नवदशा वद शान्तिहरा कुतः ॥२॥

न वशगा यदि तेऽस्ति विदेहजा,
त्यज शुचं भज कान्त निजप्रियाम् ।
पततु ते वरदोषखिलीकृता,
सुनगरी न गरीयसि पातके ॥३॥

विसृज दाशरथौ रमण ! भ्रमं,
नरधिया न तिरस्कुरु तं हठात् ।
जनकजापहृता जगदम्बिका,
शुभवता भवता मतिसम्भ्रमात् ॥४॥

झटिति देहि जगद्विभवे प्रियां,
दयित तेन जहीहि रणस्पृहाम् ।
भवतु मा तव मूर्ध्नि निपतिता
ऽसुरमणे रमणेशशरावली ॥५॥

इतिनिशम्य मयाङ्गजभाषितं,
सुभटकर्णपुटीविरसं वचः ।
ततमदं विजहास दशाननः,
प्रियतमायतमात्यमपाहरन् ॥६॥

अयि कृशोदरि किं भयविह्वला,
गदसि दीनतमेव वचोऽधुना ।
त्रिभुवनेश्वरलालितवल्लभां,
शमपरामपरामिव लक्षये ॥७॥

त्वमसि शक्रजितो जननी प्रिये,
बहलबाहुबलस्तव देवरः ।
विजितलोकपतिस्तव सत्पति-
र्नरजनी रजनीचरभीः कुतः ॥८॥

नरजयस्य कथास्तु शुचिस्मिते,
सहचरी यदि वानरवाहिनी ।
अपि च मे नरवानरसङ्गरे
ऽवहन्निनेह, स्मितैव रणःकथा ॥९॥

विमुञ्च मन्दोदरि मन्दभावनां
क्व रावणस्यास्ति रिपूत्थितं भयम् ।
इति प्रियोक्तिं वचसावधीरयन्
निनाय रात्रिं अर्पितान्तरव्यथम् ॥१०॥

इति द्वितीयः सर्गः

## तृतीयः सर्गः।

अथ भानुमतो मरीचिभिः
प्रखरैर्व्योमतले सितीकृते।
समराय चचाल रक्षसां,
रघुवीराभिमुखं वरूथिनी ॥१॥

दशकण्ठचमूर्बलोन्मदा,
कपिसेनाममभिगम्य दुर्जयाम्।
तनुते स्म पराक्रमं मुदा,
चिरकालाद्रणकेलिसस्पृहा ॥२॥

मुमुचे विशिखावली तत
स्सगदातोमरशक्तिमुद्गरा।
रजनीचरसङ्घटै रणे,
दशमौलिप्रियसंविधित्सया ॥३॥

क्षणमुद्धतराक्षसैर्हता,
विचचालेव कपीशवाहिनी।
पवनात्मजतर्जिता तु सा,
विदधे रक्षसि विक्रमं युधि ॥४॥

निपपात कपीन्द्रचालिता,
द्विषतां मूर्धसु जीवितापहा।
क्वचिदुन्नतशाखिसंघटा,
क्वचिदत्युच्चशिलापरम्परा ॥५॥

कपिभिर्निहता निशाचरा
स्स्वभुजागर्व्वकथां विसस्मरु।
परिमुच्य रणस्पृहां जवा-
द्रिपुरास्ने सदनं सिषेविरे ॥६॥

स्वबलं कपिभिर्विधूनितं,
सहसा वीक्ष्य दशाननः क्रुधा।
निशितैर्विशिखैर्जगत्प्रभुं,
परिविव्याध मदान्धलोचनः ॥७॥

अयि तिष्ठ मनाक् ममाग्रतो,
युधि संदर्शय हस्तलाघवम्।
इह सन्ति ममेषवश्चिरा-
न्नितरामस्रपिपासवस्तव ॥८॥

इतिशान्तगिरा सुरद्विषं,
विहसन्नाह वचो रमापतिः।
मृदुपातशरैस्तुदन्नमुं,
विदधे संगरकेलिविभ्रमम् ॥९॥

तुमुलं जनरोमहर्षणं,
कठिनं युद्धमभूत्ततस्तयोः।
त्रुटितं गगनं रवाहतं,
विचकम्पे च मही शराहता ॥१०॥

भुवनत्रितयैकरक्षिता,
रणविद्याकुशलो रमापतिः।
त्रिजगद्विजयी दशाननो;
युयुधाते विजयाभिकाङ्क्षिणौ ॥११॥

अथ तेन नियुध्य रक्षसा,
नरलीलाप्रवणो जगत्प्रभुः।
बलगौरवमस्य रञ्जयन्,
यमगेहातिथितां निनाय तम् ॥१२॥

इत्थं विधाय निधनं दशकन्धरस्य,
रामो विदेहतनयाप्तिवलन्मुखश्रीः।
प्रत्याययौ निजपुरीं विबुधार्च्चिताङ्घ्रि-
र्मोदं किरन्मनसि काम्यतमं प्रजानाम् ॥१३

भारतीभूषण परमानन्दकविविनोदः

---

# कविकाव्यप्रशस्तयः

कवीन्दुं नौमि वाल्मीकिंयस्य रामायणीं कथां
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधव ।
सदूषणापि निर्दोषा सखरापि सकोमला
नमस्तस्मै कृता येन रम्या रामायणी कथा ।
भट्टत्रिविक्रमस्य

कर्णान्तविभ्रमभ्रान्तकृष्णार्जुनविलोचना
करोति कस्य नाह्लादं कथा कान्तेव भारती ।
तस्यैव

श्रवणाञ्जलिपुटपेयं विरचितवान् काव्यममृतं यः
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ।
भट्टनारायणस्य

स्वस्ति पाणिनये तस्मै यस्मादाविरभूदिह
आदौ व्याकरणं काव्यमनुजाम्बवतीजयम् ।
राजशेखरस्य

यथार्थता कथं नाम्नि माभूद् वररुचेरिह
व्यधत्त कण्ठाभरणं य सदारोहणप्रियः ।
तस्यैव

समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना
हरलीलेव नो कस्य विस्मयाय वृहत्कथा ।
वाणस्य

तौ शूद्रककथाकारौ वन्द्यौ रामिलसौमिलौ
ययोर्द्वयोः काव्यमासीदर्धनारीश्वरोपमम् ।
राजशेखरस्य

सूत्रधारकृतारम्भैर्नाटकैर्वहुभूमिकै
सपताकैर्यशो लेभे भासोदेवकुलैरिव ।
वाणस्य

भासनाटकचक्रेपि छेकैःक्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहको ऽभून्नपावकः
राजशेखरस्य

पदवन्धोऽज्वलोहारिकृतवर्णक्रमस्थितिः
भट्टारहरिचन्द्रस्य गद्यवन्धो नृपायते ।
वाणस्य ।

सरस्वतीपवित्राणां जातिस्तत्र न देहिनाम्
व्यासस्पर्द्धी कुलालोऽभूद्यद्द्रोणो भारतेकविः ।
राजशेखरस्य

निर्गतासु नवा कस्य कालिदास्य सूक्तिषु
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्वेव जायते ।
एकोऽपि जीयते हन्त कालिदासो न केनचित्
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु,
राजशेखरस्य ।

पुराकवीनां गणनाप्रसङ्गे
कनिष्ठिकाधिष्ठितकालिदासाः ।
अद्यापि तत्तुल्यकवेरभावान्
कनिष्ठिकासार्थवती बभूव ।
कस्यापि ।

श्लोकोऽयं हरिणाभिधानकविनादेवस्यतस्याग्रतो
यावद्यावदुदीरितं शकवधूवैधव्यदीक्षागुरोः,
तावत्तावदगाढमान्द्यपुलकस्तस्मै स देवो ददौ
लक्षं लक्षमखण्डितंमधुकरव्यालोलगण्डान्
गजान । अमरुकवेः ।

अमुष्मै चोराय सरसहृतमृत्युप्रतिभिये
प्रभुः प्रीतः प्रादात् तदुपहृतपद्यद्वयकृते ।
सुवर्णानां कोटीर्दशदशनकोटिक्षतगिरीन्
करीन्द्रानप्यष्टौ मदमुदितगुञ्जन्मधुलिहः ।
तस्यैव

अमरुककवित्वडमरुकनादेन
विनिन्हुता न सञ्चरति
शृङ्गारभणितिरन्या धन्यानां कर्णविवरेषु
कस्यापि

दन्तिव्यूढ़ कनककलितं चामरे हेमदण्डे,
यो गाडेन्द्रादलभत कविक्ष्माभृतां चक्रवर्ती
ख्यातः यश्च श्रुतिधरतया विक्रमादित्यगोष्ठी-
विद्याभर्तुः खलु वररुचेराससाद प्रतिष्ठाम्।

अमरुकस्य,

जानकीहरणं कर्तुं रघुवंशे स्थितेसति
कविः कुमारदासश्च रावणश्च यदि क्षमौ

राजशेखरस्य

यक्रोक्त्यामेण्ठराजस्य वहन्त्या सृणिरूपताम्
आधूता इवधुन्वन्ति मूर्द्धानं कविकुञ्जराः।

राजशेखरस्य

येनायोजिनवेऽश्म स्थिरमर्थविधौ
विवेकिना जिनवेश्म
स विजयतां रविकीर्तिः कविता
श्रितकालिदासभारविकीर्तिः।

द्वितीयपुलकेशिलेखे,

प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने,
प्रसत्तौगाम्भीर्ये रसवति च काव्यार्थघटने,
अगम्यायामन्यैर्दिशि परिणतेरर्थवचसो
मत चेदस्माकं कविरमरसिंहो विजयते
शश्वद्वाणद्वितीयेन नमदाकारधारिणा
धनुषेव गुणाढ्येन निःशेषो रञ्जितोजनः।

भट्ट त्रिविक्रमस्य,

हृदिलग्नेन वाणेन यन्मन्दोऽपि पदक्रमः,
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम्।

कस्यापि,

हेम्नोभारशतानि वा मदमुचां वृन्दानि वा दन्तिनाम्
श्रीहर्षेण समर्पितानि कवये वणाय कुत्राद्यतत्
या वाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्त्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाग्मन्येपरि-
म्लानताम्

श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरे-
ऽलङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णके
आं सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी
सञ्चारोर्कविकुम्भिकुम्भभिदुरोवाणस्तुपञ्चाननः
शब्दार्थयोः समोगुम्फः पाञ्चाली रीतिरुच्यते
शिलाभट्टारिका वाचि वाणोक्तिषु च सा यदि।

भोजस्य,

दर्पं कविभुजङ्गानां गता श्रवणगोचरम्
विषविद्येवमायूरी मायूरी वाग्निकृन्तति-
तावत्कविविहङ्गानां ध्वनिर्लोकेषु शस्यते
यावन्नविशतिश्रोत्रे मयूरमधुरध्वनिः।
अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः,
श्रीहर्षस्याभवत्सभ्यः समोवाणमयूरयोः

राजशेखरस्य,

यस्याश्चोरश्चिकुरनिकरः कर्णपूरोमयूरः
हासोभासःकविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चवाणस्तु वाणः।
केषां नैषा कथय कविता कामिनी कौतुकाय

जयदेवस्य

सुवन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम्
विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते,
भवभूतिमनादृत्यनिर्वाणमतिना मया
मुरारि पदचिन्तयामिदमाधीयते मन।
पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मताः,
व्युत्पत्तिं परमामवाप्तुमवधिं लब्ध रसस्रोतसः,

भाकु स्वादुफल च जोविततरोर्यद्यस्तिते कौतुकम्
तद्भ्रातःशृणु राजशेखरकवेःसूक्तीःसुधास्यन्दिनीः
इन्दुप्रभारसविदं विहगं विहाय
कीराननेस्फुरसि भारति कारतिस्ते,
आद्यं यदि श्रयसि जल्पतु कौमुदीनां
गोविन्दराजवचसां च विशेषमेष ।
अथोगणपति वन्दे महामोदविधायिनम्,
विद्याधरगणैर्यस्यपूज्यते कण्ठगर्जितम् ।
भासोरामिलसौमिलौ वररुचिः श्रीसाहसाङ्कःकवि
र्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धश्च यः
दण्डीबाणदिवाकरौ गणपतिः कान्तश्चरत्नाकरः,
सिद्धायस्यसरस्वती भगवती के तस्य सर्वेऽप्यमी
अकाल जलदश्लोकैश्चित्रमात्मकृतैरिव,
जातः कादम्बरीरामो नाटके प्रवरः कविः ।
कलिञ्जरपतिश्चक्रे भीमटः पञ्चनाटकीम्,
प्राप प्रबन्धराजत्वं तेषु स्वप्नदशाननम् ।
नीलोत्पलदलश्यामां विज्जकां मामजानता,
मुधैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ।
प्रद्युम्नाम्नापरस्येह नाटके पटवो गिरः
प्रद्युम्नाम्नापरस्येह पौष्पा अपि शराः खराः ।
पार्थस्य मनसिस्थानं लेभे किलसुभद्रया
कवीनां च वचोवृत्तिचातुर्येण सुभद्रया ।
के वैकटनितम्बेन गिरां गुम्फेन रञ्जिता
निन्दन्ति निजकान्तानां न मौग्ध्यमधुरं वचः ।
सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ
या वैदर्भगिरां वासः कालिदासदनन्तरम् ।
शीलाविज्जामारुलामोरिकाद्याः
काव्यं कर्तुं सन्ति विज्ञास्त्रियोऽपि ।
विद्यां वेत्तु वादिनो निर्विजेतु
विश्व वक्तु यः प्रवीणः सवन्द्यः ।
देवीं वाचमुपासते हि बहवः सारं तु सारस्वतम्,
जानीतेनितरामसौ गुरुकुल क्लिष्टोमुरारिकविः ।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्यगम्भीरता
मापातालनिमग्नपीवरतुर्जानाति मन्थाचल ।
माघेन विघ्नितोत्साहा न क्षमन्ते पदक्रमे
स्मरन्तो भारवेरेव कवयः कपयो यथा
मुरारिपरचिन्ता चेत्तदा माघेरतिं कुरु
मुरारिपदचिन्ता चेत्तदा माघेरतिं कुरु ।
कविरमरः कविरचलः कवि
रभिनन्दश्च कालिदासश्च
अन्येकवय कपयः चापलमात्रं परंदधति ।
हालेनोत्तमपूजया कविवृषा श्रीपालितोलालितः
ख्याति कामपिकालिदासकवयो नीताः शकारातिना
श्रीहर्षोविततार गद्यकवये वाणाय वाणीफलम्
सद्यःसत्क्रियया भिनन्दमपि च श्रीहारवर्षोऽग्रहीत्
अभिनन्दस्य
अकालजलदेन्दोः सा हृद्या वचनचन्द्रिका
नित्यंकविचकोरैर्या पीयते नच हीयते ।
राजशेखरस्य ।
मास्मसन्तुहि चत्वारः प्रायोरत्नाकरा इमे
इतीवसकृतोधात्रा कविरत्नाकरोऽपरः ।

अस्तंगतभारविरवि कालवशात् कालिदास
विधुविधुरम्
निर्वाणवाणदीपं जगदिदमद्योति रत्नेन।
त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः
त्रयोदण्डिप्रबन्धाश्चत्रिषु लोकेषुविश्रुताः।
बभूववल्मीकभवः पुराकवि
स्ततः प्रपेदे भुविभर्तृमेण्ठताम्
स्थितः पुनर्यो भवभूतिरेखया
विराजते सम्प्रति राजशेखरः
उपमाकालिदासस्य भारवेरर्थगौरवम्
दण्डिनः पदलालित्यं माघेसन्तित्रयोगुणाः।
बाणःसृष्टिमपूर्ववस्तुविषयामेको न निर्व्यूढवान्।
निष्णातः कविकुञ्जरेन्द्रचरिते मार्गे गिरांवाग्रह।
वेद्याविन्ध्यपुलिन्दपामरवधूभ्रूगोलभूजृम्भानिल,
प्रायेऽर्थे वचनानिपल्लवियितुं जानातियोगेश्वरः।
वाणःप्राणितिकेशरःस्फुटमसौजागार्तियोगेश्वरः
प्रत्युञ्जीवतिराजशेखरगिरां सौरभ्यमुन्मिलति,
येनायं कलिकालपुष्पधनुषो देवस्य शिक्षावशा-
दाकल्पं वसुकल्प एव वचसि प्राभल्यमभ्यस्यति
उन्नीतो भवभूतिना प्रतिपदं वाणेगते यः पुरा,
यश्चीर्णं कमलायुधेन सततं येनागमत् केशरः
यः श्रीवाक्पतिराजपादरजसां सम्पर्कभूतिश्चिरं
दिष्ट्याश्लाघ्यगुणस्यकस्यचिदयंमार्गः समुन्मी-
लति।
विकचकुमदकोडक्रीडन्मधुव्रतभाङ्कृते
दकलकुहूकण्ठोत्कण्ठाविञ्चितपञ्चमात्
अभिनववधूप्रेमालापादपि श्रुतिसम्मद
विदधति कवेर्दङ्कस्यैता सुधामधुरागिरः।
धिक्धिक्तान् समयान् परिश्रमरुजो
वक्तुं गिरोनीरसाः
यत्रामूर्निपतन्ति वल्लण गुणोत्खातामृतप्रीतयः
रोम्णां नृत्यभुवो विलोचनपयः पूराब्धिचन्द्रो-
दया
साहित्य प्रतिगवर्गर्वगलनाद्ग्लानिक्रियाहेतवः।
निष्पन्नेसति चन्द्रचूडचरितेतत्तन्नृपप्रक्रिया
जाते, सार्द्धमरातिराजकशिरोरत्नाञ्जलीनांत्रयम्
ततस्वर्णशतानिविंशति शती रूप्यस्यलक्ष त्रयम्
ग्रामाणां शतमत्र रङ्कवये चाणक्यचन्द्रोदधौ।
गोवर्द्धनश्चशरणो जयदेव उमापतिः
कविराजश्चरत्नानि समितौ लक्ष्मणस्य च।
यथेयं वाग्देवी सुकविमुखवासव्यसनिनी
कुहूकण्ठी कण्ठे विलसति तथा चेदनवधिः।
तदाभूमीभागे निरुपतमः किञ्चिदिववा
समाधत्ते साम्यं धनदभणितीनां मधुरिमा
न मुग्धदयिताधरे न विषभाजिरत्नाकरे
न राहुमुखकोटरे न किल तार्क्ष्यपक्षान्तरे।
सुदर्शनकवीश्वरे रसिकचक्रचूणामणौ
गुणैकसि सुधा बुधास्त्यजतसान्द्रचन्द्रभ्रमम्,
गिरांदेवीवीणागुणरणनहीनादरकरा
यवीयानां वाचाममृतमयमाचामतिरसम्,

वचस्तस्याकर्ण्य श्रवणशुभगाःपण्डितपते
रघुत्वनभूर्द्धानं नृपशुरथवार्यं पशुपति ।
उन्मीलदम्बुजकदम्बकसौरभीणा
मुन्नृत्यदीशमुकुटीतटिनी सखीनां
आचान्त वैरियशसाममृतोर्मिलानां
वाचामनन्तसुकवेर्वसुधाप्यमूल्यम्
अनन्तस्य ।
गतार्थोऽय जगन्नाथो न पेक्ष्योचाप्यदीक्षितः
कटुवाग्वेङ्कटार्योऽपि सति गङ्गाधरेगुरौ ।
संगृहीतुः ।

---

# ननु समाजःसंस्कर्तव्यः

—:०:—

साम्प्रतमाकल्लोलिनीवल्लभाद्रा च शितगिरेः प्रायशः श्रूयते शिक्षितानामशिक्षितानाञ्च वदनकुहरात् सनिर्वेदम् "अवनतः किलेदानीमास्माकीनः समाजः, विधेयश्चास्य संस्कारः, संस्कृतिर्हि अपनयति वस्तूनां मलम्, संस्कृतानि वस्तूनि स्वच्छानि भास्वरमनोहराणि च भवन्ती" ति विनिस्सरन्ती वाक् । मन्ये नात्र विमितः केषामपि प्रेक्षावतां, यत् तत्वत एवाधुना वयमवनता इति, नहि किल अवयवा अवयविनो भिद्यन्ते, अवयवसमूह एवावयवी, द्रुमाणां समष्टिरेव वनम्, कुसुमानां पुञ्ज एव स्रक् । नह्येकैकस्य द्रुमस्य कुसुमस्य वा भवति संज्ञा वनमिति स्रगिति वा । मनुष्याणां समष्टिरेव समाजः, एतेषामवनत्या प्रख्यापितमेव समाजस्यावनतत्वम् । सम्पादनीयमेवास्य समाजस्यावनतिहेतुभूतानां वस्तूनां समूलत उन्मूलनम् । संस्कर्तव्यश्चैव इति ।

संस्कृतानामेव दृश्यते वस्तूनामुपयोगः स्वकर्मसम्पादने, निशिता एव कृपाणिका क्षमते शत्रुशिरःकर्तने, सबहुमानमाद्रियन्ते चेमां समररसरसिकाभटाः । नहि किट्टमलीमसः कृपाणो दृष्ट कुहचन शूरवरैरपि प्रहितः स्वकर्म सम्पादयन्, असंस्कृतानां पुनर्वस्तूनां स्वमत्तापि हीयते । नहि मलिने स्वर्णे स्वर्ण इति प्रत्ययमादधाति जनः, मालिन्यादेवास्माकं समाजोऽवनतो विरूपश्च संवृत इति युक्तं व्याहरामः । असंस्कृतत्वादेवात्रोपसक्रान्ता क्लीवता, प्रवृद्धा च स्वार्थपारायणता, विलीनञ्च सौहृद्यं, पातालंप्रतिष्ठितं परस्परोपकारित्वम् । अन्यथा कथमेकजन्मप्रतिष्ठानामेकसमाजदीक्षितानामायतिविरसः परस्परमीदृशो द्वेष आविर्भवेत्, कथंवा सर्वथा विनिपातकरं वैमत्यमेषु लब्धावसर निरीक्ष्येत । कथं वा प्रथितसमक्षानामपि सामाजिकानां न्यक्कृतपद्मसौन्दर्याद्वदनात्सावहेलं जगच्छिशिरयन्त्या भगवत्यास्त्रिपथगाया धारामप्युपहसन्ता समाजमौलिकानामपरेषां निन्दावाक् श्रूयते । श्रीमन्तः समाजपतयः समाजिका वा यथेच्छमाचर्यताम्, उच्छृङ्खलं चेष्ट्यतां, ननु तिष्ठत्येव कालः, निपातनीयाः किल निखिला दोषा एतस्य शिरसि कोनु खलु श्रीमतः प्रतिषेद्धुं प्रभवति, किञ्च युक्ति

समुर्ज्जितैर्वचनैः प्रत्यायनीयमात्मनो निपुणं निर्दोषत्वं स्वानुगानामधिवेश्य कामपि समितिम्, कार्यविवरणञ्च प्रेषणीयं वर्तमानपत्रेषु, इत्थमेवात्मसम्पृक्तैः कलङ्कैः कालिमा समारोपणीयो विपक्षस्य वदने । समाजं संस्कर्तुमनिशं प्रयत्यत-अस्माभिरिति सगलस्फोटं दुन्दुभिस्ताडयतां, एषां कृते कियान् प्रयासोऽङ्गीक्रियते परमेते मनागपि चक्षुरुन्मीलयतुं न यतन्त इत्यादिभिर्विस्तारणीयमात्मनः समाजहितैषित्वम् ।

अपरश्च समाजसंस्कारप्रकार इत्थं निर्धार्यतेऽस्माभिः : स च प्रकारो विद्योपार्ज्जनरूपः, विद्यां हि ज्ञानस्य जननीमामनन्ति पुराविदः। इयं हि क्षपयत्यविद्याप्रसूतां ध्वान्तसन्ततिम् । तस्मात्स्वच्छेन विद्यावारिणा विविधकलङ्ककलितो दिनाद्दिनमधःपातमृच्छन् समाजः प्रक्षालनीयः, इत्थ च स्यान्नाम कदाचिदस्माकं समुन्नतिः। ततश्च प्रवर्त्यते मनो विद्याधिगमाय, दुःखशतान्यप्यङ्गीक्रियन्ते, प्रयस्यते चानिशम्, अधिगतपाण्डित्यप्रौढ़िम्ना च समाजं संस्कर्तुमिष्यते, परं कीदृशः समाजसंस्कारोपाय इति तावद्विवेचनीयम् । केचन व्यवहारजीवित्वमासाद्य गर्वोच्छूनहृदयाः कृषीवलस्य प्राणान्तिकैः परिश्रममैरर्ज्जितानि द्रविणानि निष्कर्ष्टुं न विरमन्ति। मिथ्याभियोगन्यक्कृतोऽपि यदैष वराकस्तदा विपुलधनलाभसम्भव एव स्वीकरणीयं तेषां व्यवहाराजीवित्वम्, पराजयमापन्ने चैतस्मिंस्तथा प्रोत्साहनीयोऽयं, यथा प्रधानाधिकरणेऽपि ( In the high court ) स्वीयमभियोगमारचयितुं यतेत, वादिनोः सुश्लिष्टोऽपि सन्धिर्भेत्तव्यः, विबोधनीयश्च वादिपक्ष्यो वृथैवसन्धिमिच्छति; नन्वेष एवात्र वृतःस्वयंवरमाल्येन जयश्रिया,इत्थमेवापरपक्ष्योऽपि विबोधनीयः। तथा च प्रयतितव्यं यथा न भवेत्कथञ्चनापि सन्धिः, व्यवहाराजीविनो हि सन्धिं स्फुरद्विग्रहं शत्रुमिवाकलयन्ति। विग्रह एवैतेषां परमो वन्धुः। इत्थं धनाकर्षणैर्विग्रहवीजप्ररोपणैः समाजं विक्लवयन्तः, शुष्कवदनानां भारतीयानां निष्पीडनेन लब्धैः पुष्पवासिततैलोपमैर्यनैर्मसृणयन्ति वणिजां वदनानि । इत्थं विदधाना अपि संस्कर्तव्यः समाजः, अपनेया चावनतिरिति वदन्तः सुष्ठु शोभन्तेतरामस्माकमेते व्यवहाराजीविन एव। यः कोऽपि भारतीयः कस्मिन्नपि श्लाघ्ये समुन्नतमे पदे प्रतिष्ठितः, स किमिव कुसुमसुकुमारं विलोचनयुगलमत्र निपातयेत्। गर्हा इति असभ्या इति कृतघ्ना इति भारतीयान् आलपितुमपि नेच्छति । भारतीया भाषा, आचारः परिच्छदो धर्मश्चेत्यसभ्यजनोचिता इति परिहरत्येतान्। नाभिमतः समाजसंस्कार एतेषामित्यपि न वक्तव्यम्, नन्वेतेऽपि समाजसंचिस्कीर्षवोऽधिवेशयन्त्येव तत्र तत्र समितिम्। निर्धार्यन्त एव उपक्षेपा; अनुमोद्यन्ते, अनुमन्यन्ते चैते। तत्र चेत्थमुपक्षिप्यत एभिः। दूरमपसारणीया चातुर्वर्ण्यव्यवस्था, अधिवेत्तव्या विधवाः स्वसमीहितसाधनग्रहिलैर्ब्राह्मणैर्यथेच्छमाविष्कृतः श्राद्धविधिर्ननु समूल

मुन्मूलनीयः, नहि मृतानां तृप्तिकारणमत्र विधीयमानं श्राद्धं नाम स्यात्, नहि मोहमयीं प्रतिष्ठितो जनः काश्यां तमुद्दिश्यैव प्रदीयमानेनाभ्यवहारेण तृप्तिं समेति। तदा परलोकं गतो वा नरकं प्राप्तो वा जनः कथं श्राद्धेन तृप्तिं भजति इति न विद्मः। इत्येवमाद्य उपक्षेपाः समाजसंस्काराय स्थिरीकुर्वन्त्येते।

परस्परोपकारित्वं नाम समाजस्यैको महान् गुणः। न स समाजो यत्र परस्परोपकारित्वं न भवेत्। समाजमौलिकैर्निर्धारितानां नियमानां पालनमेव सामाजिकानां परमो धर्मः। ते च नियमाः परस्परोपकारित्वरूपाः। दुर्वलाः किल वलिभिः पीड्यन्ते, वलिकृतानां पीडानां परिजिहीर्षयैव सङ्घटितः समाजः प्रत्नैः, नहि बलिना विधीयमानमत्याचरितं दुर्वलेनैकेन शक्यं निवारयितुम्, परं बहुभिर्दुर्बलैरपि सम्भूय तदनायासेन प्रतिरोद्धुं पार्यते। निदानमेतत्समाजवन्धनस्य। न केवलं सचेतनेषु मनुष्येष्वेवाधिकरोतीयं समाजसङ्घटनप्रथा। दृश्यते शकुन्तेष्वपि सेयम्। समानशोणितसम्भवाः काकाअपि न द्विषन्ति सजातीयम्, विपदमनुभवतः कस्यापि काकस्य कातरध्वनिमाकर्ण्य त्वरितमेव सपरिवारा अन्येऽपि काकास्तस्य रिरक्षिषया सोद्वेगमुपगच्छन्ति, परमहो साम्प्रतं भारतीया ब्राह्मणाः क्षत्रिया वा सामाजिका विपन्नं सोदरमप्यवलोक्यानुपमं किमप्यानन्दमनुविन्दन्ते। न लेशतोऽपि स्पृहयन्ति तस्मै, प्रत्युत प्रयत्नशतैः समर्थयन्ति तस्य दोषान्, कस्मिन्नपि घोरे व्यसने बान्धवं निपात्य समुद्घोषयन्त्यात्मनः कीर्तिमेते। बान्धवनिपीडनं किलैतेषामामुष्मिकश्रेयःफलकं यज्ञानुष्ठानमेव मन्यते। न केवलमेभिर्बान्धवानेव निपातयितुमात्मा प्रयस्यते, अपितु, "आत्मा वै पुत्रनामासी" त्यादिभिः श्रुतिसहस्रैः प्रतिपादितामेवं तनुजन्मानमपि स्वविलासाय विलीकर्तुं न विरम्यते। पु[illegible] अपि कामं पित[illegible] लिपन्तस "[illegible]" इत्यर्थकं मनोर्वचनं प्रम[illegible]। इत्थञ्चान्योन्यं लब्धवैराःसहायकम[illegible] दिनाद्दिनमधिकं ह्रसन्ते। चिराय प्रस्थितं किलास्मा[illegible] स्मृतिपथात् पञ्चतन्त्रीय टिट्टिभचरित्रम् नास्माभिरवबोद्धुमिष्यते टिट्टिभचरित्रस्य रहस्यम्। नास्माभि[illegible] पारस्परिकद्वेषसमुत्पन्नो विनिपातो लेशतोऽपि विचिन्त्यते। यथाकथञ्चित्कमपि निपात्यैवं म इति विपाकदारुणे व्यसने, यतः स्यान्नाम मे प्रभूता धनोपलब्धिर्[illegible]निशं [illegible]। अहो नैष्ठुर्यम्, किमितोऽपिस्यान्नाम दारुणः पैशाचो व्यापारः किमिदमेव सामाजिकानां शास्त्रानुमोदितं कर्म, किमित्थमेव निरसनीयाः समाजसम्पृक्ता दो[illegible]।

साम्प्रतं वयं स्वार्थोपहतनयनरश्मयो न विलोक[illegible]मः कार्यमकार्यं वा, परमितमन्धानमेव पूर्वपु[illegible]पानुप्राप्त[illegible] निवापाञ्जलिरिति मन्यामहे। तूलदाहं दह्यतां वाऽयं तपस्वी स्वजनः विपद्येतां वा पितरौ, केवलमाराधयामः

परां विद्यामिव हृदयाधिदेवतां दयिताम् । अलनता वयं सम्पादनीयाऽस्माभिरन्न[illegible]रि-त्यां [illegible] अनुकारयामः वाना परि[illegible]रेण च विदेशीयानेवानुकुर्मः, वि[illegible]शीयानु-करणेन चात्मनः स्वतामप्यपहारयामः । उद्घो-षयामश्चात्मन. कीर्तिगाथां, न पुनः सनात-नस्य धर्मस्य लेशतोऽप्यभ्युदयमनुचिन्तयामः । पुरातनतत्वानुशीलनमिषाद् गलहस्तयामो य-थार्थभूतां ज्ञानविज्ञानजननीं विद्याम् । आत्मनआङ्गलभाषोक्तिप्रत्युक्तिकायामपाटवे त्र-पामहे, न पुनः संस्कृतानभिज्ञत्व ईषदपि विषीदामः । अनभिज्ञत्वनिवन्धनेऽपि नर्मस-चिवस्य विप्रियं सम्पन्ने वैलक्ष्यमनुभवामः, पितरौत्वनिशं न्यक्कुर्मः । अस्माकं पूर्वजा-वन्या असभ्याश्चेति वालिशत्वविजृम्भितानि तेषां वचनानि, तैः स्थिरीकृतो धर्मश्च न सर्व-जनीनः, कः स धर्मो यो निखिलानां न स-मानं श्रेय आवहेत् वयमीश्वरस्य प्रजाः सर्वे वन्धवः, वन्धुत्वेनैवास्माभिर्वर्तितव्यमित्यन्य-मेव धर्ममन्यदेव च धर्मशास्त्रं निर्मातुमि-च्छामः । वाचा वान्धवमेव व्यवहारं प्रश-सामः परं यथेच्छमाचरामः ।

ज्ञानलवदुर्विदग्धा वयं न मनागप्येतद्वि-चिन्तयामो यन्नहि निखिलानां स्वभावः स-मानो भवति, केचनाम्लप्रणयिनो भवन्ति, केचन मधुरमेव रोचयन्ते, केचिदुभयमप्येत द्विनिन्दन्ति, नह्यप्रतिहतशासनैश्चक्रवर्तिभिरपि प्रभुभिर्विसदृशस्वभावानां मानवानामेकस्मिन्नेव वस्तुनि शक्यतेऽनुरागः सम्पादयितुम्, नह्यु-पचितपित्तस्य चेतो मधुरप्रवणं विधातुं पार्यते, न वा श्लेष्माश्लिष्टस्य चेतस्तिक्त आसञ्ज-यितुं प्रभूयते । सर्वः किल स्वप्रार्थितमेव बहु-मन्यते, प्रार्थयति च तदेव यद्यस्य रुचिकर-मिष्टमनुकूलञ्च भवेत् । एकोऽहिफेनमात्मनो जीवितनिवन्धनमिति श्लाघत एनम् अपरो हि तदेव जुगुप्सते । अप्यहिफेनपरोमालवीयो ह्यहिफेनमात्रामन्तरा मुहूर्तमपि स्वां प्रकृतिम-वस्थापयितुं शक्यते कैश्चित्, अपरोपाहि-फेनप्रदानतः स्वस्थो विधातुम् । एकश्चाहिफे-नेन जीवति, अपरश्चैतेनैव वियोज्यते प्राणै-रपि । किंच स एवाहिफेन एकमेवजनं समय-भेदेनोपकरोत्यपकरोति च । अन्नमेव प्राणा अस्माकम्, परं तदेव प्रकृतिविपरीतमुप-युक्तं विषं भवति, प्राणहरं विषञ्च कदा-चित् पीयूषतामेति, अत एवोक्तं चिकित्सि-तस्थाने महर्षिणा चरकेण

"प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून्। विषं प्राणहरं तच्च युक्तियुक्तं रसायनम्" इति

इत्थमाह सुश्रुतोऽपि सूत्रस्थाने—

"न किञ्चिद्द्रव्यमेकान्तेन हितमहितं वास्तीति केचिदाचार्या ब्रुवते" इति ।

तस्मान्नहि केऽपि पदार्था एकान्तेन हिता अहिता वा, अपि तु मानवानां प्रकृतिवैष-म्येन पदार्थानामपि गुणवैषम्यमित्यनुमिनुमः । नहि तावत्समानपरिणाहः कञ्चुकः सर्वैः परिधातुं शक्यते । नह्येकविध एव धर्मः सर्वेषां भवितुं शक्यः । तत्कथं निखिलाना-

ऽनेकविधस्यैव धर्मस्य व्यवस्थापने वयं व्यग्रा इति न विद्मः ।

जगदिदं मानवानां समरभूमिः, अत्र चात्मनो रक्षायैबहुभिः प्रबलतमैः शत्रुभिर्योद्धव्यं मानवैः, ये हि दृप्ताः शात्रवो मानवानां मूलमुच्छेत्तुमनिशं प्रयतन्ते, एष मनुष्यः स्वीयैर्मित्रैः श्रेयसे प्रेर्यमाणो, द्विषद्भिश्च व्यसने निपातयितुमभिलष्यमाणो नावधारयत्यात्मनो हितमहितं वा । शत्रवः किल मूषिकाणां विडाला इव मानवानामवसादायावसरं प्रतीक्षमाणास्तिष्ठन्ति । अवसरे चोपलब्धे त्वरितमेवैतान् हस्तपञ्जरसंयमितान् विदधति, सशिरःपातं सपादोपग्रहमनुनीयमानाअपि न दयन्त एतेषु, एते हि सहजाः शत्रवः सततमुपपीडयन्ति निखिलान् जनान् । त्रिधा हि प्रवृत्तिरेतेषां, केषाञ्चिदध्यात्मरूपेण केषाञ्चिदधिदैवरूपेण, केषाञ्चिच्चाधिभूतरूपेण । कैश्चिच्छरीरम्, कैश्चिदिन्द्रियाणि, कैश्चिच्च मन उपताप्यते, अत एवैषां त्रिविधदुःखत्वेन व्यपदेशः । एभिस्त्रिविधैर्दुःखैरभिभूयमानानवलोक्य जनान् परमकारुणिको भगवान् कपिलो महर्षिस्तद्दुःखापनोदनौपयिकमुपायं निर्दिशन् व्याजहार "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" त्रिविधस्य अध्यात्माधिदैवाधिभूतरूपस्य दुःखस्य व्याधेरत्यन्तनिवृत्तिरेकान्तेनात्यय एव परमपुरुषार्थ इति । एभिरेव व्याप्तमिदं जगत्, न तादृशः कोऽपि जनो न वा तादृशी कापि नगरी, न वा तादृशं किमपि स्थानं यत्र नोच्छृङ्खलं विलसितमेतेन । अकुतोभयैरेतैन अकिञ्चना धनिका दुर्बला बलिनश्च सर्व एव खिलीक्रियन्ते । दुःखं ह्यनभिप्रेतमिन्द्रियाणामिति दूरत एव बिभेति जन एतस्मात् । नहि कोऽपि सचेतनो दुःखं कामयते, सुखं वा परिहरति । एषां त्रिविधदुःखानामपनुत्तय एव वेदान्तदर्शनं मीमांसादर्शनं स्मृतिशास्त्रञ्च प्रवृत्तानि यथायथम् ।

निखिलान्येवास्माकमार्यशास्त्राणि चिकित्साशास्त्रमिति प्रतीमः, चिकित्सया हि रोगाः प्रतिक्रियन्ते, दोषसमुद्भूतो विकारात्मको रोगः । नहि मानसिका दोषाः प्रसिद्धचिकित्साशास्त्रेणापनेतुं शक्याः । अपनोद्यन्ते ते कर्मानुष्ठानेन, तस्मात् कर्मानुष्ठानव्यवस्थापनपरं शास्त्रं चिकित्साशास्त्रं मानसिकानां रोगाणाम्, एवमन्यदपि यथायथं विज्ञेयम् ।

स्वभावः किलैष जन्तूनां यदेते कुतोऽपि भीता विपक्षतोऽपि प्रबलतरं साहायकं गवेषयन्ति । आध्यात्मिकेनाधिदैविकेन शत्रुणाभीता धर्मं देवांश्च शरणीकुर्वन्ति । अनुतिष्ठन्ति धर्मं, वरं प्राणान् क्रीडामृणालिकामिव सुखेन परिजहति, न पुनर्धर्मम् । नैतस्य निदर्शनमस्माकं [illegible] नेदीयः । [illegible] धेयस्य श्रीमतो महाराणाप्रतापसिंहस्य चरितं स्वर्णाक्षरैरङ्कितं नन्वद्यापिमण्डयत्येव धर्मप्राणानामार्याणां हृदयसद्म । नन्वद्यापि कीर्तिरवशाम्यत्येव दिगन्तानेतस्य । अपि किं शिवराजविक्रमविलसितं नास्माभिरद्याप्येतो पुण्यश्लोककीर्तनमिवाजस्रम् । नाद्यापि विस्मृतः

स ब्राह्मणयुवा, यः सुखमुत्ससर्जात्मनः प्राणान्, न धर्मम्। देवाश्चास्माभिरिज्यन्ते, पूज्यन्ते, ते हि देवाः प्रसन्ना इष्टैर्भोगैरस्मान् योजयन्ति, अपनयन्ति चास्माकं विघ्नान्, सम्पादयन्ति च सततं श्रेयः। देवभयेन नकेऽपि श्रेयःपथात् प्रमाद्यन्ति, नाप्युच्छास्त्रितं चेष्टन्ते, सर्व एवानुतिष्ठन्ति वैदिकं विधिम्, सर्व एव च पालयन्ति धर्मशास्त्रवचनानि, सर्व एव गुरुषु श्रद्दधते, नकेऽप्यसम्यं कर्मातन्वन्ति, नचानार्यजनशुण्णां सरणिमनुसरन्ति। ये चावहेलयन्ति दैवमनुशासनम्, शिक्षयन्ति देवास्तान् दण्डयन्ति प्रबलतमेन दण्डेन। तदेतत्सर्वमभिसन्धाय व्याहृतं भगवता वासुदेवेन—

"इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः

परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इत्यादि।

आधि[illegible]नामाशङ्कानुनिरसनाय वयं समाजं प्रतिष्ठापयामः। समाजो नाम बहूनामेकोद्देश्यानां [illegible]नां चैकत्र संहतिः। तत्र चैकं समाजपतिमभिषिञ्चामः, तच्चार्थसाहाय्येन पोषयामः, तस्य चाज्ञामनुपालयामः त देवमिव परिचरामः। सोऽपि चास्माकमाधिभौतिकान् विघ्नान् निवारयति। लुण्टाकेभ्योऽस्मान् परित्राति, दण्डभयेनैव वयं न विपथमाश्रयामः, न परद्रव्यं परदारानभ्यमृशामः दण्डभयादपवादभयाद्वा न पापमाचरामः, न यथेच्छाचारितां प्रतिपद्यामः, समाज एव च रक्षति। मन्ये-यद्यत्र समाजो नास्थास्यत्सदा न केऽपि निरुपद्रवा अभविष्यन् जन्तवो नामेति।

कुसुमाकरभट्टः।

# अध्यापकः श्रीजगदीशचन्द्रः।

## पूर्वतोऽनुवृत्तः।

—:०:—

श्रीमता अध्यापकजगदीशचन्द्रमहोदयेन विहितानां केषाञ्चनाविष्काराणां संक्षिप्तः परिचयो निर्दिष्टः पूर्वम्। येन महाशयस्यास्य लोकोत्तरं वैदुष्यमनुपमा चानुसन्धानरीतिः परिचेतुं शक्या। निखिलरत्नप्रभवात् शीतगिरेरिव जगदीशचन्द्रात् प्रवृत्ता वैज्ञानिकानुसन्धानतरङ्गिणी न केवलमेकयैव दिशा प्रवहन्ती लोकान् पुनाना शिशिरयितुमुद्यता जनमनांसि, अपि तु सुरधुनीव परितः प्रवहन्ती सेयं विश्रुतोद्यमैर्वैज्ञानिकैरपि चकितचकितमभिनन्द्यमाना कस्मिन् वैज्ञानिकमहासागरे विश्रान्तिमेष्यतीति नाद्यापि निश्चीयते कैरपि।

इतः परं मार्गान्तरं प्रतिपन्नां वैज्ञानिकानुसन्धानतरङ्गिणीं परिचाययितुं प्रयस्यते।

अत्र द्विविधाः पदार्था विलोक्यन्ते, संज्ञाशून्या जडाः चेतनवन्तो जडाश्च। एषु बहुविधेषु विषयेषु सादृश्यसत्वेऽपि कश्चन भेदोऽस्तीति स्वीक्रियते सर्वैः। परं कः स भेद इति नाद्ययावज्जडविज्ञानेन निरूपितोऽभवदयमर्थः। यद्यपि रक्तप्रवाहः श्वासप्रश्वासयोर्गतिरन्नपरिपाकश्चेत्यदयः शरीरिधर्मा जडविज्ञानेन परीक्षितुं शक्याः, तथापि साकल्येन शरीरिधर्माणां निरूपणं जडविज्ञानेन भवितुमशक्यम्। रसायनविद्युत्तापगतिविज्ञानप्रभृतिभिः कतिचन शरीरिधर्मावि-

ज्ञातुं शक्या न साकल्येनेति विदितचरोऽयमर्थः प्रेक्षावताम्

अत्र हि विद्वांसो द्विविधं मतं प्रकाशयन्ति। एके वदन्ति-नहि जीविततत्वं जड़विज्ञानेन ज्ञातुंशक्यम्। नेदं शरीरं केवलं वैज्ञानिकप्रक्रियाभिरेव परिचाल्यते, अपि तु ता अपहायापरा कापि शक्तिरस्ति, यस्याः शक्तेर्जीवितशक्ति (Vital foree) पदेन भवति परिचयः। सा ह्यगोचरा जड़विज्ञानस्य। नेयं शक्तिर्जड़ेषु, अत एव ते पदार्था जड़ा इत्युच्यन्ते। एष एव प्रधानो भेदो जड़चेतनयोः।

अपरेत्वित्थं वदन्ति—न कापि जीवितशक्तिर्जड़पदार्थतो व्यतिरिच्यते। यद्यपि साम्प्रतं वैज्ञानिकैर्नहि निखिलाः शरीरिधर्माः ज्ञातुं पार्यन्ते, तथपि समुन्नतिमारूढे विज्ञाने तेऽपि ज्ञातुं शक्या अनायासत एव। तदा साम्प्रतिको जड़चेतनयोर्भेदस्तिरोधास्यति। नास्ति जड़चेतनयोः कोऽपि वास्तविकोभेदः। काले जीवविज्ञानमपि जड़विज्ञानेऽन्तर्भविष्यति

विदुषामेतन्मद्वयं निर्दिष्टम्। कदाचित् शब्दभेदादेव विवदमाना दृष्टा विद्वांसः। पूर्वनिर्दिष्टे मतद्वयेऽपि न विशेषोभेदः परिलक्ष्यते।

साम्प्रतं जड़ोपादानैर्नहि चेतनशरीरं निर्मातुं शक्यं केनापि वैज्ञानिकप्रवरेणापि। परं बहवो जीवोद्भवाः घृततैलशर्करादयः पदार्थाः येषां निर्माणं प्रायो जन्तुशरीरे उद्भिच्छशरीरे च भवति-साम्प्रतं तेऽपि पदार्थाः जड़ोपादानेभ्यो निर्मीयन्ते।

किञ्च पुरा केऽपि पण्डिता विश्वसन्ति स्म, अद्याप्यवैज्ञानिका विश्वसति यज्जड़ेभ्यः पदार्थेभ्यः कीटमशकादयः समुत्पद्यन्त इति। अत एव च जरायुजाण्डजस्वेदजभेदा विहिता जीवेषु। परं साम्प्रतं सिद्धान्तोऽयमामूलतः समुत्पाटितो नितान्तमनुभवति दुरवस्थाम्। जड़ेभ्यः पदार्थेभ्यो जीवा उत्पद्यन्त इति नात्र किञ्चत् प्रवलतमं प्रमाणमुपलभ्यते, जीवेभ्य एवोत्पद्यन्ते जीवाः। वीजादेव द्रुमा जीवाश्चोत्पद्यन्ते। अण्डजा एव प्राणिनो न स्वेदजा इत्येष एव साम्प्रतिकानां वैज्ञानिकानां प्रधानः सिद्धान्त इति।

दूरमास्तां जीवोत्पादनम्, यैरुपादानैर्जीव शरीरं निर्मीयते, तस्यापि निर्माणोपायं नोपदिशत्ययापि जड़विज्ञानम्। नाद्ययावत्केनापि वैज्ञानिकेन निर्मितं जीवशरीरं दृष्टं श्रुतं वा। यदा ते जीवशरीरनिर्माणे समर्था भविष्यन्ति, तदा व्यपगतो जड़चेतनयोर्भेद इत्यपि वक्तव्यम्, एतत्कृते महोत्सवोऽपि विधातव्यः।

जीवशरीरं जड़ोपादनैरेवनिर्मितं भवत्यथापि न तदस्माभिर्निर्मातुं शक्यम्, अपि तु प्रकृतिरेव तद्विदधाति। निसर्गतो जड़ोपादानैरेव शरीरं निर्मितं भवति। उद्भिज्जीवशरीरपदार्थानां विश्लेषणे जड़ा एव पदार्था उपलभ्यन्ते, न किंचित्पदार्थान्तरम्।

अपि मानवैः किञ्चिन्निर्मीयते? जीवशरीर मेते वैज्ञानिका निर्मातुं न शक्ताः किंजड़शरीराण्येतैर्निर्मीयन्ते? केषाञ्चिद्वैज्ञानिकपदार्थानां वैज्ञानिकप्रक्रियया संयोगे विहिते पदार्थो-

न्तरस्य भवति समुद्भवः'। परं ते पदार्था वैज्ञानिकैर्निर्मिताः ? तन्निर्माणपाटवं न मानवानां वैज्ञानिकानां वेतिप्रतीमः। मानवैर्वैज्ञानिकैर्वा केवलं पदार्थानां योजना एव विधीयते, पदार्थोत्पत्तिस्तु निसर्गतो भवति। मानवाः केवलं योजका एव, पदार्थोत्पत्तिमूलभूतां परिवृत्तिं प्रकृतिरेव घटयति।

जडोपादानैर्जलादयः पदार्था वैज्ञानिकैर्निर्मीयन्ते, पर तैरेवजडोपादानैर्न जीवशरीरमितीयमेवैतयोर्व्यवहितिः। अस्या व्यवहितेः कोऽर्थः, अस्माभिः पदार्था निर्मीयन्तेऽस्यैव वा कोऽर्थः ? न मानवा निर्मातारः, प्रकृतिरेव रचयति। प्राकृतेनैव धर्मेण पदार्थानां निर्माणकार्यं साध्यते। यथा जडपदार्थाः प्रकृतिनिर्मितास्तथा जीवशरीरादयोऽपि। अस्माभिर्विहिता योजनैवास्माकं निर्मितिः। जडपदार्थोद्भवौपयिका योजनास्माभिर्विधातुं शक्या, परं जीवशरीरोत्पत्तिक्षमयोजनायै सर्वथा प्रभवति प्रकृतिरेव। जडा एव पदार्था उपादानं जीवशरीरस्येति निश्चितमेव। परं तेषां योजनमस्माकमविदितम्, अतएवाद्यापि मानवा असमर्था जीवशरीरोत्पादने। प्रकृतिप्रयोगशालायां जीवशरीरं जडशरीरमुभयमपि निर्मितं भवति। तेषामुपादानपदार्थानां योगविशेषेणोभयोरुत्पत्तिर्भवति। तन्मात्रानिर्द्धारणं हि प्रकृतिरेव विजानाति। जड़देहनिर्माणक्षमं योजनपाटवं वैज्ञानिकैरधिगतम् परं जीव शरीरनिर्माणौपयिकं पाटवं नाद्यापि सुमपलब्धमित्यत एवात्र वैज्ञानिका अज्ञा असमर्थाश्च।

भगवत्याः प्रकृतिदेव्या आराधनाभिः कदाचिन् मानवा अपि जीवशरीरनिर्मणक्षमं योजनं विज्ञातुं पारयेयुः तदैतेऽपि जीव शरीरनिर्माणक्षमा भविष्यन्तीति सम्भाव्यते। किंत्र यदि योजनज्ञानं न भविष्यति, तर्हि जीवशरीरनिर्माणं मानवानां कृते दुःसाध्यमेवेति मन्तव्यम्। अत्र चेदं कारणम्भवितुमर्हति यत् साम्प्रतं प्रकृतिस्तादृशीमवस्थामधिगता, यतो जीवितशक्तिसहाय्यमन्तरा जीवशरीरं निर्मातुं न शक्यते। अतः साम्प्रतं जड़शक्त्या जड़ोपादानैश्च जीवशरीरोत्पत्तिर्भवितुमशक्येति वा कल्पनीयम्।

मानवा केवलं पदार्थान् योजयन्ति, निर्माणकार्यं हि प्रकृत्यधीनमिति शक्यते साम्प्रतमयं सिद्धान्तो व्यवस्थापयितुम्। एकस्य पदार्थस्य योजनायां मानवाः समर्था अपरस्य योजनायामसमर्था इति हेतोर्महानस्ति जड़जीवयोर्भेद इति सिद्धान्तव्यवस्थापनं नातिरुचिकरमिव प्रतिभाति वैज्ञानिकानाम्।

जीवितशक्तिनामकः कश्चनपदार्थोऽस्ति न वेति नायमर्थोऽत्र विविच्यते। जड़विज्ञान परिचिताभिः शक्तिभिरतिरिक्ताः शक्तयो भवितुं नार्हन्तीति वैज्ञानिका वक्तुं नेहन्ते रासायनिकक्रियाभिरेव सकलंकार्यजातं सिध्यतीत्यपि न तेषां मतम्। वैज्ञानिकाः प्रतिदिनं नवनवांशक्तिं परिचिन्वन्ति, एकस्या एव

शक्तेर्नवनवं रूपं द्रष्टुं प्रभवन्ति । अतो जीवितशक्तिनामिका कापि शक्तिः काले प्रादुर्भविष्यतीति हेतोः कावा हानिर्वैज्ञानिकानाम् । परं सा शक्तिरपि प्राकृतिकी, नानिर्वचनीया ऽयतीतप्राकृतिकनियमेति निश्चिनुमः ।

जड़जीवयोरेत एव भेदा प्रायः सम्भवन्ति ।

(१) जीव शरीरे यदापरा कापि शक्तिर्विदधाति किञ्चित् कार्यं, तदा तत्र कापि प्रतिक्रिया समुत्पद्यते । कीलकनोदनेन भवति मांसपेशीषु सङ्कोचः, यदा नेत्रस्नायुतन्त्रीः केनापि प्रवलेनालोकतरङ्गेनाहता भवन्ति, तदा मस्तिष्कयन्त्रं सहैव हस्तपादादिपेशिभिर्विचलितं भवति । कदाचिदाघातप्राप्तिसमकालमेव प्रतिक्रिया भवति कदाचिच्च कालान्तरे । अद्य कयापि वाह्यशक्त्या स्नायुयन्त्रमाहतं, स आघातस्तत्रैव स्नायुयन्त्रे लीनः; परं स एवाघातो बहुसमयानन्तरं फलरूपेणात्मनं प्रकाशयति । अत एव जीवशरीरं जड़पदार्थाभिभवत आत्मानं परित्रातुं क्षमते । अयं हि प्रतिक्रियाभिलाषो जड़ेष्वपि दृश्यते । परमस्ति द्वयोर्महान् भेदः । भेदोऽयं सर्वैरेवप्रत्यक्षीक्रियते ।

हर्वर्टस्पेन्सरमहोदयेनाप्येतदेव लक्षणं विहितं जीवशरीरस्य । वाह्याभ्यन्तरक्रिययोरेकीकरणप्रयास एव जीवितमित्युच्यते । विविधा वाह्यशक्तयः सदा जीवशरीरमभिभवितुमिच्छन्ति, जीवशरीमपि सङ्कोचविकाशरूपैर्विविधैरुपायैस्तत आत्मानं परित्रातुं प्रयतते । अयं प्रयत्न एव जीवनम् ।

(२) जीवशरीरं आत्मपालनयोग्यतेत्यपरोऽयं विशेषो जड़ेभ्यः । जड़ाः पदार्था हि प्रस्तुतैर्वाह्यपदार्थैः सङ्गता वर्द्धन्ते, यथा शर्करा खण्डम् मेघाभ्र । परं जीवशरीरमपूर्णानेवपदार्थानादायात्मपोषणं कुर्वन्ति । यथा वृक्षपशुपक्षिमानवादयः ।

(३) जीवशरीरं द्विधा बहुधा वात्मानं विभज्यापराणि जीवशरीराणि निर्मातुं प्रभवति । एकस्माज्जीवशरीरादुत्पन्नान्यपराणि जीवशरीराणि तद्धर्मवन्ति भवन्ति ।

एत एव त्रयः प्रधाना धर्मा जीवशरीरस्य । जन्ममृत्युजराव्याधिप्रभृतयो जीवस्य प्रधाना धर्मा नवेति नाद्यापि निश्चितम् । पितृपितामहादिभ्यः पूर्वपूरुषेभ्यः पृथग्जीवितारम्भ एव जन्मइत्युच्यते, तस्यैव जीवितस्यावसान मृत्युरिति । नैसर्गिकाघातापाकरणमेव जीवितलक्षणमितिस्पेन्सरमतानुगास्तस्य नैसर्गिकाघातस्यापाकरणाभाव एव मृत्युरित्यङ्गीकुर्वन्ति । निखिलानामेवोच्चप्राणिनां भवति समये जीवितावसानम् । तदा जीवा वाह्यशक्तीनामाक्रमणं निवारयितुमशक्ता इत्यनुभवन्ति ते मृत्युयातनाम् । साम्प्रतं न निखिलाः प्राणिनो मरणधर्मवन्त इति वक्तुं शक्यते, यत उव्जमान (Wbismann) प्रभृतिभिर्वैज्ञानिकैर्निकृष्टतमानां जीवानां न निश्चितो मृत्युरिति प्रमाणीकृतम् । प्रायशस्तेऽमरा इति वक्तव्यम् । इदं हि जीवितनिधमतत्वम् । साम्प्रतं हि निरूपणीयो व्याधिः । जीवा नैसर्गिकेणाघातेनात्मनं परित्रातुं प्रयतन्ते । तत्र

च यदा साफल्यमासादयन्त्येते, तदा सा सुस्थावस्था इत्युच्यते । यदा हि नैसर्गिकमाघातमपाकर्तुमशक्ता भवन्ति जीवाः, सा जीवानां व्याध्यवस्थाभिहिता भवति । स्वास्थ्येऽनुकूलानि वस्तूनि व्याधौ प्रातिकूल्यमासादयन्ति । जीवाः सुस्थावस्थायां यथा नैसर्गिकानाघातान् प्रतिकर्तुं पारयन्ति न तथा व्याध्यवस्थायाम् । इत्थं व्याधिरपि जीवशरीरस्य प्रथमे लक्षणेऽन्तर्भवति ।

किंच शरीरपोषणं द्वितीये लक्षणेवंशवृद्धिश्च तृतीये लक्षणेऽन्तर्भवतीति वयं निश्चिनुमः, परं साम्प्रतिका वैज्ञानिकास्तु द्वयमप्येकस्मिन्नेव लक्षणेऽन्तर्भावयन्ति । उभावपि जीवस्याभ्यन्तरावस्थेति वदन्ति जीवतत्त्वज्ञाः। प्राकृतजीवेषु आत्मपोषणवंशवृद्ध्योर्न शक्यते भेदोनिर्धारयितुम् । निखिलेषु जीवशरीरेषु कश्चनैकः कोषो निर्मितो भवति । ते चाहारेण पुष्टिं वृद्धिञ्चासादयन्ति जीवाः । नियतां वृद्धिमासाद्य जीवा रूपान्तरे परिणमन्ति । एकस्मादेव कोषान्निर्मितोऽपरो जीवशरीरोऽन्यं जीवमुत्पादयन्ति । तरुणः पिता पुत्रमुत्पादयति, दृश्यते इयं प्रणाली निखिलेषु जीवेषु । वृक्षा अपि तरुणाः शाखारूपे परिणमन्ति । ताः शाखा अपि पृथक् प्ररोपिता अन्यस्मिन् वृक्षरूपे परिणमन्ति । इत्थं पोषणवर्द्धनयोर्नतात्विकोऽस्ति भेदः । तस्मादिदं लक्षणद्वयमेव विशेषयति जीवशरीरं जड़शरीरेभ्यः ।

अस्मादेव भेदद्वयाज्जड़शरीरं जीवशरीराद्व्यवच्छिद्यते, परं साम्प्रतमध्यापकजगदीशचन्द्रमहोदयेनाविष्कृतेन पथा एको भेदो विलयमुपगन्तुमुपक्रान्तइव दृश्यते ।

बाह्याघातापाकरणशक्तिर्जीवशरीरस्य प्रत्यङ्गमभिव्याप्य तिष्ठति । कस्मिन्नपि मांसपेशीखण्डे स्नायुतन्त्रिखण्डे वा प्राप्ताघाते चैतत्प्रत्यक्षीकर्तुं शक्यते निखिलैः । जीवशास्त्रेषु च बहुविशदीकृतोऽयमर्थो दृश्यते । तत एव चात्र कानिचिदुद्ध्रियन्ते ।

(१) एको मांसपेशीखण्डो यदा शक्तयन्त्रेणाहतो भवति तदैव स सङ्कोचमेति । आघातानन्तरं सङ्कोचउत्पद्यते, ततश्च स प्रकृतिमेति ।

(२) अयमाघाताज्जायमानः सङ्कोचोऽपि न सीमानमतिक्रामति ।

(३) प्रबलेनाघातेन प्रबलः सङ्कोच उत्पद्यते। मन्दाघातेन च कंचिदेव सङ्कोचमञ्चति । इत्थं शनैः शनैः सततञ्च यदा समाहतो भवति, तदा प्रत्याघातं वर्द्धते सङ्कोचोयत्किञ्चित् । परं प्रथमाघाते भवति यावान् सङ्कोचो, नतावान् द्वितोयादिषु सङ्कोचेषु। द्वितीयापेक्षया तृतीये, तृतीयापेक्षया च चतुर्थे क्रमशोऽपक्षीयते सङ्कोचवेगः । इत्थं सीमानमासाद्य संकोचवृद्धिरप्यवरुध्यते ।

प्रथमं विहित आघाते यावान् सङ्कोचो भवति नतावान् द्वितीयाघात इति पूर्वमेवोक्तम्, अयं हि कोऽपि गुणो जीवशरीरस्य एतेन भवति महाँल्लाभः । प्रस्थपरिमितो भारोऽपरेण प्रस्थपरिमितेन भारेण गुरुतामेति, परं द्रोणपरिमितो भारः प्रस्थ-

परिमितेन भरेण न गुरुतामासादयति। किंच तमःपिहिते गृहे प्रकाशते दीपोऽपि परं सूर्यस्य प्रखरै रश्मिभिः सोऽपि तिरस्कृतो भवति। इदमेव निदानमाघातप्रतिक्रियानियमयो(fechner's law, Weher's law)र्जीवशास्त्र निर्द्दिष्टयोः।

(४) प्रतिपलं विहित आघाते सङ्कोचोऽपि प्रतिपलं वर्द्धत एव। इत्थं क्रमेण मांसपेशी धनुराकारेण परिणमति।

(५) प्रवलेनाघातेन संकोचोऽपि प्रवल उत्पद्यते, पुनः सा मांसपेशी न त्वरितं सहजं रूपमासादयति। तदा वाणविद्धस्य मृगस्योपमानतां वहति सेयं मांसपेशी, आहतापि तदा न किञ्चिच्चिचलति। तदा सा श्रान्ता क्लान्तेव वावतिष्ठते। क्रमेण चेयं क्लान्तिरपनुन्ना भवति। श्रमातिशयाद्क्लान्तिर्हि जीवस्य प्रधानो धर्मः श्रमश्च विश्रामोपचारैरपनुद्यत इत्यपि ननु प्रत्यक्षमेव निखिलानाम्।

---

## अमरसिंहः कविः।

गीर्वाणवाणीविदुषां चिरात् परिचितोऽयममरसिंहाभिधः कविः। अयं हि नामलिङ्गानुशासननामकमभिधानं विरच्य कियदुपकृतवान् संस्कृतज्ञानिति न मया विलख्य बोधनीया गीर्वाणवाणीप्रणयिनः। विदुषां विविदिषूणाञ्च बहूपकरोति नामलिङ्गानुशासनमिति निःशङ्कमभिधीयते।

यद्यपि सन्ति विश्वमेदिन्यादयो बहुशः कोशग्रन्थाः, तथापि केवलं नामानुशासनभूतानां केवललिङ्गानुशासनभूतानां कोशानां तादृशोपयोगाजनकत्वात्। नामलिङ्गोभयानुशासनभूतस्यामरकोशस्यैव सर्वोपकारकत्वात्सर्वश्रेष्ठत्वं वरीवर्ति। तादृशग्रन्थरत्नस्य निर्माता अमरसिंहः किं जातीयः कदा कतमं जनपदं मण्डयाञ्चकारेति निर्णयः प्रायः कर्तुमशक्यः। तथापि विदुषां विनोदाय स्वबुद्ध्यनुसारेण किञ्चिन्निबध्यते। देवसामान्यनामान्युक्त्वा देवविशेषनामारम्भे बुद्धनाम्नां लेखनेन "अमरसिंहो हि पापीयान् सर्वं भाष्यमचूचुरत्" इति प्राचीनानां भङ्ग्योक्त्या चास्य बौद्धत्व सुस्पष्टमेव। केचित्तु विक्रमसमकालीनोयमिति वदन्ति प्रमाणत्वेनोदाहरन्ति च "धन्वन्तरिक्षपणकाऽमरसिंहशङ्कुर्वेतालभट्टघटखर्परकालिदासाः॥ ख्यातो वराहमिहरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य।

अयं श्लोको ज्योतिर्विदाभरणग्रन्थे दृश्यते, परन्त्वयं ग्रन्थो विक्रमसमकालीनमहाकवि कालिदासाद्भिन्नेन ततो बहुकालादनन्तरं जातेन कालिदासनाम्ना केनापि दैवज्ञेन रचित इति तद्ग्रन्थस्थाऽयनांशाऽऽनयनश्लोकतोऽवसीयते। तस्मात्स्वसमये प्रसिद्धानां प्राचीनविदुषां नामावलिरेवोट्टङ्किता दैवज्ञमहाशयेन ननु विक्रमसभ्यानामिति सुधियां सिद्धान्तः। तेनायं प्रमाणकोटीं नाधिरोहति। अन्ये तु "इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः॥ पाणिन्यमरजैनेन्द्रा जयन्त्यष्टौ च शाब्दिकाः?" एतच्छ्लोकानुसारेण पाणिनिममन्तमद्रोरन्तरालभवमेनं ब्रुवते। परन्त्वयमपि श्लोको

न क्रमबोधकः पाणिनिसमकालिकचन्द्राचार्यस्य पाणिनितः प्रसलेखनात्। अस्तीदानीं नेपालदेशे कान्तिर्नामराजधानी यां जनाः काष्ठमण्डप (काठमाडू)इति वदन्ति। तस्याः पूर्वतो बाङ्मतीमणिभद्रनद्योः सङ्गमादारभ्य बूढानीलकण्ठ (बुढानीलकण्ठ) पर्यन्तं विशालनगरीतिप्रसिद्धं पञ्चयोजनायतं विक्रमद्वादशशतकात्पूर्वमासीत्। त्रयोदशशतकारम्भे प्रायः समग्रमेव पत्तनमग्निना कवलितमिति प्राचीनवंशावलितो ज्ञायते। इदानीं शस्यक्षेत्राणि सन्ति तत्र, खननेन लब्धानि मन्दिरशकलानि अन्यानि च बहून्युपकरणानि सत्यमेवावगमयन्ति वृत्तान्तम्। तामेव पुरीं जन्मना भूषितवानमरसिंहमहोदयः। एतेन द्वादशशतकात्पूर्वमेव जन्म समायाति महाकवेः। इदानीमपि काष्ठमंडपात्पूर्वतः क्रोशपादमिते इन्दुमती (टुकुचा)आख्यायाः क्षुद्रनद्याः प्राक्कूले "श्रीनीलसरस्वत्याः" प्रासादो वर्तते। इमामेव सरस्वतीमाराध्य, अमरसिंहो विद्वद्वरेण्यः संजातः। श्रीनीलसरस्वत्या अग्रत एकस्मिन् शिलाखंडे लिखिता तेनैव रचिता स्तुतिर्वर्तते। परं कालवशादिदानीं वर्णानां लोपेन एकोपि श्लोकः समीचीनतया न पठ्यते। तथाप्यवशिष्टांशादनुमीयते। तस्या अनतिदूरेऽस्ति बौद्धानां विहारः (वहाल)अस्मिन्नेव विहारे कालं यापितवानमरसिंह इति श्रूयते किंवदन्ती। यदा श्रुतिमार्गोद्धरणतत्पराः श्रीशङ्कराचार्याः श्रीभगवतः पशुपतेर्दर्शनार्थमिहाऽऽगच्छँस्तदा प्रासादस्य द्वारं नियन्त्रितमासीत्। तदवलोक्योच्चैःश्लोकमिममपठञ्छङ्कराचार्याः- "ऐश्वर्यमदमत्तोसि मामनादृत्य वर्तसे॥ उपस्थितेषु बौद्धेषु मदधीना तवस्थितिः" ततः पशुपतीश्वराः स्वयमेव दर्शनं दत्तवन्तः॥ ततः पशुपतेः सकाशात्प्रत्यावर्त्य शङ्करार्याः अमरसिंहेन सह वादं कृतवन्तः॥ अमरसिंहो हि जवनिकाभ्यन्तरस्थः शङ्करपादास्तु बहिःस्थिताः। सप्तदिनपर्यन्तं वादः समभूव। परं नैकस्यापि पराजयः संवृत्तः। किंकरोत्यमरसिंह इतिपर्यालोचयितुं जवनिकाऽपसारिता तदा घटे आवहिता वाणी वदति स तु निभृतं स्थितः। तद्दृष्ट्वा किमिति पापे? मां त्यक्त्वाबौद्धापसदं स्वीकरोषीति शङ्करैरुक्ता वाणी तिरोहिता। तदनन्तरं शङ्कराचार्यैर्जितः स ह्रिया प्रायोपवेशमकरोत्। तदनन्तरं सर्वेषामतीवोपकारकममरकोशं विहाय तेन निर्मिताः सर्वे बौद्धमतग्रन्था अग्निसात्कृताः। इत्येषा किंवदन्ती सर्वेषां नेपालस्थितानां बौद्धभिक्षूणां मुखादेकयै रीत्या निर्गच्छति। यद्यपि संक्षेपशङ्करदिग्विजयकाव्ये शङ्करपादानां नेपालागमनं न दृश्यते। तथापि प्राचीननेपालनृपालवंशावलिवर्णनाधारेण पशुपतिनाथस्थितानां प्राचीनशिलापत्रताम्रपत्रादीनां लेखेन च शङ्करपादानामत्रागमनं निश्चितमेव। तेन शङ्करपादानां समये पञ्चाशदधिकाष्टशतविक्रमवर्षेऽमरसिंहो भुवमलंचकार। किंचिल्लेखाधारेण किञ्चित्किंवदन्त्यनुसारेण लिखितोयं वृत्तान्तः सतां तोषावहो भूयादिति।

लोहन्युपाढू-राधानाथशर्मा ( नेपाल )

# काशिकराजकीयसंस्कृतप्रधान विद्यालयपरीक्षाफलम्।

## ज्योतिषाचार्य पदवी।

राधाकृष्ण त्रिपाठी, संस्कृत कालेज बनारस।

## उपध्याय पदवी ज्योतिषे—

लालबिहारी पाण्डेय, संस्कृत कालेज बनारस।

### व्याकरणे

सत्यनारायण, सनातनधर्म पाठशाला, जौनपुर

प्रसिद्धनारायण मिश्र संस्कृत कालेज बनारस

रामशास्त्री चकोण्ड संस्कृत कालेज बनारस

ढुण्ढिराज पटवर्धन ,, ,,

महादेव पाण्डेय भगवत विद्यालय अयोध्या।

### न्याये

रमाकान्त झा संस्कृत कालेज बनारस।

### साहित्ये

गनपतिदेव संस्कृत कालेज बनारस।

कालिदास पराजुली संस्कृत कालेज बनारस।

## उत्तम परीक्षा खण्डशः

व्याकरणे, षष्ठः खण्डः

केशवप्रसाद मिश्र संस्कृत कालेज बनारस।

जयकिशोर झा ,, ,,

राजनीति पाण्डेय ,, ,,

सीताराम त्रिपठी ,, ,,

महावीर झा ,, ,,

रामदेव द्विवेदी ,, ,,

पूर्णचन्द्र ओझा ,, ,,

सरयूप्रसाद त्रिपाठी ,, ,,

शुभकरण मिश्र ,, ,,

सङ्कर्षण पाठक ,, ,,

श्रीधर मिश्र ,, ,,

सहदेव त्रिपाठी ,, ,,

रामयश त्रिपाठी ,, ,,

विद्यानाथ पाण्डेय ,, ,,

रामचन्द्र पाण्डेय बनारस।

मूलचन्द्र पालोवाल काल्लूमल पाठशाला कानपुर।

## पञ्चमः खण्डः

गोपाल जोशी बनारस।

रामचरण द्विवेदी संस्कृत कालेज बनारस।

श्रीकान्तपति त्रिपाठी ,, ,,

भीखाजी घाणेकर बनारस।

गोविन्ददास वैष्णव राजगोपाल पाठशाला अयोध्या।

रामप्रकत शुक्ल ,,

रघुराज पाण्डेय ,, ,,

सीताराम गौड़ बड़ा अस्थान अयोध्या।

चन्द्रमणि मिश्र मेरट।

## चतुर्थः खण्डः

पुरुषोत्तमदत्त त्रिपाठी संस्कृत कालेज
बनारस।

वंशीधर शुक्ल ,, ,,
दुर्गाप्रसाद भट्ट ,, ,,
सूर्यवली त्रिपाठी भगवत् विद्यालय
अयोध्या।

शिवरतन द्विवेदी ,, ,,
कृष्णनाथ द्विवेदी ,, ,,
यज्ञप्रसाद पाण्डेय गोंडा।

## तृतीयः खण्डः

देवनारायण त्रिपाठी संस्कृत कालेज
बनारस।

महावीर मिश्र ,, ,,
गिरिशचन्द्र अवस्थी ,, ,,
लक्ष्मीप्रसाद त्रिपाठी ,, ,,
शिवशङ्कर सुकुल ,, ,,
कैलाशपति मिश्र ,, ,,
दुर्गाशङ्कर रावत ,, ,,
गङ्गाप्रसाद मिश्र ,, ,,
रघुनन्दन पाण्डेय ,, ,,
ललिताप्रसाद ,, ,,
गौरीदत्त त्रिपाठी बड़ा स्थान अयोध्या।
पुरुषोत्तम ओझा कुण्डलोद।
द्वारकाप्रसाद गौड़ नवलगढ़।
नत्थूराम गौड़ कालूमल पाठशाला कानपुर।

## द्वितीयः खण्डः

गोपाल नेने संस्कृत पाठशाला बनारस।
मुकुन्द ,, ,,
सीताराम सेन्दे ,, ,,
माधवभण्डारी ,, ,,
ब्रह्मदत्त शुक्ल बनारस।
विश्वम्भरनाथ गोड़ कालूमल पाठशाला
कानपुर।
हारानचन्द्र चक्रवर्ती दरभङ्गा पाठशाला
बनारस।

## प्रथमः खण्डः

शिवप्रसाद द्विवेदी संस्कृत कालेज
बनारस।

गिरिजाशङ्कर तिवारी ,, ,,
रेवाशङ्कर पुरोहित ,, ,,
लक्ष्मीश्वर पाण्डेय ,, ,,
शक्तिनाथ झा ,, ,,
श्रीनिवास उपाध्याय ,, ,,
वेणीमाधव त्रिपाठी ,, ,,
राजनारायन द्विवेदी ,, ,,
हरिवंश मिश्र ,, ,,
केशव उपाध्याय ,, ,,
कृष्णानन्द मिश्र ,, ,,
राधाकृष्ण जोशी ,, ,,
जगन्नरायण पाण्डेय ,, ,,
सुरतिलाल झा राजगोपल पाठशाला
अयोध्या

सुमिरन मिश्र ,, ,,
रामेश्वरदत्त पाण्डेय ,, ,,
सरयूनारायण शुक्ल ,, ,,
हरदेवराम त्रिपाठी ,, ,,

हरिनाराण मिश्र सरयूबाग़ अयोध्या

दीनानाथ शर्मा कामेश्वर पाठशाला हाथरस।

शङ्करदत्त मिश्र खत्रीपाठशाला उनाव।

आदित्यप्रसाद पाण्डेय भौवापुर, गोरखपुर।

सदानन्द द्विवेदी वृन्दावन।

रामप्रसाद मिश्र ज्वालापुर सहारनपुर।

रामाचरण शर्मा ,, ,,

यमुनाप्रसाद पाण्डेय संस्कृत पाठशाला बनारस।

कृष्णदत्त मिश्र बुलानाला बनारस।

रामदास मिश्र दरभंगा पाठशाला बनारस।

साहित्ये

## षष्ठः खण्डः

हरिहर द्विवेदी द्वारकेश पाठशाला मथुरा।

## पञ्चमः खण्डः

जगन्नाथ हौसिङ्ग संस्कृतकालेज बनारस।

नृसिंहदेव भट्टाचार्य ,, ,,

ताराचरण भट्टाचार्य ,, ,,

बालाप्रसाद मिश्र कान्यकुब्ज पाठशाला कनौज।

रामसुन्दर पाण्डेय दुर्गात्रिपाठी पाठशाला बनारस।

ऋषिदेव पाण्डेय लालघाट बनारस।

विशुद्धानन्द दीक्षित ,, ,,

काशिदत्त वाजपेयी ,, ,,

प्रेमवल्लभ पन्त ऋषिकुल हरद्वार।

महेश्वरप्रसाद मिश्र हरदोई।

नन्दलाल सारस्वत रायबरेली।

## चतुर्थः खण्डः

गङ्गाधर शास्त्री भरद्वाज संस्कृत कालेज बनारस।

नारायण खिस्ते ,, ,,

यमुनादत्त उपाध्याय ,, ,,

हरिनन्दन भट्ट ,, ,,

कृष्णाचार्य कविलिङ्ग ,, ,,

रामवदन पाण्डेय ,, ,,

करुणाशङ्कर उपाध्याय ,, ,,

सूर्यनारायण मिश्र ,, ,,

चिन्तामणि भट्टाचार्य ,, ,,

## तृतीयः खण्डः

कृष्णप्रसाद मानवल्ली पाठशाला बनारस।

बहोरेदत्त मिश्र सुधर्म पाठशाला कोमत।

रामेश्वरप्रसाद द्विवेदी लखनऊ।

## द्वितीयः खण्डः

सिद्धेश्वर चतुर्वेदी द्वारकेश पाठशाला मथुरा।

ब्रह्मदत्त काव्यतीर्थ विक्टोरिया कालेज लश्कर।

रामसहाय मिश्र ,, ,,

महावीरप्रसाद त्रिपाठी जौनपुर।

भगवानदास गौड़ चदौसी मुरादाबाद।

## प्रथमः खण्डः

हरिशङ्करप्रसाद पाण्डेय संस्कृत कालेज बनारस।

मुकुन्दखिस्ते संस्कृत कालेज बनारस
रामपदार्थ शुक्ल ,, ,,
मुकुन्दराज पन्त ,, ,,
धर्मदेव पाण्डेय ,, ,,
विक्रमादित्य त्रिपाठी ,, ,,
दुण्ढिराज टोप्ले ,, ,,
सोमेश्वरदत्त पाण्डेय यतीन्द्र विद्यालय इलाहाबाद।
वासुदेव गोस्वामी काल्मल पाठशाला कानपुर।
रामशङ्कर द्विवेदी तपेश्वरी पाठशाला कानपुर।
शङ्करलाल गौड़ जवाहिर संस्कृत पाठशाला मुरादाबाद।
किशोरीदत्त गौड़ नारायण संस्कृत पाठशाला कानपुर।
शालग्राम त्रिवेदी गुरुकुल बरालासी मुजफ्फर नगर।
बालकराम उपाध्याय विक्टोरिया कालेज लश्कर।
भालचन्द्र जैन ,, ,,
हरि द्विवेदी बुलानाला बनारस।
रामकृष्ण त्रिपाठी लालघाट बनारस।
मुकुन्दहरि द्विवेदी जयगंज अलीगढ़।
चन्द्रशेखर उपाध्याय बरैली।
सेवाराम शङ्खधार बदाऊं।
गोपालदत्त पन्त बनारस।
गेविन्दपावटे भिन्ड ग्वालियर।
राधाकृष्ण अग्निहोत्री मैनपुरी।
रामभरोसे दीक्षित सीतापुर।
गदाधरप्रसाद ब्रह्मभाट कानपुर।

ज्योतिषे

## षष्ठः खण्डः

लोकनाथ त्रिपाठी संस्कृत कालेज बनारस।

## तृतीयः खण्डः

कुशेशेश्वर ठाकुर संस्कृत कालेज बनारस।
बलदेव मिश्र ,, ,,
दुर्गाचरन शुक्ल कानपुर।
चन्द्रशेखर झा बनारस।

## द्वितीयः खण्डः

पद्माकर द्विवेदी संस्कृत कालेज बनारस।
कनकलाल झा ,, ,,
अजबलाल झा ,, ,,
वामदेव झा ,, ,,
नीलकण्ठ द्विवेदी इटावा।
बालगोविन्द शुक्ल श्रीराम पाठशाल चटाइ महल कानपुर।
हेमनाथ भट्ट बनारस।

## प्रथमः खण्डः

पूर्णाचन्द्र त्रिपाठी संस्कृत कालेज बनारस
ललितप्रसाद मिश्र ,, ,,
पीताम्बर झा ,, ,,
गङ्गाधर मिश्र ,, ,,
राजपति शुक्ल ,, ,,
जगन्नाथ द्विवेदी ,, ,,
नकछेदा झा भागवत् विद्यालय अयोध्या।

भालचन्द्र पुरान्दरे गोकुलदास तेजपाल संस्कृत पाठशाला बम्बे।
रामनिहोरा द्विवेदी ब्रह्मनाल बनारस।
व्रजराज द्विवेदी प्राइवेट युगलकिशोर रुइया संस्कृत पाठशाला नगवा बनारस।

न्याये

## षष्ठः खण्डः

गनपति ज्योतिषी प्राइवेट श्रीरङ्गलक्ष्मी विद्यालय वृन्दावन।

## पञ्चमः खण्डः

देवीकान्त ठाकुर संस्कृत कालेज बनारस।
गुलाब झा प्राइवेट बनारस।
मुकुन्दलाल शर्मा संस्कृत कालेज बनारस।
जगदीश शास्त्री ,, ,,
शिवदत्त गौड़ संस्कृत कालेज बनारस।
श्रीराम शास्त्री भण्डारी ,, ,,

## तृतीयः खण्डः

राधाकान्त झा संस्कृत कालेज बनारस।
बालबोध मिश्र ,, ,,
सीताराम शास्त्री ,, ,,

## द्वितीयः खण्डः

याजना पुरुषानन्द शर्मा संस्कृत कालेज बनारस
ईश्वरलाल जोशी ,, ,,
वामदेव शास्त्री प्राइवेट ब्रह्मविद्या पाठशाला टेढीनीम बनारस।

## प्रथमः खण्डः

सिनहेश्वर मिश्र संस्कृत कालेज बनारस।
गजाधरलाल गुप्त ,, ,,

सांख्ययोगे:

## तृयीयः खण्डः

विष्णुप्रसाद भण्डारी संस्कृत कालेज बनारस।

## द्वतीयः खण्डः

महेश्वर वार्षिकर संस्कृत कालेज बनारस।
रामजना पाण्डेय ,, ,,
सीताराम त्रिपाठी ,, ,,
शिवदत्त गौड़ प्राइवेट मुरादाबाद।

## प्रथमः खण्डः

रामेश्वरदेव गुप्त संस्कृत कालेज बनारस।

## धर्मशास्त्रे।

### तृतीयः खण्डः।

दामोदर कोक मठारकर विक्टोरिया कालेज लश्कर।

### द्वितीयः खण्डः।

सदाशिव मुसलगाँवकर विक्टोरिया कालेज लश्कर।

## सम्पूर्ण मध्यमा।

### व्याकरणे।

वामदेव उपाध्याय संस्कृत कालेज बनारस।
गोपीनाथ द्रवीड़ ,, ,, ,,

उदयाविनवर्मा महाविद्यालय ज्वालापुर सहारनपुर।
कोमलनाथ अधिकारी राजकीय संस्कृत पाठशाला नेपाल।
नरायनदत्त त्रिपाठी श्रीचन्द्र पाठशाला बुलानाला बनारस।
पशुपति भण्डारी राजकीय संस्कृत पाठशाला नेपाल।
त्रिभुवननाथ मिश्र बड़ा स्थान वैष्णवधर्म प्रवर्द्धिनी संस्कृत पाठशाला अयोध्या।
लक्ष्मीदत्त शुक्ल उकनी पाठशाला जौनपुर।
चैतन्यदेव गौड लालचन्द जोखीराम संस्कृत पाठशाला कानपुर।
मुखराम उपाध्याय श्रीचन्द्र पाठशाला बुलानाला बनारस।
भगवती प्रसाद त्रिपाठी उकनी पाठशाला जौनपुर।
परमानन्द स्वामी श्रीचन्द्र पाठशाला बुलानाला बनारस।
उमेशदत्त चतुर्वेदी संस्कृत कालेज बनारस।
काशीनाथ त्रिपाठी ” ”
विश्वनाथ अत्रे महाविद्यालय ज्वालापुर सहारनपुर।
वटुकनाथ मिश्र आत्मानन्द उदासीन पाठशाला बनारस।
धर्मनरायण पाठक उकनी पाठशाला जौनपुर।
लक्ष्मीकान्त झा…संस्कृत कालेज बनारस।

शिवसहाय मिश्र संस्कृत वैदिक पाठशाला मुजफ़्फ़र नगर।
रुद्रदत्त भारद्वाज-महाविद्यालय ज्वालपुर सहारनपुर।
दयानिधि अधिकारी…राजकीय संस्कृत पाठशाला नेपाल।
रंजीत पांडेय…दुर्गा त्रिपाठी पाठशाला बनारस।
मोरेश्वर नरायण सिधोरे…संस्कृत कालेज बनारस।
इन्द्रप्रसाद भण्डारी राजकीय संस्कृत पाठशाला नेपाल।
सत्यनारायण त्रिपाठी ई० सी० हाई स्कूल संस्कृत पाठशाला खुर्जा।
विष्णु पांशिकर गोकुलदास तेजपाल संस्कृत पाठशाला बम्बे।
जीवनहरि घिमीरे राजकीय संस्कृत पाठशाला नेपाल।
श्रीनरायण मिश्र खत्री संस्कृत पाठशाला उन्नाव।
भास्करानन्द स्वामी श्रीचन्द्र पाठशाला बुलानाला बनारस।
बद्रीप्रसाद मिश्र ब्राह्मण वैदिक विद्यालय सरजूबाग अयोध्या।
राजाराम त्रिपाठी श्रीचन्द्र पाठशाला बुलानाला बनारस।
त्रिपुरारी त्रिपाठी अमरचन्द संस्कृत पाठशाला फ़ैज़ाबाद।
वासुदेव पांडेय मीरघाट संस्कृत पाठशाला बनारस।

रामचन्द्र सिधोरे संस्कृत कालेज बनारस।
विठलराम जोशी " " "
गनेशदत्त ओझा सनातनधर्म पाठशाला जौनपुर।
सोहम्प्रपन्न जुबिली संस्कृत पाठशाला बलिया।
हरिशङ्कर श्रोत्रिय महाविद्यालय ज्वालपुर सहारनपुर।
स्वामी शिवानन्द सरस्वती संस्कृत पाठशाला भानवापार गोरखपुर।
लक्ष्मीनरायण दीक्षित विक्टोरिया कालेज लश्कर।
सन्मुखराम स्मार्त संस्कृत कालेज बनारस।
ईशानन्द वर्मा गुरुकुल वारालसी मुजफ़्फ़रपुर।
बलदेव चतुर्वेदी भगवत विद्यालय अयोध्या।

न्याये।

अम्बिका प्रसाद उपाध्याय संस्कृत कालेज बनारस।
राजेश्वर द्रवीड़ संस्कृत कालेज बनारस।
वामाचरन भट्टाचार्य " "
वाचस्पति मिश्र " "
परमेश्वरीदत्त गौड़ " "
हरिपद भट्टाचार्य प्राइवेट बनारस।
रामचन्द्र भट्ट संस्कृत कालेज बनारस।
निखदानन्द शर्मा " "
शिवनारायण गौड़ प्राईवेट धर्मकूप बनारस।
गिरिशप्रसाद शुक्ल संस्कृत कालेज बनारस

ज्योतिषे

मुरलीधर ठाकुर संस्कृत कालेज बनारस।
सीताराम झा " "
छोटेलाल झा " "
लक्ष्मीदत्त उपाध्याय " "
मल्लिनाथ पुरोहित " "
रमानन्द मिश्र " "
श्रीपतिप्रसाद पाण्डेय साङ्गवेद विद्यालय बनारस।
श्रीशरतचन्द्र पंडा प्राइवेट बनारस।
विश्वेश्वर झा संस्कृत कालेज बनारस।

मध्यमा

व्याकरणे

## चतुर्थः खण्डः

चतुर्थीलाल खंडेलवाल राजकीय संस्कृत पाठशाला खेत्री।
लक्ष्मीनारायण गौड़ " "
सङ्करमल दाधीच " "
कृष्णवल्लभ गोस्वामी भारत हितकारणी संस्कृत पाठशाला आगरा।
रामचन्द्र वैष्णव श्रीरामानुज संस्कृत पाठशाला वृन्दावन।
गङ्गाधर सनाढ्य वैदिक धर्मवर्द्धिनी पाठशाला अहरान आगरा।
रामप्रसाद महाराजाहाई स्कूल करौली राजपूताना।
नागेश्वरप्रसाद मिश्र किशोरीलाल बेणीमाधव संस्कृत पाठशाला प्रयाग।
सूर्यमणि त्रिपाठी " "

नन्दकिशोर गौड़ सालिग्राम जगन्नाथ मिश्र विद्यालय फरुक्खाबाद।
नरायणदत्त त्रिपाठी सरयूपारिण ब्राह्मण संस्कृत पाठशाला प्रयाग।
बेणीमाधव द्विवेदी सालिग्राम जगन्नाथ मिश्र विद्यालय फरुक्खाबाद।
रामनिवास त्रिवेदी कल्लुमल पाठशाला कानपुर।
भरतप्रसाद मिश्र रामाधीन रामचरण शुक्ल पाठशाला कानपुर।
रामसन्मुख मिश्र मारवाड़ी पञ्चायती पाठशाला कानपुर।
भगवतीप्रसाद मिश्र मनसाराम जयनरायण पाठशाला फरुक्खाबाद।
चन्द्रदत्त त्रिपाठी शिवप्रसाद संस्कृत पाठशाला पाद्री उन्नाव।
रघुबीरप्रसाद त्रिवेदी ,, ,,
गङ्गाचरण मिश्र ,, ,,
सनतकुमार गौड ई० सी० हाई स्कूल संस्कृत पाठशाला खुर्जा।
गोवर्धन द्विवेदी संस्कृत पाठशाला रुद्रपूर गोरखपूर।
रामनारायण उपाध्याय राजगोपाल पाठशाला अयोध्या।
कामताप्रसाद उपाध्याय ,, ,,
मधुसूदनदास वैष्णव बड़ा स्थान वैष्णव धर्मप्रर्धनी संस्कृत पाठशाला अयोध्या।
रमापति चतुर्वेदी ,, ,,
बासुदेव द्विवेदी भगवत विद्यालय अयोध्या
महाबल द्विवेदी भगवत्त विद्यालय अयोध्या।
रामसमुख मिश्र ब्राह्मण वैदिक विद्यालय सरयूबाग़ अयोध्या।
हनुमानप्रसाद त्रिपाठी ,, ,,
भगवतीप्रसाद पांडेय ,, ,,
त्रिवेणीप्रसाद उपाध्याय ,, ,,
रामरङ्ग मिश्र ल्याल कालेजियेट संस्कृत पाठशाला बलरामपूर।
महादेवप्रसाद मिश्र तुलसी विद्यालय गोंडा
गौरीशङ्कर त्रिपाठी ,, ,,
रामदयालु शर्मा ललित हरि संस्कृत कालेज पीलीभीत।
हरिहर मिश्र ,, ,,
रामचन्द्र सन्दा विष्णु विद्यालय गंगापुर-बरेली।
रामस्वरूप डुगरपुरिया वेदोज्जीवनी संस्कृत पाठशाला बरेली।
केशवदेव शर्मा श्रेष्ठीनारायणदास संस्कृत पाठशाला मथुरा।
राधावल्लभ शर्मा राजकीय संस्कृत पाठशाला भरतपूर।
नरहरी वाजपेयी ब्रेंच स्कूल कोटा।
कन्हैयालाल शर्मा ,,
मनीराम मिश्र भास्कर विद्यालय भगौला गुडगाँव।
जयनारायण शुक्ल जवाहिरलाल संस्कृत पाठशाला मुरादाबाद।
पीताम्बरदत्त ज्योतिर्विद ,, ,,

हरिराम मिश्र ऋषिकुल शाखा पाठशाला ज्वालपुर सहारनपुर।

आशाराम पंडा ,, ,,

चन्द्रशेखर मिश्र व्याकरण तत्वप्राश्निक पाठशाला हरदोई।

लोकनाथ पांडेय कनिङ्ग कालेज लखनउ।

गङ्गाप्रसाद दीक्षित ,, ,,

विश्वनाथ गनेशअगाशे विक्टोरिया कालेज लश्कर।

वालकृष्ण प्राजपे गवर्नमेंन्ट हाई स्कूल सीतापूर।

बाबूदेव चतुर्वेदी प्राइवेट शामपुर विजनौर।

देवनन्द मिश्र जुबिली संस्कृत पाठशाला बलिया।

कल्पनाथ पांडेय सनातन धर्म पाठशाला जौनपुर।

विश्वेश्वरदत्त पाठक प्राइवेट गोन्डा।

गणेशदत्त पांडेय साङ्गवेद विद्यालय नगवा बनारस।

अङ्गनलाल तोगुनायत श्रीचन्द्र पाठशाला बुलानाला बनारस।

दुःखभंजन त्रिपाठी जुगलकिशोर रुया संस्कृत पाठशाला बनारस।

विद्याविलास शुक्ल संस्कृत कालेज बनारस।

कृष्णपौराणीक ,, ,,

श्रीकान्त झा ,, ,,

क्षेत्रमाधव भट्टाचार्य ,, ,,

देवराज चतुर्वेदी ,, ,,

नान्हूराम गौड़ ,, ,,

धर्मधारी पांडेय ,, ,,

## तृतीयः खण्डः

हरिराम गौड़ वेदवेदाङ्ग संस्कृत पाठशाला [illegible]।

धरणी[illegible]

[illegible]।

ओंकार[illegible]

शाला [illegible]।

हरिहरलाल मिश्र विचार सभा संस्कृत पाठशाला इटावा।

महादेवप्रसाद मिश्र धर्म ज्ञानोपदेश पाठशाला प्रयाग।

जयनारायण त्रिपाठी ,, ,,

द्वीपनरायण उपाध्याय ,, ,,

शेषमणि मिश्र किशोरीलाल वेणीमाधव पाठशाला प्रयाग।

जगदीशप्रसाद पांडेय ,, ,,

रामनरेश उपाध्याय ,, ,,

कमलाकान्त मिश्र सरयूपारीण ब्राह्मण संस्कृत पाठशाला प्रयाग।

श्यामविहारी त्रिपाठी संस्कृत पाठशाला सरसा प्रयाग।

ताराशङ्कर मिश्र त्रिवेणी संस्कृत पाठशाला प्रयाग।

भगवती प्रसाद त्रिपाठी वैलिय संस्कृत पाठशाला रायबरेली।

शिवनरायण शुक्ल कल्लुमल पाठशाला कानपुर।

उमादत्त गौड़ लालचन्द जोखीराम संस्कृत पाठशाला कानपुर।

मन्त्रीदत्त शुक्ल संस्कृत पाठशाला कानपुर।
राजनारायण पांडेय पञ्चपुखरा पाठशाला फ़रुखाबाद।
देवीचरण त्रिपाठी कान्यकुब्ज संस्कृत पाठशाला क़न्नौज।
नागेश्वर ज्योतिषी माधव कालेज उज्जैन।
टीकाराम द्विवेदी सद्विद्यालय वाजीगंज हरदोई।
चुन्नीलाज गौड़ ई० सी० हाईस्कूल संस्कृत पाठशाला खुर्जा।
रामचन्द्र पालीवाल ,, ,,
शिवचरण गौड़ ,, ,,
राधेश्याम शर्मा ,, ,,
मिहरीचन्द्र आचार्य संस्कृत वैदिक पाठशाला मुज़फ़्फ़रनगर।
कुंजबिहारी मिश्र बिल्वेश्वर संस्कृत विद्यालय सदर मेरठ।
ब्रजभूषण ओझा विश्वनाथ पाठशाला गोरखपुर।
लक्ष्मीनरायण शुक्ल संस्कृत पाठशाला भौवापुर गोरखपुर।
सुरती नरायण मणि संस्कृत पाठशाला डुमरी गोरखपुर।
श्रीकान्त शुक्ल संस्कृत पाठशाला रुद्रपुर गोरखपुर।
मूर्तिनरायण चतुर्वेदी ,, ,,
राधेलाल द्विवेदी हिन्दु संस्कृत पाठशाला सौगोर सेन्ट्रल प्राविन्सेज।

भगवानदास द्विवेदी हाई स्कूल दतिया बुंदेलखण्ड।
बालादत्त अग्निहोत्री राजगोपाल पाठशाला अयोध्या।
रामस्वरूप मिश्र ,, ,,
रवीशदत्त शुक्ल ,, ,,
शिवशरण मिश्र ,, ,,
अद्याप्रसाद चतुर्वेदी ,, ,,
अम्बिका प्रसाद मिश्र ,, ,,
राजा रामप्रसाद मिश्र ,, ,,
चन्द्रदीप मिश्र ,, ,,
धनेश्वर पाण्डेय बड़ा स्थान वैष्णवधर्म प्रवर्द्धिनी संस्कृत पाठशाला अयोध्या।
विन्ध्येश्वरी पाण्डेय ,, ,,
राधवर पाठक ,, ,,
राघव पांडेय भगवत पाठशाला अयोध्या।
जगदम्बा प्रशाद अग्निहोत्री ब्राह्मण वैदिक विद्यालय सरयूबाग अयोध्या।
देवदत्त मिश्र ,, ,,
चन्द्रमौलिप्रसाद उपाध्याय ,,
सत्यदेव त्रिपाठी तुलसी विद्यालय गोण्डा।
रामतीर्थ पाण्डेय ,, ,,
रामानुग्रह पांडेय ,, ,,
रामलोचन शुक्ल ,, ,,
धर्मनरायण शर्मा संस्कृत पाठशाला रौजोला बदायूं।
मुरलीधर जोशी ललितहरि संस्कृत कालेज पीलीभीत।
भद्रेश्वरदत्त शुक्ल ,, ,,

ज्वालाप्रसाद शुक्ल संस्कृत कालेज पीलीभीत।
बद्रीदत्त मिश्र ,, ,,
जानकी प्रसाद मिश्र विष्णुविद्यालय गङ्गापुर बरैली।
आशाराम मिश्र श्रीरङ्ग लक्ष्मी विद्यालय वृन्दावन।
हरदत्त पांडेय ,, ,,
देवकीनन्दन गौड़ ,, ,,
वागीशदत्त गौड़ ,, ,,
गिरिजा प्रसाद सनाढ्य जवाहिरलाल संस्कृत पाठशाला मुरादाबाद।
ज्वालादत्त बाजपेयी सनातन धर्म सभा संस्कृत विद्यालय लखीमपुर।
गङ्गाधर शुक्ल केदारनाथ संस्कृत पाठशाला मौराबन ऊनाव।
राजाराम दीक्षित डायमन्ड जुविली ऐङ्गलो पाठशाला सीतापुर।
रामगुलाम द्विवेदी शिव विद्यालय मुहमदपुर बाराबंकी।
जयजयराम द्विवेदी विक्टोरिया कालेज लश्कर।
दुर्गाप्रसाद दीक्षित महाराणा हाईस्कूल धौलपुर।
रामचन्द्र मिश्र देवीप्रसादिया संस्कृत पाठशाला बलिया।
कमलकान्त मिश्र उकनी पाठशाला जौनपुर।

रामलोचन मिश्र गवर्नमेन्ट हाईस्कूल मिर्जापुर।
रामदत्त पांडेय सांगवेद विद्यालय नगवां बनारस।
जोखैदत्त उपाध्याय बालपाठशाला भदैनी बनारस।
हरिनरायण जोशी ,, ,,
सरयूप्रसाद मिश्र ,, ,,
रघुराजप्रसाद द्विवेदी युगलकिशोर रुइया संस्कृत पाठशाला बनारस।
रामकिशोर पाण्डेय ,, ,,
गोविन्दराय गुप्त स्यादवद पाठशाला बनारस।
साधुशरण त्रिपाठी दुर्गाप्रसाद त्रिपाठी पाठशाला बनारस।
निरंजन द्विवेदी ,, ,,
रामस्वरूप त्रिपाठी ,, ,,
गङ्गाधर उपासनी संस्कृत कालेज बनारस।
मेघश्याम परारकर ,, ,,
रामचन्द्र करमालकर ,, ,,
गोपीनाथ पेराढ़कर ,, ,,
नागेश्वरदत्त पाण्डेय ,, ,,
अमरनाथ सारस्वत ,, ,,
नरसिंहनाथ त्रिपाठी ,, ,,
हरिहर पाठक ,, ,,
विश्वनाथ शुक्ल ,, ,,

## द्वितीयः खण्डः

मथुरादत्त गौड़ वेदवेदाङ्ग सस्कृत पाठ-
शाला झुन्डलोद् नवलगढ़ सीकर।

श्रीनरायण गौड़ राजकीय संस्कृत पाठ-
शाला खेतड़ी।

रघुनाथ गौड़ राजकीय संस्कृत पाठशाला
खेभी।

विष्णु बहोरा प्राइवेट जोधपुर।

श्रीराम मिश्र धर्मसमाज पाठशाला
अलीगढ़।

जगदत्त पाण्डेय प्राइवेट नैनीताल।

कन्हैयालाल शर्मा विद्या धर्मवर्द्धिनी पाठ
शाला आगरा।

उमराव द्विवेदी भारत हितकारिणी संस्कृत
पाठशाला आगरा।

शिवनरायण द्विवेदी विचार सभा संस्कृत
पाठशाला इटावा।

भोलानाथ शर्मा वैदिक धर्म वर्द्धिनी पाठ-
शाला अहरान आगरा।

ललितप्रसाद दीक्षित ऐंङ्गलो वर्नैक्यूलर
स्कूल टुन्डला।

शिवदत्त मिश्र प्राईवेट सेना एटा।

देवीदत्त शुक्ल धर्म ज्ञानोपदेश पाठशाला
प्रयाग।

चण्डिकाप्रसाद त्रिपाठी ,, ,,

रामनाथ मिश्र किशोरीलाल वेणीमाधव
संस्कृत पाठशाला प्रयाग।

रामबहोर पाण्डेय श्रीनाथ पाठशाला
सरसा प्रयाग।

शिवमूर्ति मिश्र अजीत शोमवंशी हाई-
स्कूल प्रतापगढ़।

गणनाथ धर्माधिकारी त्रिवेणी संस्कृत
पाठशाला प्रयाग।

माधवभट्ट ,, ,,

रामचन्द्र भट्ट सालिग्राम जगन्नाथ मिश्र
विद्यालय फरुखाबाद।

कामदाप्रसाद मिश्र ,, ,,

रामनन्द मिश्र कल्लूमल पाठशाला
कानपुर।

लीलाधर सनाढ्य ,, ,,

आदिनरायण पाण्डेय लालचन्द जोखीराम
संस्कृत पाठशाला कानपुर।

गयाप्रसाद मिश्र ,, ,,

जगन्नाथ बाजपेयी ,, ,,

यमुनाप्रसाद मारवाड़ी पञ्चायती
संस्कृत पाठशाला कानपुर।

नागेश्वर पाठक रागी पाठशाला रावतपुर
कानपुर।

वासुदेव त्रिवेदी भास्कर शैवी पाठशाला
नारवार कानपुर।

शिवसागर प्रसाद त्रिपाठी ,, ,,

नरायण प्रसाद द्विवेदी वैदिक पाठशाला
कानपुर।

गङ्गावल्लभ पांडेय पञ्चपुखरा पाठशाला
फरुखाबाद।

मीठुलाल मिश्र मनसाराम जयनरायण-
संस्कृत पाठशाला फरुखाबाद।

गङ्गादयालु त्रिपाठी खत्री संस्कृत पाठशाला
ऊनाव।

द्वारिकाप्रसाद दीक्षित शिवप्रसाद संस्कृत पाठशाला पाड़ो ऊनाव।
मधुसूदनलाल दीक्षित सदविद्यालय बाजीगंज हरदोई।
वेणीमाधव शुक्ल प्राईवेट हरवासपुर कानपुर।
बैजनाथ त्रिपाठो प्राईवेट ओराई।
रामचन्द्र गौड़ ई० सी० हाई स्कूल संस्कृत पाठशाला खुर्जा।
मोहनलाल पालीवाल ,, ,,
छेदालाल गौड़ ,, ,,
सुजनदत्त शर्मा ,, ,,
शिवचरण गौड़ विश्वेश्वर संस्कृत विद्यालाय सदर मेरट।
बुधाराम गौड़ ,, ,,
सीताराम मिश्र ,, ,,
कुवेरदत्त शर्मा ,, ,,
राजदेव पांडेय विश्वनाथपुर पाठशाला गोरखपुर।
कालिकाप्रसाद द्विवेदी ,, ,,
सुखदेवराम त्रिपाठी ,, ,,
बुद्धिसागर उपाध्याय संस्कृत पाठशाला भौंवापुर गोरखपुर।
रामकृष्ण त्रिपाठी संस्कृत पाठशाला रुद्रपुर गोरखपुर।
धर्मराज मिश्र सनातनधर्म वर्द्धिनी पाठशाला धानी गोरखपुर।
उमाप्रसाद त्रिपाठी ,, ,,
अयोध्या प्रसाद वाजपेयी सनातनधर्म संस्कृत पाठशाला हमीरपुर।

रामचरण मिश्र हाई स्कूल दतिया बुन्देलखण्ड।
शम्भुनाथ त्रिपाठी राजगोपाल पाठशाला अयोध्या।
गदाधर मिश्र ,, ,,
रघुवर प्रसाद शुक्ल ,, ,,
जयगोविन्द पांडेय राजगोपाल पाठशाला अयोध्या।
दुर्गादत्त चतुर्वेदी ,, ,,
विन्ध्याचल प्रसाद पाठक ,, ,,
विद्याधर पांडेय बड़ा स्थान वैष्णव धर्म प्रवर्द्धिनी संस्कृत पाठशाला अयोध्या।
सीतारामदास वैष्णव ,, ,,
राधाकृष्णाचार्य ओझा ,, ,,
जगन्नाथ पांडेय ,, ,,
महावीर प्रसाद त्रिपाठी ब्राह्मण वैदिक विद्यालय सरयूबाग अयोध्या।
महादेव प्रसाद मिश्र ,, ,,
सरयूप्रसाद ओझा ,, ,,
ब्रजविहारी द्विवेदी ,, ,,
रामप्रताप द्विवेदी ,, ,,
चन्द्रिका प्रसाद त्रिपाठी शिकौठा पाठशाला बस्ती।
गङ्गाधर मिश्र ल्याल कालेजिएट संस्कृत पाठशाला बलरामपुर।
बीजलेश्वरी प्रसाद द्विवेदी संस्कृत पाठशाला भगवतीगंज गोन्डा।
रामछत्र द्विवेदी तुलसी विद्यालय गोंडा।
गङ्गाचरण शुक्ल संस्कृत पाठशाला गोंडा।

चन्द्रशेखर शर्मा ललितहरि संस्कृत कालेज पीलीभीत ।
मोहनचन्द्र शर्मा ,, ,,
प्रमवल्लभ शर्मा ,, ,,
रामचन्द्रलाल कतीहा वेदीऽजीवनी संस्कृत पाठशाला बरैली ।
तुलाराम दीक्षित ,, ,,
जीवानन्द पाण्डेय ,, ,,
धनपाल शर्मा श्रीरङ्गलक्ष्मी विद्यालय वृन्दावन ।
सरयूप्रसाद दीक्षित प्यारेलाल संस्कृत पाठशाला वृन्दावन ।
हरेकृष्ण व्यास गवर्नमेन्ट हाईस्कूल संस्कृत पाठशाला मथुरा ।
भ्रमरलाल शर्मा विट्ठलनाथ पाठशाला कोटा ।
लक्ष्मण व्यास ,, ,,
गौरीशङ्कर मिश्र भास्कर विद्यालय भगौला गुरगाँव ।
गङ्गाप्रसाद शर्मा द्वारकेश संस्कृत पाठशाला मथुरा ।
पुरुषोत्तमदेव शर्मा शान्तिकुटीर संस्कृत पाठशाला आगरा ।
रामहरि द्विवेदी ज्ञानानन्द प्रवर्द्धिनी संस्कृत पाठशाला अलीगढ़ ।
रामचन्द्र ऋषिकुमार जवाहिरलाल संस्कृत पाठशाला मुरादाबाद ।
रामगोपाल उपाध्याय जवाहिरलाल संस्कृत पाठशाला मुरादाबाद ।
द्वारकाप्रसाद सनाढ्य ,, ,,

कैलाशचन्द गुप्त संस्कृत पाठशाला मुरादाबाद ।
वासुदेव त्रिगुणात्मक विक्टोरिया स्मारक संस्कृत पाठशाला ठाकुरद्वारा मुरादाबाद ।
चन्द्रदत्त मिश्र भागीरथी पाठशाला कनखल सहारनपूर ।
रामसिंह वर्मा आर्य संस्कृत पाठशाला इस्लामनगर बदायूँ ।
कृपादेवी संस्कृत पाठशाला हल्दौर बिजनौर
मंगलदत्त चतुर्वेदी श्रीराम पाठशाला भन्डावर बिजनौर ।
गयाप्रसाद मिश्र सनातन धर्मसभा संस्कृत विद्यालय लखीमपुर ।
देवशरण चतुर्वेदी ,, ,,
रामावतार गौड डायमन्ड जुबिली ऐंग्लो संस्कृत पाठशाला सीतापुर ।
वंशीधर त्रिपाठी ,, ,,
मुरलीधर वाजपेयी ,, ,,
स्वामिदयालु शुक्ल जवाहिरसिंह पाठशाला कमलापुर सीतापुर ।
वृन्दाप्रसाद अवस्थी विद्यानिधि पाठशाला मल्लापुर सीतापुर ।
श्यामसुन्दर मिश्र कनीङ्ग कालेज लखनऊ
शम्भुदत्त शक्ल ,, ,,
गणपति परानजपे प्राइवेट सीतापुर ।
मुरलीधर त्रिवेदी विक्टोरिया कालेज लश्कर ।
मेधाकर चतुर्वेदी हिवेट संस्कृत पाठशाल टिहरी गढ़वाल ।

बैजनाथ शर्मा रघुनाथ कीर्ति पाठशाला देवप्रयाग गढ़वाल ।
रघुनाथ पाण्डेय प्राइवेट श्यामपुर विजनौर
गोविन्दप्रसाद तिवारी संस्कृत पाठशाला बान्दा ।
लक्ष्मी मिश्र जुवली संस्कृत पाठशाला बलिया ।
रामगोविन्द त्रिपाठी देवीप्रसाद पाठशाला बलिया ।
विन्ध्येश्वरी पांडेय ,, ,,
श्रीनिवासाचारी त्रिपाठी सनातनधर्म पाठशाला जौनपुर ।
आदित्यप्रसाद उपाध्याय सनातनधर्म पाठशाला आजमगढ़ ।
राजमणि मिश्र सनातनधर्म रक्षिणी पाठशाला व्रजराज कटरा मिर्जापुर ।
दुर्गाशरण पांडेय हितोपदेशीनी संस्कृत पाठशाला बदायूँ ।
चन्द्रशेखर पांडेय साङ्गवेद विद्यालय नगवा बनारस ।
रामसुख मिश्र सेठयुगलकिशोर रुईया संस्कृत पाठशाला बनारस ।
व्रजेन्द्र त्रिपाठी ,, ,,
हरिहरधर द्विवेदी ,, ,,
शिवप्रसाद मिश्र ,, ,,
भगवतीप्रसाद मिश्र ,, ,,
रामकिशोर पांडेय ,, ,,
सीताराम पाठक सनातनधर्म प्रवर्द्धिनी वैष्णव संस्कृत पाठशाला बनारस ।
भरत पांडेय ,, ,,
रामनयन मिश्र दुर्गा त्रिपाठी पाठशाला बनारस ।
वसिष्ठदत्त मिश्र बलदेवदास संस्कृत पाठशाला बनारस ।
हरिनरायण उपाध्याय अर्जुनराम सरयूमल संस्कृत पाठशाला बनारस ।
बलदेव ओझा मानवल्ली पाठशाला बनारस ।
रघुनाथ सहस्रबुद्धे ,, ,,
रघुवीरदत्त दीक्षित संस्कृत कालेज बनारस ।
चिन्तामणि वन्द्योपाध्याय ,, ,,
देवनायक उपाध्याय ,, ,,
त्रिभुवन उपाध्याय ,, ,,
रामचन्द्र त्रिपाठी संस्कृत कालेज बनारस ।
हरिहरनाथ मिश्र ,, ,,
श्रीलाल गुप्त ,, ,,
रामदत्त शङ्खधर ,, ,,

## प्रथमः खण्डः

हरिनरायण शर्मा वेद वेदाङ्ग पाठशाला डुन्डलोद नवलगढ़ सीकर ।
श्यामसुन्दर जोशी ,, ,,
वंशीधर शर्मा जोशी कन्हैयालाल रामदयाल संस्कृत पाठशाला गुरहा नवलगढ़ सीकर ।
गौरीदत्त गौड़ ,, ,,
रामकुमार त्रिगुनायत सनातनधर्म प्रकाशिनी संस्कृत पाठशाला व्यावर ।
श्रीदत्त मिश्र ,, ,,

रामगोपाल मिश्र कामेश्वर पाठशाला हाथरस।

दामोदरवल्लभ मिश्र धर्मसमाज पाठशाला अलीगढ़।

श्रीदत्त मिश्र ,, ,,

मखनलाल पांडेय जार्ज कारोनेशन स्कूल गभना।

मोतीलाल पुरोहित विचारसभा संस्कृत पाठशाला इटावा।

कुंजीलाल गुप्त ,, ,,

श्रीमन नरायण मिश्र सनातनधर्म वर्द्धिनी पाठशाला अलवर।

रामदत्त शर्मा वैदिकधर्म वर्द्धिनी पाठशाला अहरान आगरा।

गायत्रीप्रसाद मिश्र धर्मज्ञानोपदेश पाठशाला प्रयाग।

केदारनाथ द्विवेदी ,, ,,

गोपालदत्त मालवीय ,, ,,

ओंकारनाथ पांडेय किशोरीलाल वेणीमाधव संस्कृत पाठशाला प्रयाग।

सरयूनरायण पांडेय ,, ,,

प्रेमावती देवी प्राईवेट लुकरगंज प्रयाग।

यादराम सनाढ्य सालिग्राम जगन्नाथ मिश्र विद्यालय फरुखाबाद।

नन्दराम द्विवेदी ,, ,,

चुन्नीलाल द्विवेदी ,, ,,

शिवकान्त मिश्र काल्लुमल पाठशाला कानपुर।

रामनाथ पांडेय ,, ,,

खगेश्वरप्रसाद पांडेय रामधीन रामचरण शुक्ल पाठशाला कानपुर।

नन्दकुमार गौड़ लालचन्द जोखी राम संस्कृत पाठशाला कानपुर।

रामनरायण अग्निहोत्री बलदेव संस्कृत पाठशाला शिकोली कानपुर।

बद्रीप्रसाद ,, ,,

रामाधीन शुक्ल पञ्चपुखरा पाठशाला फरुखाबाद।

बालमुकुन्द अग्निहोत्री ,, ,,

रामेश्वर त्रिपाठी ,, ,,

विष्णुदत्त सनाढ्य ,, ,,

गणेशदत्त गौड़ ,, ,,

रामदत्त त्रिपाठी ,, ,,

नन्दराम पाठक ,, ,,

सूर्यप्रसाद पंचाली मनसाराम जैनरायण संस्कृत पाठशाला फरुखाबाद।

शम्भुदयाल त्रिवेदी नरायण संस्कृत पाठशाला फतेपुर।

रामचन्द्र शर्मा माधव कालेज उज्जैन।

दामोदर झा खत्री संस्कृत पाठशाला उनाव।

रामचरण दीक्षित शिवप्रसाद संस्कृत पाठशाला पाड़ी उनाव।

नन्दकिशोर वाजपेयी सरस्वती संस्कृत पाठशाला सनिगांवां कानपुर।

ब्रह्मानन्द गौड़ ई० सी० हाई स्कूल संस्कृत पाठशाला खुर्जा।

बिहारीलाल गौड़ ,, ,,

रामदत्त गौड़ हाई स्कूल संस्कृत पाठशाला खुर्जा ।
लीलाधर त्रिवेदी ,, ,,
देवदत्त गौड़ ,, ,,
रामदत्त गौड़ ,, ,,
हरिवंश शुक्ल संस्कृत वैदिक पाठशाला मुजफरनगर ।
रामनरायण गौड़ बिल्वेश्वर संस्कृत विद्यालय सदर मेरठ ।
टपोराज गौड़ निर्भय संस्कृत पाठशाला बरौत मेरठ ।
रामस्वरूप गौड़ ,, ,,
मदन गौड़ विद्याधर्म संजीवनी संस्कृत पाठशाला देउरिया गोरखपुर ।
ब्रह्मदेव शुक्ल विश्वनाथपुर पाठशाला गोरखपुर ।
रामरेखा द्विवेदी ,, ,,
भगतप्रसाद पांडेय ,, ,,
ऋषिराम ओझा ,, ,,
रामदीहल मिश्र संस्कृत पाठशाला डुमरी गोरखपुर ।
राजपति पाण्डेय ,, ,,
वासुदेव पांडेय संस्कृत पाठशाला रुद्रपुर
जगन्नाथ त्रिपाठी वैदिक संस्कृत पाठशाला सहगौर गोरखपुर ।
चन्द्रभान शुक्ल वैदिक संस्कृत पाठशाला सहगौरा गोरखपुर ।
देवशरण द्विवेदी सनातनधर्म वर्द्धिनी संस्कृत पाठशाला धानी गोरखपुर ।
रामनरेश त्रिपाठी ,, ,,
गयाप्रसाद शर्मा सनातनधर्म संस्कृत पाठशाला महोबा हमीरपुर ।
वैद्यनाथ अवस्थी ,, ,,
भिखारीलाल शुक्ल ,, ,,
बनमाली पाण्डेय हाई स्कूल दतिया बुन्देलखण्ड ।
बलराम त्रिपाठी राजगोपाल पाठशाला अयोध्या ।
अवधविहारीदास वैष्णव ,, ,,
भवानीप्रसाद त्रिपाठी ,, ,,
गोविन्ददास वैष्णव ,, ,,
शिवप्रशाद पाठक ,, ,,
भगवानदत्त त्रिपाठी ,, ,,
राधिकानाथ मिश्र ,, ,,
महादेव मिश्र श्रीरामजानकी संस्कृत पाठशाला फैजाबाद ।
शीतलदास वैष्णव बड़ा स्थान वैष्णवधर्म प्रवर्द्धिनी संस्कृत पाठशाला अयोध्या ।
जगदीश त्रिपाठी ,, ,,
रामानुजाचार्य बड़ा स्थान वैष्णवधर्म प्रवर्द्धिनी संस्कृत पाठशाला अयोध्या ।
रामरत्नदास चतुर्वेदी ,, ,,
श्यामदास त्रिपाठी ,, ,,
अम्बिकाप्रसाद पाण्डेय अमरचन्द्र संस्कृत पाठशाला फैजाबाद ।
यदुनन्दन त्रिपाठी मिखुमल्ल पाठशाला राजमहल अयोध्या ।
जोखुराम पाठक ब्राह्मण वैदिक विद्यालय सरयूबाग अयोध्या ।

रमानन्द द्विवेदी वैदिक विद्यालय सरयू-
बाग अयोध्या।
रामसेवक द्विवेदी ,, ,,
मंगलप्रसाद ओझा ,, ,,
कमलाकान्त त्रिपाठी ,, ,,
रामहित पांडेय माधवनरायण उदासीन
धर्म पाठशाला रानोपाली अयोध्या।
चन्द्रशेखर मिश्र शिकौठा पाठशाला वस्ती।
बाबूराम पाठक ल्याल कालेजिएट संस्कृत
पाठशाला बलरामपुर।
रामसुन्दर प्रसाद मिश्र तुलसी विद्यालय
गोन्डा।
यमुनाप्रसाद उपाध्याय ,, ,,
महावीर शर्मा संस्कृत पाठशाला पारसपुर
गोन्डा।
मथुरादत्त जोशी ललितहरि संस्कृत
कालेज पीलीभीत।
देवदत्त शर्मा ,, ,,
ब्रजविहारीलाल शर्मा ,, ,,
मथुराप्रसाद त्रिपाठी विष्णु विद्यालय
गङ्गापुर बरैली।
गोविन्दप्रसाद शर्मा संस्कृत भवानी विद्या-
लय बरैली।
बिहारीलाल पाठक वेदोज्जीवनी संस्कृत
पाठशाला बरैली।
कन्हैयालाल त्रिपाठी ,, ,,
ज्योतिस्वरूप मिश्र ,, ,,
असर्फीलाल दीक्षित ,, ,,
मणीराम मिश्र ,, ,,

हरदयाल चतुर्वेदी संस्कृत पाठशाला
चुंगी शाहजहाँपुर।
शंकटासहाय शुक्ल ,, ,,
दुर्गाप्रसाद शर्मा श्रीरङ्गलक्ष्मी विद्यलय
वृन्दावन।
जगन्नाथ मिश्र ,, ,,
भगतदास मिश्र ,, ,,
गोपीनाथ मिश्र ,, ,,
यमुनाप्रसाद मिश्र हरिभट्ट विद्यावर्द्धिनी
संस्कृत पाठशाला वृन्दावन।
राधागोविन्द मिश्र ,, ,,
ललितचरण मिश्र ,, ,,
दामोदर शुक्ल हरिभट विद्यावर्द्धिनी
संस्कृत पाठशाला वृन्दावन।
रवीदत्त पौराणिक अग्रवाला पाठशाला
मथुरा।
इच्छाचन्द्र शुक्ल श्रेष्ठी नरायणदास पाठ
शाला मथुरा।
कन्हैयालाल मिश्र ,, ,,
मन्नीलाल मिश्र मूलचन्द पाठशाला गुड़
की मन्डी भरतपुर।
दुर्गाप्रसाद गौड़ ,, ,,
शङ्करलाल शर्मा ब्रैञ्च स्कूल कोटा।
बैजनाथ पाण्डेय ,, ,,
सुन्दरलाल व्यास भास्कर विद्यालय
बघौला गुरगाँव।
नन्दकिशोर मिश्र द्वारकेशसंस्कृत पाठशाला
मथुरा।

नरवरलाल चतुर्वेदी विक्टोरिया हाई स्कूल देवास ।
त्र्यम्बक पोल अन्नपूर्णा पाठशाला मथुरा ।
घनश्याम पाण्डेय जवाहिरलाल संस्कृत पाठशाला मुरादाबाद ।
रामस्वरूप सारस्वत ,, ,,
गोविन्द शङ्कर शुक्ल ,, ,,
पुरुषोत्तम उपाध्याय ,, ,,
हरिप्रसाद सनाढ्य ,, ,,
लीलाधर गौड़ प्राईवेट मुरादाबाद ।
मदनमोहन उपाध्याय भागिरथी पाठशाला कनखल सहारनपुर ।
माधवानन्द मिश्र ,, ,,
अमरनाथ मिश्र ,, ,,
रुद्रदत्त द्विवेदी ,, ,,
गङ्गादत्त वहगुना ,, ,,
आशाराम शुक्ल ,, ,,
छविनाथ सनाढ्य ,, ,,
मञ्जु पाठक संस्कृत देवनागरी पाठशाला मानवा मेरट ।
बहालदत्त शर्मा ,, ,,
क्षेमचन्द्र शर्मा ,, ,,
रामनन्द शर्मा आर्य संस्कृत पाठशाला इसलामनगर बदायूं ।
बुधदेव शर्मा ,, ,,
सिधागोपाल गुप्त संस्कृत पाठशाला हल्दौर बिजनौर ।
लालगोपाल शर्मा मुरादाबाद ।
ब्रजेन्द्र चन्द्र शर्मा अलवर ।

कालीचरण वाजपेयी सनातनधर्म संस्कृत विद्यालय लखीमपुर ।
सत्यनरायण द्विवेदी धर्म वर्द्धिनी पाठशाला चिपरिया लखनऊ ।
यागेश्वर द्विवेदी ,, ,,
शिवदुलारे त्रिपाठी केदारनाथ संस्कृत पाठशाला मौरावन ऊनाव ।
राजाराम पाण्डेय सम्राज्ञी संस्कृत पाठशाला वहराइच ।
त्रिवेणीदत्त त्रिपाठी ,, ,,
सेवकराम त्रिपठी वेदव्यास पाठशाला नैमीषारण्य सीतापुर ।
भगवतदत्त वाजपेयी जवाहिरसिंह पाठशाला कमलापुर ।
सालगराम अग्निहोत्री ,, सीतापुर । ,,
कालीचरण त्रिवेदी विक्टोरिया मेमोरियल संस्कृत पाठशाला सीतापुर ।
कृष्णदत्त अवस्थी ,, ,,
ईश्वरदीन शुक्ल शिव विद्यालय मोहम्मदपुर बारावंकी ।
शिवनन्द शाकद्विपी ,, ,,
भगवती प्रसाद शर्मा ,, ,,
दामोदर जोशी विक्टोरिया कालेज लश्कर ।
बालकृष्ण शर्मा ,, ,,
बनमाली त्रिवेदी ,, ,,
सत्यीश्वरानन्द वहगुना हिवेट संस्कृत पाठशाला टेहरी गढ़वाल ।
सिधानन्द शर्मा ,, ,,

गौरीप्रसाद पण्डा रघुनाथ कीर्तिपाठशाला देवप्रयाग गढ़वाल।
श्रीधर पण्डा ,, ,,
हरद्वार पाण्डेय विक्टोरिया संस्कृत पाठशाला गाजीपुर।
रामलखण पाण्डेय ,, ,,
गदाधर द्विवेदी ,, ,,
अच्युतानन्द पाण्डेय संस्कृत पाठशाला हनुमान जी विजेधुआ सुल्तांपुर।
भगतप्रसाद शुक्ल शिवविद्यालय पतिहापुर प्रतापगढ़।
अवधनरायण मिश्र सनातनधर्म पाठशाला जौनपुर।
द्वारकाप्रसाद त्रिपाठी ,, ,,
उदयनरायण उपाध्याय सनातनधर्म संस्कृत पाठशाला अजयगढ़।
वासुदेव मिश्र ,, ,,
हूबनरायण मिश्र सनातनधर्म रक्षिणी पाठशाला व्रजराज कटरा मीरजापुर।
महादेव प्रसाद पाण्डेय गवर्नमेंट हाई स्कूल मीरजापुर।
शिवदास मिश्र धर्मप्रवर्तक पाठशाला चितौली सारन।
लक्ष्मीपति त्रिपाठी साङ्गवेद विद्यालय नगवाँ बनारस।
रामदयाल त्रिपाठी वैश्य विद्यालय ठठेरी बजार काशी।
हरिदत्त पाठक ,, ,,
रामेश्वर उपाध्याय युगलकिशोर रुईया पाठशाला बनारस।
राजनरायण पाण्डेय रुईया पाठशाला बनारस।
गणेशदत्त पाठक युगलकिशोर रुईया संस्कृत पाठशाला बनारस।
मुरलीधर अवस्थी ,, ,,
मोतीराम पाण्डेय ,, ,,
जयदत्त त्रिपाठी ,, ,,
रामरेखा मिश्र ए० बी० स्कूल ज्ञानपुर स्टेट बनारस।
देवीप्रसाद डुङ्गरपुरिया तुलसी संस्कृत पाठशाला काशी।
सत्यनरायण मिश्र दुर्गा त्रिपाठी पाठशाला बनारस।
ठाकुरप्रसाद द्विवेदी ,, ,,
सरयूप्रसाद उपाध्याय अर्जुन सूर्यमल्ल संस्कृत पाठशाला बनारस।
भगवतदत्त त्रिपाठी संस्कृत पाठशाला रुद्रपुर गोरखपुर।
उमापति द्विवेदी संस्कृत कालेज बनारस।
काशीनाथ द्विवेदी ,, ,,
रामेश्वर शुक्ल ,, ,,
गोविन्द प्रसाद मिश्र ,, ,,
गौरीनाथ पाठक ,, ,,
मार्तण्ड समभरे ,, ,,
मधुवन प्रसाद त्रिपाठी ,, ,,

## न्याये चतुर्थः खण्डः

रामलाल पाण्डेय कल्लुमल पाठशाला कानपुर।
लक्ष्मीनिवास त्रिवेदी ,, ,,

## तृतीयः खण्डः

अनन्तानन्द सारस्वत कल्लुमल पाठशाला कानपुर ।

जयशङ्कर रावल संस्कृत कालेज बनारस ।

## द्वितीयः खण्डः

रामनुजदास शर्मा श्रीरङ्गलक्ष्मी विद्यालय वृन्दावन ।

## प्रथमः खण्डः

विश्वेश्वर मिश्र संस्कृत वैदिक पाठशाला मुजफरनगर ।

अम्बिकादत्त त्रिपाठी श्रीरङ्गलक्ष्मी विद्यालय वृन्दावन ।

गिरिधर दाक्षिणात्य " "

नरायणदास त्रिपाठी " "

बलैया उपाध्याय स्यादवाद पाठशाला बनारस ।

ज्योतिषे

## द्वितीयः खण्डः

जगनलाल शर्मा महाराजा हाई स्कूल करौली राजपुताना ।

गणपति ज्योतिर्विद विक्टोरिया कालेज लश्कर ।

शिवचरण पुरोहित " "

## प्रथमः खण्डः

शिवदत्त शुक्ल माधव कालेज उज्जैन ।

गजानन जोशी विक्टोरिया कालेज लश्कर ।

## प्रथमा परीक्षा

ब्रह्मादत्त द्विवेदी पञ्चपुखरा पाठशाला फरुखाबाद ।

चन्द्रशेखरदत्त पांडेय राजगोपाल पाठशाला अयोध्या ।

बालकृष्ण गुप्त गुरुकुल सीकन्दराबाद बुलन्दशहर ।

विश्वभान शर्मा " "

हरदत्त मिश्र पञ्चपुखरा पाठशाला फरुखाबाद ।

मुकुन्ददत्त गौड़ ई० सी० हाई स्कूल संस्कृत पाठशाला खुर्जा ।

अभयचन्द्र (हजारीलाल) सैदाबाद पाठशाला बनारस ।

वन्दुराम मिश्र श्रीव्यङ्कटरमण सनातनधर्म पाठशाला विसौली बदायूँ ।

वृजवल्लभ ज्योतिर्विद संस्कृत पाठशाला विसाउ जैपुर ।

कामताप्रसाद खत्री संस्कृत पाठशाला उनाव ।

तुलसीराम सनाढ्य कल्लुमल पाठशाला कानपुर ।

रामस्वरूप गौड़ वेदवेदाङ्ग पाठशाला जन्ड ल्येड नवगढ़ सीकर ।

लघुराम जोशी " "

रामनिवास शर्मा बैजनाथ रुइया संस्कृत पाठशाला रामगढ़ सीकर ।

रामप्रसाद शर्मा हरदत्त राय संस्कृत पाठशाला रामगढ़ सीकर ।

मदनलाल व्यास वैदिक पाठशाला जोधपुर ।

वल्लभदत्त व्यास " "

जयरामदास साधु राजकीय संस्कृत पाठ-
शाला खेतड़ी।
जगदीश जोशी ” ”
धनराज अचार्य दरबार संस्कृत पाठशाला
जोधपुर।
बालमुकुन्द साधु ” ”
यशराज द्विवेदी ” ”
कन्हैयालाल शर्मा दलयिया संस्कृत पाठ-
शाला चिराक जैपुर।
मिथनलाल शर्मा सनातनधर्म प्रकाशिनी
संस्कृत पाठशाला व्यावर।
नन्दकिशोर पुरोहित ” ”
मोतीलाल मिश्र ” ”
नरायणलाल भट्ट महाराणा हाई स्कूल
उदयपुर।
रामनरायण व्यास ” ”
गणेशलाल भट्ट ” ”
जगन्नाथ जोशी श्रीगोवर्द्धन संस्कृत पा-
शाला नाथद्वारा मेवाड़ उदयपुर।
कृष्णशुक्ल सेठ हरनन्दराय घनश्याम गुप्त
संस्कृत पाठशाला उज्जैन।
गिरिधरलाल त्रिपाठी प्राइवेट वारीसदरी
मेवाड़।
छेदी गोपाल मिश्र सुधर्म पाठशाला
गोमर।
दौरुशङ्कर शर्मा सत्यसभा संस्कृत पाठ-
शाला एटा।
भगीरथलाल शर्मा संस्कृत पाठशाला पुठ-
दिलपुर अलीगढ़।

रामनरायण शुक्ल विद्याधर्म वर्द्धिनी पाठ-
शाला आगरा।
मोतीलाल शर्मा ” ”
नाथीलाल शर्मा भारतहितकारिणी पाठ-
शाला आगरा।
खूबलाल मिश्र वैदिकधर्म वार्द्धनी पाठ-
शाला अहरान आगरा।
बद्रीदत्त शर्मा ” ”
अनन्दीलाल शर्मा ” ”
हरीशचन्द्र आगरा।
माधवप्रसाद त्रिपाठी विचारसभा संस्कृत
पाठशाला ईटावा।
जगन्नाथप्रसाद पुरोहित ” ”
रामकृष्णदीक्षित श्रीराय पाठशाला अहेरी-
पुर ईटावा।
मथुराप्रसाद पांडेय अवैतनिक संस्कृत
पाठशाला इटावा।
हरप्रसाद चतुर्वेदी सनातनधर्म महासभा
पाठशाला ईटावा।
गोपालदत्त मिश्र सनातनधर्म वर्द्धिनी
पाठशाला अलवर।
सूर्यप्रसाद ज्योतिर्विद ” ”
गोपालचन्द्र चतुर्वेदी संस्कृत पाठशाला
तुलसी चौतरा मथुरा।
सरस्वतीप्रसाद चतुर्वेदी धर्म ज्ञानोपदेश
पाठशाला प्रयाग।
ब्रह्मदीन पांडेय ” ”
रामशङ्कर शुक्ल ” ”
बलदेवप्रसाद मिश्र किशोरीलाल वेणी-
माधव संस्कृत पाठशाला दारागंज प्रयाग।

Printed by Pt. Lakshman Balwant Bhate at the Triveni Printing Works
and Published by P. Chandra Shekhar Daragunj-Allahabad.

मासिकी संस्कृतपत्रिका ।

विद्ययाऽमृतमश्नुते ।

प्रथमे वर्षे } १९७० विक्रमाब्दाः, फाल्गुणः { पञ्चमी संख्या,


## प्रबोधनम्

सखे, जागृहि ध्वान्तमस्तंगतम् ।<br>
प्रभाते प्रभूतं महः सङ्गतम्—सखेजागृहि० १

महायामविस्तारियामा त्रियामा<br>
निमील्याक्षिणी हन्त नीता भृशम् । सखे० २

न जानासि निःसंज्ञः ! गेहे त्वदीये<br>
कियद्भिः कियत् सञ्चितं लुण्ठितम् । सखे० ३

निशाचारिसंचारघोरेऽत्र काले<br>
कराले न किं किं विनाशं गतम् । सखे० ४

न सा वेदविद्या सदानन्दकन्दं<br>
न तद् योगिवृन्दं परेशं गतम् । सखे० ५

शयानोऽसि हा ! हा ! गता भारती ते<br>
सहाऽऽदाय वीरव्रतं भारतम् । सखे० ६

सतां त्राणकर्मण्यलं तत्पटुत्वम्<br>
विहायाद्य दम्भाऽऽरतं भारतम् । सखे० ७

नखादाशिखं देशवस्तूनि हित्वा<br>
विदेशीयदुर्भारतं भारतम् । सखे० ८

न भाषा, न वेषो, न वा जातिप्रीतिः,<br>
क्षतं वा-हतं वा-ऽरतं भारतम् । सखे० ९

न सूचीविधानेपि शिष्टं प्रभुत्वं<br>
मृतच्छादनेऽप्यन्यवासस्ततम् । सखे० १०

मृते बन्धुवर्गेऽपि हा! जन्मभूमे-
र्न वासो वपुश्छादनायाऽऽहितम्। सखे० ११
किमन्यद् वदामश्च किं किं स्मरामो
न हा, जाठरायाऽपि तृप्तं हुतम्। सखे० १२
निरीक्षस्व कोऽसौ पुरो बालकस्ते
रुदन् ग्रामवृद्धस्य वक्ति स्फुटम्। सखे १३
क्षुधा पीड़ितोऽहं पिता मेऽन्धवृद्धो
गता बाल्य एवाम्बिका मे दिवम्। सखे० १४
मदीया पयोविन्दुदा धेनुरेका
क्षुधा क्षामकण्ठी गता दुर्दशाम्। सखे० १५
निराकृत्य तातञ्च माञ्चाऽन्तकेन
गले ग्राहितासौ करं शोधितुम्। सखे० १६
वहे भिक्षितैस्तातसेवामहं तन्
न किञ्चिद्दिनं भ्राम्यताऽद्यापि तम्। स० १७
प्रयामि क्व, हा दैव; धिक्, कं नु याचे
प्रभो! पाहि, हे दीनबन्धो! द्रुतम्। स० १८
अहो भारतेयं दशा ते शिशूनाम्
विनिद्रासि दारिद्र्यभूतं हतम्। सखे० १९
सखे जागृहि ध्वान्तमस्तंगतम्
प्रभाते प्रभूतं महः सङ्गतम्। सखे जागृ० २०
पुरा येषां काकान् शुनकहतकानप्यलमलं
परित्रातुं, दैनन्दिनबलिविधाने स्थितिरभूत्।
अमी तेषां पुत्रा जठरदहनक्षीणवपुषो
वराकाः शाकानप्यहह, न लभन्ते हतधियः॥

साहित्याचार्यः श्रीशालग्रामशास्त्री।

---

# उद्भिज्जीवाः।

पूर्वे महर्षयो भगवत्या वाग्देवताया निखिलमपि मनोहरं रूपं ज्ञानदृशाऽनुसन्धाने न चावलोक्य प्रकाशयामासुः करुणापरिप्लुतान्तरङ्गास्तन्मानवानामुपकृतये। न तादृशं ज्ञानं, न वा तच्छिल्पं, न सा कला, न ता उपपत्तयो, यत्र न पाटवमधिगतमध्यात्मवेदिभिर्महर्षिभिः। परमद्य त एव महाभागा जडप्रायैरस्माभिरुपहस्यन्ते। नेदं विद्यास्थानं तेषां परिचितम्, अस्या विद्याया नामापि न ज्ञातमासीद्भारतीयानामिति केषाञ्चिदज्ञानां स्वरेणात्मनः स्वरान् मेलयद्भिरनिशमुद्घोष्यते। हन्त, धिगस्मान् ज्ञानलवदुर्विदग्धान्, नास्माभिर्महर्षिभिरुद्भाविता विद्याः समभ्यस्यन्ते, परमात्मनो मौर्ख्यकलङ्कपङ्कं तेषु निक्षिप्यते। सर्वथा समुचितमेतत् शिश्नोदरपराणामस्माकमिति निर्विशङ्कमुच्यते।

नासीदुद्भिज्जतत्त्वज्ञानं भारतीयानामिति केषाञ्चिदुक्तिर्व्यथयत्यन्तरं नः। ये हि वनेनिषीदन्तो महीरुहां फलेन मूलेन च कल्पितवृत्तय आविश्चक्रुस्तास्ता विद्याः, तेषामुद्भिज्जतत्त्वज्ञानं नासीदित्युक्तिः कथञ्चनापि श्रद्धेयपदवीं नाधिरोढुं शक्नोति। यैर्हि विरुधां साहाय्येन समुल्लाघीकृता बहवः, साम्प्रतमपि तत्पदाङ्कमनुसरद्भिः समुल्लाघीक्रियन्ते जनास्तथापि पूर्वेषां नासीदुद्भिज्जतत्त्वज्ञानमिति वदन्तः कथमोन्मत्ता इति निश्चेतुं न शक्यतेऽस्माभिः। न केवलं लीनियस (Linious) डि कैण्डल (Decandol) प्रभृतिभिः पाश्चात्यैरेव विद्वद्भिरनुशीलितमुद्भिच्छास्त्रम्, किन्तु भारतीया महर्षयोऽपि उद्भिच्छास्त्रतत्त्वज्ञा इति प्रबन्धेनानेन प्रदर्शयितुं प्रयत्यते।

आसीदुद्भिच्छास्त्रज्ञानं महर्षीणामिति निश्चीयते तैस्तैःप्रमाणैः। तैर्हि यथावदनुशीलितमभवदिदं शास्त्रम्। साम्प्रतिकैर्वैज्ञानिकैर्यानि तत्वान्यधिगतानि शास्त्रस्यास्य, ततोऽप्यधिकतरं ज्ञानमभवदुद्भिच्छास्त्रस्य भारतीयानाम्। उद्भिज्जाः स्थावरजीवेषु परिगणिता भारतीयैः। यथा प्राणिषु फलाशिनो मासाशिनश्च प्राणिनो भवन्ति तथा तेष्वपि। नन्वेतेऽप्युत्पद्यन्ते, विनश्यन्ति, क्षीयन्ते परिणमन्ते च। साम्प्रतं हि बहवो वृक्षा मांसाशिन इति विदितमेव वैज्ञानिकानाम्, केचन वृक्षाः सुखेन वशमानयन्ति पीपिलिका प्रभृतीन् जीवान्, भक्षयन्ति च। अन्येषु प्राणिष्विव तेष्वपि भवन्ति स्त्रियः पुरुषाश्च, परागनिषेकापत्योत्पत्तिवंशविस्तारात्मपोषणप्रभृतिषु तेषां कौशलमालोक्य यत्सत्यं तेऽपि प्राणिन एवेति सम्यग् निश्चेतुं शक्यते। तेषामपि भवत्येव सुखदुःखानुभवः। जीवनं हि तेषां जीवनाय कल्पते, निदाघे जीर्णपत्राः काण्डावशिष्टा ननु प्रमाणयन्त्यात्मनः प्राणवत्ताम्। साम्प्रतमप्यध्यापकजगदीशचन्द्रमहोदयेन प्रमाणीकृतोऽयं विषयः। भूतेषु त्रिविधानि भवन्ति वीजनीति वर्णितं भारतीयग्रन्थेषु।

> तेषां खल्वेषां भूतानां त्रीण्येव वीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति। (छान्दोग्योपनिषत्)

तेषु स्वयं पृथिवीं भित्त्वा जायमानान्युद्भिज्जान्यभिधीयन्ते।

> "भित्वा तु पृथिवीं यानि जायन्ते कालपर्ययात्
> उद्भिज्जानि च तान्याहुर्भूतानि द्विजसत्तमाः।
> (महाभारतम्)

एते भवन्ति भेदा उद्भिज्जेषु

> "वनस्पतिद्रुमलतागुल्माः पादपजातयः
> वीजात्काण्डात्तथा कन्दात्तज्जन्म त्रिविधं विदुः।
> ते वनस्पतयः प्रोक्ता विना पुष्पैः फलन्ति ये,
> द्रुमास्तान्ये निगदिताः पुष्पैः सह फलन्ति ये।
> प्रसरन्ति प्रतानैर्यास्ता लताः परिकीर्तिताः,
> बहुस्तम्बा विटपिनो ये तु गुल्माः प्रकीर्तिताः,
> (वृहच्छार्ङ्गधरपद्धतौ)

वृहच्छार्ङ्गधरपद्धतौ पादपप्रकरणे वनस्पतिद्रुमलतागुल्मभेदाच्चत्वारो भेदा निरूपिता उद्भिज्जानाम्। वीजोद्भवाः काण्डोद्भवाः कन्दोद्भवाश्चेति त्रिविधस्तेषामुद्भवप्रकारोऽपि निरूपितः। पुष्पमन्तरापि यत्रोपलब्धिर्भवति फलानां त एव वनस्पतयः, कुसुमोदयपुरस्सरं ये फलन्ति ते द्रुमाः, याः प्रतानैः प्रसरन्ति ता लताः, ये वृक्षा बहुस्तम्बास्ते गुल्माः।

उदुम्बरवटप्रभृतिषु वनस्पतिषु पुष्पाणि नैव भवन्तीति न शक्यते वक्तुम्। वटफलानामुदुम्बरफलानाञ्च मध्ये शिखेव प्रतीयमानानि भवन्ति बहूनि पुष्पाणि। तेभ्य एव पुष्पेभ्यो भवन्ति बहूनि वीजानि। यथापरेषां वृक्षाणां पुष्पाणि सर्वैरेव प्रत्यक्षीक्रियन्ते, न तथा प्रत्यक्षतो दृश्यमानानि कुसुमानि वटादीनाम्, किन्त्वेषां पुष्पाणि फलत्वचा समावृतानि भवन्तीत्यपुष्पफलिनो वनस्पतय इत्यभिधीयते। इत्थं तृणप्रतानगुल्मादयो बहवो भेदा भवन्ति स्थावरजीवानाम्। कर्मनिमित्तमेषु भवन्ति बहवो भेदाः। एतेऽन्तःसंज्ञाः, अत

एव सुखदुःखानुभवोऽपि भवन्त्येषामिति भगवान् मनुः प्राह स्म।

"तमसा बहुरूपेण वेष्टिताः कर्महेतुना,
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः"

पूर्वे महर्षय उद्भिज्जतत्वज्ञाः। तैर्निरूपितानि लक्षणानि स्थावरजीवानाम्, विवेचिता जातिः, अभिहितञ्च नामेति विलोकयन्तोऽपि महर्षय उद्भिच्छास्त्रतत्त्वानभिज्ञा इति वक्तुं दुःसाहसिका एव समुत्सहन्ते। यथा मानवाः केनापि, रोगेण पीड्यमाना भवन्ति, तत्र धातूनां वैषम्यमेव कारणमिति निश्चित्यायुर्वेदविदस्तान् नीरूजीकुर्वन्ति, तथैव पादपा अपि धातुवैषम्यनिमित्तं पीडिता भवन्तीति विज्ञातमभवन्महर्षीणाम्। तद्रोगप्रतीकारोपायश्चैभिर्निर्द्धारितोऽभवत्।

नराणामिव वृक्षाणां वातपित्तकफाद्गदाः,
सम्भवन्ति निरूप्यातः कुर्यात्तद्दोषनाशनम्।
कृशो दीर्घो लघू रूक्षो निद्राहीनोऽल्पचेतनः
न धत्ते फलपुष्पाणि वातप्रकृतिकस्तरुः।

इत्थमेव वातपित्तकफप्रकृतीनां पादपानां लक्षणं निरूप्य तद्दोषा निरूपिताः। ततस्तेषां प्रतीकारोपायोऽपि निर्दिष्टः। बीजाङ्कुरमूलोत्पत्तिविषयकं यादृशं ज्ञानं साम्प्रतिकानां वैज्ञानिकानामस्ति, तादृशं ज्ञानं भारतीयानामप्यासीदिति नास्ति कस्याप्यत्र लेशतोऽपि सन्देहस्तज्ज्ञस्य। उद्भिच्छास्त्रीयज्ञानस्य कस्मिन्नप्यंशे भारतीयानां पाश्चात्यविद्वदपेक्षयाऽप्यधिकतरं ज्ञानमासीदित्यायुर्वेदीयद्रव्यगुणवर्णनां विजानद्भिरनायासत एवाङ्गीक्रियते।

तत्र सिक्ता जलैर्भूमिरन्तरूष्मविपाचिता,
वायुना व्यूह्यमाना तु बीजत्वं प्रतिपद्यते।
तथाव्यक्तानि बीजानि संसिक्तान्यम्भसा पुनः,
उच्छूनत्वं मृदुत्वं च मूलभावं प्रयान्ति च,
तन्मूलादङ्कुरोत्पत्तिरङ्कुरात्पर्णसम्भवः
पर्णात्मकं ततः काण्डं काण्डाच्च प्रसवं पुनः।

जलेन सिक्ता, अभ्यन्तरस्थेनोष्मणा विपाचिता च भूमिर्यदा वायुना संहता भवति, तदा सा बीजत्वमधिगच्छति तदा सोद्भिज्जानामुपादानतां प्राप्नोति। तस्माद्व्यक्तीभूताद्बीजादेव प्ररोहा उत्पद्यन्ते। व्यक्तीभूतानि च बीजान्यम्भःसंयोगात् क्लिन्नतां मृदुत्वञ्चाधिगच्छन्ति, ततश्च तस्मादेव क्रमेण भवत्यङ्कुरोद्गमः। अङ्कुराच्च पर्णानि, पर्णेभ्यः पर्णात्मकं काण्डं, काण्डाच्च कुसुमानि फलानि चोत्पद्यन्ते।

पाश्चात्यैर्विद्वद्भिरुद्भिज्जानां त्रीण्यङ्गानि परिकल्पितानि, मूलं, काण्डं, पत्राणि च। पुष्पफलबीजादयो हि पत्राणामेव परिणामविशेष इति तैः स्वीक्रियते। पाश्चात्या अपि महर्षीणामिव पत्राण्येव काण्डोत्पत्तिमूलमिति स्वीकरिष्यन्त्येव काले। पत्राण्येवोद्भिच्छरीरस्य पाकस्थली, तान्येव श्वासप्रश्वासक्रियां निर्वर्तयन्ति। अतः पत्राणामभावे नह्युद्भिच्छरीरं क्षणमपि स्थातुमलम्भवितेत्यङ्गी कर्त्तव्यमेव भविष्यति।

किञ्चायुर्वेदग्रन्था यैरनुशीलिताः, तत्र वर्णितमुद्भिच्छास्त्रं यैः परिज्ञातं, तैरनायासत

एव भारतीयानामुद्भिमच्छालनैपुण्यं परिचेतुं शक्यम्। त्वक्सारान्तःसारनिःसारप्रभृतयः शब्दा भारतीयग्रन्थेषु विलोक्यन्ते। एते शब्दा एव समर्थयन्ति भारतीयानामुद्भिमच्छालनैपुण्यमिति निपुणमनुसंधीयते प्रेक्षावद्भिः।

---

## आयव्ययौ,

—:०:—

सम्प्रति विवेकव्यावेतौ भारतीयैरिति वयमप्यत्रात्मनः सम्मतीः प्रकाशयितुं प्रयतामहे।

'प्रत्यहं भारतीया दरिद्रति'

यद्देशीया दरिद्रप्रायाः तत्र शिक्षासभ्यतापुरुषकाराणमभावो ज्ञेयः।

यदि तु कतिचित् शिक्षिताः सभ्याः पुरुषार्थिनश्चापि दारिद्र्याभिभूता दृश्यन्ते, तेषां मितव्ययित्वाभाव एव दारिद्र्यहेतुः।

ये तु यथेष्टं व्ययशीलास्तेषां गृहात् दारिद्र्यापसारणं दुर्घटम्।

'स्वभावो न निवर्तते, इति वाक्यमुररीकृत्य ये स्वभावादेवा-पव्ययिनस्तेषु मितव्ययित्वापादनमशक्यम् इति सत्यमेव। किन्तु अपव्ययशीलेष्वपि मितव्यायित्वारोपणं यत्नतः साध्यमेव।

द्रव्येण विना अत्यावश्यकवस्तूनामलाभे तज्जनितामाधिं वहन्त ऋणभारेणोद्विग्नाः कथञ्चमपि दुःखेन जीवमाना अपव्ययिनः "अद्यप्रभृति विचार्यैव व्ययं करिष्यामः पणमात्रमपि वृथा न करिष्यामः" इति कतिवारं प्रतिजानन्ति किन्तु न ज्ञायते, तेषु दारिद्र्यस्य कीदृशी कृपा यत्तेभ्यः कथमपि नापसरति तत्। तेषां प्रतिज्ञाऽपि कुत्राप्यन्तर्धत्ते। शिरोभ्यश्च ऋणभारो नापगच्छति।

सज्जनाः शिक्षिता नीरुजः श्रमशीलाः पुरुषार्थिनोऽपि दारिद्र्याभिभूता एव सन्ति।

यैर्गुणैर्जना धनमर्जयन्ति तेषामस्तित्वेऽपि धनाभावे को हेतुः?

यदि कोऽपि एतेषामभावं त्रुटिञ्च द्रष्टुं वाञ्छेत् स कस्यापि मासस्य प्रथमे द्वितीये वा दिवसे तेषां गृहं गच्छेत्।

आपणिकं गोपं माधुरिकं याज्ञिकं च स्वस्ववस्तुमूल्यग्रहणाय आगतांस्तत्र नियतं द्रक्ष्यति स, एते गृहिणो गृहोपयुक्तानि वस्तुमात्राणि केचिदन्नानि केचित् घृतं मधुरं वस्त्राणि च केचित्तुकौतूहलानि मासं यावत् मूल्यमगृहीत्वैव दत्तवन्तः। इदानीं मासपूर्तौ स्वस्वमूल्यग्रहणाय तदधिकलिप्सया वा आगताः।

गृही च तेषां देयमात्रमपि ददत् मासमर्जितं सकलमेव व्ययीकृत्य बलवत उत्तमर्णात्कथमपि आत्मनमुद्धरते। अपि तु तेषां ये दयालवः, तान् "अग्रिममासे तव देयं दास्ये" इति सविनयमनुनीय प्रहिणोति। अनन्तरं कोऽपि श्रेष्ठो धनवृद्धिं (कुसीदं) ग्रहीतुं आगतः। गृहपतेर्हस्ते वराटकोऽपि नास्ति इति तं दृष्ट्वा तस्य हृत् कम्पते।

यद्यपि श्रेष्ठिने किमप्यदत्त्वैव अचिराय तत आत्मानं उद्धरिष्यत्, तथापि तस्य

क्रोधोद्धतं मुखं रक्तायिते लोचने कटुप्राया भारतीं च दृष्ट्वा श्रुत्वा च तदाननं चिर-रोगीव हतप्रभं जातम्।

पाठकाः यदि यूयं तस्या दीनतायाः कारणं जिज्ञासवः, तर्हि तस्य गृहोपयोगीनि कार्याणि पश्यत प्रत्यक्षमेव हेतुं ज्ञास्यथ।

गृहस्वामी धनमर्जयति किन्तु तस्योपयोगं न जानाति गृहलक्ष्मी न सर्वगुणोपेता इति सम्यक् गृहकार्यं कर्तुं न पारयति। अनावश्यकमावश्यकं वा व्ययं न तत्वतोऽवगच्छति।

गतमासे प्रयोजनाधिकानि क्रीतानि अनुपयोगीनि क्रय्याणि, अपि विक्रेतुरनुरोधात् समर्घबुद्ध्या वा कानिचित् क्रीतानि कदाप्युपयोगीनि इति मत्वा गृहे निहितानि।

एवमेव खाद्यानि परिधानीयानि क्रय्याणि मार्गणादन्यत्र अल्पमौल्येन लभ्यान्यपि मनोहराणि कथं त्यक्तव्यानि अत उचितादप्यधिक-मौल्येन क्रीतानि। एवमनेके अनावश्यका व्ययास्तेषां गृहे द्रष्टव्याः।

प्रयोजनमनपेक्ष्य व्ययीकरणमेव अपव्ययित्वम्, तेन ऋणग्रस्तास्सततं चिन्तयन्ति सुखेन जीवनं निर्वाहयितुमप्यसमर्था भवन्ति।

दारिद्र्यरूपस्य महारोगस्य एतदेवनाशकं महौषधकल्पं यन्मितव्ययित्वं नामेति। तत्तु न धनक्रेयं उत वा श्रमसाध्यम् अपितु कतीनांचिन्नियमानां पालनादेव सिद्ध्यति।

कस्माञ्चित् कठिनरोगाद् आत्मानमुद्धर्तुं जनो यथानियमेन अगदं सेवते अपथ्याञ्च निवर्तते। तथा अपव्ययशीलो दारिद्र्यरोगादात्मानमुद्धर्तुं पथ्यापथ्ये विचार्य व्यवहरेत्। नियमानाल्लेखस्तु न क्रियते विस्तरभिया 'उद्देश्यसिद्धेरनुकूलंस्वीकुर्य्यात् प्रतिकूलं च त्यजेत्'' इति साधारणो नियमः।

अतः सहृदयपाठकाः भारते मितव्ययित्वाभावात् गेहे २ जने २ ऽनिशं दारिद्र्यं बर्द्धते तत आत्मानमुद्धर्तुं यतध्वम् तदैव भारतीयानां हितं भविष्यति, अन्यथा दारिद्र्याभिभूता विनश्येयुरेव।

पं० काशीदत्त झा।

---

# अथ मन्थरादुर्विलसितम्

## प्रथमः सर्गः

यौवराज्यपदवीमहोत्सवे
वीक्ष्य रामपितरं समुत्सुकम्।
जातशोकगतहर्षसम्पदा
निर्जरा विविधचिन्तनं गताः॥ १॥

रामचन्द्रपदभूषितैकला
कोशलैव यदि जायते सदा।
अस्मदीयहृदयाभिवाञ्छितं
हा कथं करगतं भवेदहो॥ २॥

कोशलापुरनिवासिनो जना-
स्सन्मनोरथशताकुला स्स्थिताः।
किन्तु विघ्नपरिदत्तमानसा
देवता हृदि मुदं न लेभिरे॥ ३॥

कोशलेशनगरीमहोत्सव-
स्संदुनोति हृदयं दिवौकसाम्।

शीतरश्मिकरभासिता निशा
चौरचित्तमवसादयत्यहो ॥ ४ ॥
शारदां विनतमौलयस्तदा
ते वरस्तवशतैरपूपुजन्।
रामचन्द्रपदपङ्कजाञ्चिता
मातरस्तु वनपावनस्थलीः ॥ ५ ॥
त्वत्प्रसादबलतोऽस्तु मादृशां
कार्य्यसिद्धिरिह लुप्ततेजसाम्।
लोकमङ्गलविधायिनी दृशे
सत्कृते जननि मुञ्च वामताम् ॥ ६ ॥
देववाक्यमिदमप्रियं तदा
शारदा तु विनिशम्य विस्मिता।
हा भवामि हिमदूषिता निशा
पङ्कजाञ्चितवनाय निन्दिता ॥ ७ ॥
वीक्ष्य तां बहुवितर्कविक्लवां
पापदूषणभियानवस्थिताम्।
संप्रबोध्य बहुलप्रकारतः
शारदां सुरवरास्समूचिरे ॥ ८ ॥
मातरत्रभवतो न तोषिता
वेत्सि राममथ किं न तत्त्वतः।
तस्य नास्ति मनसो विमूढता
हर्षसन्ततिविषादभारजा ॥ ९ ॥
कर्म्मणात्र सुखदुःखयोः क्रम-
स्तस्य जीवहतकस्य चिन्त्यते।
किं करोति भवती विचारणां
कोशलां व्रजतु नो हितैषिणी ॥ १० ॥
देववृन्दपरिपूजिता मुहु-
स्तद्विनीतिबलतो विलज्जिता।
शारदा विबुधबुद्धिगर्हणां
मानसे विदधती जगाम सा ॥ ११ ॥
हन्त सन्ति विबुधा दिवौकसः
किन्तु वृत्तिरधमा किमीदृशाम्।
सन्ततं परविभूतिषु स्थिता
कीदृशी नु कठिनाऽसहिष्णुता ॥ १२ ॥
कार्य्यजातमखिलं सुसाधितं
वीक्ष्य वानु निपुणाः फलप्रदम्।
ज्ञानपुञ्जपरिमृष्टचेतसः
किं रता न मयि सत्कवीश्वराः ॥ १३ ॥
इत्थमेव हृदये मुदन्विता
शारदावधपुरीं समागता।
दुःसहप्रबलदुःखदायिनी
मानुषग्रहदशेव निष्ठुरा ॥ १४ ॥
मन्थरा भरतमातृकिङ्करी
बुद्धिलेशपरिवर्जिता तु या।
शारदाविहितदोषपेटिका
सा गता मतिविपर्य्ययं तदा ॥ १५ ॥
विधाय कार्य्यं सुरवृन्दनोदितं
जगाम मोदं दधती तु शारदा।
बभूव सा दुर्यशसां करण्डिका
विचारशून्या जगतीह मन्थरा ॥ १६ ॥
इति मन्थरादुर्विलसिते प्रथमः सर्गः।

---

## द्वितीयः सर्गः

अथ सुन्दरतानिकेतनं
रचितं दिव्यविभूषणैःपुरम्।
बहुमङ्गलवाद्यगुञ्जितं
सहसा वीक्ष्य जगाद मन्थरा ॥ १ ॥

अयि मां कथयन्तु मानवाः
किमियं मङ्गलमूर्त्तिधारिणी।
परितो नु समीक्ष्यते पुरी
सहसाविष्कृतमाल्यतोरणा ॥ २ ॥

विनिशम्य महोत्सवं तदा
विहितं रामशुभाभिषेचने।
निपपात विषादमूर्च्छिता
हृदये वज्रहतेव मन्थरा ॥ ३ ॥

यदि नाद्य विचिन्त्यते मया
प्रतिबन्धः शुभकर्म्मणीदृशे।
भविता तिलको विनिश्चितं
किल रामस्य हतास्मि पापिनी ॥ ४ ॥

मधु वीक्ष्य यथाच्छसञ्चयं
कृततत्प्राप्तिविनिश्चया सती।
भ्रमतीह किरातकन्यका-
वसरायैव तथा हि मन्थरा ॥ ५ ॥

जननीं भरतस्य साश्रिता
भृशवाष्पाम्बुपरिप्लुता सती।
वद किं विधुरासि मन्थरे
परिपृष्टापि न मूकतां जहौ ॥ ६ ॥

अधिकं रुरुदे तया पुन-
र्वितता वञ्चनचातुरी ततः।
कपटाचरितं नु योषितां
न विधातापि विदाङ्करोत्यहो ॥ ७ ॥

कपटाचरणेऽस्ति कौशलं
तव जानामि विमुञ्च रे च्छलम्।
कपटेऽसि सुशिक्षिता ध्रुवं
चपले त्वं प्रियलक्ष्मणेन मे ॥ ८ ॥

स्तिमपूर्व्वमनेकधेरिता
न जहाति स्म विचित्रमूकताम्।
श्वसनं प्रमुमोच केवलं
स्वमुखात् कृष्णभुजङ्गमीव सा ॥ ९ ॥

कुशलं ननु किञ्चिदस्ति मे
तनयानां किल दीप्ततेजसाम्।
वद शीघ्रमयि प्रियेऽधुना
न विलम्बं किल कर्त्तुमर्हसि ॥ १० ॥

विनिशम्य तदा तु पापिनी
प्रियरामादिसुताश्रयं वचः।
विशिखेन हतेव मर्म्मणि
व्यथिता वाक्यमिदं जगाद सा ॥ ११ ॥

अपि केन भवामि शिक्षिता
वितथं वच्मि बलेन कस्य वा।
भुवि दीनदशास्मि किङ्करी
भवदाज्ञाचरणे रता सदा ॥ १२ ॥

कुशलं वद कस्य वर्त्तते
ननु रामं परिहाय भूतले।
युवराजपदं वितीर्य्यते
बत यस्मै क्षितिपेन सुन्दरि ॥ १३ ॥

विधिरस्ति नु दक्षिणेऽधुना
सततं मातरि तस्य भावये।
कथमस्तु न सा मदोद्धता
स्वसुते राज्यपदाप्तितोषिते ॥ १४ ॥

स्वयमेव गता सती कथं
भवती पश्यति नैव सच्छविम्।
अवलोक्य हि यां विषण्णतां
प्रतिपन्नास्मि सुचारुदर्शने ॥ १५ ॥

हृदि ते न मनाग् विचिन्तनं
स्वसुतं दूरगतं विचार्य्य हा ।
पृथिवीपतिरस्ति मद्वशस्थित-
इत्येव मृषासि गर्विता ॥ १६ ॥

भवती शयनप्रिया सती
परिभूता सुखजातनिद्रया ।
नृपतेः कपटेषु चातुरीं
न विजानाति परास्ति वञ्चना ॥ १७ ॥

इतीरयित्वा वचनं नृपप्रिया-
समक्षमेषा विरराम मन्थरा ।
बभार दाहं द्विगुणीकृतं तु सा
विचिन्तयन्ती रघुवीरमङ्गलम् ॥ १८ ॥

इति मन्थरादुर्विलसिते द्वितीयः सर्गः

---

## तृतीयः सर्गः

कटुप्रिय तद्वचन निशम्य सा
बभूव राज्ञी परया रुषान्विता ।
पुनर्यदीत्थं गृहभेदिकां गिरं
गृणासि जिह्वां परिपाटयामि ते ॥ १ ॥

न कुब्जता दोषसमुज्झिता क्वचि-
द्विशेषतो नीचकुयोषिदाश्रिता ।
विविच्य माता भरतस्य मन्थरां
जगाद भूयःस्मितभूषितानना ॥ २ ॥

अयि प्रिये किङ्करि मञ्जुभाषिणि
त्वमित्थमेवासि मया सुशिक्षिता ।
तवोपरि स्वप्नदशोपनीतया
क्रुधापि किं मे कलुषीकृतं मनः ॥ ३ ॥

तदेव नूनं बहुमङ्गलप्रदं
दिनं पवित्रं पृथिवीतलेऽस्ति मे ।
त्वदुक्तिरेषा सफलेक्ष्यते यदा
मदीयनेत्रद्वितयेन सुव्रते ॥ ४ ॥

सुरीतिरेषा स्वकुलक्रमागता
निषेव्यते सूर्यकुलोद्भवैर्नृपैः ।
वरीयसे राज्यपदं वितीर्यते
कनीयसा संश्रियते तदर्च्चना ॥ ५ ॥

यदि प्रिये सत्यमिदं तवेरितं
रघूत्तमो राज्यपदेऽभिषिच्यते ।
वृणीष्व मे त्वं हृदयाभिकांक्षित
वरं झटित्यालि विचारणां विना ॥ ६ ॥

यथा पृथुस्नेहभरेण चक्षुषा
स्वकीयमाता सततं निरीक्ष्यते ।
भवन्ति रामस्य निरन्तरं प्रिया
स्तथा प्रकृत्या निखिलास्तु मातरः ॥ ७ ॥

भवाम्यहं तज्जननीषु भाजनं
महानुरागस्य तथापि तस्य यत् ।
न किं मया तच्छतधा परीक्षित
क्व वीक्ष्यते पुत्रवरा हि तादृशः ॥ ८ ॥

जनिर्विधात्रा पृथिवीतले यदि
प्रदीयते मोदयुजा नु देहिनः ।
सुतोऽस्तु रामो जगतीविभूषणं
स्नुषास्तु सीता ललनाशिरोमणिः ॥ ९ ॥

ममास्ति रामो भुवि जीविताधिकः
कथ त्वयानायि घृणास्पदं प्रिये ।
किमप्यहो वास्ति विशेषकारणं
ममालि शीघ्रं गदितुं तदर्हसि ॥ १० ॥

निशम्य सा क्रोधभरान्विता सती
जगाद वाक्यं छलमिश्रितं पुनः ।

अथैकवारं कृतकृत्यतां गता
द्वितीयजिह्वां दधती वदामि किम् ॥११॥
भवामि नूनं हतभाग्यधारिणी
विचिन्तयन्ती यदहं भवच्छुभम् ।
व्रजामि ते राज्ञि विमाननास्पदं
वितर्ज्जिता निष्ठुरया गिरा मुहुः ॥ १२ ॥
मृषा वचो या तु कपोलकल्पितं
समुच्य ते राज्ञि धिनोति मानसम् ।
भवत्यसौ त्वत्प्रणयाधिकारिणी
कटु क्वणन्ती क्वच मादृशी प्रिया ॥१३॥
इतः परं यर्हि मया प्रभूयते
वचो मनोहारि विवक्तुमीदृशम् ।
तदास्यमुद्रा बलवन्नियन्त्रिता
विधास्यते देवि मया तु नान्यथा ॥ १४ ॥
विधाय धात्राकृतितो विनाकृता
विसर्ज्जिताहं परवश्यतां गता ।
वपत्यहो यत्तु लुनाति तद्ध्रुवं
जनस्तदाप्नोति ददाति यद्भुवि ॥ १५ ॥
नृपोऽस्त्वयं वास्तवपरस्सुतस्तव
क्व हानिरेकापि चकास्ति मामकी ।
भवामि ते देवि सदैव किङ्करी
न जातु राज्ञीतिशुभाभिधोचिता ॥ १६ ॥
विनिन्दनीया प्रकृतिर्ममैकला
न वीक्षितुं या सहते नवाशुभम् ।
क्षमस्व मे देवि विनिन्द्यचापलं
कृताञ्जलिर्ह्येष जनोऽत्र याचते ॥ १७ ॥
इति वञ्चनचारुचातुरी-
कुशला सा विरराम मन्थरा ।
समये विरसापि भारती
कृतकार्या भवतीह निश्चितम् ॥ १८ ॥

इति मन्थरादुर्विलसिते तृतीयः सर्गः ।

---

## चतुर्थः सर्गः

मतिमान्द्यमस्ति भृशमत्र योषितां
वचनं मृषा न निगदन्ति कोविदः ।
कपटप्रयोगचतुरा हि मन्थरा
भरतस्य मातरमहो जिगाय ताम् ॥ १ ॥
विनिशम्य गूढकपटं वहिःप्रियं
निजकिङ्करीप्रहितवाक्यमद्भुतम् ।
हरिणीव मुग्धहृदया हृताभव-
च्छबरीप्रयुक्तवरगीतिविभ्रमैः ॥ २ ॥
भवितव्यतामनुसरत्यहर्निशं
मनुजस्य बुद्धिरिह जातसंभ्रमा ।
विहितादरा च बहुशो निवेदिता
गदितुं तया हृदि ननन्द मन्थरा ॥ ३ ॥
अहमस्मि सुन्दरि ! निमन्त्रिता मुहुः
कथनाय लज्जितमुखी भवाम्यतः ।
गृहभेदिकेति सहसा कलङ्किता
करभोरु चास्मि भयभीतमानसा ॥ ४ ॥
इति सा विरच्य बहुगूढजल्पनं
दधती प्रतारणकलातिकौशलम् ।
सहजानुरागपरिवञ्चितां ततः
समुवाच तां शनिदशेव कल्पिता ॥ ५ ॥
प्रकटीकरोति भवती वचो नु यत्
मयि रामचन्द्रविहिता रतिः परा ।
अपि सोऽस्ति ते प्रियतमो निरन्तरं
तदिदं सदस्त्यवितथं ममेश्वरि ॥ ६ ॥

परमस्ति तत्र चिरकालसक्रमे
  व्रजतीह किं न रसिके विपर्ययम् ।
समयं विचार्य रिपवोऽपि निन्दिता-
  श्छलमित्रतामुपगता भवन्त्यहो ॥ ७ ॥
कमलस्य बन्धुरिह विश्रुतो रविः
  कुरुते विशुष्कमथ तद्विना जलम् ।
परिषिञ्च तर्हि निजमूलमाहतं
  परयत्नवारिबलतश्शुचिस्मिते ॥ ८ ॥
प्रकृतिस्तवास्ति सरलाच्छलोज्झिता
  नृपतिं न वेत्सि तनुगात्रि तत्त्वतः ।
मधुरं वहिस्तु मलिनं हृदि स्थित
  स्ववशो विचिन्त्य तमिहासि निर्भया॥६॥
चतुरास्ति रामजननी स्थिराशया
  स्वमनोरथं धृतवती निरन्तरम् ।
समय विलोक्य निजवाञ्छितानुगं
  भरताय मातुलगृहे स्पृहां ददौ ॥ १० ॥
हरिणाक्षि रामजननी निषेवते
  सततं नु मामिति तवास्तु मा मदः ।
सहते कथं भुवि समानभर्तृका
  विहितां विशेषरतिमन्ययोषिति ॥ ११ ॥
अथ सा विजित्य नृपमात्मसात्कृतं
  कपटप्रबन्धशतचाटुभाषणैः ।
क्षमतेऽधुना निजमनोरथाप्तये
  करभोरु रामतिलकाभिकांक्षिणी ॥ १२ ॥
अपि वेत्सि किं न सखि रामयोग्यतां
  रविसत्कुलक्रमसमागतां प्रथाम् ।
परिचिन्त्य किन्तु तव भाविनीं दशां
  विकला पतामि घनशोकसागरे ॥ १३ ॥

इत्थं प्रबोध्य बहुशः कपटप्रबन्धै-
  र्विश्वास्य निन्द्यकथया शतशः सपत्न्याः ।
तस्या हठात् परिहृते मनसि स्वमायां
  विस्तार्य वाक्चतुरमन्थरया विरेमे १४

इति मन्थरादुर्विलसिते चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः

हृदये भृशमोदसंयुते
  दधती प्रीतिमसौ नृपप्रिया ।
कथयस्व वरानने पुनर्विरता
  किं त्वमिति व्यजिज्ञपत् ॥ १ ॥
अयि किं परिपृच्छसि प्रिये
  विदितं नास्ति तवाधुनापि किम् ।
पशवोऽपि विदन्ति निश्चितं
  जगदुत्थं स्वहिताहितं सदा ॥ २ ॥
परितो नगरी विभूष्यते
  विविधैर्मङ्गलवस्तुभिः प्रिये ।
विगतानि दिनानि भूरिशो
  भवतो किन्तु शृणोति मन्मुखात् ॥ ३
तव राज्यमिदं सुमध्यमे
  सतत स्वेच्छमहो निषेव्यताम् ।
किमिहास्ति मदीयदूषणं
  यदि सत्यं निगदामि ते पुरः ॥ ४
किमपीह यदीर्यते मया
  वितथं लोकविगर्हितं वचः ।
अहमस्मि मृषाभिभाषिणी
  बत दण्डधा, विधिनोचितं ध्रुवम् ॥ ५
यदि रामशुभाभिषेचनं
  सुमुखि श्वो विहितं नृपेण हा ।

विपदां ततिरागता ध्रुवं सुभगे
मूर्ध्नि तवेति निश्चितम् ॥ ६ ॥
निगदामि वचः प्रमाणवद्
विपरीतं न कदापि तद्भवेत् ।
विदशा त्वमिहासि हा यथा
परिशोच्या वत दुग्धमक्षिका ॥ ७ ॥
ससुता गृहकर्म्मतत्परा
हतदासीव सुखोज्झिता सती ।
भवने स्थितिमीहसे नु चेद्
रमन्या गतिरत्र नास्ति ते ॥ ८ ॥
विनतेव सुखाद्बहिष्कृता
भवती दुःखपरायणा मुहुः ।
स्वसुतं भृशदण्डपीडितं
सहना वीक्ष्य शुचं गमिष्यति ॥ ६ ॥
विरसं वचनं निशम्य तद्
विकम्पतस्वेदलवाप्लुताकृतिः ।
कदलीव गताङ्गवेपथुं
नृपकान्ता गतनिस्वना स्थिता ॥ १० ॥
निपुणाधमधौर्त्यपण्डिता
कपटप्रेमकथाविचक्षणा ।
सरलप्रकृतिं नृपाङ्गनां
वचसा सा परितोष्य हर्षिता ॥ ११ ॥
परिपाठ्य कुपाठमुत्तमं
सुदृढं तद्धृदय चकार सा ।
वचने विरसेऽपि सद्रतिं
दधती येन चचाल नो पुनः ॥ १२ ॥
प्रकृतिर्मृदुला विपर्य्ययं
वत तस्या गमिता तथाभवत् ।
रुचयेऽभवदेव निष्ठुरा
कृतिरस्या हि यथा निरन्तरम् ॥ १३ ॥
वचनं तव सत्यमस्त्यहो
वितथं किञ्चन नात्र लक्षये ।
सततं मम दक्षिणेक्षणं
स्फुरतीत्येव दृढीकरोत्यदः ॥ १४ ॥
रजनी सुखनिद्रया न मे
सखि दुःस्वप्नशतैर्भयावहा ।
व्रजतीति विमुग्धमानसा
भवतीं नैव वदामि कर्हिचित् ॥ १५ ॥
सरला प्रकृतिर्नु मे प्रिये ।
कपटे नास्ति गतिर्मनागपि ।
हितमस्ति न वास्ति वास्त्विदं
क्व वितर्कोऽस्तु ममाल्पमेधसः ॥ १६ ॥
न मया सखि विप्रियं कृतं
भुवि कस्यापि कदापि देहिनः ।
किमु कारणमीदृशी विपत्
विधिनानागसि हन्त पातिता ॥ १७ ॥
स्वमातृगेहं सुभगे गता सती
दिनानि नेष्यामि वरं सुखान्विता ।
कुतः सपत्नीजनसेवयाकुलं
निकेतनं मे हृदयाय रोचताम् ॥ १८ ॥
मनस्विनो हन्त जनस्य शत्रुणा
वशीकृतस्यात्र धिगस्तु जीवितम् ।
सुखाय मृत्युर्विदशस्य कल्पते
न जीवितं स्वेच्छविहारवर्जितम् ॥ १६ ॥

इति मन्थरादुर्विलसिते पञ्चमः सर्गः ।

## षष्ठः सर्गः

सकरुणं भृशशोकभराकुला
बहुविधं विनिवेद्य नृपप्रिया।
निजसखीं परिपृच्छति सादरा
गद करोमि नु किं मम मन्थरे ॥ १ ॥

त्वमिह मे सखि दुःसहसङ्कटे
निरवलम्बजनस्य गतिप्रदा।
वद कियन्ति सुखानि दिनानि मे
न मिलितानि तवैव सुसङ्गमे ॥ २ ॥

इति निशम्य विपत्तिभयातुरं
भरतमातृवचोऽतिविचक्षणा।
सुसमयं समवेक्ष्य मुदान्विता
कपटवाचि दधावधिकां रुचिम् ॥ ३ ॥

गदसि किं सखि दीनतरं वचः
सुखदशा तव यातु समुन्नतिम्।
अकुशलं तव वाञ्छति या स्वयं
भवतु सा शतशोकसमाकुला ॥ ४ ॥

श्रुतमिदं सखि दुश्चरितं यदा
तव हितस्य गतं प्रतिकूलताम्।
न दिवसेऽस्ति रुचिर्मम भोजने
निशि भवामि सुखेन न निद्रिता ॥ ५ ॥

गणकविज्ञतमास्सखि सेविता-
स्तव हितं परिवेत्तुमहो मया।
परमिदं कथितं निखिलैर्जनै-
र्ग्रहदशा भरतस्य बलीयसी ॥ ६ ॥

सुमुखि युक्तिमहं कथयामि ते
यदि विधातुमिमां यतसे क्षणम्।
नृपतिरस्ति तवैव वशस्थितो
भवति किं न तवात्र मनोगतम् ॥ ७ ॥

इति निशम्य जगाद नृपप्रिया
सखि वचस्तव किं न करिष्यते।
अपि पतामि नु कूपवरोदरे
परिहरामि सुतं पतिमप्यहो ॥ ८ ॥

ममदशां समवेक्ष्य सुदुःसहां
यदि हितं वचनं गदसि प्रिये।
वद कथं भवदुक्तिपराङ्मुखी
सखि भवामि सुखावलिवञ्चिता: ॥९॥

कपटकर्म्मपरीक्षितपाटवा
विदधती शतकोटिविधां कलाम्।
भरतमातरमर्थवतीं गिरं
कपटगूढतमां निजगाद सा ॥ १० ॥

अथ न पश्यति तथ्यमियं प्रिया
प्रबलदैवनिमीलितलोचना।
निकटवर्त्तिवधं न विलोकयन्
बलिपशुस्तृणमत्ति यथासुखम् ॥ ११ ॥

सुमधुरं परिणामसुदुःसहं
वचनमेव निशम्य विमोहिता।
निजसखीकरलालितविभ्रमं
पिबति सा विषमेव मधुभ्रमात् ॥ १२ ॥

स्मरसि किं सखि नाद्य नृपोदितं
तव हिताय पुरा नु वरद्वयम्।
तदिह तिष्ठति येन समीहितं
करगतं तव भाति सुलोचने ॥ १३ ॥

भरतराज्यमथ प्रथमं वरं
सुमुखि तं नृपतिं यदि याचसे।
फलति ते हृदि वाञ्छितपादपः
सुखततिं विकिरन्नु समन्ततः ॥ १४ ॥

सुतनु रामवनस्थितिरोहिता
भवति चेत्तव मङ्गललिप्सया ।
अयमहोद्यपरस्तव सद्वरो
हृदयशल्यसमुद्धरणक्षमः ॥ १५ ॥
सशपथं प्रियरामशुभाभिधा-
ग्रहणमन्त्रपवित्रितमीर्य्यते ।
यदि नृपेण वृणीष्व वरौ तदा
भवति ते कथितं न यथान्यथा ॥ १६ ॥
यदि गता रजनीयमहो वृथा
भवति ते परहानिरिहोद्गता ।
झटिति कोपगृहं व्रज सुन्दरि
क्व लभतेऽवसरं सततं जनः ॥ १७ ॥
विविच्य तद्वाक्यममङ्गलं हितं
नृपप्रिया मोदसमन्विता सती ।
उवाच धन्यासि परार्थसाधिका
विचित्रबुद्धिर्मम जीवितप्रदे ॥ १८ ॥
न मे जगत्यां तव तुल्यतां गता
हिता मया कुत्रचनापि दृश्यते ।
करागता श्वो यदि मे मनःस्पृहा
त्वमालि मन्नेत्रकनीनिकास्यहो ॥ १९ ॥
इति तां परितोष्य मन्थरां
मुदिता कोपगृहं चचाल सा ।
नगरी परमोत्सवाप्लुता
विधिना हन्त शुचे समर्पिता ॥ २० ॥

इति मन्थरादुर्विलसिते षष्ठः सर्गः ।

भारतीभूषणोपाधिकः
परमानन्दकविविनोदः

# प्रकृतिः ।

प्राकृतिकमिदं जगत् । ये ये भावा मानवानां दृष्टिपथमुपगच्छन्ति, ये च पदार्था अस्माभिरुपयुज्यन्ते, ते सर्व एव प्राकृतिकाः। नात्र भूगोले खगोले वा कोऽपि पदार्थो, यः प्राकृतिको न भवेत्, इयं हि भगवती वसुधा चन्द्रमा नक्षत्राणि सूर्यश्चेत्यादयः सर्व एव पदार्थाः प्राकृतिकाः परस्परं संबद्धाश्च । इमां निखिलस्य जगतो मूलभूतां प्रकृतिं परिचेतुं कस्य मनो नोत्कं भवति, को वास्या गर्भस्थान् पदार्थान् विज्ञातुं नेच्छति, प्राकृतिकेषु पदार्थेषु परस्परं कः संबन्धः, किञ्चैषां रूपं स्वभावश्चेत्यादयो हृदयासेचनका विषयाः कस्य मानसं न प्रह्वीकरिष्यन्ति । इयं हि भगवती पृथिवी, या मातृस्थानीया मानवानाम्, अस्याः कीदृशं रूपं, कश्चास्याश्चन्द्रसूर्यादिभिः संबन्धः, कथञ्च दिनं रात्रिश्च क्रमेण भवतः, कथञ्च वसन्तग्रीष्मादयः षडृतवो भवन्ति, कदाचित् सुरधुनीशीकरासिक्तगात्रो मन्दमन्दमुपसर्पन् कदाचिच्चोन्मत्त इव परिभ्रमन्, कदाचिदनलतापतप्तान्तरङ्गो विसंज्ञ इव विलुठन् कदाचिच्च जड़संयोगाद् बहिःशीतलतामादधानोऽपि विषधर इव फूत्कारैरेव जनान् विचेतीकुर्वन् भगवान् मातरिश्वा किंस्वरूपः, कथं वा भूधरेषु समुद्रेषु चावस्थाभेदा भवन्तीति प्रबन्धेऽत्र एत एव विषया विवेचयिष्यन्ते ।

इयं हि पृथिवी आकारेण वर्तुला, परं नेयं कन्दुक इव परितो वर्तुलतां वहति,

केचित्त्वियं नारङ्गफलोपमा। भूमण्डलं वर्तुलमिति नायं विषयः प्रमाणशून्यः। चतुरस्रेषु पदार्थेषु स्थितो दूरस्थोऽपि पदार्थो ननु प्रत्यक्षीक्रियते साकल्येन, परमर्णवपोतो यदा दूरादागच्छन्नस्माकं दृष्टिपथमुपयाति, तदा न तस्य निखिलोऽपि भाग एकदैवास्माभिरवलोक्यते; अपि तु तस्योच्चतमो भागः। ततो यथा यथा समीपमुपगच्छति तथा तथा तस्यापरेऽपि भागाः प्रत्यक्षतां स्वयमुपयन्ति, तस्मान्नेयं पृथिवी चतुरस्रा किन्तु वर्तुलैवेति निश्चीयते।

कस्मिन्नपि समतले क्षेत्रे स्थितः कोऽपि यदा पश्यति तदा न स गव्यूतियुगादधिकं द्रष्टुं पारयिष्यति, पर यदा स एव वृक्षमारुह्य पश्यति तदा ततोऽप्यधिकतरं दूरं द्रष्टुं शक्नोतीतीत्थमपि पृथिव्या वर्तुलता विज्ञायते।

पृथिव्या उत्तरप्रान्तमारभ्य दक्षिणप्रान्तं यावद् यदैका रेखा विन्यस्यते, तदा सा हि पूर्वतः पश्चिमावलम्बिन्या रेखाया लघ्वी भवति। पृथिव्या उत्तरदक्षिणगामिन्या रेखाया दैर्घ्यं ६९२५क्रोशमितम्, पूर्वपश्चिमगामिनी च रेखा ७९९६क्रोशमिता। अस्मादपि पृथिवी वर्तुलेति परिचीयते। इत्थमेव बहूनि प्रमाणानि पृथिव्या वर्तुलत्वसाधकानि।

पृथिव्याश्चन्द्रेण सूर्येण च समं कः संबन्धः? पृथिवी निश्चलेति बहवो बालवृद्धयो विश्वसति। पृथिवीपृष्ठस्थैस्तैः पृथिव्या गतिर्विज्ञातुं न पार्यते, अत एवोदयति सूर्यः, अस्तमेति सुधासूतिः सुधांशुरिति ते वदन्ति। पुरा बहूनामासीद्विश्वासो यदचला पृथिवी, सूर्यश्चन्द्रश्चेति परिभ्रमतः, साम्प्रतमपि बहूनां हृदयादयं विश्वासो नापसर्पति। परं बहुभिः प्रमाणोपन्यासैरधुना विद्वद्भिः स्थिरीकृतोऽयमर्थो यद्विश्वासोऽयमयौक्तिक इति। सूर्यः स्थिरः पृथिव्येव तं परितः प्रदक्षिणीकरोति। पर वयं पृथिव्यैव समं भ्रमाम इति नास्या भ्रमणमनुसन्धातुं शक्नुमः किञ्च स्थिरीभूतमपि सूर्यं भ्रमन्तमिव समाकलयामइति हन्त सर्वथा मतिविपर्ययकृत एवायं विश्वासः। अश्वशकटमारूढानां पुरः स्थिरा अपि वृक्षादयश्चलन्त इव प्रतिभान्ति। दृष्टिदोषादेव वृक्षादीनां गमनं प्रतीयते; तथैव सूर्यभ्रमणमपि दृष्टिदोषपरिकल्पितमिति प्रतीमः। गो क्ष्मा प्रभृतीनि पृथिव्यभिधानान्यपि समर्थयन्त्यमुमेवार्थम्।

सूर्यः प्रकाशयति समुत्तापयति च भूमण्डलम्। भ्रमन्ती पृथिवी यदा सूर्यसमीपमुपगच्छति तदा तदीयः स भागः सूर्यप्रकाशेन प्रकाशितो भवति, यदा चेयं सूर्यतो दूरं गच्छति, तदास्यास्तस्मिन् भागेऽन्धकारः प्रसर्पति। अत एव दिन रात्रिश्च भवति।

पृथिवी सूर्यं परितः परिभ्रमति, परमियं स्वयं भ्रमन्ती सूर्यं प्रदक्षिणीकरोति। यथा भ्रामितः काष्ठखण्डो यदा महता वेगेन परिभ्रमति, तदा स भ्रमणवेगवशात् स्थिर इव विलोक्यते। परं स परिभ्रमति। तस्यैव मध्ये यदि कापि रेखा विन्यस्ता भवेत्

तर्हि काष्ठखण्डः स्वयं भ्रमन्नेव तां रेखां प्रदक्षिणीकरिष्यति, इत्थं पृथिव्यपि स्वयं परिभ्रमन्ती सूर्यं प्रदक्षिणीकरोति।

इमां कल्पितां रेखां चतुर्विंशतिघण्टामितेन समयेन प्रदक्षिणीकरोति पृथिवी। इत्थं भ्रमन्त्याः पृथिव्या यो भागः सूर्यसमीपस्थो भवति, तदा तत्र सूर्यप्रकाशेनान्धकारापनयाद्दिनं भवति, यश्च भागो दूरस्थो भवति तत्र रात्रिर्भवति। अत एव चतुर्विंशतिघण्टामितसमयादनन्तरं दिनं रात्रिश्च क्रमेण भवतः। इयं पृथिव्या आह्निकगतिः।

एकेन वर्षेण पृथिवी निखिलं सूर्यमण्डलं प्रदक्षिणीकर्तुं शक्नोति, इयं हि पृथिव्या वार्षिकगतिः। पृथिवी येन पथा सूर्यं प्रदक्षिणीकरोति, न स पन्था चतुरस्रो, वृत्ताकारो वा, अत एव पृथिवी कदाचित् सूर्यसमीपस्था कदाचिच्च दूरस्था भवति। अत एव शीतग्रीष्मप्रभृतय ऋतवो भवन्ति।

पृथिवीस्थेषु पदार्थेषु वायुरेव प्रथमः। वायुसत्त्वैवास्माकं जीवितमस्ति। वायुमन्तरा न कोऽपि जनः क्षणमपि प्राणान् धारयितुं शक्नोति। एनं हि न विलोकयामः, नापि गृहीतुं पारयामः, अपि तु केवलमयं त्वचा प्रत्यक्षी क्रियते। अयं निखिलमपि भूमण्डलमावृत्य तिष्ठति।

प्रतिनिःश्वासमस्माभिरादीयमानो वायुर्बहूनां पदार्थानां संयोगादुत्पन्नः। तेष्वम्लजनको यवक्षारजनक एव मुख्यौ। वायौ तृतीयो भागो यवक्षारजनकस्यैकश्च भागोऽम्लजनकस्य, एतद्व्यतिरिक्तेषु पदार्थेषु द्व्यम्लाङ्गारक एव मुख्यः। अम्लजनकस्य द्वौ भागौ, अङ्गारजनकस्य चैको भाग इत्यनयोः संयोगादुत्पद्यते द्व्यम्लाङ्गारको वायुः। अयं वायुरस्माभिर्नासिकापथेन बहिर्निस्सार्यते। एष वायुर्मानवानां कृते दुष्टः, परं पादपानां भवत्येतेन वायुना महानुपकारः। एष वृक्षैर्गृह्यते। यदा वृक्षा विनश्यन्ते, तदा तच्छरीरस्थो द्व्यम्लाङ्गारको वायुः वायुमण्डले लीयते।

किञ्च वायुमण्डले जलीयवाष्पनामकोऽपरोऽपि कश्चन पदार्थस्तिष्ठति। अयं हि जलीयो वाष्पो, वाष्पीभूता जलबिन्दव एव। अयं जलीयो वाष्पः क्व समुत्पद्यते, कथं वा वायुमण्डले लीनो भवतीति साम्प्रतं किंचिदत्रोच्यते। किमपि जलपूर्णं पात्रं यदाग्निना समुत्तापितं भवति तदा तस्माद्धूमाकारः कश्चन पदार्थो निर्गच्छति, अयमेव जलीयवाष्पनामकः पदार्थः। अधिकेनोत्तापेन न तत्र लेशतोऽपि जलमवशिष्यते। तन्निखिलमपि जलं वाष्पाकारे परिणतं वायुमण्डलं संगच्छते। इत्थमेव जलीयो वाष्पो वायुमंडलमधिकरोति।

कदाचिद् वायुरुष्णः कदाचिच्च शीतो भवति, किमत्र कारणमिति चेच्छृणु—सहस्रांशुकिरणसंयोगाद् भवति शरीरमुत्तप्तं मानवानाम्, अत्र सूर्यकिरणताप एव कारणम्। कदाचिद् गृहमध्यस्थस्यापि शरीरं तप्तं भवति, अत्र गृहमध्यस्थस्य वायोस्ताप एव

[र]णम्। यद्यपि गृहमध्ये सूर्यकिरणानि न [वा]युमुत्तापयितुं प्रभवन्ति, तथापि सूर्यकि[रणसंपर्कज]ातापक्रम एव तत्रत्यस्य वायोरुत्ताप इति [निर्ध]ीयते। सूर्यकिरणसंयोगादुष्णीभूतो वायुः, [गृह]ं प्रविश्य तद्गृहवायुमपि समुत्तापयति, किंवा [चल]नादपि गृहस्थितो वायुरुत्तप्तो विधीयते।

गृहस्थितो बहिःस्थो वा वायुः कदाचि[दु]ष्णः कदाचिच्च शीतोऽनुभूयते। निदाघे [व]ायुः समुत्तप्तो भवति यत्संयोगाच्छरीरं [घ]र्मसमाप्लुतमिव भवति, हेमन्ते च वायुस्तथा [श]ीतो भवति, यथा तच्छब्दोऽपि हृदयमुत्क[म्प]यति। दिने वायुतापो वर्द्धते, रात्रौ च [तत्ताप]स ह्रसते। इत्थं वायुतापे ह्रासो वृद्धिश्च सर्वदा भवति। तापमापकयन्त्रेण तापह्रास[वृद्धी] वृद्धी विज्ञायेते। सूर्यताप एव वायुतापे प्रधानं कारणम्। सूर्यरश्मयो हि वायुमंडलमतिक्रम्य भूमंडलमागच्छन्ति। तदा वायुमंडलेन सूर्यतापस्य कियाँश्चिद्भागो गृह्यते। अतः सूर्यरश्मिसंयोगाद् वायुमंडलमुत्तप्तं भवति। तत्संयोगाद् भूपृष्ठस्थोऽपि वायुस्तप्तो भवति। परमुष्णीभूतो वायुः पुनः शीतलो भवति, अत्र वायुशैत्ये किं कारणम्?

यदा हि सूर्यरश्मयो न भवन्ति, तदा वायुः शीतलोऽनुभूयते। रात्रौ सूर्यो न भवति, तस्माद्रात्रौ वायोरापेक्षिकी शीतलता। परं वायोस्तापह्रासे प्रधानं कारणं तत्परमाणूनां संक्षोभ एव, सायं यदा सूर्यतापो ह्रसते, तदा तापः क्रमेणापचीयते। अत एवात्र सर्वत्र शैत्यमुपलभ्यते, वायुरपि शीतलो भवति। यथा यथा रात्रिरतिगच्छति तथा तथा शैत्यं वर्द्धते, रात्रिशेषे चाधिकं शीतं भवति, इत्थं सूर्यतापसंयोगात्तापः, परमाणुसंक्षोभाच्च शैत्यमिति फलितम्।

अग्निसंयोगाज्जलं वाष्पाकारे परिणमतीति पूर्वमुक्तम्। इत्थमेव सूर्यरश्मितापोऽपि जलं वाष्पाकारे परिणमयितुं क्षमते, तथैव केवलं वायुसंयोगादपि जलं जलीयवाष्परूपे परिणमति। परं यथाग्निसूर्यसंयोगात्त्वरितमेव जलं वाष्पीभावमेति, न तथा वायुसंयोगादिति भेदः।

जलपूर्णमपिहितमुखं पात्रं कुत्रचिन्निहितं भवति, क्रमेण तत्पात्रं रिक्तीभूतं भवति। जलस्य वाष्परूपेण परिणाम एवात्र हेतुरिति निर्धार्यते प्रेक्षावद्भिः। परं सूर्यरश्मिसंयोगाच्च यथा त्वरितं जलं वाष्पभावमाद्धाति न तथा वायुसंयोगादिति पूर्वमुक्तमेव। आर्द्रं वस्त्रमपि त्वरितमेव सूर्यकिरणैः शुष्कं भवतीत्यत्रापि तदेव कारणम्।

यदा जलं तरलतां परित्यज्य वाष्परूपतां परिगृह्णाति, तदा जलीय उत्तापोऽपि तेनैव सह निर्गच्छति। तत एव वाष्पस्योष्णता व्यपदिश्यते। शरीरस्य कुत्रचिद्भागे निहिता जलविन्दवो यदा वाष्परूपतां परिदधति तदा तत्स्थानं शीतलं भवति, कृतस्नानस्य जनस्य शरीरं शीतलतामेति, अत्र वाष्पेन सहोत्तापनिष्क्रमणमेव हेतुः।

जलीयो वाष्प उत्तापं परिगृह्णाति, दधाति च तं यत्नेन। सूर्यरश्मयो वायुमंडलं निर्भिद्य

भूमंडलं परिपतन्ति। तदा सूर्यरश्मिसंयोगकाले जलीयवाष्पः सूर्यकिरणतस्तापं परिगृह्णाति। जलीयवाष्पमन्तरा न हि वायुः कस्यापि तापं गृहीतुं शक्नोति।

ननु विदितमेतद्विदुषां शारदा वाचकानां यत् सततं जलं वाष्परूपं परिगृह्णाति। ह्रदसरोनदीप्रभृतिभ्यो जलाशयेभ्यः सततमुत्थिता जलीयवाष्पा वायुमंडले लीयन्ते। अतो वायुः सर्वदैव वाष्पयुक्तस्तिष्ठति। जलशून्ये मरावपि समुपलभ्यते वायौ जलीयो वाष्पः। परं वायौ स्थितो जलीयो वाष्पः सीमानं नातिक्रामति। यदायमतिक्रामति सीमानं, तदा नास्य संयोगाज्जलं पुनर्वाष्परूपं धारयितुं पारयति। प्रावृषि नहि वायुरार्द्रं वसनं त्वरितं शुष्कीकर्तुं प्रभवति। तदा हि वायोर्जलस्य वाष्पभावानयनक्षमा शक्तिरपगता भवति।

वायुः स्वां प्रकृतिमनुसृत्य कदाचिदधिकं जलीयं वाष्पं गृह्णाति कदाचिच्च न्यूनम्। अत्र तापस्य न्यूनाधिक्यमेव हेतुः। वायौ यावदधिकस्तापो भवति, तावदेव स वाष्पं धारयितुं शक्नोति, शैत्याधिक्ये च तस्य वाष्पधारणशक्तिर्ह्रसते। इत्थं वायुः कदाचित्तादृशीमवस्थामासादयति यत्र स वाष्पं रक्षितुमशक्तो भवति, तदा वाष्पं स्वत एव जलरूपे परिणमति।

निरूपितं हि संक्षेपतो वायोरूपम्, एतेन प्रकृतिसंबद्धानि बहूनि कार्याणि तत्वतो विज्ञातुं शक्यानि। प्रचुर जलाशयप्रदेशे वायुरार्द्रो भवति, यतःस प्रदेशो जलमय इति सततमेव जलीयो वाष्प उत्पद्यते, वायुमण्डलञ्चाश्रयति। अनधिकजलाशयदेशस्थो वायुः किञ्चिदुष्णः, यतस्तत्र वाष्पोऽधिकं तापं गृह्णाति। परमेते न तेषु प्रदेशेषु दिवसे रात्रौ ऋतुषु च न कोऽपि विशेषो भेदः परिलक्षितो भवति।

परं निर्जलप्रदेशस्थे वायौ समुपलभ्यतेऽधिका मात्रा तापस्य, दिवसे यादृशस्तापो वायौ भवति न तादृशो रात्रौ। निर्जलप्रदेशे सूर्यकिरणमधिकमुत्तप्तं भवति, तत्संयोगद्भूतलमपि तप्तं जायते, अतो वायावपि दिवसे तापाधिक्यमुपलभ्यते। अस्तङ्गते सूर्ये भूमिरुष्णपरमाणून् विकिरति, इत्थं क्रमेण भूमिः शीतला भवति, वायुरपि तत्संयोगाच्छीतलतां गच्छति।

हेमन्ते प्रावृषि च वृक्षेभ्यो निपतन्ति जलविन्दवः। प्रातस्तृणानि जलविन्दुसमाच्छन्नानि दृश्यन्ते। किमत्रकारणम्, कुत एषामागमः! इत्येवंविधाः प्रश्ना साम्प्रतं त्वरितमेव समाधातुं शक्याः। स्वच्छे नभसि रात्रौ भूतलस्थस्ताप स्वयं निर्गच्छति; इत्थं निर्गच्छद्भिस्तापैर्भूमिः शीतला भवति, भूतलसंयोगाद्वायुमण्डलमपि शीतं जायते। शीतो वायुर्वाष्पान् धारयितुमशक्त इति ते घनतामासाद्य जलरूपे परिणमन्ति, त एव जलविन्दवो हेमन्तादिसमयेषु प्रत्यक्षीक्रियन्ते।

केचनैते जलविन्दवोप्याकाशस्थाददृश्यान्मेघमण्डलान्निपतन्तीति प्रमाणयितुं

यतन्ते । परं तेषामेष प्रयत्नो भल्लूककम्ब-ऽग्रहणोपमः । भूतलस्थवायुसंयुक्ता वाष्पा एव शैत्यमासाद्य जलरूपे परिणमन्ति, शीत-प्रकृतिषु च पदार्थेषु निपतिता अस्माकं दृग्गो-चरीभवन्तीत्येष एव सिद्धान्तः प्रत्यक्षतः सिद्धः ।

नहि सर्वेषु पदार्थेषु निपतितास्ते जल-विन्दवः स्थिरा भवन्ति, अपितु येषां पदा-र्थानां प्रकृतिः शीतला तेष्वेव ते तिष्ठन्ति । पदार्थेषु शीतलत्वं हि तेषां तापविकिरण शक्त्यपेक्षम् । कांस्यादिपात्रेषु तापविकि-णात्मिका शक्तिर्न्यूनेति न तेषु ते जलविन्दव उपलभ्यन्ते, परं काचपात्रेषु तापविकिर-णात्मिका शक्तिरधिकेति तेषु दृश्यन्त एव जलविन्दवः।

एतेनैव हेतुना हेमन्ते रात्रौ दृश्यमान-स्तुषार उत्पद्यते। शैत्याधिक्याद् वायुस्थिता वाष्पा एव जलविन्दुरूपे परिणता भवन्ति । अत एव दिग्मण्डलं नीहारावृतं दृश्यते, यदा च पुनर्वायुमण्डलं सूर्यतापात्तप्तं भवति तदा तन्नीहारमण्डलं जलीयवाष्परूपे परिणतं भवति । मेघनिर्मुक्तायामेवरजन्यां नीहार-मण्डलं विलोक्यते, मेघछन्ने च नभसि न भवति तेषां दर्शनं नाम। अत्रेदं कारणं भवति, मेघच्छन्नायां रजन्यां नहि भूतलं स्वीयं तापमुद्गिरितुं प्रभवति, अतश्च न शीतलं भवति, वायुमण्डलम् । वायोः शैत्य-मन्तरा न तदीया वाष्पाः जलविन्दुरूपे परि-णमितुं शक्ताः । वायोः शैत्यमेव हिमकुज्झटि-काप्रभृतीनां कारणमिति निश्चितमुच्यते प्रेक्षावद्भिः । मेघसृष्टिरपि वायुशैत्यहेतुकैवेति प्रबन्धान्तरे विशदीकरिष्यते विषयोऽयम् ।

श्रीचन्द्रचूड़ शर्मा ।

---

# चन्द्रभूषणोपाख्यानम्

अस्ति सुनासीरसूनुमध्यमपाण्डवाऽतुलवी-र्यसम्पादितखाण्डवदाहदिवससञ्जातप्रथमसूत्र-पातं, धर्मात्मजानुष्ठीयमानराजसूयाऽऽगतकौर-वेश्वरोपहासवात्यासमिद्धमहाभारतसमरानलद-ग्धजगन्मण्डलं, कान्यकुब्जाऽधिपतिदुहितृहठह-रणविपिन्नसामन्तसैन्यविरहितहिताऽहितविवे-कशून्यपृथ्वीराजविनिपातलब्धविजययवनेश्वरा-ऽपहृतसर्ववैभवं, यवनसार्वभौमचरमसन्ततिशि-थिलशासनावाप्तप्रवेशगौराङ्गसम्पादितसमस्त - शोभं, वाष्पशकटोन्मुक्तधूमस्तोमानन्तरश्रूयमा-णचीत्कृतिवधिरितदिङ्मण्डलतया दैवदुर्विपा-कस्मरणसमकालसञ्जातामर्षवेगोत्थधूमोद्गगा-रविसर्गानुपदकृताक्रन्दं, तडित्सूत्रधारस्तम्भाव-लिशल्यितहृदयतया शोकशङ्कुशतचितं बहु-तालोत्सेधस्वयम्बरयन्त्रागारघण्टारवपूरितनभ-स्तलतया अब्रह्मण्योद्घोषणोद्धृतैककरं, वाष्प-यानयातायातसौकर्यार्थविनिवद्धायससेतुभारो-द्वहनायासप्रतनुप्रवाहया अश्रुधारयेव अञ्जन-मेचकया आदित्यतनययाऽऽर्द्रीकृतपूर्वभगं, शास्त्र-

परिशीलनपराङ्मुखचातुर्वर्ण्यीरीकृतजघन्या-चारोद्धतवेशतया अपरिज्ञातार्यानार्यप्रविभागं यदृच्छापरिभ्रमदविज्ञातदिवाकातिस्पर्शदूषितपथिककुलमुत्पत्तिक्षेत्रमिव भारतवर्षविपत्तस्यानां निधानमिवाऽविनयानां राजधानीव आर्य्यावर्तदुर्दैवस्य इन्द्रप्रस्थं नाम नगरम्।

तत्र राजमार्गमध्यस्थहोरायनत्रमन्दिरमुत्तरेण विविधशिलाजातवस्तुमण्डितैकतमनिलयलाञ्छितश्रीः, सिंहर्क्षवृककपितरक्षुशकुनिकुलशोभितान्तरागारालंकृतैकभागो नगरसमासन्नतानुगुणीकृतच्छविर्गुल्मलतापादपसंनिवेशचमत्कृतिहृतदर्शनोपागतपथिकजनलोचनोऽनिवारितप्रवेशोऽस्ति राज्युपवनाभिधः प्रजारामः।

तस्य पूर्वदिग्भागे मृदुशाद्वलच्छन्नभूतलोपहसितमरकतकुट्टिमरम्यं सततापवेदनसाध्याऽध्ययनव्यापारखिन्नमानसच्छात्रवर्गप्रमोदजनकम् अनुत्साहाऽग्निक्षुन्मान्द्यालस्याङ्गगौरवाद्यनेकरोगोपशमनहेतुभूतव्यायाममहौषधिप्रभवक्षेत्रम् दारवमुद्गराघातोत्पतितकन्दुकोपलब्धिलुब्धमानससुमार्गदत्तदृष्टिकुड्मलीकृताऽग्रहस्तप्रसारितयुवकजनसपक्षदत्तदृष्टिसाधुवादमुखरितदिगम्बरं सीमान्तप्राप्तिविवदमानोभयपक्षयु[illegible]जनं, कन्दुकोपहतिनिपतितकाष्ठश[illegible]नसंजातामितप्रमोदपरवशबालकु[illegible]रागम् कन्दुकक्रीडास्थलं विद्यते।

तत्रैकदा क्रीडावलोकनकुतुकितमनसोवास्तगिरिशिखराध्यासनमनुभवति भगवति तिग्मरश्मौ, खेलारसमुदितमानसेषु शिशुषु, जयपराजयविधुरितहृदयेषु सहृदयेषु श्रूयमाणेषु च हतं हतं जितंजितमित्यादिशब्देषु, दक्षिणकरप्रतनुवंशदण्डः सव्यहस्तधृतकमण्डलुर्मुण्डितशिराः काषायाम्बरसंवीततनुः पूर्वे वयसि वर्तमानः कमपिजनं दिदृक्षुरिवेतस्ततो दत्तदृष्टिः, अचिरगृहीतचरमाश्रमव्यंजनो दीर्घमुष्णंच निश्वसन् अभिज्ञ इव क्रीडानियमानां मर्मज्ञ इव तदीयसङ्केतानामपृष्ट्वैव तत्रस्थं कमपि जनं रङ्गस्थलमध्यमुपगतः कश्चन भिक्षुः।

अथाश्रुतविरुद्धमस्येदङ्कर्म इति मन्वानाः केचिदुच्चैर्जहसुः, अरे च कोयं किंचास्येहागमनकारणमिति जिज्ञासमानस्त्वरितमिमं परितः पर्यवारयन्। इतरे च पूर्वपरिचितमिवेमं मन्यमानाः प्रत्यभिज्ञानुमनोशाश्च विस्फारितनयनाः सस्पृहं सप्रणयं चाभीक्ष्णमालोकयांचक्रुः, कथमकांडे क्रीडाप्रत्यूहोयमुपस्थित इति म्लानवदनकमलाः श्रमनिःसहैरङ्गैः केचन शाद्वलशय्यामुपशेरते स्म।

इत्येवं विविधभावनापरतन्त्रहृदयेषु तूष्णीम्भूतेषु च तेषु स मस्करी एवमवादीत्। क्षम्यतामिदतकालदर्शनं विनोदविघ्नापराधश्च महानुभावैः। त्यक्तसङ्गस्य निस्पृहस्यापि मे चेतसि एक एवायमभिलाषो यद् भवतोऽवलोक्य सम्भाष्य चापृच्छ्य च गच्छामि तपसे सुरसरित्पूतकन्दरं गिरिपुरन्दरम् तदधुनावलोकिताः कुशलिनः सम्भाविताश्चायुष्मन्तः, तदनुजानीत मां प्रस्थानाय, इत्युक्तवति तस्मिन् चन्द्रभूषणभ्रमरभूषण इति ता-

रस्वरं ध्रुवद्भिरभितः प्रधावितैः सहाध्यायिभिरनिच्छन्नपि गाढमालिङ्गितो भूमावुपवेशितश्च ।

चन्द्रभूषणस्तु लज्जितहृदयेन लिङ्गिवेषविरुद्धेनालिङ्गनादिकर्मणा प्रविशन्निव गात्राणि भुवमवलोकयन् किङ्कर्तव्यमूढः क्षणमवाक् तस्थौ ।

अथ कन्दुकक्रीड़ाकौशललब्धप्रतिष्ठोऽग्रणीश्छात्राणां पद्मनाभनामा चन्द्रभूषणस्य पूर्वसुहृत् सकौतुकमिदमवादीत् । सखे, कतिचिदेव दिनानि भवतः पाठशालातः प्रस्थितस्य, तत्कुतोयमीदृशो वेषविपर्ययः, परिचयाज्जानाम्यहन्ते चित्तवृत्तीः, न च तासु सनातनधर्मानुष्ठानभक्तिस्तथा वलीयसी येन श्रद्दधामि भवतो दंडधारणम्, नापि किंचित्पश्यामि विरक्तिकारणं येन भोगेषु वीतरागस्त्वामवगच्छेयम्, नवा जराक्रान्तकायोऽसि सत्यतं येन निर्वेदमापद्येत भवान् तत्कथमकांड एवानामन्त्र्य मित्रवृन्दमविमृश्य षड्वर्गपराक्रममपरिशील्योपनिषदोऽनुत्पाद्य पुत्रान् अविज्ञायाश्रमधर्मान् अविचिन्त्य परमहंसचर्याक्लेशान् अनास्वाद्य विषयसुखमनधीत्य योगशास्त्रञ्चत्वानसि दंडपरिग्रहम् । तदपनय नः कुतूहलमिति पुनः पुनरनुरुध्यमानो मानयन् सुहृद्वर्गमेवमवोचत् ।

शैवेनग्र

शास्त्री गङ्गाप्रसाद शर्मा।

# प्रणेतारः*

अकलङ्कः
अकाल जलदः
अचलः
अनन्तः
अनिरुद्धः
अपराजितः
अपरार्कः
अप्पयः
अभयः
अभिनन्दः
अभिनवकालिदासः
अभिनवगुप्तः
अमरः
अमरचन्द्रः
अमरुः
अमलानन्दः
अमितगतिः
अमृतदत्तः
अरिसिंहः
अर्जुनमिश्रः
अर्जुनवर्मा
अलकः
अवनिवर्मा
अश्वघोषः
असङ्गः
आनन्दतीर्थः
आनन्दवर्धनः
आपस्तम्बः
आर्यभटः
आर्यशूरः
आश्वलायनः
आसुरिः
इन्दुराजः
इन्दुलेखा
इन्द्रः
इरुगुपः
ईश्वरकृष्णः
उत्पलः
उत्प्रेक्षावल्लभः
उदयनः
उद्दण्डः
उद्योतकरः
उद्भटः
उमापतिधरः

*इयं ग्रन्थप्रणेतृसूची साहित्याचार्य पं० रामा[illegible]देन शारदायां प्रकाशयितुं प्रेषिता [illegible]णां वृत्तादि येषां परिज्ञातं भवेत्ते कृप[illegible]रदायां प्रकाशयितुं प्रेषयेयुः । [illegible]हित्याचार्यम[illegible]दयेन हि "संस्कृतग्रन्थकृदभिधानं" प्रकाशयि[illegible]भिलष्यते (शारदासम्पादकः)

उवटः
कठाः
कणादः
कपिलः
कमलाकरः
कमलायुधः
कर्णपूरः
कलशः
कल्याणः
कल्यणवर्मा
कल्लटः
कविपुत्रौ
कविराजः
कल्हणः
काञ्चनः
काण्वाः
कात्यायनः
कादम्बरीरामः
कामन्दकः
कालिदासः
किशोरकः
कुमारदासः
कुमारिलः
कुलशेखरः
कुल्लूकभटः
कूरनारायणः
कृष्णः
कृष्णानन्दः
केदारः

कैयटः
कौण्डः
कौत्सः
कौथुमाः
कौशिकः
क्षपणः
क्षीरस्वामी
क्षेमराजः
क्षेमीश्वरः
क्षेमेन्द्रः
गङ्गाधरः
गङ्गेशः
गणपतिः
गदाधरः
गर्गः
गुणचन्द्रः
गुणभद्रः
गुणाढ्यः
गोकुलनाथः
गोतमः
गोपादित्यः
गोभिलः
गोवर्धनः
गोविन्दठक्कुरः
गोविन्दराजः
गौडपादः
गौतमः
घटकर्परः
चक्रपाणिः

चन्द्रः
चन्द्रकः
चन्द्रगोमी
चन्द्राचार्यः
चरकः
चरकाः
चाणक्यः
चामुण्डराजः
चारित्रवर्धनः
चाविकः
चिण्णभट्टः
चिरंजीवः
जगदीशः
जगद्धरः
जगन्नाथः
जयदत्तः
जयदेवः
जयद्रथः
जयन्तः
जयरथः
जयादित्यः
जयापीडः
जल्हणः
जिनः
जितवल्लभः
जिनसेन
जिनेन्द्रबुद्धिः
जीमूतवाहन
जेन्दुकरः

जैमिनिः
जोनराजः
तलवकारा
ताण्डिनः
तैत्तिरीयाः
त्रिविक्रमः
दक्षः
दङ्कः
दण्डी
दामोदरः
दिङ्नागः
दिनकरः
दीपकः
देवनन्दी
देवबोधः
देवादित्यः
देवेश्वरः
द्राह्यायणः
धनञ्जयः
धनदः
धनपालः
धनिकः
धनेश्वरः
धन्वन्तरिः
धरणीधरः
धर्मकीर्तिः
धर्मपालः
धावकः
धोणकिः

नकुलः
नमिसाधुः
नरहरिः
नागार्जुनः
नागेशः
नाथः
नायकः
नारदः
नारायणः
नीलकण्ठः
नीलकण्ठदीक्षितः
नेमिचन्द्रः
नैजेयाः
पञ्चशिखः
पतञ्जलिः
पद्मगुप्तः
परमार्थः
पराशरः
पाजकः
पाञ्चरात्राः
पाणिनिः
पारस्करः
पाथसारीकः
पालकाप्यः
पिङ्गलः
पिप्पलादः
पुरुषोत्तमः
प्रकाशवर्षः
प्रद्युम्नः

प्रभाकरः
प्रभाचन्द्रः
प्रवरसेनः
फल्गुहस्तिनी
बकः
बादरायणः
बाणः
बिल्वमङ्गलः
बिल्हणः
बुद्धः
बुद्धघोषः
बृहस्पतिः
बौधायनः
ब्रह्मगुप्तः
भट्टिः
भट्टोजिः
भद्रबाहुः
भरतः
भर्तृहरिः
भवभूतिः
भकवुः
भागुरिः
भारद्वाजः
भारविः
भासः
भास्करः
भीमः
भीमटः
भृगुः

मेडः
भोजः
मङ्खः
मणिभद्रः
मण्डनः
मथुरादासः
मधुसूदनः
मनुः
मनोरथः
मम्मटः
मयूरः
मल्लिनाथः
मशकः
महादेवः
महानायाः
महिदासः
महिमभट्टः
महीधरः
महेश्वरः
माघः
माण्डूकाः
माण्डूकेयाः
माण्डूकेयाः
मातङ्गदिवाकरः
मातृगुप्तः
माधवः
माध्यंदिनाः
मानतुङ्गः
मारुला

मित्रमिश्राः
मुकुलः
मुक्तापीडः
मुरारिः
मूकः
मेण्ठः
मेदिनिकरः
मेरुतुङ्गः
मोदिकाः
यमः
यवनः
यशोवर्मा
याज्ञवल्क्यः
यादवः
यामुनः
यास्कः
युवराजः
योगेश्वरः
रत्नकण्ठः
रत्नखेटः
रत्नाकरः
रविकीर्तिः
रविगुप्तः
रविषेणः
राजमुकुटः
राजशेखरः
राणायनीयाः
रामकण्ठः
रामचन्द्रः

- रामभद्रः
- रामानुजः
- रामिलसौमिलौ
- रुद्रः
- रुद्रटः
- रुद्रदेवः
- रुय्यकः
- रूपगास्वामी
- लल्लः
- लाट्यायनः
- लिखितः
- लोकाचार्यः
- लोलम्बराजः
- लोल्लटकः
- वङ्गालः
- वत्सभट्टिः
- वप्पभट्टिः
- वरदराजः
- वररुचिः
- वराहमिहिरः
- वर्धमानः
- वल्लभदेवः
- वल्लभाचार्यः
- वसिष्ठः
- वसुकल्पः
- वसुगुप्तः
- वसुबन्धुः
- वाक्पतिः
- वाक्पतिराजः
- वाग्भटः
- वाचस्पतिः
- वाजसनेयिनः
- वादीभसिंहः
- वामनः
- वाल्मीकिः

- वाष्कलः
- वासुदेवः
- विकटनितम्बाः
- विक्रमः
- विक्रमा[illegible]:
- वि[illegible]:
- [illegible]
- [illegible]न.भट्टः
- विज्ञानेश्वरः
- विद्यानाथः
- विद्यापतिः
- विशाखदेवः
- विश्वः
- विश्वनाथः
- विश्वामित्रः
- विश्वेश्वरः
- विषमादित्यः
- विष्णुशर्मा
- वीरनन्दी
- वेङ्कटः
- वेतालः
- वेदान्तदेशिकः
- वैखानसाः
- वैतानाः
- वोपदेवः
- व्याडिः
- व्यासः
- व्रजनाथः
- शङ्करः
- शङ्कराचार्यः
- शंकुकः
- शङ्कुः
- शंखधरः
- शबरः
- शम्भु

- शरणः
- शर्ववर्मा
- शशिवर्धनः
- शा[illegible]
- शा[illegible]:
- शा[illegible]:
- शाङ्[illegible]:
- शा[illegible]:
- शार्ङ्गदेवः
- शार्ङ्गधरः
- शाश्वतः
- शिवमलदास
- शिल्हणः
- शिवस्वामीः
- शीलाभट्टारिकाः
- शुनशेयः
- शूद्रकः
- शूरः
- शेषकृष्णः
- शौनकः
- श्रीकण्ठः
- श्रीधराचार्यः
- श्रीधरभट्टः
- श्रीधरदासः
- श्रीपालः
- श्रीपालितः
- श्रीवरः
- श्रीहर्षः

- श्रुतधरः
- सदानन्दः
- सर्वज्ञनारायणः
- सर्वज्ञमुनिः
- सायराजः
- सायनः
- सार्वभौमः
- सिद्धर्षिः
- सुभद्रा
- सुश्रुतः
- सोमदेवसूरिः
- सोमदेवभट्टः
- सोमानन्दः
- सोमेश्वरः
- सोमेश्वरदेवः
- हनूमान
- हरदत्त
- हरिः
- हरिचन्द्रः
- हरिदासः
- हरिहरः
- हर्षः
- हलायुधः
- हालः
- हिरण्यकेशिनः
- हेमचन्द्रः
- हेमाद्रिः

इयं प्रणेतृसूची श्रीमतां संस्कृतरसिकानां विनोदाय प्रकाश्यते। यस्तेषां यत्किञ्चित् कस्यापि प्रणेतुर्वृत्ताधि॰ विजानाति, सतत्पत्रेऽस्मिन् प्रकाशनाय प्रेषयेदिति प्रार्थ्यते—

विनेतेन रामावतारेण।

# जलम् ।

—:०:—

उत्पत्तिराविष्कृतिरुपकृतिरपकृतिरपसंहृति श्चेति तद्विभागाः ।

वाष्पादुद्भवति सलिलम् । वाष्पीयसूक्ष्मसलिललवाः घनीभूता जलमुत्पादयन्ति । भागद्वयम् उद्जनकवाष्पस्य ( Hydrogen ) भागैकश्चाम्लजनकवाष्पस्य (Oxygen) रासायनिकविधिना ( Chemical combination ) संगत्य जलं जनयति ।

जलं त्रिविधामवस्थामनुभवति । सूक्ष्मावस्थां, कठिनावास्थां तरलावस्थाञ्चेति । तापेन यदा जलपरिमाणवो वियुज्यन्ते तदा जलस्य प्रथमा सूक्ष्मावास्था ( Gaseous ) वाष्पावस्था भवति । एवं समुद्रसलिलान्यपि वाष्पीयावस्थया गगने वारिवाहान्विरचयन्ति । यदा च जलपरमाणव आकर्षण ( Contracting ) विकर्षण ( Expanding ) शक्त्योः शैत्येन समानता विदन्ति, तदा जलस्य द्वितीया तरलावस्था (Lequid) जलावस्था जायते । इदमेव जलं वाष्पाकारेण मेघे विपरिणम्य प्रावृषि मनुजाशनोचितानि शस्यानि संजनयन्ति । पुनश्च जलस्यास्य प्रवलमाकर्षणशक्त्या सम्बाध्य विकर्षणशक्तिं तृतीया कठिनावस्था ( Solid ) करकावस्था भवति ।

पयः प्रतिदशं प्राणिनः समुपकरोति जीवयति च जीवान्, येन जनास्तज्जीवनं कथयन्ति । विकरोति च विकृतवस्तु मिश्रणेनेदम् । मनुष्यजीवनस्य यथाजलं हितकरं तथातिवृष्ट्यादिनाहितकरञ्च, परं नैतावता वयं तदभिनन्दामः । नहि, न वयं तद् विना प्राणान् धारयेमः । अवितथमिदं केनाप्यभिधीयते यत् जीवनं जीवजीवनमिति ।

रामदहिन शर्म्मा काव्यतीर्थः
हेड पण्डित ट्रेनिंग स्कूल
मोतिहारी ।

---

# संस्कृतविद्यार्थिनः ।

## स्वाध्यायोऽध्येतव्यः ।

-=:०:

स्वाध्यायः परमो धर्मो मानवानां, विशेषतो भारतीयब्राह्मणानामिति धर्मसूत्रकृद्भिरनुशिष्यते । यथा यथा मानवः प्रकृति—तन्त्रमतीत्यात्मनोऽभावान् पूरयितुं स्वयं प्रयतते, यथा यथा च समुन्मीषति तस्मिन् सह विवेकेनात्मभावः, तथा तथा तस्य ज्ञानार्जनस्पृहा वर्द्धते । सहि तैस्तैर्विद्वद्भिराविष्कृतं ज्ञानं विज्ञाय तेनात्मनो ज्ञानं वर्द्धयितुमभिवाञ्छति । सस्पृहं विज्ञातुं प्रयतते प्रथितसमज्ञानां वीराणां, विदुषां, महोदयानां राज्ञां, न्यक्कृतात्मविभवानां समाजपतीनाञ्च चरितानि । सादरमभिनिविशते करुणाप्रवणानां धर्माचार्याणामुपदेशश्रवणे । साभिनिवेशमनुध्यायति पूर्वजानामाचारविचारनीतिगौरवप्रतिपादकानितिहासग्रन्थान् । स्वाध्यायः

किल विबोधयति मानवानां तत्कर्म, येन कृतेन स नितान्तं तृप्यति, समासादयति च नितान्तं प्रमोदम्।

पुरा भारते स्वाध्यायो मुख्यमङ्गमभवद्धर्मस्य। स्वाध्यायानुष्ठानं हि तेषां कृते नित्यकर्मसु निर्दिष्टमभवत्। स्वाध्यायविमुखो जनः कर्मपरोऽपि ब्राह्मण्यादेवहीयते स्म। निर्दिशति च तदेव शतपथीया श्रुतिर्महाभाष्योद्धृता—"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।" षडङ्गवेदाध्ययनं निष्कारणो धर्मः। निष्कारणधर्ममननुतिष्ठन् मानवः पतति। अतोऽवश्यं षडङ्गो वेदोऽध्येयो ज्ञेयश्च। अध्ययनं नामाक्षरमुखेनार्थग्रहणम्, गृहीतार्थस्य चानुष्ठानं ज्ञानमित्युच्यते। यो हि विजानाति, सकरोति, नाविज्ञाय करोति, विज्ञायैव करोति, अतो विज्ञानं कर्म, अनुष्ठानञ्चेति नार्थान्तरम्। अतो ब्रूमो ब्राह्मणैर्वेदार्थोऽवगन्तव्योऽनुष्ठेयश्च।

पुरा भारतमिद धमाभवद्विद्याया, क्रीड़ानिकेतनं सच्चरित्रतायाः, प्रमोदस्थानं सौख्यस्य सौहार्दस्य, च, आवासवृक्षो जिज्ञासुशकुन्तानाम्, खनिः कारुणिकानाम्, मानसं सरो हंसानां किमपि मनोहरं पुलिनं व्यसनपारावारस्य। तदा महर्षयो मुनयश्च नगराद्बहिर्निवसन्तिस्म। तदानीन्तनानामस्माकं पूर्वजानां पर्णोटजस्यापि षोडशीं कलामपि स्प्रष्टुं न क्षमाण्यस्माकं सम्प्रतिकानि सुधाधवलितान्यपि मन्दिराणि। हन्तभोः प्रत्नस्य भारतस्य भारतीयानाञ्च चरितानि साम्प्रतमप्यनुवाचितानि श्रुतानि कमप्यतुलं तनोति मनसो मोदम्। साम्प्रतिकैरक्षरमुखैर्भारतीय "वन्या, असभ्या" इत्यादिभिः संबोध्यमान अपि ते भारतीया निगूढमपि दर्शनिकं तत प्रकाशयामासुः। ते तादृशान् सदाचारा व्यवस्थापयामासुः, यत्प्रवणो जनः स्वप्नेऽ न पश्यति दुःखहतकम्, मनसापि न स्म त्याहितानि। चेतसापि न चिन्तयति विगी पन्थानम्। प्रत्नानां विद्यार्थिनां कीदृश आचार किंविध उपदेशः, का च शिक्षासरणिरिति प्रबन्धेऽत्र विवेचयितुमुपक्रम्यते।

पुरा अष्टवर्षदेशीयो ब्राह्मणशिशु, एकाद हायनः क्षत्रबाल षोडशवर्षवयस्कश्च वैश उपनीतोऽनुपनीतो वा गुरुकुलं प्रेष्यते स्म तत्रानुपनीता बाला गुरुणैव तद्वर्णाधिकारान् सारमुपनीयन्तेस्म। स एव कालस्तेषां विद ध्ययनस्य, ब्रह्मचर्येण गुरौ वसन्तस्ते विद्यामनु शीलयामासुः। गुरुकुलं हि नगराद्बहि र्नद्याःकूले कुत्रचिद्वने प्रतिष्ठाप्यते स्म तत्र केवलं ब्रह्मचारिणो विद्यार्थिन एव निव सन्ति स्म। तेषामध्यापको हि वाचा अ चारेणोपदेशेन च हितमहितञ्चोपदिदिशुः नहि गुरुकुलं सांसारिकाणां छाययापि स्पृ मभवत्। संसारासक्तैर्हि बहुभिर्व्यवहर्तव्यम् तेषु केचनोत्तमा अधमाश्च भवन्ति। उत्तमाना माचारो न त्वरितमारोहति हृदयं, यथ अधमानाम्। न कोऽप्यत्र हेतुः। पतदि निखिलैरेव प्रत्यक्षीक्रियते, यत् सन्ति शतश सहस्रशश्च पाठशाला विद्यालयाश्च, त:

शिक्ष्यन्ते वालाः, शिक्षयन्ति च विश्रुतोद्यमा विद्वांसः, उपदेशैराख्यानैश्च तथा विबोध्यन्ते यथा सदाचारवन्तः सम्पद्येरन् । नास्ति कापि पाठशाला समितिश्च, या दुराचारं शिक्षयति, परं प्रतिवर्षं यावन्तो दुराचारिणो भवन्ति, न तावन्तो विनीताः सदाचारिणो विद्वांस इति विलोकयन्तो निसर्गेण निम्नगा प्रकृतिरिति निश्चिनुमः । वनवासेन हि संसारिणां सङ्गः परिहृतो भवति संसारिसङ्गपरित्यागान्नते दोषास्तान् वशयितु प्रभवन्तिस्म । साम्प्रतमस्माकं दौर्भाग्यान्न सान्ति तानि गुरुकुलानीति पठनसमय एव समाक्रान्तं भवति मानसं विद्यार्थिनां सांसारिकैर्भावैः । अतश्चैते नापि तात्त्विकीं विद्यामधिगच्छन्ति नाप्यवगच्छन्ति विद्याध्ययनफलम्, न च भवन्ति भाजनं समाजस्थितिहेतुभूतानां गुणानाम् ।

को भवानेवं वादिनं मां मन्दमन्दमुपहसन्नपाङ्गभङ्गेन तिरस्कर्तुं समुत्सहते । किं वदति भवान्नय शिक्षणपद्धतिर्वालान् नागरिकान् विधातुं शक्नोति ? कथमिति चेच्छृणु बाल्यं हि मूलं मानवजीवितस्य । बाल्य एव व्यवहारौपयिकं ज्ञानमर्ज्यते । तेनैव ज्ञानेन व्यवहरति यौवने । प्रत्ना हि बाल्ये संसारगन्धवर्जिताः कथमिव यौवने व्यवहर्तुं शक्नुयुः । व्यवहारानभिज्ञस्य जनस्य जीवितं कण्टकाकीर्णं मार्गमिव न भवति श्रेयसे । ओमिति ब्रूमः । अयि पंडितमतल्लिके, प्रत्नानां शिक्षापद्धतिः संसारगन्धवर्जिता इति तु सत्यम्, परं ते व्यवहारानभिज्ञा इति वक्तुं न शक्यते । को नाम व्यवहारः, इन्द्रियाणामनुकूले वर्त्मनि सञ्चालनमेव स इति प्रतीमः । हितमहितञ्चेत्युभयमपीन्द्रियाण्युपस्नेहयति, हिते वर्त्मनि प्रसक्तानीन्द्रियाणि त्वरितमेवासादयन्ति मनोहरं फलम् , अहितं वर्त्म तानि खिलीकरोति । अतस्तथा प्रयत्यते मानवैर्यथेन्द्रियाणि हित एव वर्त्मनि प्रवर्तेरन्, नाहित इति । यस्य माहाभाग्यस्येन्द्रियाणि हिते वर्त्मनि प्रसक्तानि, सहि सम्पादयितुं शक्नोति मानवार्थान् ।

पुरा भारते वने निषीदन्तो विद्यार्थिनो विद्यामर्जयन्तिस्म, तेषां गुरवश्च शास्त्रज्ञा व्यवहारदक्षाश्चासन । अत एव व्यावहारिकं ज्ञानमर्जयितुं राजानोऽपि तत्समीपमुपसर्पन्तिस्म । असमाधेयोऽपि प्रश्नस्तैर्गुरुभिरेव समाधीयतेस्मेति प्रत्यक्षं भारतीयेतिहासविदाम् । तदानीन्तनं गुरुकुलञ्च नाधुनिकविद्यालयप्रतिममासीत् । गुरोर्गृहकृत्यादिकं हि सर्वं विद्यार्थिभिरेव विधेयमित्यासीन्नियमः । एतेन साधारणव्यवहारज्ञानं हि विद्यार्थिभिरनायासत एवोपलभ्यते स्म । विधेयज्ञानञ्च (Practical knowledge) गुरुशुश्रूषणव्याजात्पुरा विद्यार्थिनो विज्ञातुमशक्नन् ।

किञ्च बालप्रकृतिरनुकरणपरा भवति, बालो हि यत्पश्यति तदेव करोति, पूर्वं यदनुकृत्य करोति, तदेव पश्चात्तस्य प्रकृतिगतं भवति । यथा पश्यति तथैव करोति । वत्स, इदं कर्तव्यं, कुरु, इति बोधितोऽपि बालो न तत्कर्म कर्तुं पारयति, परं तदेव

कर्म दृष्ट्वा करोति। अतः कर्मणा बालशिक्षणमुपयुक्तमिति साम्प्रतिका अपि मन्वते। सच्चरित्राणां गुरूणामाचरितं विद्यार्थिभिरनुक्रियते स्म। एतेन तेऽपि सच्चरित्राः सम्पद्यन्तेस्म। चरित्रं हि मानवं संसारव्यवहारक्षमं विदधाति। तस्मान्न तेषां व्यवहारशिक्षा समभवदिति केषाञ्चिदुक्तिं नाभिनन्दयितुमुत्सहे।

---

# समुद्रयात्रा।

—:०:—

साम्प्रतं भारतं भारतीयः समाजश्च किमप्यभिनवं रूपमासादयति। विद्याव्यसनिनामाङ्लानां गुणगणान् श्रावं श्रावं भारतीया अपि ज्ञानार्जनाय सोत्सुका अवलोक्यन्ते। महता श्रमेण यूरोपीयैर्विद्वद्भिराविष्कृतानि वैज्ञानिकतत्वानि शिल्पिवरेण्यैर्निर्मितं वास्तुरत्नं शिक्षितुं द्रष्टुं ज्ञातुञ्च समुत्कं मनः साम्प्रतं भारतीयानाम्। भारतमपि चिराय परिगृहीतां सुखासिकां परित्यज्य रिङ्गदिव प्रतिभाति। तैस्तैः कारणविशेषैर्विनष्टप्रायाप्येषां ज्ञानार्जनस्पृहा साम्प्रतमाङ्लविद्वत्संस्पर्शादुद्भिन्नवाङ्कुरेव विद्योतते। आङ्ला भारतशासका धिमांसश्चेति विद्याशिक्षायै भारतीयाः सादरं तत्समीपमुपसर्पन्ति। आङ्लभूमिः समुद्रसन्तरणमन्तरा प्राप्तुमशक्येति, आङ्लविषये प्रतिष्ठासुभिरवश्यं समुद्रयात्रा विधीयते।

द्विविधोऽत्रलोको दृश्यते। प्रथमस्तु प्रकृतिकेऽत्रजगति सकलमेव वस्तुजातं परिवर्तते इति विजानाति। एकमेव कर्म समाजमौलिकैः कदाचिदादीयते, कदाचिच्च विगीयते। यत्साम्प्रतं भारतीयैर्नाचर्यते तत्कदाप्यत्र नासीदिति नैषां सिद्धान्तः। साम्प्रतमस्मासु परिदृश्यमाना आचारा न सनातनाः, किन्तु विकृतिमासाद्यास्माकमवनतिं सूचयन्त्येते। अपरस्तु वदति साम्प्रतं यदस्माभिर्नानुष्ठीयते तद्विगीतमेव। वयं शाश्वते वर्त्मनि स्थिता एव धर्मं पालयामः। आचारा न परिवृत्तिं सहन्ते, देशकालानुसरणं हि धर्मधनैर्विगर्हितमिति सिद्धान्तो दृढीकर्तुं प्रयत्यत एभिः एतेन मतद्वैधेन भवति समाजस्य कापि हानिः। एतेन न कोऽपि जनः समुचितमपि कर्म कर्तुं पारयति, अपरस्तु विगीतमपि कुर्वन् शिरः समुन्नमयति, एतेनैव हेतुना समुद्रयात्रामप्यधिकृत्य साम्प्रतं समाजे महान् कलकलः। यज्जातीयः कश्चनाङ्लविषयात्प्रतिनिवर्तते, तदैव तज्जातीयानामधिविश्यते कापि समितिः सादरमाहूयते च तत्र कश्चन पण्डितदिग्गजः। पण्डितवरेण्योऽपि यजमानाभिमतमेव शास्त्रवचनोपन्यासैः समर्थयितुं प्रयतते। एकः पण्डितप्रदत्तां व्यवस्थामङ्गीकरोति, अपरस्तु नाभिनन्दति तामिति। इत्थमेव पंडितश्चापि समाजे हसते, समाजोऽप्यन्तर्जर्जरः प्रतिदिनमधिकाधिकं क्षीयत एव, नास्माभिरुच्यते यत् पंडितैः समुद्रयात्रा स्वीकर्तव्यैव। अपितु

धर्मो धर्मशास्त्राणि चास्माकं प्रमाणम्, यद्धर्म आह, यच्च धर्मशास्त्राणि प्रमाणयन्ति तदेवास्माकं प्रमाणम् । शास्त्रानुकूलं देशकालोचितञ्च वदन् बालोऽपि श्रद्धेयवचनो भवति, अन्यथा बृहस्पतिरपि विगीयते । साम्प्रतमस्माभिरननुष्ठीयमाना आचाराः शास्त्रेषु वर्णिता दृश्यन्ते । तैराचारैर्यदि सेत्स्यत्यस्माकं कोऽपि मनोरथस्तदाधुनाऽपि तेषामनुष्ठानं न दोषावहं मन्ये । अत्र प्रबन्धे धर्मशास्त्राभिमतमेव प्रदर्शयितुं प्रयत्यतेऽस्माभिः । पुरातनानां धर्मशास्त्रकाराणामभिमता समुद्रयात्रा नवेति निरूपयितुमुपन्यस्यन्ते प्रमाणानि शास्त्रग्रन्थेभ्यः ।

इदं शास्त्रकाराभिमतम्, इदं नाभिमतमिति त्वरितमेव न शक्यते कैश्चिदपि निश्चेतुम् । अपि तु धर्मशास्त्राणां समन्वयपुरःसरमेवैतद्विज्ञायते । बृहदिदं भारतीयं धर्मशास्त्रम् । तस्माद्विधेयज्ञानं नायासतो लब्धुं शक्यम् । किन्तु परितो विविच्येदमभिमतं शास्त्रकारस्येति निर्णीयते तत्वज्ञैः अवलम्बितः किल स एव पन्थाऽस्माभिरत्र प्रबन्धे ।

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्रोक्तं साक्षाद्धर्मस्य लक्षणम् ।
द्वितीयाध्याये मनुः ।

कः सदाचार इति जिज्ञासायां वदति मनुरेव ।

तस्मिन् देशे य आचारः पारम्पर्य क्रमागतः
वर्णानां सान्तरालानां स सदाचार उच्यते ।

ब्रह्मावर्त्तदेशे ब्राह्मणादिवर्णानामन्तरालभवानाञ्च वर्णानां पारम्पर्यक्रमागतो य आचारः स एव सदाचार इत्युच्यते ।

एतेन चतुर्विधं धर्मलक्षणं मनोरभिमतमिति निश्चीयते । वेदः स्मृतिः सदाचार आत्मनश्च प्रियमित्येतच्चतुर्विधं धर्मस्य साक्षाल्लक्षणम् । पुराणान्यपि धर्मे प्रमाणानीति याज्ञवल्क्यः प्रतिपादयति । तैस्तैर्महर्षिभिर्बहूनि पुराणानि प्रणीतानि । अतः पुराणान्यपि परस्परं विरुद्धानि । यत्र धर्मव्यवस्थापकानि शास्त्राणि परस्परविरुद्धं मतं प्रकाशयन्ति, तत्र कर्तव्यनिर्द्धारणं न सुकरं भवति । अत्र किं विधेयमिति साधु मीमांसितं महर्षिभिः ।

श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते
तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा,
व्याससंहिता ।

श्रुतिस्मृतिपुराणानां परस्परं विरोधे दृश्यमाने श्रुतिरेव बलीयसी, यत्रतु स्मृतिपुराणयोर्विरोधस्तत्र स्मृतेरेव प्रामाण्यमङ्गीकर्तव्यम् । अस्यायं स्फुटोऽर्थः । सर्वतोधिकं श्रुतेः प्रामाण्यमभिमतं धर्मशास्त्रकाराणां धर्मे । स्मृतिपुराणविरुद्धमपि श्रुत्यनुमतमनुष्ठेयं विद्वद्भिः । यत्र श्रुतिर्नादिशति किञ्चित्तत्र स्मृतेरेव प्रामाण्यम् । स्मृत्यनुक्ते विषये पुराणमाश्रित्य प्रवर्तितव्यम् यत्र पुराणैरपि न किञ्चिद्बोधितं, तत्र ब्रह्मावर्त्तदेशभवः सदाचारो धर्मप्रमाणम्, सदाचाराबोधिते च विषये स्वस्य प्रियो धर्मोऽनुष्ठेय इति शाश्वतधर्मसिद्धान्तः । यदि समुद्रयात्रा श्रुत्यभिमता तदा स्मृतिपुराणादिभिर्निषिद्धापि सा समनुष्ठेयेतिफलितम् ।

अपि श्रुत्यभिमतेयं समुद्रयात्रा नवेति निरूपणीयम्। प्रथमन्तु कः श्रुतेर्व्याख्यान प्रकार इति विषयेऽत्र प्राचां मतमुपन्यस्यते। श्रीमद्भगवत्पूज्यपादैः शारीरकभाष्ये प्रोक्तम्—

"यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवता विग्रहादिप्रकाशनसामर्थ्यमिति। अत्र क्रमः, प्रत्यया प्रत्ययौ हि सद्भावासद्भावयोः कारणम्, नान्यार्थत्व मनन्यार्थत्वम् वा, तथाहि, अन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णादि अस्तीत्येवं प्रतीयत" इति

अत्र दार्शनिकशिरोमणिना वाचस्पति मिश्रेणाभाणि—

तस्माद् यावति पदसमूहे पदाहिताः पदार्थ-स्मृतयः पर्यवसन्ति, तिनैव विधिवाक्यं विशिष्टार्थ-प्रतीतेः। (भामती)

एतस्माज् ज्ञायते दृष्टान्तविधायापि श्रुति प्रतिपादितं श्रुत्यभिमतमिति भगवन्तः शङ्करा चार्याः वाचस्पतिमिश्राश्च निर्दिशन्ति। शङ्कराचार्याणामुक्तिमन्यथयितुं नोत्सहते कोऽपीति विश्वासः सर्वेषाम्।

तं गूर्तयो नेमन्निषः परीणसः समुद्रं न सञ्चरणे सनिष्यवः, ऋग्वेदः

गूर्तयः स्तोतारो नेमन्निषो नमस्कारपूर्वं गच्छन्तः, यद्वा नीतहविष्काः परीणसः परितोव्याप्नुवन्तः एवं गुण-विशिष्टा जयमानास्तमिन्द्रं स्तुतिभिरधिरोहन्ति स्तुवत इत्यर्थः। तत्र दृष्टान्तः सनिष्यवः सनिंधानमात्मन इच्छन्तो वणिजो धनार्थं सञ्चरणे निमित्तभूते सति समुद्रं न, यथा नावा समुद्रमधिरोहन्ति। एवं स्तोतारोऽपि स्वाभिमतधनलाभाय इन्द्रं स्तुवन्तीति भावः।

एतेन सव्याख्यानेन मन्त्रखंडेन वेदाभि-मता समुद्रयात्रेति सुस्पष्टमेव विज्ञायते। यतो वेदाभिमतानभिमतनिर्णयाय भवगता शङ्करेणैष एव पन्था निर्दिष्टः। किञ्च नहि कोऽपि जनोऽनभिमतं विषयं दृष्टन्तविधयेोपन्यस्यति। अभिमतं प्रियञ्च विषयं दृष्टान्तीकरोति सकलोऽपि इति विदितं काव्यविदाम्।

साम्प्रतमात्मनः प्राचीनेतिहासेन सह विच्छिन्न एव सम्बन्धो भारतीयानामिति निर्विशङ्कमुच्यते। यत एषां नास्ति संस्कृतज्ञानम्, भारतीयेतिहासाश्च संस्कृते निविद्धाः। ये हि संस्कृतज्ञास्तेऽपि प्रकृतिप्रवाहेऽवशं निमज्जन्तो दयितामनोरथसम्पादनव्यग्रा जठरहतकस्य कृते बहुप्रयस्यन्तो नेतिहासमनुशीलयितुं प्रभवन्ति। अत एव प्रत्नमप्याचारमभिनव इति सिद्धान्तयन्त्येते। साम्प्रतं यूरपयुवराजा नाविकवेश मास्थाय नौसञ्चालनाधिगमाय निःशङ्कं समुद्रं प्रविशन्तीति विलोकयन्तो भारतीयाः पंडिता उन्नेत्रा भवन्ति। यदा भारतीयाः केचन राजानो धनिका वा यूरपविषयादागत्य दक्षिणादिभिरेतान् पडितदिग्गजान् तोषयन्ति, तदैते तेषां प्रयत्नशतैः प्राशस्त्यं समर्थयितुं प्रयतन्ते। बहुप्रयत्नरक्षितं कीटमुखावलीढं पुस्तकं प्रकाशीकुर्वन्ति, उदाहरन्ति च धर्मशास्त्रकाराणां वचनानि। परं यदि कश्चन मध्यवित्तो यूरपविषयादागच्छति तदा हि दर्शनीयं भवत्येषां मुष्टिवद्धविलसितम्। आस्तां नाम। मान्यान् ऋग्वेदादिग्रन्थाननुशीलयद्भिरेतदनायासत एव विज्ञेयं यत् पुरा भारतीयराज्ञां समुद्रसन्तरणं न दोषायेति स्वीकृतमभवत्। अधस्तान्निर्दिश्यते ऋग्वेदीयो मन्त्रो, येनैतत्स्फुटीभविष्यति।

तुग्रोहि भुज्युमश्विनोदमेघेरयिं नकश्चिन्ममृवाँ आवहाः,
तमूहथुः नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ।
अनारंभेण तदवीरयेथामनास्थाने अग्रभणे समुद्रे,
यदश्विनाऊहथुर्भुज्युमस्तंशतारित्रांनावमातस्थिवांसम् ।
( ऋग्वेदः )

अत्रेयमाख्यायिका, तुग्रो नामाश्विनोः प्रियः कश्चि-द्राजर्षिः । स द्वीपान्तरवर्तिभिः शत्रुभिरत्यन्तमुपद्रुतः सन्, तेषां जयाय स्वपुत्रं भुज्युं सेनया सहप्राहैषीत् । सा च नौ मध्ये समुद्रमतिदूरं गता वायुबलेन भिन्नाऽऽसीत् । तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव । तौ च स्तुतौ सेनया सहितमात्मीयासु नौष्वारोप्य पितुस्तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुरिति ।

( सायणः )

एतेन निश्चीयते यत्पुरा भारतीया नौयानेन समुद्रयात्रां कुर्वन्तिस्मेति । समुद्रगमनं हि तदा न निषिद्धमभवत् अपितु शास्त्र-शिष्टानुमतमिति । सद्वर्त्मनि स्थितमेव देवाः सहकुर्वन्ति । योह्यनार्यं पन्थानं निषेवते न स सहकृतो भवत्यार्यैः । भुज्युस्तुतावश्विनौ तं रक्षयामासुः । अस्मादेव समुद्रयात्रा शास्त्रानुमतेति प्रतीयते ।

यात्राहि ज्ञानार्जनाय धनार्जनाय स्वास्थ्य-लाभाय देशदर्शनाय च विधीयते । साम्प्रत विदेशयात्रा एभिरेव निमित्तैरनुष्ठीयते। पुरापि विदेशयात्रा विद्वद्भिरनुष्ठीयते स्मेति प्रमाणयति निम्ननिर्दिष्टा ऋगेव ।

आ यद्रुहाव वरुणश्च नावं प्रयत्समुद्रमीरयाव मध्यम्
अधियदपां स्नुभिश्चराव प्रप्रेङ्ख ईङ्खयावहै शुभेकम् ।

( ऋग्वेदः )

इयं ऋक् महर्षेर्वशिष्ठस्य वरुणस्य च नावा समुद्रयात्रां विबोधयति । किञ्च

वशिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपामहोभिः
स्तोतारं विप्रः सुदिनत्वे अन्हां यान्नु द्यावस्ततनन्यादुषासः ।

एवं वशिष्ठेनात्मनाकृते यद्वरुणेनकृतं तद्दर्शयति । वशिष्ठं ह वशिष्ठमनु वरुणो नावि स्वकीयायामाधात् । तथा तमृषिमवोभी रक्षणैः स्वपां स्वपसं शोभनकर्माणं चकार । वरुणः कृतवान् इति । ( सायणः )

नन्वद्यापि संशयोऽवशिष्यते कस्यापि । भगवती श्रुतिर्वशिष्ठेन कृतां समुद्रयात्रां वर्णयति । तया यात्रया च वशिष्ठस्य महनादरः समजनीत्यपि विबोधयति । न केवल मद्यत्वएवांग्लशिक्षाविकृतमस्तिष्कैरधार्मिकैरेव, समुद्रयात्रा विधीयते, किन्तु पुरापि भारतीयैर्महर्षिभिरियमनुष्ठिताऽभवत् । हन्त भोः तदा किमाधुनिकाः पण्डितावतंसा इव नासन् केचन धर्मव्यवस्थापकाः, ? मन्ये साम्प्रतमेव भगवतो धर्मस्य परित्राणाय समवतीर्णा व्यवस्थावृत्तय एते महाभागाः । अन्यथा समुद्रयात्रिणौ वशिष्ठो वरुणश्च न कथं समाजाद् बहिष्कृतौ ? कथमेतयोः समाजे सव्यवहार्यता स्वीकृता ?

महतो भूतस्य निश्वासभूता वेदा अपौरुषेयाः सदातनाश्च । वेदविधानमेव धर्मशास्त्राणि प्रथयन्ति न किंचिद्विशिष्य बोधयन्त्येतानि । वेदविरुद्धं बृहस्पतिनापि प्रोक्तमश्रद्धेयं भवति सनातनधर्मप्रवणानाम् । वेदानुमतां समुद्रयात्रां अधर्म्या इति वक्तुं कः समुत्सहेत धार्मिकः, । न तानि धर्मशास्त्रा-

णि, न सविद्वान्, न स धार्मिको, यो वेदानुमतं विधिं विगर्हयेत् वेदानुमतां समुद्रयात्रां नकोऽपि निषेद्धुं प्रभवति। निषेद्धुकामापि अश्रद्धेयवचनाः सम्पद्येरन्। किंच युगान्तरेषु वेदाः प्रमाणं न कलावित्यत्रापि न कमपि प्रबलं हेतुमुत्पश्यामि। एकस्मिन् युगे परमात्मसत्ता स्वीकर्तव्या, युगान्तरे च सा विगर्ह्या इति न दृष्टो नियमः कुत्रचित्। वयं परमात्मानं वेदरूप एव साक्षात्कुर्मः। वेदाप्रामाण्यमनङ्गीकुर्वद्भिरेभिरेव ननु कलेर्महिमा प्रथ्यते। कलौ वेदानुमतमपि केनापि स्मृतिकारेण निषिद्धं विधानं साम्प्रतिकैर्व्यवस्थापकैर्नानुमन्यत इति हन्त सर्वथा प्रभवति कलिः।

साम्प्रतं स्मृतिकाराणां समुद्रयात्रायां कोऽभिप्राय इति किंचदत्र निर्दिश्यते। प्रतियुगं भिन्नभिन्नाः स्मृतयः प्रमाणम्—

> कृते तु मानवो धर्मस्त्रेतायां गोतमः स्मृतः।
> द्वापरे शङ्खलिखितौ कलौ पाराशरः स्मृतः॥
> (पाराशरसंहिता)

चतुर्ष्वपि युगेषु धर्मशास्त्रकाराणां कोऽभिप्रायः समुद्रयात्रायां इति यथायथं निर्दिश्यते। भगवता मनुना तरणकरो व्यवस्थापित.। तत्र समुद्रसन्तरणकरस्यापि दर्शनात् पुरा समुद्रयात्रा नानुमतेतिवक्तुं कथं शक्यते विज्ञेन।

> "दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत्।
> नदीतीरेषु तद्विद्यात् समुद्रे नास्ति लक्षणम्॥"

एतेन मानवधर्मशास्त्राभिमता समुद्रयात्रेति प्रतीयते। तदा हि समुद्रयात्राया अव्याहतः प्रचार आसीद्भारत इति पोतभाटकनिर्देशो विबोधयति। सांयात्रिकाणां कृते शुल्कव्यवस्था इत्थं व्यवस्थाप्यते मनुना।

> "समुद्रयानकुशला देशकालार्थदर्शिनः।
> स्थापयन्ति तु यां वृत्तिं सा तत्राधिगमं प्रति॥"

तदा समुद्रयात्राया आसीद् महान् प्रचारः अत एव सांयात्रिकाणां कृते शुल्कादिव्यवस्था मनुना व्यवस्थापिता। साम्प्रतमपीयं रीतिः यूरोपीयेष्वपि दृश्यते।

नात्र समुद्रगमनं मनोरप्यभिमतमिति पूर्वं निर्दिष्टानि मनुवाक्यानि प्रमाणयन्ति। किंच समुद्रयायिनां ब्राह्मणानां कृतोऽपरोऽपि विधिस्तत्र निर्दिष्ट, समुद्रयायिनो ब्राह्मणा न श्राद्धेऽधिकारिण इति। ते हि श्राद्धेऽपाङ्क्तेया इति मनोर्मतम्। एतेन ब्राह्मणानामेव समुद्रगमनात्समाजेऽसंव्यवहार्यता सिध्यति न वर्णान्तराणाम्। ब्राह्मणानामपि सा असंव्यवहार्यता केवलं श्राद्ध एव नान्येषु कर्मसु। श्राद्धे अपांक्तेया न केवलं समुद्रयायिनो ब्राह्मणा एव, किन्त्वपरेऽपि तत्रानधिकारिण इति प्रतिपादयति भगवान् मनुरेव। श्राद्धानधिकारिणो बहवो ब्राह्मणाः साम्प्रतं श्राद्धे निमन्त्र्यन्त एभिर्धर्मव्यवस्थापकैः। अपरे श्राद्धपातित्यप्रयोजका दोषाः नैभिः परिगण्यन्ते, परमेकं वेदानुमतं मानवधर्मशास्त्रानुमतं समुद्रगमनमेव महदनर्थं जनयतीति विद्वद्भिर्धार्मिकैरपि व्यवस्थापितमिमं सिद्धान्तं विलोक्य विमनायन्ते प्रेक्षावन्तः। श्राद्धेऽपांक्तेयान् ब्राह्मणान् परिगणयति मनुः।

न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित्।
पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः॥
येस्तेनपतितक्लीबा ये च नास्तिकवृत्तयः।
तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत्॥
जटिलञ्चानधीयानं दुर्बलं कितवन्तथा।
याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥
चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः॥
आगारदाही गरदः कुण्डाशी सोमविक्रयी।
समुद्रयायी वन्दी च तैलिकः कूटकारक॥
पित्रोर्विवदमानश्च कितवो मद्यपस्तथा।
पापरोगाभिशस्तश्च दाम्भिको रसविक्रयी॥
हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च॥
एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान्।
द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत्॥

एते ब्राह्मणा अपाङ्क्तेया इति मानवधर्मशास्त्रमनुशास्ति। भृतका [illegible] युद्धाचार्याश्चिकित्सका नाक्षत्रिका [illegible] श्राद्धेऽनधिकारिणः। अपरेऽपि [illegible] अनधिकारिणः श्राद्धे। द्रोणाचार्यप्रभृतयोऽनर्हाः श्राद्धे मानवधर्मशास्त्रानुसारम्। साम्प्रतं धर्मव्यवस्थापकाः प्रायो भृतकाध्यापका एव। यथा श्राद्धे भृतकाध्यापका विगर्हितास्तथा समुद्रयायिनोऽपि परं भृतकाध्यापका एव साम्प्रतं स्वसमानशीलान् समुद्रयायिनः प्रायश्चित्तानर्हा इति समर्थयन्ति। साम्प्रतं न तानि नगराणि, न च तथाविधा जितमनस्का मनुष्याः। अत एव च कश्चित् प्रकाशं कश्चिच्च निगूढं यथेच्छमाचरति, धर्मशास्त्रैर्निषिद्धमपि विधिमेतेऽनुतिष्ठन्ति। नास्ति प्रायः केषामपि सदाचारव्यवस्था। यथा भारतीयानां बाह्य आचारो विलुप्तस्तथैवान्तरोऽपि, तथापि महाभागैरेभिः समुद्रयायिनो निन्द्यन्त इति विलोकयन्तः प्रेक्षावन्तोऽन्तःसन्तप्यन्ते। पूर्वमुद्धृतैः श्लोकैर्मनोरप्यभिमता समुद्रयात्रेति प्रतीयते। गौतमशङ्खलिखितैः समुद्रयात्रामधिकृत्य न किञ्चिदप्युक्तम्। नैतैः समुद्रयात्रा निषिद्धा, तस्मादेतेषामनभिमता सा इत्यपि न वक्तव्यम्। कलौ हि महर्षिः पराशरो धर्मव्यवस्थापकः स्वीकृतः। स हि समुद्रयात्रां न प्रतिषेधति, अपि त्वाज्ञापयति।

"एतेषु स्थापयेद्विप्रः पुण्यं गत्वा तु सागरम्,
दशयोजनविस्तीर्णं शतयोजनमायतम्।
रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम्,
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति।

इत्थं कलिधर्माचार्यः पराशरः समुद्रयात्रां समर्थयति। याज्ञवल्क्येनापि —

[illegible] समुद्रा [illegible]
[illegible] कृता [illegible] सर्वा [illegible] जातिषु।

समुद्रयात्रानुमतेति निश्चीयते। इत्थं मनुनिर्दिष्टानि निखिलान्यपि धर्मशास्त्राणि समुद्रयात्रां स्वीकुर्वन्ति, तथापि साम्प्रतिकानां पण्डितम्मन्यानां कृते सा प्रायश्चित्तार्हा [illegible] हन्त कलौ धर्मशास्त्रकाराणां विरोधो धार्मिकैरेव विधीयते।

साम्प्रतं बृहन्नारदीयवचनं प्रमाणयन्तो धर्मव्यवस्थापकाः समुद्रयात्रां प्रतिषेधन्ति, समुद्रयातुश्च प्रायश्चित्तेनापि न भवति शुद्धिः। अपि नाम बृहन्नारदीयं किं धर्मे प्रमाणम्? उपपुराणान्तर्गतं बृहन्नारदीयं धर्मे कथं प्रमाणमिति न विजानामीतिशम्।

रामकृष्णानन्दगिरिः
बाघम्बरी

# काशिकराजकीयसंस्कृतप्रधान विद्यालयपरीक्षाफलम्।

रामकृष्णप्रसादत्रिपाठी किशोरीलाल वेणी-माधव संस्कृत पाठशाला दारागंज प्रयाग।
वेणीमाधव पंत ,, ,,
रामनेवाज शुक्ल ,, ,,
कपिलदेव पाठक सरयूपारीण संस्कृत पाठशाला प्रयाग।
गङ्गाधर मिश्र ,, ,,
उपदत्त दुबे गोमती बीबी पाठशाला फूल-पुर प्रयाग।
रामसेवक त्रिपाठी ,, ,,
जगतनरायण संस्कृत विद्यालय प्रयाग।
लक्ष्मणप्रसाद मिश्र श्रीनाथ पाठशाला सरसा प्रयाग।
कमलप्रसाद द्विवेदी ,, ,,
रामविलास मिश्र ,, ,,
दत्तशरण द्विवेदी श्रीनाथ पाठशाला सरसा प्रयाग।
हरिहरनाथ पांडेय ,, ,,
रामफल पांडेय अजीत शोमवंशीय पाठ-शाला प्रतापगढ़।
महादेव पाठक ,, ,,
शिवशरण मिश्र प्रतापगढ़।
सदाशिव भगवत दरबार हाई स्कूल रेवा।
राधाकिशोर गोस्वामी चरखारी स्टेट।
तुलसीराम सनाढ्य कल्लुमल पाठशाला कानपुर।
गङ्गाप्रसाद गौड़ लालचन्द जोखीराम संस्कृत पाठशाला कानपुर।
छोगाराम गौड़ द्वारिकाधीश संस्कृत पाठशाला कानपुर।
भूदत्त गौड़ ,, ,,
सुखलाल अग्निहोत्री चतुर्वेद बलदेव संस्कृत पाठशाला शिवोली कानपुर।
नन्दकिशोर मिश्र मारवाड़ी पञ्चायती संस्कृत पाठशाला कानपुर।
मदनगोपाल शुक्ल रागी पाठशाला रावत-पुर कानपुर।
विद्याधर द्विवेदी ,, ,,
शिवनन्दन मिश्र ,, ,,
अम्बिकाप्रसाद त्रिपाठी कलेश्वर ऋग्वेद पाठशाला कानपुर।
श्यामसुन्दर शुक्ल ,, ,,
कृष्णदत्त द्विवेदी ,, ,,
भूदत्त गौड़ गुलजारीलाल ब्रह्मभट्ट पाठ-शाला नवघर कानपुर।
छोटेलाल त्रिपाठी संस्कृत पाठशाला ओर-इया इटावा।
अच्छेलाल शर्मा ,, ,,
प्रभुदयाल पांडेय ,, ,,
वंशगोपाल दीक्षित ,, ,,
हज़ारीलाल त्रिपाठी ,, ,,
मधुसूदनदत्त वाजपेयी ,, ,,
ब्रह्मदत्त चतुर्वेदी पञ्चपुखरा पाठशाला फरुखाबाद।
आत्माराम शुक्ल ,, ,,
हरदत्त मिश्र ,, ,,
उदयप्रकाश कान्यकुब्ज ,, ,,
वामदेव सनाढ्य ,, ,,
प्यारेलाल मिश्र ,, ,,
रामगोपाल सनाढ्य ,, ,,
रघुनन्दन पांडेय ,, ,,
विद्याधर औडिक पंचपुखरा पाठशाला फरुखाबाद।

गिरीवर मिश्र पंचपुखरा पाठशाला फरुखाबाद।
कृष्णदत्त गौड़ श्रीधर मिश्र ” ”
रामचन्द्र शुक्ल ” ”
सतीप्रसाद पांडेय मनसाराम जयनरायण संस्कृत पाठशाला सेनापति कच फरुखाबाद।
भगवानदीन दीक्षित कृष्ण शर्मा विद्यालय ब्रह्मशिला मालवा फतेहपुर।
कृष्णदत्त वाजपेई मार्तण्ड विद्यालय विन्दकी फतेहपुर।
कामताप्रसाद शुक्ल खत्री संस्कृत पाठशाला उन्नाव।
मङ्गलप्रसाद शुक्ल शिवप्रसाद संस्कृत पाठशाला पाढ़ी ऊनाव।
उमाशङ्कर त्रिपाठी ओराय।
फकीरचन्द्र गौड़ ई० सी० हाई स्कुल संस्कृत पाठशाला ख़ुर्जा।
सम्पतिदेव गौड़ ” ”
शुकदेव शर्मा ” ”
मुकुन्ददेव गौड़ ” ”
राधागोपाल शर्मा ” ”
रामचन्द्र गौड़ ” ”
कृपालु शर्मा ” ”
जयदेव वर्मा ई० सी० हाई स्कूल संस्कृत पाठशाला ख़ुर्जा।
मुन्शीराम शर्मा ” ”
गोपालदत्त शर्मा ” ”
होतीलाल मिश्र विल्वेश्वर संस्कृत विद्यालय सदर मेरठ।
छोटेलाल मिश्र निर्भय संस्कृत पाठशाला बरौथ मेरठ।
जगन्नाथ शर्मा संस्कृत पाठशाला भदसीआना मेरट।
गङ्गाधर शर्मा संस्कृत पाठशाला भदसीआना मेरट।
पुरुषोत्तम शर्मा गुरुकुल सीकन्दराबाद बुलन्द शहर
बालकृष्ण गुप्त ” ”
विश्वभानु शर्मा ” ”
सरयुकान्त वर्मा ” ”
वाकपति राजब्रह्मचारी ” ”
श्रीप्रसाद शर्मा संस्कृत पाठशाला भुम्नतागा बुलन्द शहर।
ज्वालादत्त शर्मा ” ”
चुन्नीलाल शर्मा अतरौली मेरट।
ईश्वरदत्त त्रिपाठी विश्वनाथपुर पाठशाला गोरखपुर।
नकछेदप्रसाद द्विवेदी ” ”
खुरचन मिश्र ” ”
रामकृपाल पाण्डेय ” ”
हरिवंशप्रसाद शुक्ल संस्कृत पाठशाला भौआपूर गोरखपुर।
ललनप्रसाद द्विवेदी ” ”
त्रिलोकीनाथ मिश्र ” ”
जयराम त्रिपाठी नाथचन्द्रवती संस्कृत पाठशाला जगदीशपुर गोरखपुर।
मथुरा द्विवेदी संस्कृत पाठशाला रुद्रपुर गोरखपुर।
भवानीप्रसाद पांडेय ” ”
राजपति त्रिपाठी वैद्यधर्मसंजीवनी संस्कृत पाठशाला देउरिया गोरखपुर।
शिवकुमार पांडेय ” ”
देवकीनन्दन मिश्र संस्कृत पाठशाला साहगौर गोरखपुर।
विन्ध्येश्वरीप्रसाद त्रिपाठी ” ”
गिरीजाधर द्विवेदी ” ”
शिववरण पांडेय ” ”

महावीर पाठक संस्कृत पाठशाला वरैला गोरखपुर।
बलदेवप्रसाद शर्मा वेदाङ्ग व्याकरण पाठशाला हरदही गोरखपुर।
शिवमूर्ती शर्मा ,, ,,
सूर्यनाथ मिश्र हिन्दु स्कूल ढकवा बाजार गोरखपुर।
जोखुराम उपाध्याय ,, ,,
गोपालदत्त द्विवेदी किशोरी संस्कृत पाठशाला भाटपर रानी बाजार गोरखपुर।
उमादत्त पांडेय सनातनधर्म वर्द्धिनी संस्कृत पाठशाला धानी गोरखपुर।
राजेश्वर मिश्र विद्याधर्म संस्कृत संजीवनी शिव पाठशाला हरपुर गोरखपुर।
पन्नूलाल द्विवेदी उडवर्न संस्कृत पाठशाला मान्डला सी० पी०।
गङ्गाप्रसाद मिश्र कस्तूरचन्द्र हितकारिणी संस्कृत पाठशाला जवलपुर।
मकुन्दलाल चतुर्वेदी सनातनधर्म संस्कृत पाठशाला महोबा हमीरपुर।
गौरीशङ्कर त्रिपाठी ,, ,,
रामसहाय दीक्षित ,, ,,
पालतुराम दीक्षित अभिनन्दन दिगम्बरजैन संस्कृत पाठशाला क्षेत्रपाल ललितपुर।
प्रसन्नकुमार ,, ,,
ठाकुरदास ,, ,,
मूलचन्द ,, ,,
रामप्रसाद त्रिपाठी संस्कृत पाठशाला महाराज हाई स्कूल क्षत्रपुर।
चन्द्रशेखरदत्त पांडेय राजगोपाल पाठशाला अयोध्या।
वासुदेव त्रिपाठी ,, ,,
श्रीपतिप्रसाद शुक्ल ,, ,,
लीलाकान्त उपध्याय ,, ,,
नृसिंहदास वैष्णव राजगोपाल पाठशाला अयोध्या।
हरिभक्त पांडेय ,, ,,
विष्णुदत्त त्रिपाठी श्रीरामजानकी पाठशाला फैजाबाद।
परमेश्वरदत्त मिश्र ,, ,,
रामसमूझ त्रिपाठी ,, ,,
लक्ष्मीनरायण द्विवेदी ,, ,,
रामनरायणदास शर्मा वैष्णव बड़ा अस्थान वैष्णवधर्म प्रवर्द्धिनी पाठशाला अयोध्या।
रामकान्त त्रिपाठी ,, ,,
राममूरत पांडेय ,, ,,
गिरधारी मिश्र ,, ,,
उमादत्त त्रिपाठी ,, ,,
हरिगोविन्द त्रिपाठी अमरचन्द संस्कृत पाठशाला फैजाबाद।
कल्पनाथ मिश्र ,, ,,
विद्याधरप्रसाद पांडेय ,, ,,
बृजविहारी मिश्र भगवतविद्यालय अयोध्या।
विजयनाथ मिश्र भिखुमल पाठशाला राजमहल अयोध्या।
रमानन्द ओझा ,, ,,
रामकृष्णदेव द्विवेदी ब्रह्मवैदिक विद्यालय सरयूबाग अयोध्या।
सत्यदेव प्रसाद पांडेय ,, ,,
त्रिभुवन पांडेय ,, ,,
रामसरइया त्रिपाठी गोवर्द्धन विद्यालय अयोध्या।
ब्रह्मदेव प्रसाद त्रिपाठी ,, ,,
दुःखहरण त्रिपाठी सङ्गत माधव नरायण उदासीनधर्म पाठशाला रानोपाली अयोध्या।
परमानन्द पांडेय ,, ,,
रामसुन्दर त्रिपाठी ,, ,,
रामसुभग द्विवेदी ,, ,,

मोतीराम पांडेय संस्कृत पाठशाला शिकण्टा वस्ती।
रामतेज मिश्र ,, ,,
वैकुण्ठनाथ मिश्र ल्यालकालेजिएट स्कूल संस्कृत पाठशाला बलरामपुर।
मथुराप्रसाद पांडेय ,, ,,
राजबहादुर मिश्र ,, ,,
स्वामी दयालु त्रिपाठी ,, ,,
पृथ्वीपाल उपाध्याय तुलसीविद्यालय सीतालगंज गोंडा।
अम्बिकादत्त पांडेय ,, ,,
रामसेवक मिश्र सनातनधर्म संस्कृत पाठशाला कालीकुण्ड नवाबगंज गोंडा।
गङ्गाप्रसाद मिश्र ललितहरि संस्कृत कालेज पीलीभीत।
बाबूराम मिश्र ,, ,,
उमाशङ्कर शुक्ल ,, ,,
हीरावल्लभ कपिलाश्रम ,, ,,
दुर्गाशङ्कर शुक्ल ,, ,,
पुट्टूलाल दीक्षित ,, ,,
कृष्णस्वरूप मिश्र ,, ,,
हरिप्रसाद शर्मा खुवचन्द्र पाठशाला पीलिभीत।
नान्हूराम मिश्र ललित संस्कृत पाठशाला बिसालपुर बदाऊँ।
अयोध्याप्रसाद मिश्र संस्कृत पाठशाला बिशाली बदाऊँ।
मोतीराम पराशरी ,, ,,
बद्रीदत्त मिश्र ,, ,,
रामस्वरूप त्रिवेदी द्विजकुलपाठशाला बीलसी बदायूं।
रघुनन्दन गौड़ ,, ,,
ओंकारदेवी प्राईवेट विरामपुर बदायूं।
गालवाचार्य शङ्खोधर बलदेव गोपाल विद्यालय बरैली।
लाडलीकिशोर शङ्खोधर संस्कृत भवानी विद्यालय बरैली।
शिवनन्दन मिश्र वेदोज्जीवनी संस्कृत पाठशाला बरैली।
गेन्दनलाल पराशरे धर्मोद्दीपिनी संस्कृत पाठशाला बरैली।
गेन्दनलाल द्विवेदी संस्कृत चूंगी पाठशाला शाजहांपुर।
कृष्णमुरारि मिश्र श्रीरङ्गलक्ष्मी विद्यालय वृन्दावन।
श्यामलाल सनाढ्य ,, ,,
सीतारामदास वैष्णव ,, ,,
कन्हैयालाल मिश्र हितशिक्षा पाठशाला वृन्दावन।
रूपलाल गोस्वामी हितचिन्तक पाठशाला वृन्दावन।
लक्ष्मीनरायण मिश्र ,, ,,
शोभाराम मिश्र श्रीराधाप्रिय विश्वनाथ पाठशाला घुसरकुंज वृन्दावन।
सूर्यप्रकाश मिश्र हाई स्कूल संस्कृत पाठशाला मथुरा।
शिवदत्त द्विवेदी ,, ,,
जगन्नाथ मिश्र श्रेष्ठी नरायणदास पाठशाला मथुरा।
शिवराम मिश्र साङ्गवेद विद्यालय शीतला घाटी मथुरा।
मदनमोहन मिश्र राजकीय संस्कृत पाठशाला भरतपुर।
मूलचन्द्र मिश्र ,, ,,
भगवतप्रसाद भट्ट ,, ,,
श्रीचन्द्र मिश्र सुधर्म पाठशाला तिकोनिया बागीची हाथरस।
रामशरण दीक्षित सुधर्म पाठशाला फतेहपुर बीलोच।
गिरिधारी शर्मा ब्रैंच स्कूल कोटा।

बालकृष्ण द्विवेदी अबोधनिवारणीवैदिक पाठशाला एटा।
मनीराम द्विवेदी ,, ,,
हरदेव वर्मा जवाहिरलाल संस्कृत पाठशाला मुरादाबाद।
जगन्नाथ शर्मा ,, ,,
ऋषिराम त्रिपाठी ,, ,,
पद्मदत्त पांडेय ,, ,,
कुन्दनलाल गौड़ ,, ,,
शिवचरण गौड़ ,, ,,
लक्ष्मीदत्त ज्योतिर्विद ,, ,,
राधेश्याम गौड़ हितैषिणी पाठशाला शाम्भल मुरादाबाद।
हरिदेवी प्राईवेट मुरादाबाद।
केदारनाथ उपाध्याय भागिरथीपाठशाला कनखल सहारनपुर।
गौतम उपाध्याय ,, ,,
अनन्तराम वर्मा ,, ,,
छोटनलाल मिश्र ,, ,,
जगदीश प्रसाद मिश्र ,, ,,
प्रेमदत्त पाठक ,, ,,
सोहनलाल मिश्र भागीरथी पाठशाला कनखल सहारनपुर।
सत्यदेव वर्मा ,, ,,
वेदव्रत गुप्त ,, ,,
प्रेमपुरी निर्वाणीय पाठशाला घंटाकोठी कनखल सहारनपुर।
जयदत्त पाण्डेय ऋषिकुलशाखा पाठशाला जवालपुर सहारनपुर।
बारुराम शर्मा संस्कृत पाठशाला बन्धौरा सहारनपुर।
विधिचन्द्र गुप्त ऋषिपाठशाला मावना मेरट।
सोहनलाल शर्मा ,, ,,
बन्धुराम मिश्र श्रीवेङ्कटरमण सनातन धर्म पाठशाला बिसौली बदायूं।
जीवनदत्त मिश्र ,, ,,
हेतसिंह वर्मा आर्य संस्कृत पाठशाला इस्लामनगर बदायूं।
बाबूराम सनाढ्य ,, ,,
चंडीप्रसाद गौड़ संन्यासी संस्कृत ऐंगलो वैदिक स्कूल धामपुर बिजनौर।
शक्तिकुमार द्विवेदी सनातनधर्म सभा संस्कृत विद्यालय लखीमपुर।
रामविलास त्रिपाठी ,, ,,
सूर्यप्रसाद सनाढ्य ,, ,,
मूलनरायण दीक्षित ,, ,,
रामविलास शुक्ल ,, ,,
चन्द्रदत्त पाठक नरायण संस्कृत पाठशाला धौहरा लखीमपुर खेरी।
सत्यनरायण दीक्षित संस्कृत पाठशाला दिलखुश लखनऊ।
बलदेवदास साधु सारस्वत पाठशाला बनवाली गली लखनऊ।
रामचरणलाल पाठक चन्द्रलधवर्द्धिनी पाठशाला वरैली।
महानन्द त्रिपाठी प्राइवेट बाराबंकी।
छोटेलाल दीक्षित डायमन्ड जुबिली ऐंगलो संस्कृत राजस्कूल सीतापुर।
चन्द्रशेखर अवस्थी ,, ,,
शिवनरायण शर्मा धार्मिक पाठशाला रातौसिया सीतापुर।
लोकेश्वर त्रिवेदी शिवनन्द सरस्वती वेदव्यासपाठशाला नैमीषारण्य सीतापुर।
सुन्दरलाल मिश्र कमलापुर।
गुरुप्रसाद दीक्षित ,, ,,

बालकराम शुक्ल विक्टोरिया ममोरियल संस्कृत पाठशाला सीतापुर।
सुबोधमिश्र ,, ,,
श्यामसुन्दर मिश्र ,, ,,
सुदर्शन शुक्ल विद्यानिधी पाठशाला मालापुर सीतापुर।
महाबीर प्रसाद पांडेय ,, ,,
उमाशङ्कर शर्मा चतुर्वेदी ए० बी० एम० स्कूल भीलसा ग्वालियर।
कृष्णदत्त शर्मा हिवेट संस्कृत पाठशाला टेहरी गढ़वाल।
हरनरायण पांडेय ,, ,,
लक्ष्मीदत्त शर्मा ,, ,,
भावनन्द पांडेय ,, ,,
जगन्नाथ ज्योतिषी ,, ,,
बनमालीलाल शर्मा रघुनाथ कीर्ति पाठशाला देवप्रयाग गढ़वाल।
वंशगोपाल पण्डा ,, ,,
रामावतार मिश्र साङ्गवेद विद्यालय नगवा पाठशाला बनारस।
रामजन्म ओझा ,, ,,
बद्रीदास चतुर्वेदी ,, ,,
जनार्दन मिश्र बाल पाठशाला भदैनी बनारस।
गङ्गाप्रसाद शुक्ल ,, ,,
ब्रह्माशङ्कर मिश्र ,, ,,
रामखेलावन भट्ट श्रीचन्द्रपाठशाला बुलानाला बनारस।
कालीचरण गौड़ ,, ,,
रामप्रसाद मिश्र ,, ,,
चीमनलाल उपाध्याय ,, ,,
प्यारेलाल उपाध्याय ,, ,,

भक्तराम रावत ब्रह्मविद्यालय कालिका गली बनारस।
महादेव मिश्र प्राइवेट शकरकन्दगली बनारस।
विश्वम्भरदत्त देवरानी युगलकिशोर रुईया संस्कृत पाठशाला नगवा बनारस।
सत्यानन्द मिश्र ,, ,,
गयाप्रसाद पाण्डेय ,, ,,
देवनन्द देवरानी ,, ,,
सोमनाथ त्रिपाठी ,, ,,
सुखनन्दन उपाध्याय ,, ,,
महादेव पाण्डेय ,, ,,
गोविन्द पाण्डेय ,, ,,
नरोत्तम शर्मा विशुद्धानन्द संस्कृत पाठशाला बनारस,
जयदत्तकान्डपाल अर्जुनराम शून्यमल संस्कृत पाठशाला ब्रह्मनाल बनारस।
गणेशदत्त शुक्ल ,, ,,
रामचरित्र पाठक सनातनधर्म प्रबोधनी वैष्णव संस्कृत पाठशाला बनारस।
अभयचन्द्र स्यादवाद पाठशाला बनारस।
शान्तिरजैया गुप्त ,, ,,
लीलाधर जोशी युवकपरिषद संस्कृत पाठशाला ब्रह्मनाल बनारस।
दत्तराम पाठक सेठ जानकीदास नरायण पाठशाला बनारस।
यदुनन्दन पाण्डेय मनकण्डिा पाठशाला बनारस।
रामसेवक त्रिवेदी वैश्य विद्यालय ठठेरी बाजार बनारस।
हरिप्रसाद भट्टारा ,, ,,
रामशरण पराशरी निर्भयराम छाजुराम संस्कृत पाठशाला बनारस।

राममोहन गौड़ तुलसी पाठशाला सीगरा बनारस।

वासुदेव त्रिपाठी दुर्गात्रिपाठीपाठशाला बनारस।

ब्रह्मदेव ओझा ,, ,,

देवनरायण दहल राजेश्वर पाठशाला बनारस।

पतिराज पाण्डेय काशीनाथसेठपाठशाला मैदागीन बनारस।

स्वामी वीरभद्र गिरी ब्रह्मविद्या पाटशाला टेढ़ीनीम बनारस।

श्रीनाथदत्त द्विवेदी भदैनी बनारस।

महाबीर त्रिपाठी विक्टोरिया संस्कृत पाठशाला गाजीपुर।

हरिद्वार चतुर्वेदी ,, ,,

जिमूनवन्धन द्विवेदी ,, ,,

लक्ष्मीनरायण त्रिपाठी ,, ,,

रामचरित्र त्रिपाठी सनातनधर्म पाठशाला विलवाय सुलतानपुर।

हरिहर पांडेय जुविली संस्कृत पाठशाला बलिया।

विश्वनाथ त्रिपाठी ,, ,,

त्रिवेणी त्रिपाठी ,, ,,

अनन्तदेव त्रिपाठी ,, ,,

लक्ष्मीनरायण चतुर्वेदी देवीप्रसादीय संस्कृत पाठशाला बलिया।

रामाधार त्रिपाठी सनातनधर्म पाठशाला जौनपुर।

तारकेश्वर त्रिपाठी ,, ,,

रघुपति शर्मा विद्याधर्मवर्द्धिनीसंस्कृत पाठशाला कोईरीपुर जौनपुर।

सूर्यप्रसाद शुक्ल संस्कृत पाठशाला तुलसीपुर गोन्डा।

त्रिभवनदत्त पाठक ,, ,,

शिवभीख त्रिपाठी सनातनधर्म पाठशाला आजमगढ़।

राजाराम त्रिपाठी ,, ,,

नरोत्तम मिश्र सरयूपारिणी ब्राह्मण संस्कृत पाठशाला मौनाथभञ्जन आजमगढ़।

भगवती प्रसाद द्विवेदी सनातनधर्म रक्षणी पाठशाला ब्रजराज कटरा मिर्ज़ापुर।

केदारनाथ द्विवेदी गवर्नमेन्ट हाई स्कूल मिर्ज़ापुर।

कालिकाप्रसाद मिश्र पुरुषोत्तम पाठशाला बेतियागंज चम्पारन।

भुवनेश्वरी प्रसाद मिश्र संस्कृत पाठशाला दाउदनगरगंज गया।

जगदेव पांडेय राधारमण पाठशाला मथिया कोयल देवहथुआ सारन।

राजदेव पांडेय ,, ,,

जगन्नाथ पांडेय संस्कृत पाठशाल केरकट जौनपुर।

रामानुग्रह उपाध्याय पट्टी नरेन्द्रपुर जौनपुर।

जगन्नाथ गलनेकर मानवल्ली पाठशाला बनारस।

अनन्तराम वेताल ,, ,,

वैजनाथ नेने ,, ,,

वेणीमाधव शर्मा संस्कृत कालेज बनारस।

हरिराम सारस्वत ,, ,,

सीताराम दुबे ,, ,,

हृषीकेश भट्टाचार्य ,, ,,

विश्वनाथ शुक्ल ,, ,,

सूर्यनरायण चतुर्वेदी ,, ,,

यमुनानरायण वाजपेई ,, ,,

पन्नालाल पुरोहित ,, ,,

॥ इति ॥

# अध्यापकः श्रीजगदीशचन्द्रः ।

## अवशिष्टांशः ।

—:०:—

( ६ ) आहता मांसपेशी पुनः प्रकृतिमेति, मृदुसमाहता त्वरितं प्रकृतिमाधत्ते, प्रवलमाहता च कालेनेति भेदः । किञ्च विषसंयोगात् न त्वरितं प्रकृतिमधिगन्तुं शक्नोति । येषां पदार्थानां संयोगात्सत्तया वा मांसपेशी त्वरितं न प्रकृतिमेति तद्विषम् , येषाञ्च पदार्थानां संयोगान्मांसपेशी सुस्था भवति तदेवौषधम् ।

बाह्याः पदार्था जीवशरीरमासाद्य कदाचिद्विषम् , कदाचिच्चौषधं भवन्ति । कदाचिच्चैक एव पदार्थो मात्राभेदात्प्रकृति विरुद्धं फलं जनयति । मात्राभेदाद्विषमप्यमृतं भवति ।

आहता मांसपेशी यथा प्रतिकरोति तथा पूर्वमुक्तमेव । अध्यापकः श्रीजगदीशचन्द्रमहोदयोहि राजकीयवैज्ञानिकसमितौ निपुणं प्रमाणितवान् यज्जीवदेहे मांसपेशी यथा प्रतिकर्तुं पारयति तथोद्भिज्जशरीरस्थापि मांसपेशी प्रतिकर्तुं शक्नोति ।

जीवशरीरनिर्जीवशरीरयोः को भेद इति जिज्ञासायामेतदेव प्रतिवक्तुं शक्यते

( १ ) जड़शरीरं परिणतमुपादानमासाद्य वर्धते । जीवशरीरं हि अपरिणतमप्युपादानं सङ्गृह्णाति, तं स्वयमेव परिणमयति ततश्च तेनैववर्द्धते, इत्थं हि वृद्धिङ्गते आत्मानं विभज्य, तेनैव विभक्तेनांशेन जीवान्तर मुत्पादयति । एतदेवात्मपुष्टिर्वंशवृद्धिश्चेत्युच्यते । एतदुभयमपि जीवशरीरे वर्तते, जड़शरीरे चैतयोरभाव एव ।

( २ ) जड़शरीरं बाह्यशक्तिसंयोगाद्वैकृत्यमेति, प्रतिक्रियाञ्च तनोति, परं नैतेन तस्य किंचिद्धितमहितं वा भवति । जीवशरीरं हि बाह्यशक्तिसमाहतं विकृतिमेत्यापि प्रतिकर्तुं प्रयतते, तां बाह्यशक्तिञ्चानुकूलयितुमिच्छति । बाह्यशक्त्यनुकूलीकरणप्रयास एव जीवनमित्युच्यते । यदा हि बाह्यशक्ति समाक्रमण निवारयितुं न पारयति जीवशरीरं तदा सावस्था व्याधिरित्युच्यते । यदा जीवशरीर बाह्याक्रमणं प्रतिरोद्धुमशक्तं भवति तदैव मृत्युरित्युच्यते ।

जीवशरीरनिर्जीवशरीरयोरेष एव भेदः प्रायो निरूप्यते । पर कीदृशोऽयं भेदः ? वृद्धिशक्तिर्जड़शरीरे नास्तीति नवक्तुं शक्यते । ननु दृश्यते वायुसंयोगान्मेघानां शरीरवृद्धिः । पर्वतेषु तुषारा वर्द्धन्त एव । पर जड़जीवयोर्वृद्धावस्ति कोऽपि महान् भेदो, येन नोभयोः साम्यं स्थापयितुं शक्यते । किञ्च बाह्य शक्त्याघाताज्जड़शरीरमपि तं प्रतिरोद्धुं प्रयतते । वात्यया शैलशिखराण्यपि भूमिसाद्विधीयन्ते । जड़शरीरेष्वपि व्याधिर्मृत्युश्चेति नाद्य यावत्केषामपि विज्ञानमासीत् । परं जगदीशचन्द्रमहोदयस्याविष्कारैर्जडानामपि जीवनव्याधिमृत्युप्रभृतयो विज्ञानसम्मता इति प्रमाणीभूतम् ।

अध्यापकजगदीशचन्द्रमहोदयो हि लोह-चूर्णप्रतिमं जड़पदार्थं विद्युत्तरङ्गैराहत्य तत्प्रमाणितवान्—

(१) विद्युत्तरङ्गाघातात्तेषां परिचालनक्षमत्वं सहसैव वर्द्धते, पुनश्च स्वयमेव तत्प्रकृतिमेति।

(२) परिचालनशक्तिवृद्धेरस्ति कापि सीमा, आघातमेत्य सा शक्तिः सीमानमासादयति, तत आहतापि सा न वर्द्धते।

(३) आघातादनन्तरं विहित आघाते तेषां परिचालनशक्तिः क्रमेण वर्द्धते। परं प्रथम आघाते यावती मात्रा वर्द्धते परिचालनशक्तेर्न तावती वृद्धिर्द्वितीयादिष्वाघातेषु।

(४) भूयो भूय आहतस्य तस्य परिचालनशक्तिस्त्वरितमेव सीमानमासादयति।

(५) प्रबलेनाघातेन परिचालनशक्तिः सीमानमासादयति, तदनन्तरं पुनराहतेष्वपि न भवति कापि प्रतिक्रिया नाम। इयमेव जड़पदार्थानां क्लान्तिरित्युच्यते, क्लान्तिरेव व्याधिः। व्याधिर्यदा चिरं स्थितो भवति तदा मृत्युर्भवति।

(६) जड़शरीरेऽपि बाह्याः पदार्थाः सङ्गताः कदाचिद्विषस्य कदाचिच्चामृतस्य कार्याणि निर्वर्तयन्ति। केचन पदार्थाः प्रतिक्रियाशक्तिमुत्तेजयन्ति केचिच्चालपयन्ति।

अद्ययावज्जड़जीवशरीरयोरस्ति महत् सादृश्यमिति न कस्यापि ज्ञातमासीत्परं जगदीशचन्द्रमहोदयेन हि निपुणमेतत्समर्थितं यत् जड़जीवयोर्नास्ति विशेषो भेदः।

साम्प्रतमध्यापकमहोदयो यूरोपीयैर्विद्वद्भिर्निमन्त्रितो यूरपविषयंगतः। तत्र हि महात्मनाऽनेनाभिनवेनाविष्कारेणावर्जितहृदया भविष्यन्ति वैज्ञानिका इति विचिन्तयन्तः प्रहृष्यामः।

---

## आत्मा मनश्च।

किं मनसः स्वरूपं, क आत्मा इति विषयोऽयं चारुवर्णितोऽस्माकं शास्त्रेषु। भगवान् वासुदेवोऽपि जगौ—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः।
(गीता)

शरीरादिन्द्रियाणि श्रेष्ठानि इन्द्रियेभ्यो मनः श्रेष्ठम्, मनसस्तु बुद्धिः परा, यो बुद्धेः परः स आत्मा इति। एतेनात्ममनसोः स्पष्टं भेदो निनिरूतः। पाश्चात्यविद्ययाप्येष एवार्थः प्रमाणीक्रियते, तदेवात्र शारदावाचकानां कृते निर्दिश्यते।

मानवानामपरेषाञ्च जीवानामुत्पत्तिः प्रथममेकस्मिन् कोषरूपे भवति। स प्राथमिकः कोषो मातापितृसंजाताभ्यां कोषाभ्यां निर्मितो भवति। ततः परं सकोषो बहुधा आत्मानं विभज्य शरीरावयवरूपे परिणमति। तस्मादेव बहुधा विभक्तात्कोशात् हस्तपदादीनि कर्मेन्द्रियाणि चक्षुर्घ्राणादीनि च ज्ञानेन्द्रियाणि जायन्ते। विभक्तात् कोशादेव बुद्धिमनसोराधारभूतं मस्तिष्कं निर्मितं भवति।

यदा प्रथमः कोश उत्पद्यते तदा स मस्तिष्कशून्या भवति अत एव न तत्र बुद्धि-

र्नापि मनस्तिष्ठति। एतस्मादेव विज्ञायते बुद्धिमानसोर्भिन्न आत्मेति। तस्मिन्नाद्यकोषे कापि शक्तिर्निभृतं तिष्ठति, या इन्द्रियाणि मनो बुद्धिञ्च निर्मातुं प्रभवति। मानवानां पशूनांच प्रथमिकः कोशः समान एव भवति, परमेकस्माद् मनुष्य उत्पद्यते, अपरस्माच्च कुक्कुरो वानरो वा। अस्माज् ज्ञायते तत्रैव कोशे निभृतं वर्तमाना शक्तिर्नियमयति यथायथं विभक्तान् कोषान्। सैव शक्तिरात्मेति व्यपदिश्यते।

मस्तिष्कं हि बुद्धिमनसोराधारभूतमिति साम्प्रतिकी जीवविद्या प्रमाणयति। अत एव मस्तिष्कचिकित्सया बुद्धिहीनोऽपि बुद्धिमान् सम्पद्यते उन्मत्तोऽपि प्रकृतिमापाद्यते।

बह्वीनां तन्त्रीणां सयोगान्मस्तिष्कमुत्पद्यते। तासु काप्यनुभवति, कापि विजानाति। अनुभवात्मिका तन्त्री अनुभवस्थानम्, ज्ञानात्मिका च तन्त्री बुद्धिरित्युच्यते।

बुद्धिर्मनइन्द्रियाणि चैषामस्ति परस्परं महान् भेद इति शक्यते प्रतिपत्तुम्, कश्चन्मनुष्यो मध्ये मार्गं स्थितश्चिन्तयति। तस्य हि मनस्तत्रैव निमग्नम्। तदा चक्षुषोः पुरः स्थितमपि पदार्थं पश्यन्नपि न पश्यति, आहूतोऽपि न शृणोति। सहि शब्दं शृणोति, रूपञ्च पश्यन्ति परं नावगच्छति किंचिदपि। मनसोऽन्यविषयासक्तत्वात्। परं यदि मनस्तं विषयं विहाय शनैः शनैस्तस्मिन् पुरस्थिते पदार्थे शब्दे च युज्यते तदा मानवोऽवगच्छति, सर्वम्। एतेनेन्द्रियबुद्धिमनसामस्ति भेद इति सम्यग्निरूपितं भवति।

एषामिन्द्रियबुद्धिमनसां मध्ये कापि शक्तिस्तिष्ठति, यन्नियोगादिन्द्रियाणि मनो बुद्धिश्च स्वीयं कर्तव्यं सम्पादयन्ति। सैवशक्तिरात्मेति।

केनेषितं पतति प्रेषितं मनः,<br>
केन प्राणः पतति प्रेतियुक्तः।<br>
केनेषितं वाचमिमां वदन्ति,<br>
चक्षुः श्रोत्रं क उ देवो युनक्ति।

आत्मेति।

गणेदत्तशास्त्री (विद्यानिधिः)

—:०:—

## पत्रपुस्तकपरिचयः।

**हितकारिणी**—इयं हिन्दीभाषामयी मासिकी पत्रिका। सम्पादकोऽस्याः पण्डितः श्रीरघुवरप्रसादद्विवेदिमहोदयः। "जबलपुर" हितकारिणीसभातः प्रतिमासं प्रकाश्यते। वार्षिकमग्रिममस्या मूल्यम् रूप्यकत्रयम् ३) "मनेजर हितकारिणी जबलपुर" इत्यत्र लभ्यते।

अस्याः प्रकाश्यमानाया अयं चतुर्थो वर्षः। अस्मिन् चतुर्थे वर्षे मनोहरेणावरणपृष्ठेनानुसन्धानपूर्वकं विनिबद्धैर्लेखैरियं विनोदयत्युपदिशति च निपुणम्। अस्या आवरणपृष्ठे प्रदत्तं चित्रं न केवलं रचनानैपुण्यकृतामेव मनोहरतामावहति। अपि तु चित्रमिदं पत्रिकायाः समीहितं साधु बोधयति। स्वास्थ्यविज्ञानोद्योगविषयिकाः सम्पादकलिखिताः टिप्पणयो महदुपयोगं जनयिष्यन्ति पाठकानां विशेषतो विद्यार्थिनाम्।

**विद्यार्थी**—एतन्नामकं हिन्दीभाषामयं मासिकपत्रम्। सम्पादकोऽस्य पंडितः श्रीरामजीलालशर्मा। वार्षिकमूल्यम् रूप्यक २) द्वयम्। अस्य प्राप्तिस्थानम्—हिन्दीप्रेस कर्नलगंज प्रयाग।

साम्प्रतमस्माकं सह सभ्यतया समुपचीयते जीवितौपयिकधनार्जनायासः। अत एव प्रायो निखिला एव जीवितौपयिकज्ञानार्जनव्यग्रा विलोक्यन्ते। भारतीयानां विद्यार्थिनां कीदृश आचारः, किंविधश्च धर्मः, कथं वा एभिः प्रवर्तितव्यमित्यादयो विषया एषामज्ञाता एव तिष्ठन्ति। अस्मादेव भारतीया विद्यार्थिनो नाधिगच्छन्ति स्वीयं कर्तव्यम्। किञ्च पाठ्यविषयादन्यत्र न भवति किंचिदप्येषां ज्ञानम्। साधारणज्ञानरहितो जनो यां दुरवस्थामनुभवति न तं विलिख्य बोधयितुं शक्नुमः। इदं मासिकपत्रं प्रकाश्य श्रीमता रामजीलालशर्मणा महदुपकृता भारतीया विद्यार्थिन इति निर्विशङ्कमुच्यते। अद्य यावदस्य तिस्रः संख्याः प्रकाशिताः। उत्तरोत्तरमेधमानं विद्यार्थिनः सौष्ठवं विलोक्य नितान्तं प्रहृष्यामः। चिरञ्जीवतु विद्यार्थी, समुपकरोतु च स्वसतीर्थ्यमंडलमिति कामयामहे।

**पङ्क्तिचन्द्रिका**—इयं चन्द्रिका दीक्षितघनान्धकारनिलीनं व्याकरणतत्वं प्रकाशयति, विवृणोति च कौमुदीफक्किकाः। समुद्भासयति च विद्यार्थिनां हृदयानि। इयं संक्षिप्तापि विशदा, कृतावरणापि स्फुटं विलोचनैः पेया।

भरतपुरमहाराजाश्रितः पंडितः श्रीगङ्गाप्रसादशास्त्रिमहोदयोऽस्याश्चन्द्रिकायाः प्रकाशयिता लेखकश्च। इयं चन्द्रिका चतुर्षु खंडेषु प्रकाशयिष्यते, येषामयं प्रथमः खंडः। अस्य खंडस्य मूल्यमष्टौ ॥) आणकाः। "भट्टशचीकान्तशर्मा भरतीभवन भरतपुर" इत्यत्र लभ्यते।

मध्यमादिपरीक्षासु पाठ्यात्मना निर्दिष्टा दीक्षितस्य कौमुदी, कौमुद्याः फक्किकाः कठिना अतिकठिना, अत एव बहुपरिश्रमस्य समभ्यस्तापीयं परीक्षासमये किमपि भीषणं रूपमासादयति। प्रश्नपत्रमवलोक्यैव विद्यार्थिनां वदनं तुषाराहतं कमलमिव निष्प्रभं जायते हृदयं हि कम्पमाधत्ते, आशाशतैर्हृदि निहितो मनोरथो दूरं निरस्तो भवति। अस्मादेव ग्रन्थिज्वरादपि भीषणादामयाद् विद्यार्थिनां रक्षायै श्रीमता शास्त्रिमहोदयेन प्रकाशीकृतेयं चन्द्रिकेति निश्चिन्वन्तः प्रमोदामहे। सन्त्यत्राक्षरयोजकदोषकृता अशुद्धयः, या संस्करणान्तरे नामशेषतामासदयिष्यन्तीति नो दृढः प्रत्ययः। अस्मिन् संस्करणेऽपि सन्निवेशितमशुद्धिशोधनपत्रम्, यत्साहाय्यान्न किमपि काठिन्यं भवति पाठकानाम्।

**रहस्यलहरी**—अमृतसरोनामके नगरे निवसति हरदत्तत्रिवेदिनामकः कश्चन पंडित। एभिरेव महाभागैरियं रहस्यलहरी गुम्फिता। हिन्दूनां धर्मे केषां ग्रन्थानां प्रामाण्यं, केषां न प्रामाण्यमिति साधु मीमांसितं त्रिवेदि महाभागेन। साम्प्रदायिकाणां प्रमाणग्रन्थाः

प्रमाणं न वेत्यपि सुविशदं निरूपितमत्र । सर्वैरेव धार्मिकैर्विद्वद्भिरियं लहरीसाक्षात्कर्तव्येति मेऽनुरोधः । अस्यामूल्यम् ≡) "पं० हरदत्तत्रिवेदी अमृतसर" इत्यत्र लभ्यत इत्यवैमि ।

**फक्किका लेखनप्रणाली निदर्शकम्**— अत्रापि कौमुद्याः फक्किका विवृता, प्रश्नपत्राण्यपि संयोजितानि । इयमतिसंक्षिप्ता, निर्दिशति च फक्किका लेखनप्रणालीम् । मूल्यमस्या ।) ताराशङ्करशर्मा, दरागंज प्रयाग इत्यत्र लभ्यते ।

**अधिकरणरत्नमाला**—श्रीमता साहित्याचार्यपण्डितरामावतारशर्मणा ग्रथिता प्रसिद्धं हि साहित्याचार्यमहोदयस्य लेखनपाटवं वैदुष्यंच । साहित्याचार्यप्रतिमा विद्वांसोऽद्यापि संस्कृतां वाग्देवीमाराधयितुमुद्यता इति यत्सत्यं समुन्नतं शिर एतस्या । साहित्याचार्यमहोदयस्य हि नाधिकः परिचयः शारदावाचकानां कृतेऽपेक्ष्यते । अस्या मूल्यम् १) पं० बलदेव शर्मा, पटना कालेज बाँकीपुर इत्यत्रेयं रत्नमाला प्राप्यते ।

नाद्ययावद् भगवत्याः सरस्वत्यास्तात्विकं रूपं दृष्टंकेनापि । अत एव निपुणमनुसन्धाय प्रेक्षावद्भिर्विद्वद्भिरात्मनः सिद्धान्ताः प्रकाश्यन्ते । अतएवैकस्यैव वेदान्तदर्शनस्य बहुभिर्भाष्यकारैर्बहूनि भाष्याण्युपनिबद्धानि । साहित्याचार्यमहोदयस्यायमभिनवो दार्शनिक सिद्धान्तोऽनया रत्नमालया प्रकाश्यते । इयं रत्नमाला विद्वद्भिरवश्यं विलोकनीयेत्यभिप्रायोऽस्माकम्, परीक्षणीयश्चसिद्धान्तः साहित्याचार्यस्य ।

श्रीगुरुस्तवराजः, श्रीदयालुस्तवषोडशी च, लघ्वाचार्यविरचतो लघुस्तवराजस्त्रिपुरास्तवात्मकः । सोमतिलकसूरिनिर्मितज्ञान दीपिकया संस्कृतव्याख्यया, नगौरनगर वास्तव्यप्रधानानाथोपकारक संस्कृतपाठशाला ध्यापकेन श्रीमता लक्ष्मणदासशास्त्रिणा निर्मितया सान्वयभाषाटीकया च विभूषितः । अस्य मूल्यम् ।-)

द्वितीयोऽपि स्तोत्रग्रन्थ एव । अत्रषोडशश्लोकैस्तुतो भगवान् दयालुः । मूल्यम् आणकत्रयम् ≡)

द्वयोः प्राप्तिस्थानम्—

पं० लक्ष्मणदास शर्मा माधवदास शर्मा
प्रचीनसंस्कृत पुस्तकालय बखतसागर पर
नागौर--मारवार,

**वाजीकर कल्पतरु**— हिन्दीभाषामयं "हिन्दीवैद्यकल्पतरु" नामकं मासिकपत्रं प्रतिमासं हमदाबाद नगरात् प्रकाश्यते । यस्य सम्पादकः श्रीमान् वैद्य जटाशङ्कर लीलाधर त्रिवेदी । प्रकाश्यमानस्य हिन्दीवैद्यकल्पतरोरयं द्वितीयो वर्षः । वैद्यकल्पतरुनामकं मासिकपत्रं गुर्जरभाषयापि प्रकाश्यते श्रीमता त्रिवेदि महाभागेन । यस्य चास्ति महान् प्रचारो गुर्जरविषये । अयं हि प्रसिद्धो ग्रन्थकर्ता गुर्जरेषु । स्वास्थ्यतत्त्वमधिकृत्य त्रिवेदिमहाभागेन निर्मितावहवो गुर्जरभाषाग्रन्थाः । तेष्वेवैकस्य ग्रन्थस्य हिन्दीभाषामयोयमनुवादग्रन्थः । अनुवादकः श्रीमाधव शर्मा । मसृणे पत्रे मनोहरैरक्षरैर्मुद्रितस्य सुन्दरं प्रावृतस्य चास्य ग्रन्थस्य मूल्यम् ॥) वैकल्पतरुकार्यालय अहमदाबाद इत्यत्र प्राप्यते ।

स्वास्थ्यतत्वमधिजिगमिषूणां यूनामुपकारकोऽयंग्रन्थः। यौवने कथं प्रवर्तितव्यं येन स्वास्थ्यभङ्गो न भवेत् अस्वस्थेन चानुष्ठेया उपाया अपि वर्णिता ग्रन्थेऽत्र। गुर्जरस्यापि वैद्यमहोदयस्य हिन्दीभाषयामनुरागातिशयं विलोकयन्तः प्रहृष्यमः।

**कविकर्तव्य**—हिन्दीभाषामयी कविकर्मबोधनपरा पुस्तिका। अत्र भरतपुरनिवासिना विद्यारत्न जगन्नाथदास विशारद महोदयेन निपुणमुपदिष्टं कविकर्म, मूल्यम् ।) श्रीनत्थन शर्मा विरक्त मन्दिर भरतपुर इत्यत्र प्राप्यते।

---

## वार्ताः सम्पादकाभिप्रायाश्च।

**संस्कृतसाहित्यसम्मेलनम्**—हरिद्वार ऋषिकुलमहोत्सवावसरे निर्विघ्नं निर्वृत्तः संस्कृतसाहित्यसम्मेलनोत्सवः। कलकताराजकीयसंस्कृतविद्यालयप्रधानाध्यापकेन महामहोपाध्यायपदभाजा श्रीमता सतीशचन्द्रविद्याभूषणमहोदयेनालंकृतमभवत्सम्मेलनस्यासनमिति विजानन्तः प्रहृष्यामः। पंडितमदनमोहनमालवीयमहोदयः पंडितः श्रीरामावतारशर्मा एम् ए साहित्याचार्यमहोदयश्च सम्मेलनसभां सनाथितवानित्यपरं नः प्रमोदस्थानम्।

सम्मेलनमहोत्सवे बहूनां विदुषां लेखाः पठिताः। संस्कृतभाषाभ्युदयोपायश्चापि चिन्तितः। परं क स उपाय, उपाया वेति नाद्ययावद्विदितमभवदस्माकम्। सम्मेलनेन किमपि मुखपत्रं प्रकाशनीयमिति स्थिरीकृतं सम्मेलनसभ्यैः। इदं पदं संस्कृतरत्नाकरेण विभूषितमिति सानन्दं प्रकाशयामः। उत्तरोत्तरमभ्युदयमधिगच्छतु सम्मेलनमिति नः कामना। संस्कृतसाहित्यसम्मेलनमधिकृत्य यद्वक्तव्यं तदन्यदा प्रकाशयिष्यामः।

**जीवविद्या**—भारतीयमहर्षिणां जीवविद्या यां दिशमभिलक्ष्य प्रवहमानाऽभवत्, साम्प्रतिकी सा विद्या तां दिशमपहाय कमप्यभिनवं पन्थानं प्रतिष्ठमाना न केवलं विदुषां विनोदयत्येवमनांसि, अपि तु सा अद्भुतानि कर्याणि सम्पादयन्ती प्रथयति महिमानं जीवविज्ञानस्य। अत एवाधुनिकीयं विद्येति प्रोच्यते। साम्प्रतिकैर्जीवविद्याचणैर्विहिता आविष्कारा यत्सत्यं विमोहयन्ति दृष्टाः श्रुता वा निखिलान्। कस्यापि प्राणिनः किमप्यङ्गं यदि क्षतं भवति, तदा तस्मादेवस्थानादभिनवोऽवयवो निर्गच्छति। क्षतस्थानाज्जायमानोऽवयवो न तज्जातीयस्य कस्यापि प्राणिनोऽङ्गे विलोक्यते। द्वौ प्राणिनौ यदैकत्र संयोजितौ भवतस्तदा तावप्येकीभावमधिगम्य सुखं जीवतः। एवंविधं बहुतत्वं जीवविद्यायाः साम्प्रतमाविष्कृतमाविष्क्रियते च। सर्वमेतत्परीक्षया प्रमाणितं तैः। नैवंविधपर्यालोचने कुतूहलनिवृत्तिरात्मसन्तोषो वा फलतया निर्द्धारितस्तैः। किन्तु जीवानां निगूढं तत्त्वं, प्रकृतिमुत्पत्तिप्रकारञ्च विज्ञातुं तेषां प्रयासः। इत्थं पर्यालोचयद्भिस्तैर्यदधिगतं तदतीवाद्भुतम्, पुरा यस्य प्रणिनो यत्र चक्षुरासीत्, साम्प्रतं तत्रैव पादौ समुद्भूतौ, एकस्य पुच्छस्य स्थाने पुच्छद्वयमाविर्भूतम्।

भग्नबाहुमूलादपरस्तज्जातीय एव जीवः समुत्पन्न इत्येवंविधो विस्मयकरो व्यापारः प्रत्यक्षीक्रियते । परमुच्चवर्गीयेषु जीवेषु नाद्य यावत्परीक्षा विहिता । विलोकयन्तु भारतीयाः सचक्षुःस्फारं पश्चात्यानां वैज्ञनिकानां विद्यानुशीलनम् ।

**स्त्रीणां शिक्षणम्**—स्त्रियः शिक्षणीया नवेति प्रश्नोऽय साम्प्रतं निखिलानां भारतीयानां शिरो विधूर्णयति । केचन स्त्रीणां शिक्षणं हानिकरमिव मन्यन्ते । तैश्चात्मनः पक्ष द्रढयितुकामैः प्रदर्श्यन्तेबह्व्योयुक्तयः । पूर्वं न काश्चिदपि स्त्रियः शिक्षिता इति तेषां प्रधानं मतम् । सीतसाबित्रीरुक्मिणीप्रभृतयः सती मूर्धन्याः कुलललना नामापि नावगच्छन् विद्यायाइति ते वदन्ति । इयमेषां महाभागनामुक्तिर्द्रढ्यति यदेतेऽनभिज्ञा भारतोयानां प्रत्नानां चरितज्ञाने । अत्रैव भारते विश्ववारा नाम काप्यात्रयगात्रा नारी मन्त्रान् ददर्शेति सुस्पष्टमवबोधयन्ति भारतीया ग्रन्था । शीला विज्ञामारुलामोरिकाप्रभृतीनां स्त्रीकवीनां कवित्वयशसा नैषां कर्णकुहरमद्यापि पवित्री कृतमिति भारतीयेतिवृत्तानभिज्ञानां मत प्रकाशनपाटवं विलोक्य नितान्तं विषीदामः । महाभागाः, काममङ्गीकर्तव्यं यत्पुरा भारते स्त्रीशिक्षण नादृतमभवत्, परमद्यापि नापेक्ष्यते तदित्यत्रास्ति कश्चिद्धेतुः । पुरा सदाचारिणां संसर्गादपठिता अपि स्त्रिय आत्मनः कर्तव्य ज्ञानं समासादयन्, परमद्य तु नस्ति तथाविधः समाजः, अद्य तु नास्ति काप्यनुसूया या सीतामुपदिशेत्, नापि सन्निहिता सीता यानुसूयोपदेशेषु बद्धादरा भवेत् । अस्तिवाद्य कश्चिदुपायो येन साम्प्रतं स्त्रिय आत्मनः कर्तव्यं ज्ञातुं पारयेयुः ।

वयन्त्वित्थमामनामः—स्त्रियोऽपि शिक्षणीयाः; परं तासां शिक्षणं न पुरुषाणामिव भवितुमुचितम् । स्त्रीणामन्यत्कर्तव्यं पुरुषाणाञ्चन्यत् । कर्तव्यज्ञानार्थमेव शिक्षणं भवति, या शिक्षा कर्तव्यज्ञानं नावगमयति, न सा शिक्षा इति मतमस्माकम् । स्त्रिपुरुषयोः शिक्षाभेदो ऽवश्यंविधेयः । यतो भिन्ना प्रकृतिः स्त्रीणां पुरुषाणाञ्च, भिन्नञ्च कर्तव्यम् ।

केचन वदन्ति स्त्रीणां प्रारम्भिकी शिक्षा एव श्रेयसे । यतः उच्चशिक्षया स्त्रीणां प्रकृतिवैकृत्यमेति । हन्तश्रुतं श्रोतव्यम्' महर्षीणांगोत्रजा उच्चशिक्षया प्रकृतिर्विकृता भवतीति वदन्ति । मन्ये साम्प्रत वयमेव विकृतमस्तिष्का' ये ज्ञानं धिक्कारकारणमवगच्छामः । अन्धो हि सूर्यमेव तमःकारणं समाकलयति । ईश्वरप्रवणचेतसां भारतीयानां मुखादीश्वररूपज्ञानस्य निन्दामुपशृण्वतां हृदयं शतधा विदीर्यते । कदानु वयं ज्ञानाहृत तमस्का ज्ञानमाहात्म्यमवगन्तुं शक्नुमः ।

**अश्वानां शिक्षा**—इतरेऽपि प्राणिनः सङ्केतं ग्राहयितुं शक्यन्त इति विदितं भारतीयानाम् । शुका हि शिक्षिताः समुच्चारयन्ति 'राम राम, हरेकृष्ण" प्रभृतीन् शब्दान् । अश्वा अपि रेचित प्लुतिकधारितकधाराद्याः गतयः सुखेन ग्राहयितुं शक्यन्ते । शर्मण्यदेशीयेन केनापि पाठतः कोऽपि कुक्कुरः कथोपकथनं कर्तुं पारयति । कुक्कुरैस्तेना अपि गृह्यन्ते । शर्मण्यदेशीयेनैव "कार्लक्राल" नामकेन विदुषा काप्यभिनवा अश्वशिक्षण पद्धतिः प्रकाशिता । तेन महोदयेन द्वावश्वावपि शिक्षितौ, यौ योगहननगुणनव्यवकलनादिकं कर्तुं पारयतः ।

"कार्ल क्राल" महोदयो हि शर्मण्यदेशीय इत्युक्तमेव पूर्वम् । एष हि महाभागो मनो-

विज्ञाने निपुणः पंडित इति प्रसिद्धिरेतस्य तेषु देशेषु। एतेन महोदयेन "जन्तूनां चिन्तनशक्ति" नामकं किमपि पुस्तकं विरचितम्। अश्वशिक्षणे यत्फलमधिगतं, तदेवात्र पुस्तके विलिखितमभवत्। इदं पुस्तकं विलोक्य न कोऽपि महाशयस्य सिद्धान्त आस्थामारोपयितुमशकत्। केचिच्च कार्लं क्रालमहोदयं व्यनिन्दयन्। इत्थं बहुभिर्निन्दितस्य तिरस्कृतस्य च क्रालमहोदयस्य फलितं मनोरथपादपेन। प्राणितत्वविदां तत्र दृष्टिर्निपतिता। ते हि क्रालमहोदयस्य सिद्धान्तनिर्धारणाय तत्समीपमुपजग्मुः। तेषु प्रसिद्धः प्रणितत्त्ववेत्ता जिगलरमहोदयः। तेनात्मना दृष्टं यद्वर्णितं तेन सकलोऽपि जनः क्रालमहोदयस्य सिद्धान्तमङ्गीकरिष्यति। अनुसन्धित्सुभिः सर्वमेव विधातुं शक्यते। ये हि दैवमेवोपधानीकृत्य शेरते, तेषामुदाहरणं वयमेव।

**वाग्मिता**—साम्प्रतं यूरोपीयविदुषां बुद्धिर्विज्ञानेऽप्रतिहता नवंनवं तत्त्वमाविष्करोति। यत्कर्तव्यं यद्वक्तव्यं तत्सर्वं विज्ञानानुमतमेव भवेदिति तेषां सिद्धान्त इव प्रतीयते। कीदृशो मनुष्यो वाग्मी भवितुं शक्नोति, वाग्मिनां शरीरे का क्रिया भवतीति विषयमिममधिकृत्य "सिगनर ए.१० एल० पाट्रिजी नामकः कश्चन प्रसिद्धो विद्वान् पुस्तकमेकमरचयत्। तत्र हि वग्मिता केषांचन प्राकृतिकानां नियमानामायत्तेति महात्मना तेन प्रतिपादितम्। वक्षःप्राशस्त्यमपि वाग्मित्वे हेतुः। यो हि रुग्णोऽप्रशस्तवक्षा च, न स वाग्मी भवितुं शक्नोति। प्रशस्तवक्षसां हि वक्तृता सर्वेषां मनोहरति, स एव च ख्यातिमासादयति। व्याख्यानदानसमये वक्तुः शारीरशक्तिर्ह्रसते, तदा कियान् शक्तिह्रसो भवतीत्यापि केनापि यन्त्रेण प्रमाणीकरोति पाट्रिजी महोदयः। सहि बहूनां प्रज्ञानामभिनवानांच वाग्मिनां चरितोदाहरण पुरस्सरं प्रमाणितवान् विषयममुम्। पाट्रिजी महोदयो वदति वाग्मिनः साधारण्येन स्वस्था मांसलाश्च भवन्ति। दार्शनिकप्रतिमं नैते चिन्तयितुं शक्नुवन्ति। एषां बुद्धिरपि न प्रखरा भवति, परमेषां स्मरणशक्तिमवलोक्य सर्वेऽपि चकिता भवन्ति। वाग्मिनो नहि किमप्यभिनवं तत्त्वमाविष्कर्तुं पारयन्ति, एषां बुद्धिर्हि प्रायः प्राकृतमनुष्याणामिव भवति। पाट्रिजी महोदयस्य सिद्धान्तः परीक्षणीयो विद्वद्भिः।

**अध्यापने प्रकृतिः**—चिकित्सको हि प्रथमं प्रकृतिं परीक्षते। प्रकृत्यनुकूलं प्रवर्तमानः सकलोऽपि सफलो भवति। यो ह्यविज्ञाय प्रकृतिं, चिकित्सते स नासादयति फलम्, न्यक्कृतश्च भवति। तस्मात् प्रकृतिपरिक्षणं सर्वत्र विधेयं धीमद्भिः।

अध्यापनमपि प्रकृत्यनुकूलमेव फलते। कस्यचिद्बुद्धिः साहित्ये रमते, कश्चिच्च दर्शनानि श्लघते, कश्चिच्च गणिताय स्पृहयति। इत्थं भिन्नप्रकृतिको जनो भिन्नभिन्नं विषयं ज्ञातुमुत्सुको भवति। प्रकृतिसमुद्भेदो हि बाल्य एव भवति। बालानां प्रकृतिनिर्णयः सुशकः। अतएव पुरा भारते बाला एव गुरुकुलं प्रेष्यन्तेस्य। गुरुवंश्च तेषां प्रकृतिं निर्णीय, तदनुकुल विषयमध्यापयन्तिस्म।

Printed by Pt. Lakshman Balwant Bhate at the Triveni Printing Works
and Published by P. Chandra Shekhar Daragunj-Allahabad.

# शारदा

मासिकी संस्कृतपत्रिका ।

विद्ययाऽमृतमश्नुते ।

प्रथमे वर्षे } १९७१ विक्रमाब्दाः, चैत्रः { षष्ठी संख्या,

## सरस्वतीस्तुतिः ।

यदद्भुतरसाश्रयात्सुकृतिनो रसाधिष्ठिता
न जातु मनसा रसं विदधते रसे लौकिके ॥
तदद्वयसुखास्पदं विषयनिर्व्यपेक्षञ्चिर-
ङ्कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः १

यदङ्घ्रिकमलानता अथ सकृत्कटाक्षेक्षिता
जडा अपि बुधेन्द्रतां सपदि संश्रिता यद्बलात् ॥
महीपतिगणेष्वपि स्फुटमनादरन्तन्वते
कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः २

विहाय विषयोद्गतापरिमिताघभोगव्यथां
सदा स्मरणमात्रतो जनयति प्रमोदं हि यत् ॥
तदुच्चमतिभिश्चिरादतिरसात्कृतोपासन-
ङ्कवीन्द्रकुलदैवत हृदि चकास्तु दिव्यं महः ३

यदीयकरुणादृशा सकृदवेक्षिताः पामरा
अपीह कविताचणा ननु भवन्ति पृथ्वीतले ॥
वचोऽविषयमेव तन्मम सदैव सारस्वत-
ङ्कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः ४

जगन्नाथशर्मा ।

# किं विधेयम्।

—:०:—

केनाप्यनिर्वचनीयेन हेतुना, निसर्गेण वा न कोऽपि पदार्थः सततमेकेनैव रूपेण स्थातुं पारयति। निखिलमेव वस्तु सदा परिवर्तते। सञ्जातपरिचयोऽपि पूर्वं समादृताऽपि पदार्थो, यदाभिनवां भूमिकां परिगृह्णाति, यदा रूपान्तरमासादयति, यदा चात्मनः परिचिति हेतुभूतान् गुणान् परिवर्तयति तदा न तं कोऽपि विजानाति। गुणा एव मानवं पदार्थञ्च प्रत्यभिज्ञापयन्ति। गुणभेदादेव भवति गुणिनि भेदः। अत एव च परिवर्तितगुणा न परिचीयन्ते पदार्थाः। पूर्वगुणार्जितस्थानाच्च ते हीयन्ते। परिवर्तितगुणानां पदार्थानां मित्राणि शत्रुत्वं, शत्रवश्च मित्रत्वमधिगच्छन्ति, परिवृत्तिरेव जगतः प्रधानो धर्मः। अस्मादेव जगदिदं दुःखकारणमिति पूर्वे प्रोचुः।

इयं नैसर्गिकी परिवृत्तिरेव कदाचित्कमपि समाजं समुन्नमयति, कदाचिच्च तमेवावनमयति। अनयैव परिवृत्या कदाचित्कोऽपि जनो लोकपूजितो भवति, कदाचिच्च स एव विगीयते। दुर्वलो वली, निर्धनो धनी, मूर्खश्च विद्वान् भवति, जीवन्नरो म्रियते, मृतश्च जीवति, गच्छन् तिष्ठति, तिष्ठन् गच्छति। सुप्तः प्रबुध्यते, प्रबुद्धश्च स्वपिति। इत्थमेवात्र जगति निखिला पदार्थाः परिवृत्तिधर्मा विलोक्यन्ते।

इयं परिवृत्तिर्नैसर्गिकी, सहेतुका वेति नाद्य यावन्निश्चितोऽयमर्थः। केचिद्वदन्ति, सहेतुकेयं परिवृत्तिः, अन्ये वदन्ति नैसर्गिकीयमिति। आस्तां नाम यथा तथा वा, परं परिवृत्तिनामकः कोऽपि धर्मोऽस्ति, यो हि परिवर्तयति पदार्थान्। परिवृत्तिनामकस्य पदार्थस्य सत्तायां नास्ति विवादः कस्यापि।

द्विविधा सेयं परिवृत्तिः। बाह्या आन्तरा च। याहि मानवानां पदार्थानाञ्च बाह्यं रूपं परिवर्तयति, सा बाह्या परिवृत्तिः, यया चान्तर्विकृतं भवति सा आन्तरा। आन्तरपरिवृत्तेर्ज्ञानं यथा न भवति सर्वेषाम्, तथैव बाह्यपरिवृत्तेरपि ज्ञानं दुर्ज्ञेयमेव। यदा कस्यचिद्वस्तुनो विकृते बाह्यरूपे परिवृत्तिर्भवति, तदा समुन्नतं तद्वस्त्विवतिव्यवहारो भवति, यदा च कस्यचिद्वस्तुनः प्रकृतिर्वैकृत्यमापाद्यते परिवृत्या, तदाऽवनतं तद्वस्त्विवति भवति व्यवहारः। इत्थमेवान्तररूपेऽपि भवति। कस्यापि देशस्य समाजस्योन्नतिरवनतिश्चानया परिवृत्यैव साधिता भवति।

पदार्थपरिवृत्तिर्ज्ञातुमशक्येत्युक्तमेव पूर्वम्। अनुद्भिन्नचेतना आसन्नचेतनाश्च प्राणिनो नात्मनः परिवृत्तिं लक्षयन्ति। अत एवावशं ते परिवृत्या परिचाल्यन्ते। ते कदाचिदवनतिमधिगच्छन्ति, कदाचिच्चोन्नतिम्। प्रकृतिपरवशेषु तेषु प्राणिषु परिवृत्तिः शनैः शनैर्भवति, यतस्ते प्रकृतिपरवशाः, प्रकृतिप्रेरिता एव ते प्रवर्तन्ते निवर्तन्ते च।

मानवो हि नासन्नचेतनो नाप्युद्भिज्जचेतनश्च, अपि त्वयं चेतनः। मानवः प्राणिषु श्रेष्ठो ज्ञानेन। अयमात्मनः कर्तव्यमकर्तव्यञ्च विजानाति, हितमहितंच परिचिनोति इष्टमुपगच्छति, अनिष्टञ्च जहाति, एष परिवृत्तिमपि ज्ञातुं पारयति। परमस्य परिवृत्तिज्ञानं नात्मना भवति, कस्यचिद् मुखाच्छ्रुत्वा, इतिहासग्रन्थान् पठित्वा चैषात्मनः परिवृत्तिं ज्ञातुं पारयति।

इयं परिवृत्तिर्नैसर्गिकीत्युक्तमेव पूर्वम्। प्रकृतिरेव निखिलान् पदार्थान् परिवर्तयति। ये पदार्थाः प्रकृत्यधीनाः, तेषां परिवृत्तिः क्रमेण भवति। परं प्रकृतितन्त्रमतीत्य स्वयं व्यवहरत्सु नेयं परिवृत्तिः प्राकृतिकी। मानवा यथेच्छमाचरन्ति नैषां मनः कस्मिँश्चिदेकस्मिन्नेव वस्तुनि रमते। एत उपनतं वस्तु द्विषन्ति, अनुपनतं च कामयन्ते। मानवा इच्छापरवशाः सदा परिभ्रमन्ते। इदमेव मानवानां परिवृत्तिर्निदानम्। अतश्चैत आत्मनः परिवृत्तिमवरोद्धुमपि पारयन्ति। अवनतोऽपि जन आत्मानमुन्नेतुं शक्नोति। तदर्थमात्मनः स्वरूपज्ञानमपेक्षितं भवति स्वरूपज्ञानं हि प्रत्नेनेतिहासेन सामयिकस्थित्या च विबोध्यते। इतिहासो हि प्रत्नानां चरितं विबोधयति। उन्नतस्यावनतस्य च समाजस्य तत्र चित्रमङ्कितं तिष्ठति। उन्नतस्य समाजस्येतिहासाध्ययनेन तदुन्नतिहेतुभूता उपाया अवगम्यन्ते। अवनतसमाजस्येतिहासो विबोधयत्यवनतिहेतुभूतानि कर्माणि। इत्थमितिहासमनुशीलयन् मानव उन्नायकानुपायाननुतिष्ठति, परिवर्जयति च तानि कर्माणि, यान्यवनमर्यन्ति। सूक्तं केनापीतिहासभिज्ञेन महात्मना—"सर्वो हि देशः समाजश्चात्मनो भविष्यच्चित्रमितिहासे द्रष्टुं पारयति, यो हि देशः समाजश्चेतिहासं नानुशीलयति, इतिहासे न श्रद्धते, स कथमात्मनः सत्तां स्थापयितुं शक्नोति"।

साम्प्रतं भारतीया विशेषतः संस्कृतज्ञा गर्ह्यन्ते, असभ्या इति भारतीयोऽपि जनः संस्कृतज्ञानालपितुं नेच्छति। नैते देशसमुन्नायके कर्मणि व्यापृता भवन्ति, एतेऽज्ञानमेवप्रचारयन्ति, द्विषन्ति च श्रेयःपन्थानम्। संस्कृतज्ञा अपि धनिनां मुखमवलोकयन्तः प्रमाणयन्त्यात्मनो दुरवस्थां, समर्थयन्ति च संस्कृतज्ञानामपाटवम्। हन्त, ईदृशे विपन्मये समये समुपनते किं विधेयमिति जायते स्वत एव जिज्ञासा। अपि नाम कश्चिद्विद्वान् विधेयं निर्देष्टुं शक्नोति?

कारवराङ्मुखा भवन्ति भवद्विधा महात्मानः इत्युक्तवति तस्मिन् सम्भ्रमातिभूमिंगते मूकभावमापन्ने च मयि तद्रक्षिणो मम पादयोर्न्यपतन्। वृद्धश्च मामालिंग्य हर्षाश्रुरुद्धकण्ठो वक्तुन्नापारयत् इत्येवमाश्चर्यातिशयलुप्तवाग्व्यापारेषु अस्मासु गर्भागारान्निष्क्रम्य वेपथुस्खलगतिरनीशा चंक्रमणे काचिदबला शिरसि मामाघ्राय दर्शितपुत्रवात्सल्या शनैरेवमवोचत् वत्स समागतोऽसि मम मन्दभाग्यायाः पुण्यशेषेण, परित्रातमायुष्मताऽस्मत्कुलमदृष्टपूर्वोऽपि पूर्वजन्मसुहृदिव सहायोऽसि नः संवृत्तः अयं हि मे पुत्रकः पिशाचाऽभिभूतस्तप्यतेऽहर्दिवन्तापयति चाऽस्मांस्तदेकजीवितान् आहूताः सुदूरस्था अपि भूतविद्यापारङ्गताः, उपहारव्यापारातिवाहितवासराः स्थिता स्म दीर्घकालम्, आरितानि सिद्धयन्त्रणि वद्धानि मन्त्रितडोरकानि, धूपिता रक्षोघ्ना धूपाः दत्तानि वहूनि नस्यानि, प्रयुक्तानि अञ्जनानि परञ्च नैवम्बिधानि मधुराणि सम्बद्धानि च वचनानि श्रुतानि वत्सस्य मुखाद् यादृशानि भवद्दर्शन परितुष्टाऽऽत्मनोदीरितानि साम्प्रतम्, तद्रोचयात्रैव द्वित्राण्यहानि वासम्परित्रायस्व नः सन्ततिविच्छेदभयादुद्धरस्वाऽस्मानस्मादपत्यविपदर्णवादुपार्जयाऽस्मत्प्राणत्राणजनितममितपुण्यराशिमवाप्नुहि च हिमकरकराऽवदातं यशः इत्येवमनवरतपतद्वाष्पविन्दुसम्मार्जनखिन्नयाऽनया भृशमर्थितश्चिरपरिचितसुहृत्प्रणयभङ्गभीरुरिव प्रतिज्ञातवानहं वस्तुम्, अथ तदनुचराहूतनिजपरिजनविनिवर्तिताऽह्निकक्रियः समुपास्य पश्चिमां सन्ध्यामतिक्रामति प्रदोषसमये नक्षत्रकुलसञ्चारयोग्यतामुपगते गगनमण्डले हिमगिरिकानने च दारिद्र्यमुपगते च भारतवर्ष इव तमस्तोमे गृहोपरितनभूमिकारचितशयनसम्भारः शयानः पर्यङ्केऽतिक्रांतघटनास्मृतिविलुप्तवागवृत्तिः तमेव युवानमागच्छन्तमपश्यम्। स तुत्वरितगतिरभ्युत्थानोद्यतम् विनिवार्य मां सञ्ज्ञया शयनैकपार्शस्थितं पीठमाक्रम्य मामवोचत् महाभाग किमर्थमत्रापरिचितेन मयाऽत्र स्थातुमभ्यर्थितः कथं चोपकृतमायुष्मता किंचाऽधुना कर्तव्यमित्येवंविधाभिर्भावनाभिः सुभृशमायस्यसे तदवगत्यावसरञ्च विज्ञाय समागतोऽस्मि विनिवेदयितुमात्मनः किमपि रहस्यन्तच्चाऽवहितेन मनसा श्रोतव्यमिति मामामन्त्र्य परितोऽवलोक्य स्वयमुत्थाय सोपानद्वारमपिधाय माभैरिति व्याहरन्नासाद्यमासाद्य शनैरुपविश्य वक्तुमारभत।

अपि तात श्रद्दधासि श्राद्धकर्माणि, मानयसि भूदेवान्, अर्चयसि सुरान्, अभिवादयसि वृद्धान्, पर्यटसि तीर्थान्यनुकम्पयसि दीनलोकम्, प्रयच्छसि यथा विभवमर्थमर्थिजनेभ्य।

गङ्गाप्रसाद शास्त्री

साहित्याचार्यः

# संस्कृतभाषा
## कथं
# व्यावहारिकी भवेत् ?

———:०:———

ऋषिकुलहरद्वारे,धिविष्टस्य संस्कृत-साहित्य-संमेलनस्य प्रथमवार्षिकमहोत्सवे योहि ज्येष्ठशुक्ल ६ मीमारभ्य १२ शो १९७१ पर्य्यन्तममन्देनानन्देन सह-निर्वृत्तः-पठितोयं निबन्धः।)

———

पुरा खल्वासीत् समस्तमुनिमनुजवृन्दवृन्दारकवन्दनीयपादारविन्दः निखिलधरणीरमणीमणिघनजघनाभोगसुभगः, धन्यतमनिशानटजटाजूटाटविपर्य्यटनसन्ततलम्पटामरतटिनीप्रमुखपुण्यापगाशतसंकुलः, वसिष्ठवाल्मीकपराशर व्यास शुक शौनकात्रि च्यवन जैमिनिकपिञ्जलिपतञ्जलिपाणिनि कणादादिमहात्मनाम्मण्डलमण्डितः निरवद्यपद्मरागगारुत्मतहीरककर्केतकमुक्तामाणिक्यादिविधरत्ननिचयनिधानः, ब्राह्मणराजन्यवैश्यतुरीयादिवर्णविभागरमणीयः वेदान्तमीमांसान्यायवैशेषिकयोगसांख्यादिसमस्तशास्त्रसम्भूतिभूमिः, श्रुतिस्मृतीतिहासपुराणसत्काव्यकलाकलापप्रचुरतरप्रचारयुतः कालिदासभासभवभूतिभट्टबाणसुबन्धुदण्डीमाघभारविप्रमुखैः साहितीनिकषायमाणधिषणैःकविसार्वभौमैः सनाथितः आदर्शभूताखिलदेशजातिकुलानाम् आचार्यकुलमार्यमर्यादोपदेशानाम् धाम धर्मस्य वैदिकस्य, आश्रयः श्रेयसाम्, आस्पदं सम्पदाम्, शरण्यः पुण्यकारिणाम्, त्रैलोक्यनमस्कृतो भारताख्यो देशः। अनितरसुलभया तर्कशक्त्या असाधारणशास्त्रज्ञानेन असामान्यबुद्धिमहिम्ना च नूनम् केवलं शासितैवानेन चिरायाकुलाभया चतुरुदधिमेखला च मेदनी, प्रत्युतावर्जितम् शिक्षितञ्चाशेषमपि भूमण्डलम्। यदा हि यूरोपभूखण्डोप देषु 'रोम'साम्राज्यं मातृगर्भस्थमासीत्, तत्समय एव भारतमिदम्परया विद्यया, परमया च सभ्यतया समाविष्टं, परिवर्त्तनशीलाम्पृथ्वीमुद्भासयदासीत्। भारतीयऋषिप्रवरैरुद्भावितानि शास्त्राणि नैव कणशोऽपि भजन्ति परानुकरणस्पृहाम्। प्रतिस्थानं कुलपतिभवनेषु निःशुल्कमबाधञ्च परःसहस्रं छात्राः शास्त्राण्यभ्यसन्तः सुखमवात्सुः। प्रसन्नगम्भीरां गौरवमयीं, मनसश्चाल्हादकरीं, दिव्यामिमाम्मनोहराम्मूर्तिमभिवीक्ष्य सप्रणिधानं, संजातस्नेहं, सगद्गदाक्षरमित्थमभाणीत् मनस्वी भट्टमोक्षमूलरः—

"As far back as we can trace the history of thought in India, from the time of King Harsha and the Buddhist pilgrims, back to the descriptions found in the Mahabharata, the testimonies of the Greek invaders, the minute accounts of the Buddhists in their Tripitaka, and in the end, of the Upanishads themselves and the hymns of the Veda, we are met

everywhere by the same picture, a society in which spiritual interests predominate and throw all material interests into the shade—a world of thinkers, a nation of philosophers."*

परं हन्त ! 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण'-इति कालगत्यनुसारेण भारतीयगौरवसविता शनकैरभूत्पतनोन्मुखः । अतुलाऽप्रमेया च भारतीया कीर्तिः क्लीवानां भारतीयानां दत्तकरावलम्बित्वमासाद्य, केवलं कल्पनासुलभामप्राकृतां वर्णनार्हतामेवाद्य धत्त इति विचारयन्तो नूनं विषीदामः । सत्यमलङ्घनीया नियतिः, कालस्य हि करालस्य कियान् नामाचिन्त्यः प्रभावः ! भागधेयचक्रस्य कियद्व्यकरुणं दारुणंच परिवर्त्तनम् !! यस्यैव प्राक्कालीनभारतस्य महिम्नः प्रभावेण यूरोपदेशस्येयती श्रीवृद्धिः संवृत्ता, तदेवाद्य भारतन्दीनहीनवेशमास्थाय सकरुणं ज्ञानभिक्षार्थं यूरोपीयानां मुखमवेक्षते । संस्कृतगुणगणनिर्जितस्वान्तयूरोपीयपण्डितमण्डलं, सस्पृहन्दृढयति परिकरं पीयूषावाप्तिसम्भावनया, भारतयहिम्नो निदानस्य संस्कृतशास्त्रपारावारस्य मन्थनार्थम् । परं भारतं निश्चेष्टभावेन मूक इव, बधिर इव, अन्ध इव, पंगुरिव, मूर्ख इव च किंकर्तव्यविमूढ मौनमाश्रित्य पश्यति तेषामशेषमपि विचेष्टितम् । भारते नास्त्यद्य जीवनीशक्तिः, चेष्टा नष्टा, मृता स्मृतिः, पलायितं शेमुष्या, विश्रान्तं शान्त्या अपक्रान्तम्प्राक्तनपौरुषेण । भारतमद्य योगनिद्राभिभूतस्य प्रणतप्रियङ्करस्य भगवतः शङ्करस्येव, मोहनिद्रामनुभवत् प्रमोदपल्यङ्कमधिशेते । स्वीयमक्षयं शास्त्रागारं परकरतलगतमभिवीक्ष्याऽस्य स्निग्धशोणितन्धमनीमध्ये मन्दम्परिक्रामति । वस्तुतस्त्वद्यतनम्भारतं सूत्रसञ्चालितायाः क्रीड़ापुत्तलिकाया इव निरवच्छिन्नेन जड़त्वेनाक्रांतम् ।

## संस्कृतभाषा ।

भारतपतनसमकालमेव सुरासुरनमस्कृता, भारतस्याद्या भाषा क्रमशोऽगात् शीर्णतामिति न खलु नास्ति चरमस्य हेतुर्दुःखस्य । वेदान्ते हि कुमतिकृतान्तवक्त्रकुहराक्रान्ते, मीमांसायामथ मांसमांसलविधिविहितसत्कर्मसन्ततनिन्दास्वादर्पचण्डिलसज्जनपीडितायां निखिलजनताऽनारताऽनादरश्राम्त्यपनुत्तिनिमित्तं निषेदुषोषूपनिषत्सु, विस्मृतासु स्मृतिषु जीर्णशीर्णेषु पुराणेषु, उपहास्येष्वितिहासेषु निदाघसरिदिव विरलविरलप्रचारा संजातेयं त्रैलोक्यनमस्कृता गैर्वाणीति धिक् कष्टम् ! सर्वतो निरुद्धप्रसरा ब्राह्मणमुखे शरणमिवान्विष्याद्यापि तिष्ठति । परमाधुनिकब्राह्मणा अपि लौकिकसुखलिप्सया हौणीमासेवन्ते । देवभाषाश्चर्यकरीमपश्यन्तः कष्टसाध्यञ्च व्याकरणं सोपेक्षमुपक्षिपन्तः प्रायश औदासीन्यमेव भजन्ते । परं महतान्निधनमपि न खलु न

* Six Systems of Hindus Philosophy, First Edition p. 42.

कान्तिकवस्:०

भवति महत्तया समाविष्टम्। सूर्याचन्द्रमसो इवरांगीऽपि किल लोकसहानुभूतिभूमिः। तद्विरसालङ्कारपदवर्णादिमधुरेयं कुलकामिनीव न कस्य चेतश्चमत्कारमकरोत्, कस्य मुखाम्नानर्गलस्विससार स्तुतिस्रोतः? पश्यत, मरणासन्नांवा मृतांवाऽप्यनुशील्य गैर्वाणीम्-आङ्गलभाषायाम्। अगाधसाहित्यसागरविषये कथमुदलिखदुदाराशयो भट्ट मोक्षमूलरः—

"In fack, there is still plenty of work and left for those who come after us, for with all that has been acmeved, we are on the threshold of a truly historical study of Indian philosophy and literature. He,er also, we are still like children playing on the sea-shore and finding how a pabble or a shall, whilst the great ocean of that ancient—litratue lies before us undiscovered and unexplored"*

अहो! मधुरिमा, अहो! तेजस्विता वर्णनशैल्याः। न केवलं भट्टमोक्षमूलर एव, अपि तु सरमॉनियरविलियम्ज़ (Sir Monier Williams) महानुभावः; स्वकृतसंस्कृत इंगिलशकोषस्य (Sanskrit-English Dictionary) प्रस्तावनायां लैटिनग्रीकादिभि; संस्कृतमवशतया तुलयन् युरोपस्य साम्प्रतिकसाहित्यस्य सभ्यतायाश्च प्रसवितृ संस्कृतसाहित्यमेव स्थापयन्, ललितललितया वाचा गैर्वाणीगुणगणानुच्चैर्गायति। तथाहि—

"No one person indeed, with limited powers of mind and body can hope to wasted more than one or two departments of so vast a range, in which scarcely a subject can be named with the single exception of historiography not furnishing of a greater number of treatises than any other language of the ancient world. In some other subjects, too, especially in practical descriptions of nature and domestic affections Indian works do not suffer by comparison with the best specimens of Greece and Rome while in the wisdom, depth and shrewdness of their moral apothegins they are unrivalled. More than this the learned Hindus had probably made great advances in astronomy, Algebra, Arithmetic Botany and Medicine, not to mention their admitted superiority and Grammar long before any of these sciences were cultivated by the most ancient nations of Europe." ......... ......... ............. "The East is, we must candidly own, the first source of all our light."

* Six systems of Hindus Philosophy First Edition p.p. 383.

किं किं वर्णयामः ? क्षीणकलेवराया अपि गुणं, 'लिखति यदि गृहीत्वा शारदा सर्वकाल, सुरतरुशाखालेखनीं' तदापि, मन्ये, नान्तमीयात् । भारतीयाश्चाण्डाला अपि पूर्वं संस्कृतमेवाश्रित्यालपन्तिस्म । स्वतः प्रमाणमुत परतः प्रमाणमित्यासीत्कीराङ्गनाताम्रिवादे भारतीयानामप्रकृत्य संस्कृतमेव । परं यथा दिवसान्ते शर्वरी, शुक्लपक्षावसाने तमसाच्छन्नः कृष्णपक्षः, उत्तरायणानन्तरं दक्षिणायनं प्रकृतिमनुसृत्य परिणमति, तथैवाद्य हन्त ! संस्कृतमपि नावशिष्टम् !! विंशतिकोटिहिन्दुनांमातृभाषाऽद्य

## मृतभाषा—

इति व्याह्रियते लोकैः !! वाक्यमिदं छिनत्ति मर्माणि, मानसमाविलयति, विधुरयति धियं, धिनोति धैर्यञ्च । परं किं कुर्मः ? कमाक्रन्दामः ? सर्वथा प्रभवति घटितदुर्घटा विधिरेव वामः अस्तु ।

वयमद्य संस्कृतभाषा सत्यं मृतैव म्रियते वेति विचारणार्थं किञ्चिदिव प्रयतामहे । "संस्कृतभाषा कथं व्यवहारिकी भवेत्"— इत्यस्य गुरुप्रश्नस्योत्तरमपि तदैव सुखेन दातुं शक्येत । यदि हि मृतैव स्यात् तदा कीदृशः, कुतश्च व्यवहारः स्यात् ? तदा तु तस्याः पुनरुज्जीवनमेव चिकीर्षितंस्यादशेषाणामपि विदुषाम् ।

तत्र संस्कृतस्य परमपक्षपातिनामस्ति चरमोऽयं समयो यत्रैव संस्कृतभाषा कदाऽप्युपरता, न च सम्भवो भविष्यति । इयं हि प्रत्युतावर्जिताखिललोकहृदयाऽनवरतमेवानल्पेन तेजसा देदीप्यमाना स्थास्यति भूतले । तथाच वङ्गाब्धिमुक्ताफलम्, सिद्धसरस्वतीकः कविवरः श्रीमहेशचन्द्रतर्कचूडामणिः, स्वकृत "दिनजपुरराजवशम्"-नाम्नः काव्यस्य प्रस्तावेऽतिरुचिरया चोजस्विन्या च वाचात्यर्थमवर्णयत् संस्कृतम् । आधुनिकनव्यशिक्षितानाम्मुखमुद्रणमिव कुर्वन्, निम्नपद्यैः प्रत्युज्जीवापयतीव संस्कृतभारतीम् तद्यथा -

"ये तु केचिदिमां दिव्यां भारतीममृतामपि
मृतां वदन्तो निन्दन्ति दूरात्परिहरन्ति च;
मूढास्ते पण्डितम्मन्या, बालास्ते वृद्धमानिनः,
अन्धास्ते दृष्टिमन्तोऽपि प्राप्ता गजनिमीलिकाम्
पश्यन्तोऽपि न पश्यन्ति ते हि ब्राह्मीमितस्ततः,
अद्यापि ब्राह्मणमुखे नृत्यन्तीं रुचिरैः पदैः ।
यावदस्ति त्रयी लोके चतुर्मुखमुखोद्गता,
यावद्वा रामचरितं वाल्मीकिकविचित्रितम् ;
क्षरन्त्यमृतधारा वा यावद्व्यासस्य सूक्तयः,
वाग्देव्या वरपुत्रस्य कालिदासस्य वा गिरः;
तावदेषा देवभाषा देवी स्थास्यति भूतले
यावच्च वंशोऽस्त्यार्याणां तावदेषा ध्रुवं ध्रुवा ।
ग्रसते साम्प्रतं यातु बलाज्जनपदानिमान्,
राक्षसी सा म्लेच्छभाषा तिष्ठेदत्र कियच्चिरम् ?
... ... ... ... ... ... ... ... ... ... ... ...
... ... ... ... ... ... ... ... ... ... ... ...
पारसीकगिराप्यासीदीदृशेवादृता पुरा
हतादरा त्विदानीं सा वेश्येव गतयौवना ।"

नियतम्भणितरियं तर्कचूड़ामणेः कर्णेषु वमति मधुधाराम् श्रवणकाले, विचारकाले परं सुखमिदमखिलं हन्त खपुष्पायते, क्वाप्येकपदमेव तिरोभवति। केवलमभिनिवेश एव कविवरस्य संस्कृतभाषायाः सजीवता स्थापने; शाब्दिकता वाऽऽलङ्कारिकतैव वाभिवर्णनार्हा, न तु विचारपरिपाटी कवेः। यतो हि मृतैव संस्कृतभाषेत्यत्र नास्ति कापि विचिकित्सा। यद्यपि हृदयविदारकं कटुकं राद्धान्तमिममुदाहरन्, नियतम्बहूनां भाजनं स्यामपवादानां, कुटिलस्य च कटाक्षस्य निक्षेपभूमिः; परं हृद्गतमुद्गारं यदि नाद्योद्घाटयिष्यामि, तर्हि नूनं हृतहृदयो नैव शान्तिं लप्स्य इति अपथ्यमपि प्रियमिति, श्रेयस्करमिति, निवेदयामि।

सैव भाषा सजीवेति, जागृतेति, व्यवहृतेति वा समुपवर्ण्यते, या किल विनैव व्याकरणाध्ययनं, स्तनन्धयावस्थायां मातुः पयःपानसमकालमेवानायासमाविर्भवति, अकारणं समुदेति तरणिरिव हृदयाकाशे, निरर्गलन्निःसरति वदनारविन्दात्, त्रिपथगेव च तरतरवेगेनोत्कटम्प्रवहतिः; उच्चावचानामथो मानसिकभावानामुत्थापनं, समाधानं मननं निदिध्यासनं, निर्द्धारणञ्चारमगतमेव यस्या भाषायाः साहाय्यात् सम्पद्यते सैव भाषा किल मातृभाषा इति व्यवह्रियते पण्डितैः। पश्यत, शुक्रो नीतिग्रन्थे व्याकरणस्य शब्दसाधन एव प्रयोजकत्वं दर्शयति—

"सुनीतिकुशला नित्यं, प्रभवन्ति च भूमिपाः, 'शब्दार्थानां न किं ज्ञानं विना व्याकरणम्भवेत्'?" व्याकरणमुपेक्ष्य मातृभाषैवावबोद्धुं शक्येति, सिद्धं संस्कृतस्यामातृभाषात्वम्। अथ वाचामेव प्रसादेन लोकप्रवृत्तिमाह कविवरो दण्डी अपि
'इह शिष्टाऽनुशिष्टानां शिष्टानामपि सर्वथा
वाचामेव प्रसादेन लोकयात्रा प्रवर्त्तते।"

इत्थं व्याकरणसाहाय्यमनपेक्ष्यैव नैसर्गिकी भाषा किल मातृभाषा परिगण्यते। सा चेयं शक्तिविशेषता वा चिराद्वर्त्तमानाऽपि हन्त! कलिकालहतकप्रभावाद्य न नाम्नाप्यत्रशिष्टा सुरसरस्वत्याम्! अत एव नितरान्दन्दह्यमानाः सखेदञ्च सकरुणञ्च विवशमुपवर्णयामो—मृतास्मन्मातृभाषेति।

किञ्च; अनितरसाधारणा निधनव्यापिका, विचक्षणविचारणीया चापरेयं न्यूनता संस्कृते, यन्नेयं जगति क्वापि द्वीपे, प्रान्ते वा—बहुदूरमिदन्तु नगरे, ग्रामे, घोषे वाऽपि मातृभाषात्वेनालापदानादानव्यापारवाणिज्यादिलौकिककार्येषु व्यवह्रियते लोकैः। सवितर्कं सुबहु चिन्त्यस्य मनःसमाधौ दीयतामेकमप्युदाहरणं भगवदवतारसनाथितायां गङ्गादिभिः पवित्रितायां, आर्योपदेशशतैरकल्मषायाञ्चास्यां भारतभूमौ, विदेशे वा, यत्रास्ति आविद्वङ्गनागोपालपामरम्प्रचारः संस्कृतस्य, यत्र च वणिजः, व्यापारिकाः, ताम्बूलिकाः, रजकाः, स्वर्णकाराः, कुम्भकाराः, चर्मकाराश्चाण्डालाः, अन्ये च व्यवसायिनः प्रकृत्या संस्कृतमात्मीयविचाराणामुद्घाटनं कुर्वन्ति।

मन्ये, नास्तीदृशः कोपि केवलं शतगृहाणामपि घोषः, यत्र विविधवृत्तिका मनुष्याः संस्कृतमाश्रित्यैवालपं संलपन्ति, आत्मीयान् भावांश्च मिथः परिवर्तयन्ति। तत्कथमिवेयं साग्रहं, सहठ, साभिनिवेशं वा जीवितभाषा, व्यवहृतभाषावोच्येत सर्वथाऽधःकृत्य सत्यञ्च तथ्यञ्च। जर्मन,फ्रेंच,अंग्ल्यादिभाषा, जर्मनीफ्रांस,एवमेव अरबी अरबदेशे, फ़ारसी फ़ारस (पारसीक)देशे,सुसुखमुच्यन्ते तत्रत्यैः सर्वैरपि विहाय विचारं जातिधनविभवपदकुलादीनाम्। संस्कृतजनिभुवि भारतेऽपि हि-बङ्गला मराठी गुजराती टेलूगू मलयालम उड़िया उर्दू हिन्दी प्रभृतयो देश्यभाषाः प्रभूततया मातृभाषात्वेन व्यवह्रियन्ते तत्र तत्र प्रान्तेषु। परं हन्त! न वयं साभिनिवेशमपि संस्कृतं देश्यभाषाणामाद्याऽजननीं जीवितेति व्यवहृतेति वक्तुं स्वप्नेऽपि पारयामः। न वयं सांगुलिनिर्देशं केवलं शतमनुष्याणामपि (!) वसतिं संस्कृतस्य सार्वजनीनव्यवहारभूमित्वेनात्यर्थमीहमाना अपि शक्नुमो निर्देष्टुमिति नूनं विशदस्य विषादस्य स्थलम्।

नातः संस्कृतं मृतभाषेति व्याहरतामस्ति-कश्चनापि दोषैकदेशलेशः। परन्नेदं विक्षोभस्यानुन्माहस्य वा स्थानम्, नापि चापातकटुकानि वाक्यानि मर्मभेदोन्याकर्ण्य हतोपमैः प्रक्षुब्धैर्वा भाव्यं मनीषिभिः, प्रत्युत सवितर्कं सप्रणिधानञ्चास्य मृतेति कलङ्कक्षालनस्योपायचिन्तनायाशेया बुद्धिः। नास्ति समयोऽनुत्साहस्यौदासीन्यस्य वा, उत्तिष्ठत! जाग्रत! भवत च सन्नद्धपरिकरास्तपस्विन्या अशरणाया सुरसरस्वत्याः पुनरुज्जीवापनार्थम्; कुतोप्यानीय संजीवनीमौषधममृतम्वा विन्यस्यताम्मरणशय्यामुपगतायाः कण्ठगतप्राणायाः सर्वथा वन्द्यचरणाया मातृभाषाया निर्विण्णे वदने। अन्यथा ह्यस्याः सार्वजनीनो व्यवहारो न केवलं कष्टसाध्य एव, अपि तु दुःशकोऽपि स्यात्। व्यावहारिकीत्वंच तदैव सम्भवंच सुशकंच यदा पुनरुज्जीविता भवेत्।

कथमियं पुनर्भ्रियेत, अथ व्यावहारिकी भवेत्? इति नूनं कूटः प्रश्नः। परमत्यर्थमावश्यकः। मन्मते त्वेतद्विचारणार्थं विदितवेदितव्यानामधिगतयाथातथ्यानामनुभूताखिल लोकव्यवहाराणाम्परिणतवयसाम्महामहिमशालिनां संस्कृतविदुषां काचन परिषन्नियोक्तव्या, या किल सतर्कमुच्चावचमखिलमन्विष्य, संस्कृतस्य सारल्यसम्पादनार्थं काठिन्यपेलवार्थंच प्रयतमाना, अस्याः सार्वत्रिकप्रचारस्याऽभिनवमधुरानुपायानाविष्कुर्वती, मृतभाषेति व्यपदेशं समूलकाषं कषमाणा, जीवितभाषानिर्माणस्य पन्थानमकण्टकं क्षिप्रगम्यं चाविष्कुर्यात्।

वस्तुतस्तु संस्कृता वाक् तदैव जीवितभाषाणाम्मालायाम्परिगण्येत, यदेयं कस्यापि न्यूनातिन्यूनं ग्रामस्य मातृभाषात्वेन व्यवहारक्षमा स्यात्। तदैव चेयं व्यावहारिकी स्यादप्रयासमेव। सोयञ्चोत्साहिनां संस्कृतरसिकानाम्पुरुषार्थायत्तो विषयः। यदि नास्ति साम्प्रतं

किमपि स्थलं तादृशं, यत्राबालवृद्धवनिताभिरपठितैरवैयाकरणैरप्यनर्गलं चाव्यवहितं च संस्कृतं व्यवह्रियते; तत्किं नेदं सम्भवं वा यत् संस्कृतज्ञानामेव काचनाभिनवा वसतिः यत्र किलाचांडालं वेदविदः, पंचकारुकिनश्च सुखमालपन्तो व्यवहरन्तश्च सुरभारतीं निवसेयुः, संस्थाप्येत नूत्नैव ?

नूतनेयं वसतिर्ग्रामो वाऽतितरामुपकरिष्यति सुरसरस्वत्या व्यावहारिकीत्वसम्पादनार्थमिति मे गरीयान् विश्वासः। परःशतानि संवादपत्राणि, सहस्रशो विद्यालयाः, वाचनालयाः, असंख्याः पुस्तकालयाः, नवनवाः परिषदः निबन्धाः, ग्रन्थमालाश्च न तथा शक्नुयुः प्रचारयितुं व्यवहारक्षमतां च सम्पादयितुं संस्कृतस्य, यथासौ विचारगर्भस्थः परिणामरमणीयः, प्रस्तावितः, परमकृतकालातिपातं सादम्यांद्यमञ्च कार्यरूपे परिणेयोऽस्माकं संस्कृतज्ञानामेकत्र आवासः प्रभविष्यति लोकमातरम्प्रत्युज्जीवयितुं, मृतेति कल्मषं क्षालयितुं, आहिमाचलकुमारिकांच स्फटिकावदातं गुणगणं, यशोविसरं वा प्रसारयितुमिति।

तथात्वे हि पण्डितसन्ततिदर्शनकामुकाः पितरः, जातमात्रानेव स्वस्वदारकान् समातृकान्, तत्र सम्प्रेषयेयुः, श्लथयेयुश्च भाषाभ्यासे जायमानस्यामेयकष्टप्रसरस्य सुदृढनिगडम्। न तेषां माणवकानां कौमुद्या मुक्तावल्या वा प्रतिभाप्रतिपक्षिणां, कर्णकटूनामपरिष्काराणां सकष्टं कण्ठीकरणं तदा स्यान्नूनन्नेतव्यः पक्षः। शैशवे हि देशभाषाभ्यासे जीवनस्य सुकुमारमंशं समभिनिविश्य, परतोऽपरिचितामभारतीमधिजिगांसूनां नियतमतिमहत्तरो, वैक्लव्यवैराग्यानुत्साहसम्पादकश्चायासः सञ्जायते। परमखिलो दुःखपर्यायोऽन्तमीयात् यदैवास्माकमयं ग्रामः स्यात्। न केवलं वालाएव, अपि तु प्रौढाः पुरुषाः; स्त्रियो ये केऽपि वा भवेयुः संस्कृतजिज्ञासवः, मासषट्केन तत्र वसन्तः संस्कृतभाषणे समर्थाः स्युः।

"संस्कृतभाषाकथं व्यावहारिकी भवेत्?" इत्यस्य महत. प्रश्नस्य तदिदमेव सरलं प्रत्युत्तरम्। संस्कृतस्य सार्वत्रिकव्यवहारक्षमताऽऽपादनार्थमयमेव मूर्धन्यभूत उपायः।

यद्यपि (प्रबन्धसौकर्यदत्तदृष्टयः)सम्मेलनकार्यकर्त्तारः प्रस्तावमिमम्मेरुलङ्घनम्पङ्गोः, वामनस्य च तरणितिरस्कार इत्युदाहरन्तः, असम्भवमिति, कष्टसाध्यमिति, दुःशकमिति अनर्थकमिति, बालजल्पितमिति न जाने कैः कैरुपायैरपशब्दैश्च व्याहरन्तोऽस्यानावश्यकतामुपदर्शयेयुः। यथाप्याम्रेडयामि साञ्जलिबन्धं, यदन्यथाहि जीवितभाषेति व्याहरणपक्षपात एकपदएव परित्याज्यः स्यात् संस्कृत प्रणयिभिः।

किञ्च; सम्मेलनमिदं ऋषिकुलस्य पावनभूमौ समधिविष्टं, तदबहुप्रयासकरमवश्यकर्तव्यञ्च संस्कृतविषयकं किमपि भीतभीत आवेदयामि यावन्नायं प्रस्तावितो ग्रामो निवसति, पण्डितानान्दीर्घसूत्रतावशाद्वाऽनुपयुक्तोऽयं

यदि निर्धार्येत, तावद्दृषिकुलमेव कार्यमिममात्मनि विन्यस्यतामिति मे सप्रश्रयञ्च सानुरोधंचावेदनम्। यदि ऋषिकुलानि गुरुकुलानि चादिमं समयमिममेव निर्धारयेयुः, यत् सर्व एव कार्यकर्त्तारः, नैव सूपकाराः, कर्मकराः, अन्येव भृत्याः संस्कृतमेव माणवकैः साकं व्यवहरेयुस्तदा, मन्येनिमात्रमुपकृता स्यात्सुरभारती कुलैरेतैः, उद्देश्यस्य पूर्त्तिरपि च संस्कृतप्रचारात्मकस्यानायासं साधिता स्यात्। "आम्राश्च सिक्ताः पितरश्च प्रीणिताः, एका क्रिया द्व्यर्थकरी प्रसिद्धा"। यद्यपि स्तोकमिवाऽऽरम्भे कष्टम्प्रतीयेत परमिदं गच्छति काले निरवधिकस्यावर्ण्यस्यापरिच्छेद्यस्यानन्दस्यानन्दस्य जनकः स्यात्; शौनकात्रिवसिष्ठादीनांच प्राक्कालीनगुरुकुलानाम्प्रकृतिरमणीयं, हृदयावर्जकं, गौरवास्पदं, विचित्रं चित्रञ्च पुनरेकदा भारतीयैर्विलोक्येत। ऋषिकुल,गुरुकुलाधिष्ठातृमहाभागाः, मन्येऽवश्यमेव बालस्याभिनिविष्टमावेदनं, गजनिमीलिकयानुपक्षिपन्तः सप्रणिधानं हृदयेन गृह्णीयुः।

## व्यवहारोपायाः।

प्रायः सर्वेष्वेवाऽभ्युदयिककार्येषु राजशक्तिः प्रजाशक्तिश्चः प्रभवतः। तदस्मिन्नपि संस्कृताऽभ्युदयमहायज्ञे कियती तयोरावश्यकतेति विचारयामः प्रथमम्। १-भारतराजशक्तिः। २-देशीयराजानः, ३-प्रजाच,विहाय भेदभावं धार्मिकं संस्कृतस्य व्यावहारिकताऽनुष्ठाने दत्ताऽवधाना भवेयुश्चेत्, तदा नियतमतिसरलोऽकण्टकश्च स्यादयं पन्थाः।

तत्र ब्रिटिशशासका यदि संस्कृत-व्यवहारमभिलषेयुस्तर्हित एव तैरुपाया अवलम्बनीया, ये किलैतस्याः प्रवासिन्याः सर्वथापरिचिताया अङ्गलभाषायाः प्रचारार्थमवलम्बिताः। यैरेव साधनैरत्यल्पप्रचारा आंग्ली भारतस्य प्रतिनगरग्रामगेहं समाससाद सभाजितमासन, न किन्तेषामेवाश्रयणेन स्यादियं तपस्विनी लब्धजीविता देवभाषा? नियतं, ध्रुवम्।

अथ भारतीयाः काश्यपीशाः स्वस्वराज्येषु संस्कृतोन्नतिकामनया, विद्यालय;पुस्तकालय,-गवेषणाविभागाद्यवस्थापनपूर्वकं, राजकीयाधिकरणभाषात्वेन (Cort Language) संस्कृमेव निर्धारयेयुस्तन्नूनमुपकारभरमन्थरा मातृभाषा हार्दिकम्बिनरेदाशीः पर्यायन्तेभ्यः, धन्यवादार्हाश्च ते स्युः संस्कृतज्ञानां भारतीयानां यूरोपीयानाञ्च। संस्कृताकारणमित्रं स्वर्गीयः कश्मीरावनिपालकः श्रीरणवीरसिंहमहाराजोऽत्र विषये कनिष्ठिकामधितिष्ठति सैनिका अप्यमुष्य रणक्रियाभ्याससमये संस्कृतमेव व्यवहरन्तिस्म।

तृतीयः किलोपायः स एव प्रजासत्ताकः। अर्थात् यच्छक्यं सर्वैरपि पण्डितैः सप्रतिज्ञमात्मीयैरक्षरचञ्चुभिः साकं संस्कृतभाषणमनुष्ठेयम्। स्तनन्धयैश्चार्भकैः साकं ऋते संस्कृतं नान्या भाषाऽव्यवहार्य्या तच्चेदं कृत्यमर्द्धाङ्गिन्याः साहाय्यसापेक्षम्। यद्यस्माकं सर्वा अपि रमणीमणयः आदर्शचरितानां

पातिव्रत्यप्रतिमानां, पूर्वतनानां, विदुष्यग्रगामिनीनां, त्रैलोक्यरमणीयं सौवर्णकृत्यन्निभालयन्त्यः, गृहस्थकृत्यजातं सहर्षन्निर्वर्तयन्त्यः, प्रातिवेशिकीभिः सार्द्धं विवादेन यापनीये काले, प्रसन्नगम्भीराणि, ललितललितानि सत्काव्यानि परिशीलयन्त्यो भाषाज्ञानमुपयुक्तं सम्पाद्य, स्वीयान् शिरःकुसुमसुकुमारान् वयवान् स्तनन्धयान् पयःपानावसरे सरसां, सुवर्णमयीं गैर्वाणीरमणीम्भाषणमिषेण, परिचाययन्त्यो तेषाम्भविष्यन्तम्भारं यदि लघूकुर्वीरन् तदा कीदृशी नाम दारकाणां स्याद्व्युत्पत्तिरसामान्या चाप्रमेया च सुरभारत्याम्? कियाँश्च स्यादभ्युदयो देवभाषायाः शारदीय पार्वण-शशधर-विमल-ज्योत्स्ना-पुलकिताया इव शर्वर्याः मातृभिर्भाषितत्वात् तदेव सेयं मातृभाषाइति सार्थकेन, गौरवसूचकेन पदेन सयोजिता शोभेतेति मे बुद्धिः। न चावलोक्यते पुरन्ध्रीणां क्वापि शास्त्रीयो निषेधो, यद्धि न नार्यः संस्कृतमधीयीरन्निति। पुराकाले ह्यासन्नेव गार्गी,मैत्रेयीप्रभृतयो ब्रह्मविद्यानिष्णाताः; सीता, शीला, विज्जा,मारुलामोरिकाद्याश्च काव्यकलाकुशलाः, काश्चन पुत्तलिकासमा,घनजघनास्तरुण्यः। तदेवं जातमात्रैः शिशुभिः साकं विविधविषयेषु संस्कृतमेवाश्रित्यालापमातन्वद्भिः पण्डितप्रकाण्डैस्तु जनकैरवश्यं संस्कृतव्यवहारप्रकार उद्भावनीयः।

## व्याकरण-संस्कारः।

यदि संस्कृतं व्यवहारकीडिन्नकीर्षति संमेलनम्, तत्प्रस्तावमिमन्तूर्णम्फलेग्रहिमवलोकयितुमिदमावश्यकमिवापतितं कर्तव्यकार्यभारं तच्छिरसि, यत्, संस्कृतव्यकरणस्यापि कापि संस्कृतिर्नाम। संस्कृतस्य व्यवहर्तं व्याकरणं किल कोमलाङ्गानां सुकुमारमतीनाम्बालानाम्विद्यार्थिनां प्रतिभावल्लरीविनाशार्थमनवच्छिन्ना प्रालेयवृष्टिः! विचारस्रोतस्विन्याः शोषणार्थं सर्वप्राणिभयंकरो निदाघकालः!; बुद्धिप्रसरावरोधकः कोपि मन्दराचलः; प्रज्ञायाः पक्षशातनकृतेऽवन्ध्यः कुलिशसम्पातः! तदस्य संस्कारो नाम,—स चापि राजमार्गस्येव निष्कण्टकताऽऽपादनरूपः, काठिन्यमूलान्मूलकश्च नियतमपेक्ष्यते संस्कृतस्य व्यवहारसमताम्सम्पादनार्थम्। व्याकरणस्य गुरुतरमत्राह्यम्भारं शिरसा वोढुमक्षमाः पेलवशेमुषीका राजपुत्रादयः कार्यान्तरव्यापृताश्च परिणतवयसः संस्कृताऽधिजिगांसवो दूरादेव परिहरन्ति तदभिज्ञानस्य प्रवृत्तामप्युत्कटामपि चलालसामित्यनुभवसाक्षिकोयं विषयः। अतोऽत्र विषयेऽवश्यमवधेयम्मनो मनस्विभिः सरस्वत्या वरपुत्रैः।

मदीयायामल्पबुद्धौ तु साम्प्रतिकसंस्कृते सारल्योत्पत्त्यर्थं त इम उपाया अवलम्बनीयाः—आत्मनेपदप्रयोगोऽयच्छस्सम्वैरल्यंनेत - व्यम्; उभयपदीधात्वोरेकपर्थ व (परस्मैपदी) —यद्यपिकष्टकरं स्यात् —केवलं व्यवहर्तव्या;

दीर्घसमासस्य सकचग्रहं परिष्कारः कर्तव्यः; तद्धितप्रयोगा अपि यथाऽधिकारमल्पतामेयाः; अप्रसिद्धानां, श्रुतिकटूनां शब्दानां व्यवहारः सभ्रूभङ्गमुपेक्ष्य एव; श्लेषादयो भ्रमोत्पादकाः प्रतिभाभयङ्करा अलङ्कारा दूषणानीति दूरतः परित्याज्याः; अनावश्यकशब्दाडम्बरोऽतिरञ्जितानाञ्च चित्राणम्बाहुल्येनोपवर्णनम्विषदिग्धान्नवत्परित्याज्यम् । इत्थं किल व्याकरणस्य, लेखसरणेश्च जात सामयिकसंस्कारे,हृदयङ्गमया रीत्या समुपवर्णिता, सरलां रीतिमनुप्रापिता उज्ज्वलवेशा राजहंसीव शार्मण्यादिविदेशीयप्रणयिनोऽप्यावर्ज्जयन्तीनवपरिणीतेव कुलकामिनी निपुणञ्जेष्यति मनांसि रसास्वादप्रवणानां सहृदयानामित्युत्कटमाशासे ।

## संस्कृतस्य व्यावहारिकतायाः साधनान्तराणि ।

अयःशकटतन्त्री प्रभृतिनवाविष्काराणाम्प्राक भारतेऽत्र धार्मिक,सामाजिक,राजनैतिकादिविषयाणामभिनवपरिवर्तनानि, आर्यनेतृभिः कुम्भादिसम्मेलनेषु ससूच्यन्त स्म । परं नाद्यावशिष्टः स एव कालः । अतः साम्प्रत सर्वविधपरिवर्तनाभिलाषिभिः निम्नलिखितविषयत्रितयेऽवश्यं प्रवर्त्यते विचारतूलिका । यथा Pen लेखः; Press सम्पादपत्राणि · Platform व्याख्यानञ्च । पर हन्त ! संस्कृतशास्त्रिष्वत्रापि विषयेषु परिपूर्णमौदासीन्यमासेवन्त इति नितराम्विषादहेतुः । यद्यपि संस्कृतोन्नतिविषयकलेखाः सामयिकपत्रेषु प्रकाश्यन्ते, परं नतेसन्तोषावहाः पर्य्याप्ताश्च । संस्कृते हि ऐतिहासिकानां, औपन्यासिकानां, वैज्ञानिकानाञ्च ग्रन्थानामेकपदमेवाऽभवः अतः सत्वरमत्रपथिप्रवर्तितव्यम्मुखरितैर्लेखनीवीरैः । तदैव 'लेख'पक्षः साधितः स्यात् । सम्पादपत्राणामत्यन्ताभावः व्यथयति मानसं रसास्वादप्रवणानां रसिकानाम् । केवलमेकाक्षीणकलेवरा 'मंजुभाषिणी'प्रतिसप्ताहमुपतिष्ठते संस्कृतज्ञानां करकमलयोः । यद्यपि नाद्यावधि समायातो दैनिक संस्कृत पत्राणां समयः, परं साप्ताहिकानान्तु सम्वादपत्राणामस्त्येव नितरामावश्यकता । यदिसंस्कृतरसिकाः केऽपिभूमिपतयो धनकुबेरावा श्रेष्ठिप्रवराः केवलं संस्कृत व्यवहाराभिवृद्धिमुद्दिश्य, नाममात्रमूल्येन संस्कृतपत्राणिप्रचारयेयुस्तन्नियतं स्यादिदं सुसम्पाद्यं कार्यम् । संस्कृत समेलनञ्चेदं संजातमेव निखिलभारतीविदुषां वार्षिकविचारप्रकाशरंगस्थलमितिपूर्णस्तृतीयो विषयः । नियतममन्दस्यानन्दस्य स्थलमेतत् ।

इतोऽतिरिक्तंचच्छात्रवृत्तयोऽपि धनिकप्रवरैः संस्थाप्याः, विश्वविद्यालयानां परीक्षार्थमुद्युक्तानां विद्यार्थिनामुत्साहाभिवृद्ध्यर्थम् । प्रत्नग्रन्थरत्नानामपि गवेषणार्थम्मुद्रणार्थंच यद्यपिसतर्को राजा सन्नद्धपरिकरैर्भाव्यं सुरसरस्वतीप्रणयिभिः । मा नाम बहु कालं भजन्तु कृमिभक्ष्यतां कुषिहृदयसरःसमुत्थिताः कमलाभा अपूर्वा ग्रन्थाः । पाठशालानां विद्यालयानांच ये किल भारतस्य विभिन्नस्थले

मन्ति सर्वश संस्थापिताः, तेषां शिक्षाप्रणालीपरीक्षणादिकं, सम्मेलनेन निर्वाचितायाअनुभवीनाम्विबुधानां कस्यापि परिदर्शक ससदः करायत्त कर्तव्यम् । विद्यालयानां च पाठ्यप्रणाली नियमबद्धा एकतासूत्रेण सगठिता (Organised) कर्तव्या । एभिः किलोपायैरनवरतमनुतिष्ठमानैः सहृदयैः, निपुणज्ञेनव्या व्यवहारकोटिं भारतस्याया, परिनिष्ठिता, तपस्विनी, करुणाभूमिश्च पूज्यात्मना मातृभाषेति भृशमनुमिनोमि । मन्ये यथा साम्प्रदायिकानिमानवलम्ब्य समेलनकार्यकर्त्तारः प्रवर्तयेयुः कार्यधारेणीम्

## अपर उपायः ।

भाषाया व्यवहारिकतासम्पादनार्थमपरोऽयमुपायः पाश्चात्यपण्डितैर्नैकैन निर्दिष्टः,— मातृभाषाया एकपदमेव विस्मरणमव्यवहारो घेतरभाषाऽभिज्ञता सम्पादनेऽनन्य उपाय इति । अर्थात्, प्रतिक्षणमभ्यस्यपयैवापरिचितयैव भाषया व्यवहरतां, तया सार्द्धं गाढ परिचयोत्पादनव्यग्राणामात्मभाषणविस्मरणमात्रव्यवहार एव परभाषाज्ञानसाधकः ।

विस्मरणापेक्षया स्मरणमेव दुःसाध्यमित्याकलयन्ति बहवः पुरुषाः । पर यदि सप्रणिधानं विचारयामस्तर्हि प्रतीपमेव अतामेव विषयम् । कस्यापि विषयस्य, ग्रन्थभागस्य, स्तोत्रस्य वा कण्ठीकरणं सतत मासैकेन,वया दिसाध्यम् ; परं तस्य हृदयफलकादपसारणं किंचिदुष्करं कर्म । उदाहरणार्थमपश्यन, १०० संख्यायाः स्मरणं यथामति सप्ताहमासाभ्यन्तर एव स्यात् , तस्या विस्मारणमपुनर्नशताब्दैकसाध्यं—न यावज्जीव साध्यम् । आम् , एतत्सम्भवम् , । यदत्यन्तमुपेक्षितानां, व्यवहारानर्हाणां वस्तूनां विंशतित्रिंशत्वर्षैः क्रमशो हृदयादपक्षयः अपस्मारणम्वा भवेत् यदि नैकदाऽपि तावति समये स्मृति गोचरी भवति तन्नाम । अन्यथा हि विस्मरणोपाय एव स्मृतिशक्तेरुत्तेजकः स्यात् । कुतो विस्मरणम् ? तदेवदेश्यभाषाणां बगला महाराष्ट्री,- गुर्जर,हिन्दीप्रभृतीनामव्यवहारो विस्मरणाय संस्कृतस्यऽव्यवहारिकता सम्पादनेऽच्छेद्य उपायः ।

## संस्कृतमेकलिपिप्रचारश्च ।

एक लिपिप्रचारेऽपि संस्कृतभाषा सर्वतन्त्रभूता देश्यभाषापेक्षया, संस्कृतमेकलिपिप्रचारेऽग्रिकम्पभाति । आकृत्या इव येनोऽस्या अपि आहिमाचलकुमारिकमस्ति नियत कुन्द धवलयशः, न केवलम्भारत एव, अपि तु यूरोप, जयपान प्रमुखविदेशेष्वप्यस्ति प्रभूतः समादरः । यद्यपि लोकप्रचारोय, परं नागराक्षर संस्कृतसहाय्यात् विदेशयात्रां सुसुखसकरोतु, पारयति च भूयो भूयोऽप्यनुष्ठातुम् । अतः एकलिपिविस्तारपरिषद्व्यक्षप्रवरैः सदय सतर्कसाव्यमत्र पथि । अहन्तुमन्ये, तेलगु,मलयालमप्रभृतिभाषाणान्निबन्धनिचयमसकृन्मुद्रयता स्वर्गीयेन'देवनागरेण' नतावच्छिन्नाग्मर्यादामुपप्रापिता नागरी दक्षिणापथे,- यावत्किलचिरात् प्रवर्त्तमानेनागराक्षरकले-

वराभिः 'भञ्जुषाषिणी' 'सहृदया' 'विज्ञानचिन्तामणिप्रभृतिसंस्कृतपत्रिकाभिरुपकृता, उपक्रियते प्रसार्यते चाद्यापि ॥

## भारतीयविश्वविद्यालयाः ।

भारतराजकीयविश्वविद्यालयपञ्चके, केवलं पञ्चापविश्वविद्यालय एव प्राज्ञ,विशारद,शास्त्रिपरीक्षाःप्रतिवर्षं वि०वि०प्रबन्धेन गृह्यन्ते; दीयन्ते चोत्तीर्णेभ्यः स्नातकसंमेलने Convocation, प्रमाणपत्राणि। मद्रासविश्वविद्यालयेऽपि श्रूयते यदागामि वर्षाद्भविष्यतो 'विद्वत्' 'शिरोमणि' परीक्षेऽभिनवतया। कलिकातास्थसंस्कृतविद्यालये तीर्थ' परीक्षा,वाराणस्याञ्च आचार्यपरीक्षा गृह्यतेप्रतिवर्षम्; परं विद्यालय परीक्षात्वात् युनिवर्सिटीसङ्घानुमोदनं नासां सम्पन्नमितितत्कृतेऽदम्येनोत्साहेन प्रयतितव्यं संमेलनसञ्चालकैः संस्कृतहितकामुकैश्च। यथाहं पश्यामि तथा मन्ये नास्ति बाम्बेयुनिवर्सिटीसंघे काचनापि संस्कृतपरीक्षा प्रारभ्यतएवेति तदर्थमपि कर्तव्य एवाचलः परमश्च पुरुषार्थः ।

## प्रस्तावितौ विश्वविद्यालयौ ।

प्रस्तावितस्य विहारविश्वविद्यालयस्य प्रवर्त्तकानां 'संस्कृतकालेज' स्थापनप्रयासः सर्वथा परिणामरमणीय एकान्त मधुरश्च। विविधशास्त्रीयपरीक्षास्तु यथायथम्भविष्यन्त्येव, परं विशेषतस्तत्राङ्ग्लीमभ्यसन्तोबी०एस०(Bachelord Sanskir)एम्०एस०(Master of Sanskrit)इतिसर्वथाममपेोचितैर्विरुदैःसमुपढौकिताः स्युरितिनूनम्विनोदावसरः। दरिद्र्यदेवतायाःकृपापांगसनाथितानां पण्डितानां पोषणार्थञ्च छात्रवृत्तयोऽपि बहुकृत्वो दीयेरन्निति श्रूयते सहर्षम् ।

संस्कृतविद्यापीठे वाराणस्यां स्थापनीयेऽस्माकमभ्युदयकल्पपादपायमाने भारतीयविगतगौरवस्यभूयःपरावर्तके प्रस्ताविते "हिन्दू विश्वविद्यालये" तु निर्विशयंस्यादेव संस्कृतमतितरां सभाजितं, प्रतिष्ठितं, पालनीयञ्चेत्यस्तिमे द्रढीयान्विश्वासः। तथाच, विश्वविद्यालयस्याद्य प्रस्तावपत्रे (Prospectus), हिन्दूधर्मस्य,सभ्यतायाःशिक्षायाश्च सार्वत्रिक प्रचारार्थगृहीतदीक्षः, प्रयागे प्रवहन्त्या अन्तः सलिलाया भगवत्याः सरस्वत्याः काश्याम्प्रत्यक्षतामभिनेतुकामाऽभिनवभागीरथः श्रीमान् माननीयमदनमोहनमालवीयः, संस्कृतविषय इत्थमुदलिखत् ॥

"One of the principal aims of the University will be to extend the sphere of Sanskrit learning to all class who are capable of benefiting by it, and to utilise it as a means of nourishing, training and the minds and elevating the characters of the alumin and of thus preparing them for the great tasks and high positions which they will find awaiting the worthy, in the various departments of social activity. Sanskirt will thus become, as it was in olden times, the

language of the elite of all classes in all parts of India."

सौवर्णानिमान् पदान् वाचयतामाविर्भवति चेतसि काप्यपूर्वा शान्तिः, समुदेति नव एव कश्चनाल्हादः, त्रुटितोऽपि पुनर्युज्यत इवाशाबन्धः। तत्रैव प्रस्तावपत्रे विश्वविद्यालयस्य माध्यमविषयेऽपि संस्कृतस्य नाम कीर्त्यते। परं कथयन्तो विषीदामः अपितूच्चैः परिदेवयामो यदखिलमेवेदमद्यैव तिरस्करणीयमेव क्वाप्येकपदमेव निलीनम्; प्रसार्यापि चक्षुषी साम्प्रतिकप्रस्तावपत्रेषु नैवासादयामस्तोषप्रदामिमां वा म्नावलिम्! प्रस्तावितसंस्कृतविद्यालयविषयेऽपि प्रयासंल्लघूकुर्वन्मालवीयमहाभागोराजकीयविद्यालयमेवात्मसात् कर्तुमभिलषति। युक्तिश्चकेवलमियमेव, यत्—"And it is in every way meet and proper that instead of establishing a new college in the same city where the same subjects will be taught, the Government should be approached with a proposal to incorporate the college with the proposed University." इत्यादिः। न ज्ञायतेकेयंभागधेयहीनताऽशरणाया वराकायाः सुरसरस्वत्याः? सर्व एव यतोऽस्या विषये चरममौदासीन्यं सौकर्यञ्चापेक्षन्ते। यदाहि द्रौणीविद्यालयाएकत्रैव नगरे बहुसंख्यका विद्यन्ते, तत्केयम्बिप्रतिपत्तिरभिनवैवोत्थाप्यते संस्कृतविद्यालयार्थम्प्रवर्तकमहाभागैः? 'वरमनास्वादितममृतम्, न पुनःसकृत्पीत्वा पुनरलाभदुःखम्; वरमप्रस्तावएवेदृशस्य, न पुनःप्रस्तावितस्य व्याघातइति कृपयाऽवधीयताम्मनाङ्माननीयैर्मालवीयैरिति। संमेलनेनात्र विषयेऽपि यच्छक्यं प्रयतितव्यम्। सति हि संस्कृतप्राधान्ये, हिन्दूविश्वविद्यालयमेव दशसहस्रच्छात्रैः परिवृतं संस्कृतज्ञानाम्महाग्रामत्वेनाकलयिष्यामः।

## उपसंहारः।

पर्य्यवसाने च श्रीमतां संमेलनकार्यकर्तृणामनुकम्पाप्रसरमन्तरेणाभिनन्दन्, तेषामुदयन्तं संस्कृतसेवाऽनुरागमनुशीलयन्, ऋषिकुलीयानां कार्यपाटवं साहितोप्रचारोद्योगञ्च प्रवृद्धतममभिवीक्ष्योद्वेलानन्दपयोधौ निमज्जितमिवात्मनमसकृदवधारयन्, विगलितवेद्यान्तरा च ब्रह्मानन्दसहोदरमलौकिकं सुखमद्यतनमेकतानेन मनसा सुचिरमनुभवन्, करुणावरुणालयम्मङ्गलमयम्भगवन्तं विशुद्धान्तःकरणविनिःसृतैर्धन्यवादपर्यायैरजस्रमभिवादयन्, सुभगसलिलाङ्कलिकल्मषापहाम्भगवतीम्मन्दाकिनीम्भक्तिप्रवणेन मनसा पुनः पुनः प्रणमन्, बालसुलभस्खलितमार्जनार्थञ्च सविनयं, सप्रश्रयं, साञ्जलिबन्धञ्चात्रभवतः क्षमाप्रार्थनां कुर्वन्, सभगवन्नामकीर्तनमात्मीयम्वक्तव्यमुपसंहरामिति।

श्रीहरिहरगुरुपशर्मा, शास्त्री।

# वैदिकविज्ञानमीमांसा

## मङ्गलम

अग्निर्मा गोप्ता परियातु विश्वत,
उद्यन्त्सूर्यो नुदतां मृत्युपाशान्।
व्युच्छंतीरुषसः पर्वता ध्रुवाः,
सहस्रं प्राणामप्यायतन्ताम्॥१॥
सभा च मा समितिश्चावतां,
प्रजापतेर्दुहितरौ संविदाने।
येनासंगच्छा उपमाशशिक्षा-
च्चारुवदानि पितरः सगनेषु॥२॥
ये देवानामृत्विजो ये च यज्ञिया,
येभ्यो यज्ञं क्रियते भागधेयम्
इमं यज्ञं सहपत्नीभिरेत्य यावता,
देवाः समिधा मादयन्ताम्॥३॥
विश्वामित्रो जमदग्निर्वसिष्ठो,
भरद्वाजो गोतमो वामदेवः।
कण्वः कीक्षीवान्पुरुमीढ़स्तथात्रि,
रवंतु नः कश्यपो वामगस्त्यः॥४॥
बृहस्पतिर्नः परिपातु विश्वा-
दुतोत्तरस्मादधरादघायोः।
इन्द्रः पुरस्तादुतमध्यतोनः,
सखा सखिभ्यो वरिवः कृणोतु॥५॥

अयि मय्यनवरतमनुकंपादत्तदृष्टयः संगारंभोद्गतवैदिकराजपथनियमितचराचरसृष्टया नैसर्गिककरुणोद्गारपारवश्यात्कृतवेदामृतवृष्टयः शाब्दे ब्रह्मणि कृतावगाहा विद्यांवरिष्ठाः!! योयमद्य वैदिकविज्ञानविषये यत्र तत्र समुस्थितो जनप्रवादो वधिरयन्निव नगरनव्यगापुराणि समभ्येति नः श्रुतिश्रवणपूतकुहरं श्रोत्रयोः पुटं "यन्न याथातथ्येन सर्वांगीणतया वैदिकं विज्ञानं लौकिकीं व्यावहारकीं वा शिक्षां बोधयितुं प्रभवति किन्तु षाड्गुण्यवादमेवाधिकृत्य तेनाध्यात्मिकवादविषये मनागुच्यत इति"॥

वेगेन प्रचलितस्य तस्यास्य प्रवादस्य सकांडमुन्मूलनाय सत्वरं तद्विज्ञैर्नरप्रकांडैर्यद्यनारत नोद्यम्यते तदा तु समुद्रपारमितायाभूमेः समुत्थितः पाश्चात्यनिरर्गलविज्ञानाभासावभासित विडंविताखिलनैगमविज्ञानवादोऽसौ प्रवादो भारतान्नत्युन्मूलने दत्तसर्वस्वो गमिष्यति सुतरां चारितार्थ्यम्॥

विज्ञानशून्यजनसमुत्थेऽस्मिन्वादे लेशतोपि कृतार्थतामुपगते सामान्यकक्षयामवस्थिताः परोपदेशावगतसुलभसरणिमनुगताः किमिदन्तथ्यमतथ्यमेति सांशयिकीं दोलामधिरुह्यकर्तव्याकर्तव्यविषये सर्वथा भविष्यंति विमुखाः॥ कथयिष्यति च धर्मानुशासनरतान्धर्मैकदत्तशांतस्वान्तान्वेदविदः प्रति "तत्र किमस्यास्माकं धर्माधिकारप्रदे धर्मैकरूपे धर्मोपदेशवन्मत्रे तत्र भवति भगवति वेदेऽस्मादृशसामान्यजनानिस्तारकर्तृ सामान्यव्यवहारप्रयोजकं किमप्यातिशायिकं वृत्तमिति॥

नास्ति चेत्किं तदा सृष्टिपरंपरापरिणते प्रकृतिविकृतिजन्यविकाशविस्फूर्तिसंवलिते सामान्यमनुष्याचारपरिनिष्ठितस्वरूपे लौकिकव्यवहारे तेन विवेचनीयमिति, कदलीस्तंभव-

दसारे तेषामत्र वादे नीरसात्मनामसारे हृद्यं-कुरिते सति सरसात्मभिरुदीर्णो—

"भूतं भव्यं भविष्यच्च सर्वं वेदात्प्रसिध्यतीति" वधिरीकृतदिङ्मंडलोप्यास्माकीनस्तिरस्कृतान्य-समस्तराद्धान्तो राद्धान्त. केनचित्कालेन शिथिलतां समेष्यति। शिथिलतामुपेते ऋषिमुनिमहर्षि प्रतिष्ठापिते वैदिके राद्धन्ते कार्याकार्यविचारदक्षै-रार्यवर्यैर्निर्निमेषमुपकृता दयासमुत्थान दयास-न्दोहसंवलितान्तःकरणस्य वेदैकदत्तशान्तस्वान्त-स्य पंकमग्नमार्यावर्तं पुनरुद्दिधीर्षो ब्राह्मणवंशे कृतावतारस्य देवदेवस्य वित्तमनोधनैरविरत-मविश्रांतमुपसंवर्द्धितः परिश्रमोपि संसृतिज-न्यानेकविधकष्टपरंपरापरभागमुपेतस्यात एव सर्वथा निर्वेदमापन्नस्य श्रावकस्य परिश्रम इव प्रभातप्रवहद्वातसंवेल्लितमालतीनव्यकलिकावद्विष्यति विश्लथः, न केवलमेतावदेव भविष्यति भविष्यति. भुवनमात्रैकदेवी पूर्वाभिरप्युपासितचरणकमला कमलाराधनमनस्कान-ल्पवयस्कानिव समुपहसंती मेऽनविरतमवि-श्रांतस्तनयो मद्रक्षणकृते धृतदीक्षा ब्राह्मण-वशजा इति वदंती, दंतीन्द्रदंतद्युतिधवला, बलादाहृतमहत्वानिंद्रकल्पानपि भूतले कलिपतभूतवन्नामावशेषतांनेष्यामीति मनसि विचार-यन्ती, यंतोमे भवत्सु सत्सु कथं विचाराः परिणता इति भूसुरानवलोक्य विशीर्णहृदया, दयावतां भवतां नेदं युक्तमितिशोकापूरित-हृदयालवाला, वालानार्याणां क्रोडे निवेश्य तान-विरतं पश्यंती वेदवेद्या भगवती भरती जरती॥

चरमामवस्थामुपेतायां भारतप्रतिष्ठितायां भारत्यां भारतादरगतानामशेषशेमुषीमतामव-स्थितिरपि शान्तिमिते पर्यास सेतोरिव विशुष्केषु सस्येषु जलमुच इव हिमतांवतीतें वसनरा-शेरिव सर्वांशे विगतायैव॥

तस्मायदवधि भरतप्रतिष्ठापिते भारते महाभारतोत्तरकालादुन्मायमाना भारती भार-तीयान्विहायान्यत्र गन्तु नोत्कण्ठामुपेयात्तदव-ध्येवात्र विषये 'भगवान्वेद एव योग्यतया याथातथ्येन सर्वाङ्गीणां लौकिकीं व्यावहारिकीं पारलौकिकीं निःश्रेयसकरीञ्च शिक्षान्दातुं प्रभवति न वेदातिरिक्तं किमपि पुस्तकमन्य-दिति प्रतिपादनाय" भारतीपराय-भारतीये-भारते भारती पुनः [illegible]यतुतायामः काव्य इतिमत्वा मयापि [illegible]नानुचरेण पदं निधीयते [illegible]।

यद्यपि नास्ति तादृशी लोकोत्तरचमत्कार-कारिणी सहृदयहृदयरञ्जनकारिणी चित्तसंमोहारिणी कापि मयि योग्यता, यया दुरूहे दुर्विगाहेत्र विषये लोकोत्तरदृशा भवादृशां पुरस्तात्किमपि वक्तुं शक्तः स्याम् यतः समस्तवेदवेदाङ्गपारगाः कर्तव्याकर्तव्यविच-क्षणा समस्तव्यवहारनिपुणा लोकोत्तर-विज्ञानचणाः क्व तत्रभवन्तो भवन्तः क्वचेदं भवांबोधिपोतायमानं लोकलोच-नानन्ददायि विस्तृतपर्यन्तवनभूभागं भक्ति-रसोदधिनिमग्नसमस्तमहाभागं वंशीवादनपटो-र्वटोर्देवकीनन्दनस्य मन्थरमन्थरैः पादन्यासैः

पवित्रितपरिसरं सदर्पमवधीरितान्यसमस्त-स्थलं वनस्थलम्।

यत्र प्रातरुन्मेषमितास्तरवोपि—"प्रातरग्निं प्रातरिन्द्रमिति" प्रातःस्मरणीयवेदमन्त्रभरितायाः स्मरन्ति श्रीकृष्णचन्द्रवंशोध्वनेः॥ यत्र च प्रेमातिशयनम्रपल्लवाः कुसुमभारावनतपूर्वार्धभागा लता अपि नमो वो गुरुकुलमागतेभ्यो महद्भ्यो भवद्भ्य इतिवदन्त्यः स्वागतं भवतामिहागम्यतामत्रोपविश्यतामेतदलंक्रियतामिदमिदमनुगृह्यतामेतत्सनाथीक्रियतामिति निर्द्दिशन्त्यो ललितललितैर्वायुवलितैः स्नेहसंवलितैर्नवनवकिसलयैर्जनानाह्वयन्त्यः सर्वेषामियमेव भवोदधिनिमग्नानां भवतामद्वितीया गुरुकुलमयी तरणिरिति वारं वारमुपदिशन्त्यः सर्वथा यत्र तत्रावस्थिताः समुपदेशिका इव लभ्यन्ते॥

मण्डलाग्रभागैर्विस्तारं बोधयन्तः शिखिनोपि यत्र "शिखासूत्रवतामत्रैव गुरुकुले दानं श्रेयो नान्यत्र कुत्रापीति मुहुर्मुहुर्वदन्तो वदान्यकुलकीर्तिकलाकलापेष्वस्माकमद्यापि वर्तन्त इति केकाभिरुदीरयन्तः के काभिः सम्पत्तिभिः सर्वदा सङ्गता इतिमत्वा दीयतां दीयतां सर्वमपि द्रव्यसर्वस्वमिति भावैरन्वर्थां केकामुद्गिरन्तो नः कलापि भवद्भिरद्यावद्धयत्रविषये नादत्तेति सूचयन्तो दरीदृश्यन्ते षड्जस्वरानुरूपरमणीयशब्दविभवाः कलापिनः॥

पञ्चतत्वेभ्यः समुद्भूतिमिताः प्रंचतत्वैरवस्थिताः सर्वेपि जनकदंबाः पंचतत्वेष्वेव पंचत्वमेष्यन्तीति मत्वा यत्र पिकोपि "कोपिमागच्छत्वदत्वा दानमिति वदन्" पत्रान्तलीनोऽविरतमविश्रान्तः पंचमेनैव स्वरेण परोपकारी जनदुःखहारी परिव्राजक इव पक्वे फलेषु दत्तमनाः किमपि कूजन्वावदूक इवानुमीयते॥

ऋषभस्वरेणाहूतनवनवतर्णकाः पयोधरभरावनतपृष्ठदेशरमणीयाः स्वहुंकृतैर्वत्सहुंकृतान्यनुमोदयन्त्यः पीयूषमस्मास्वेव विधात्रा निहितन्नान्यत्रेति संवोधयन्त्य। गावोपि यत्र "किं कर्तव्यविमूढतया किमित्यवस्थीयते, पाल्यतामुभयलोकशर्मणे शर्मान्तैरशर्मशमनायास्माकमन्ववायो यमनवरतमविश्रान्तकथो महत्पथो नन्दनन्दनः कलिन्दनन्दन्यास्तटे पालयामासेति" मुहुर्मुहुरागतानार्यजनान्निबोधयन्ति गोपालशब्दश्रवणभीतहृदयाः सत्वरमुत्वरमाणपदाः पदे पदे गवेन्द्रसहधर्मिण्यः॥

किञ्च यत्रैकदा गीतागीयमानकीर्तिसंततिः कंसवकासुरधेनुकहन्ता यज्ञविघातकसत्वनिहन्ता महिम्ना महान्भगवान्छ्रृष्णचन्द्रः सुदाम्ना वलभद्रेणानुजेन च समं सन्दीपनाचार्यप्रतिष्ठापिते महति गुरुकुले धर्मशास्त्रानुवर्तिना गुरूपदिष्टमार्गेण धृतब्रह्मचर्यविभवो गुरोरनुज्ञया चारितगोसंततिः कर्मयोग ज्ञानयोगञ्च यथाताध्येनानुगतयोगतत्वः सुखमध्यैष्ट॥

यत्र च व्रजमंडलमंडनायमाने परिसरप्रसृतयामुनप्रवाहे देशे सर्वथान्वर्थां विरजस्कतामात्मन्यारोपयन् बहुभिर्भूपैरापूजितचरणकमलेन किमाभ्यां विद्याविनयरहिताभ्यां फ-

ल नयनाभ्यामतोविज्ञानवतैव जनेनभाव्यमित्यतो बाल्यत एव प्रज्ञाचक्षुषा भारतोद्धारणकृते विद्यासर्वस्वं कस्मै प्रदेयमितिमुहुर्मुहुर्विचारयता सता विरजानन्दमहोदयेन चिरमध्युषितमासीत् ॥ लोकोत्तरचमत्काराकरे यत्र भवस्याप्य कथं भ[illegible]ष्यति भूतिरिति निरन्तर विभूतिमेवाङ्गे विलेपयन्दीनानाथोद्धरणकृते दत्तसर्वस्वः पालयिता यमानामनुमंता नियमानामात्मदर्शी विरजानन्दपादेभ्यो विद्यामभ्युपेत्य मृगनेत्रासु रात्रिषु लोकोत्तराणि रचयांचक्रे योगाभ्यासकृते तानि तानि योगासनानि योगिराड् भगवान्देवदेवो दयानन्दः ॥

यत्राधुनाप्यार्यप्रतिनिधिसभया प्रतिष्ठापित ब्रह्मर्षिदेशतिलकायमानं वर्णनीयवर्णितवर्ण भारतोन्नतेरादिकारणमिव भवोदधिमग्नानामुद्धरणमिव तिरस्कृतान्यकुलं गुरुतयानुगत दरीदृश्यते गुरुकुलम्, यदाधारशिलां विद्यादये दत्तसर्वस्वः प्रजावात्सल्यसन्मूर्तिर्महाभागो दयानिधिः "सरजेम्समेष्टन" महोदया महौदार्येण समस्तकरकमलपल्लवतल्लजप्रतिमल्लेन निजेनैव पाणिपल्लवेन श्रीमन्महामहिममहेन्द्रप्रतापसिंहप्रदत्ते महति मञ्जुलोद्याने विगतेष्वेव कतिचित्सु दिवसेषु यथायथं स्थापयांबभूव ॥

विद्वांवरिष्ठाः प्रकारेणामुना सामान्यतया निदर्शितविभवपरंपरं क्वेदं गुरुकुलं क्व भवादृशाः कोविदः सामान्यसंख्यावद्भिर्दुरधिगम्यः क्वायं वैदिकविज्ञानविषयः क्वचाहं क-च-ट-त-पादिकतिपयवर्णमात्रपरिच्छदः सर्वमप्येतदेकपदे समापतितमघटितघटनपरमघटितघटनापटीयसो महीयसो देवदेवस्य जगदेकनाथस्य करुणया दत्तहस्तावलवः, स्वविद्यागुरूणामाशिषा दर्शितसंस्कृतविद्यामन्दिरगोपुरः, समाप्य साम्प्रतमवतरणिकां विश्लथबद्धे निबन्धे पुरस्तादवतरामि भवताम् ॥

सदसि समवेताः सन्तः सदस्याः !! समष्टिव्यष्टिभावेन व्यवस्थितव्यवहारतेनिबोधकं लोकमात्रप्रयोजकं सर्गोद्गमात्तदवसानावध्येकरूपेण "घट एवायं न पट" इति निश्चयात्मकतयावस्थितं पदार्थस्वरूपसमवेतमात्मसहजं यत्किमपि दार्शनिकैरुपलब्धिपदेन निजागद्यते तज्ज्ञानमित्युच्यते ॥

"बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तर"मितिसूत्रयता गौतमाचार्येण तदेव ज्ञानं बुद्धिपदेनाप्यभ्युपेतम् ॥

आवापो[illegible] [illegible] तदाधिभौतिकाध्यात्मि[illegible] [illegible]सहजमतएव भूया[illegible] गानमनच्छाद्वेषप्रयत्नसुखदुःखज्ञा[illegible] [illegible]मिति सूत्रयता जीवप्रत्यायकेषु लक्ष्येषु प्रधानत्वेन तदुपन्यस्तम् ॥

प्रसगसांगत्य तिरयिष्यतीति मत्वा कोयमात्मा कीदृग्विधश्चेति सर्वमपि विहाय नैसर्गिकमस्य चेतनत्वमेव सांप्रतं विचारणीयमतस्तदेवोपक्रम्यते ॥

चेतना-चित्वं-चितिरित्येकार्थकेषु पदेषु धातोः संज्ञानार्थे प्रवृत्या चेतनावानयं जीव इतिशंकरोक्तेः सम्यग्ज्ञानवानयमात्मेत्युपलभ्यते ॥ दृश्यते च किलैवं लोके यदयमिच्छ-

ति यद्वेष्टि यदार्थं प्रयतते यच्चानुभवति तत्सर्वं ज्ञानपूर्वकमेव नह्यविज्ञाततत्त्वेऽथ कश्चिदपि सचेताः प्रवर्तते ॥

इदमद्य मया कर्तव्यमिदं च श्व इति सर्वथाऽनधीतशास्त्रा ग्रामेषु वसंतः, समुपलभ्यंते वदन्तः प्रातःदिन, नच तैः किमपि भूतमविष्यद्वर्तनाव्यवसायक किमपि व्याकरणेऽधुनाऽन्यसूत्रजातमस्यस्य तस्मादिष्यवहारप्रवर्तकमात्मसहजमित्यनुमीयते ॥

किञ्च "कार्यमात्रं प्रति प्रतिबन्धकसंसर्गाभावविशिष्टकारणकूटस्य कारणत्वमिति" नैय्यायिकानां मते यत्र कर्मण्यय प्रवर्तते तत्कृतसाध्यमिष्टसाधनमस्ति नवेति विचार्यैव प्रवर्तते, न केवल कृतिसाध्ये कूपपतने विनेष्टसाधनं कश्चिदुपलभ्यते प्रवृत्ता, नचेष्टसाधने परस्वहरणे विना कृतिसाध्यतामुपवक्ष्यते यत्नेनायत्राभयमनुमिनोति तत्रैवाय प्रवर्तते नान्यत्रेति निर्विवादम् ॥

यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनं, प्रयोजनमनुद्दिश्य न मंदोपि प्रवर्तते । इति यौक्तिकाः ॥ यज्ज्ञेयं (ज्ञातुं योग्यं वस्तु) ज्ञातुं ज्ञाता ज्ञानेन करणेन प्रवर्तते स तज्ज्ञेयं तज्ज्ञः सन् बुद्धिपूर्वकमेवोपरमते तस्मादवगम्यते लौकिकव्यवहारव्यवच्छेदक ज्ञानं बुद्धिपूर्वकमेव नाबुद्धिपूर्वकमिति ॥

बुद्ध्यपरपर्यायन्तदेवज्ञानं "विविधं विशिष्टं वा" भवेद्विज्ञानपदेनोच्यते (वेरत्रोभयार्थकत्वात्) तदेव परितश्चेत्परिज्ञानमिति प्रकृष्टं चेत्प्रज्ञानमिति सम्यक् चेत्सज्ञानमिति निजागम्य । । मन्तव्यमेतदात्मसहजबुद्धिप्रकार विलसितम् ।

अथ च ज्ञानशब्दस्य यथासामान्येऽर्थे शक्तिस्तथा विशिष्टेऽर्थे विज्ञानपदस्य शक्तिः ॥ वाच्यलक्ष्यव्यङ्ग्यर्थबोधिका अभिधा लक्षणा व्यञ्जनाख्या शक्तयस्तिस्रः । शक्तिज्ञानस्य शक्तिग्रहश्च व्याकरणोपमानकोपाप्तवाक्याद्व्यवहारतो वाक्यस्यशेषाद्विवृत्तेः सिद्धपदस्य सान्निध्याच्च" सतत्र २ समवगतव्यः प्रकृतविरोधान्निबंधविस्तारभयाच्चात्र न व्याक्रियते ।

ज्ञानमात्मसहजमिति मया प्रागुपन्यस्तं तद्विज्ञानेतर बालकपूपलभ्यते ॥ तद्यथा सद्यो जातो वातायुतर्णको विहायान्यं पशुवर्ग स्वामेवमातरमनुगच्छति । नवजातो गोशिशुरपि सत्स्वपि समानवयोवर्णेष्वन्येषु गोसहस्रेषु निजां प्रजनयित्रीमनुव्रजति । सांवत्सरिको मनुष्यबालकोपि मतरि पितरि च स्निह्यति स्वर्वर्गेतरेषु द्रुह्यति मनोरम क्रीडनकमाहर्तुं प्रवर्तते भयावहाद्बिभेति नूनमत एवाधिभौतिकं ज्ञानमात्मसहजमिति सर्वैरपरैरनुद्यते ॥

आधिभौतिकेतरमाधिदैविकमाध्यात्मिकञ्च ज्ञानं "विज्ञान" पदवाच्यं, तद्धि सांसर्गिकं नैमित्तिकञ्च । तत्र सांसर्गिकं गुरुजनसंसर्गजन्यं नैमित्तिकं वेदाध्ययनादधिगतम् ॥ उभयविधमप्येतद्विज्ञानं विद्ययामामधिष्ठितम् ॥

"विद्या ह वै ब्राह्मणमाजगाम" विद्या ब्राह्मणमेत्याह" ब्राह्मणेन निष्कारणो धर्मः प-

ङ्गो वेदोऽध्येयो ज्ञेयश्चेति" यास्कमनुपतं-जलिवचनैर्ब्राह्मणानन्यशरणाऽतएव ब्राह्मणैरुपवर्द्धिता याथातथ्येन वस्तुतत्वप्रख्यापयित्री। सा च विद्या चतुर्भिः प्रकारैरुपयुक्ता भवत्यागमस्वाध्यायप्रवचनव्यवहारैः ॥

तत्राचार्यकुले "आचार्याधीनो वेदमधीष्वेति" वचनात्तदाज्ञानुकूलव्यवहरणपूर्वकं सदाचारेणद्यं यस्यागमः स्वाध्यायश्च समाप्तिमेति तत उत्तरं समानवयस्कैरन्यैः कोविद्भिः समं यत्र तत्र पर्यटनं विधाय सा विद्यापरिमार्जयितव्या भवति, प्रवचनोत्तरं तस्य आनुकूल्यप्रातिकूल्याभ्यं विनिश्चयः कर्तव्यो भवति ॥

ये केवलमाचार्यकुले विद्यां समाप्य न पर्यटंति न च तां प्रवचनव्यवहाराभ्यां प्रतिष्ठापयंति न कदापि ते वेदार्थकरणे वेदपरिज्ञाने वा भवंति शक्ताः ॥ "लोके व्युत्पन्नस्य वेदार्थप्रतीते'रितिनियमाद्यो याथातथ्येन लोकवृत्तं वेत्ति स एव तत्परिज्ञाने पटुर्भवति । यतः किल सृष्टेरारम्भात्तदवसानपर्यंतं यत्किमपि जगति भूतं भव्यं भविष्यत्तत्सर्वं वेदेनैव व्यवस्थाप्यते तदुत्तरं तदनुकूलं धर्मशास्त्रैरतएव "वेदाद्धर्मो हि निर्बभाविति" "भूत भव्यं भविष्यच्च सर्वं वेदात्प्रसिद्ध्यतीति च" मनोर्वचनं संगच्छते ॥

कविरत्नमखिलानन्दशर्मा ।

---

# ॥ मातः का ते दशा ॥

हे मातृभूमे । तव का दशेयं
　कथं तवास्यं मलिनायतेऽद्यः ।
विलोचनाभ्यां कथमश्रुपातो
　मनोऽप्रसन्नं प्रतिभाति चेदम् ॥ १ ॥
पूर्वं यथाऽऽसीत्तव तादृशीस्ता
　नालोकये हाऽऽननपङ्कजश्रीः ।
न तानि वस्त्राभरणानि, सर्वं
　ययाविदानीं प्रतिकूलभावम् ॥ २ ॥
जननि, ते मुनयः क्व च साधका
　ऋषिगणाः श्रुतिशास्त्रविदोगताः ।
क्व च तपस्वितपोऽर्थतपोवनं
　विविधकन्दफलान्वितमञ्जुलम् ॥ ३ ॥
वसति यत्र मनोरमभूरुहे
　सहजवैरमपास्य मृगावली ।
करिकुलं हरिणेन्द्रकुलं मुदा
　मुखरितं द्विजकाण्डरवैर्मुहुः ॥ ४ ॥
क्व च घनं गहनं सुवनं गतं
　बहुफलान्वितपादपसंकुलम् ।
विमलवारिसरोवरराजितं
　श्रमनुदं मनसो हि मनस्विनाम् ॥ ५ ॥
ताः प्रस्रविण्यश्चजगज्जनन्यः
　परःसहस्रं क्व ययुर्ह गावः ।
यासां पयांसीह निपीय वीरा
　अस्यां वभूवुर्मनुजास्समग्राः ॥ ६ ॥
क्व यज्ञशालाः क्व च यज्ञकुन्यं
　क्व यज्ञधूमः क्व च यायजूकाः ।

लयं गतं तन्निखिलं सुकृत्यं
तादर्तकिञ्चित् परिलक्षयामि ॥ ७ ॥

ज्वलितहव्यपदार्थहुताशन-
प्रततधूपघटाश्च सुगन्धितम्।
सकललोकगतानिलकन्दलं
विदधतिस्म सदा क्व हहा गताः ॥ ८ ॥

क्व च कणादपतञ्जलिगोतमाः
कपिलपाणिनिनारदयोगिनः।
विविधदर्शनभाष्यकृतो गता
विधिविधाननियोगपरा लयम् ॥ ९ ॥

विविधशौर्यपराक्रमशालिनः
क्व च रणाङ्गणभूमिगता गताः।
सकलदुर्जनसङ्घविमर्दका
नृपतयः पतयो जगतामितः ॥ १० ॥

प्रकृतिमण्डलपालनतत्पराः
क्व च ययुर्वसुधे वसुधेश्वराः।
विषयभोगकलङ्कपराङ्मुखा
रविकुलेन्दुकुलेन्दुनिभाननाः ॥ ११ ॥

क्व भूसुरा वेदविदो विनष्टाः,
क्व क्षत्रियास्सूर्यकुलावतंसाः।
क्व तेऽर्थवर्या वत चार्यवर्या,
निजे निजे कर्मणि ये प्रसक्ताः ॥ १२ ॥

निगमगीत्यनुकूलसुशिक्षणं,
भवति यत्र पुरा स्म निरन्तरम्।
विलयमानमिदं क्व हहाम्ब यद्,
गुरुकुलं नगरे नगरे स्थितम् ॥ १३ ॥

अध्यापयन्तिस्म महानुभावा,
नानाह्युपाध्यायगणाश्च यत्र।
क्व विश्वविद्यालयचक्रवालं,
विलोचनागोचरतामवाप्तम् ॥ १४ ॥

क्व शिल्पविद्यासु विचक्षणास्ते,
विहाय मातः प्रययुर्जनास्त्वाम्।
क्व यन्त्रनिर्माणगृहाणि तानि,
दैवस्य हा हन्त महान् प्रकोप ॥ १५ ॥

अहह युक्तमिदं तव रोदनं,
यदसि मातरिमामतिदुर्दशाम्।
अभिगता न तथापि जनो मनः,
किमपि कोऽपि कदापि ददाति हा ॥१६॥

निगममार्गमपास्य सुतास्तव,
विविधभिन्नमतानुसृता इह।
हननमद्य पशोः क्रियते भुवि,
यजनकर्मणि तैरुदरम्भरैः ॥ १७ ॥

अहह गोवध एव ततोऽवनौ,
प्रतिदिनं मनजा विषये रताः।
विरहितो जननीजनकेन स,
भ्रमति दुःखहतस्तनयव्रजः ॥ १८ ॥

ऋषिदयामय एष जनिगत-
स्तव विलोक्य दशां प्रभुणेरितः।
किमपि दुःखमिदं तव नाशयन्,
मृतिमगात्कृतदुर्जनचेष्टया ॥ १९ ॥

मातर्विदेशीयजनस्य मान्या
मातस्त्वमासीः समये कदाचित्।
विस्मृत्यसर्वं तव मातृभाव-
मनादरं हा कुरुतेऽद्य शोक ॥ २० ॥

मेधाव्रतब्रह्मचारी
बृन्दावनगुरुकुलवासी।

## संस्कृतसाहित्य-सम्मेलनम् ।

——:०:——

नूनं निगूढ प्रेमदुर्लक्ष्यं भवति । यावत्पर्यन्तंकश्चन शोभनः परीक्षावसरो नलभ्येत तावत्पर्यन्तं तस्य सत्तैव नसिध्यति । तथाहि-संस्कृतसाहित्यसमेलनस्थापनाय यदाऽस्माभिः कतिपयैः संस्कृतानुरागिभिरुद्योगः समारब्धस्तदा संस्कृतविषये लोकानामनुरागाभाव तर्कयन्तो वयमत्यन्तम् बिभीम । पदे पदे च नैराश्यनिधूता वयं शैथिल्यमशिश्रियाम । परं यावदेववय भगवत्प्रेरणयाविद्वद्वाराधरेभ्यः सहानुभूतिमयीनामपां वर्षणं संगावयन्तः, संमेलनस्य बीजारोपंकृत्वा, तत्सं वन्धिनं सुसमाचार लोकेषु प्रसारयामस्तावदेव परीक्षितं संस्कृतभाषाया लोकानांप्रेम । दूरीभूतं नैराश्यमहार्गलम्, समुद्घाटितं सिद्धिमहाक्षेत्रम्, संप्ररुढ चाऽशालतया । अहो ! संस्कृतभाषायां निर्व्याज प्रेम, अकृत्रिमः सवन्ध, सत्यमहानुभूतिश्च लोकानाम् । तदेतदनुभूतमस्माभिः संस्कृतसाहित्यसम्मेलनस्य प्रथमवार्षिकोत्सवाऽवसरे । सर्वानपि च संस्कृतप्रणयिनो जनानेतदभिज्ञान् कर्तुकामा वयमिहाऽदितएव वार्षिकोत्सवं विवृणुमहे:---

ज्येष्ठशुक्लाष्टम्यां भौमवासरे चतुर्वादनसमयादारभ्य संस्कृतसाहित्यसंमेलनस्य कार्याऽऽरम्भोजातः श्रीहरिद्वारस्थ ऋषिकुलब्रह्मचर्याश्रमे । नियतसमयात पूर्वमेव दर्शकजनानां शोभनः समवायः समभिलत् । आदौ ब्रह्मचारिभिर्वेदमन्त्रोच्चारणद्वारा मङ्गलाचरणंकृतं संस्कृतमयी सरसा गीतिश्चगीता । तदनन्तरं च स्वागतकारिण्याः सभाया सभापत्याचार्यस्य श्रीमतो हरनामदत्तशास्त्रिणोऽनुमत्या तस्या एवमन्त्रिणा श्रीमता गिरिधराचार्येण स्वीयस्वागतवक्तृता श्राविता । नूनं सुललितप्रबन्धेयं वक्तृता सहसैव श्रोतृणां हृदयानि प्रमदपरिपूर्णान्यकरोत् ।

ततः पश्चात्तु भूषणविद्यासागर श्रीबुलाकीरामशास्त्रिणां प्रस्तावेन साहित्याचार्य श्रीरामावतारपांडेय श्रेष्ठि श्रीजुहारमल मे मकामहोदयोरनुमोदनेन श्रीहरिप्रपन्नानां समर्थनेन च महामहोपाध्यायो विद्याभूषण डाक्टर श्रीसतीशचन्द्र एम ए महोदयाःकलकत्ता संस्कृतविद्यालयाध्यक्ष सभापतेरासनमभूषयन् । वात्रकमहाभागा क्षणं निपातनीय दृष्टि श्रीमतो विद्याभूषणमहोदयस्य संस्कृतानुरागविषये । महान्तं प्रत्यूहं स्वीकृत्य ज्येष्ठमासीयमातपसन्तापमुपसह्य, बहून्यावश्यकानि कार्याण्यगणय्य, सुदीर्घं पन्थानमतिक्रम्य कलकत्तानगराद हरिद्वार नियतदिनात पूर्वमेवाऽऽजगामायं महोदयः । तदिदं प्रत्यक्षमेव प्रीतिचिह्नम् । सभापतिनिर्वाचनानन्तर संमेलनमन्त्रिणा श्रीबुलाकीरामशास्त्रिमहोदयेन नानानगरनिवासिनां कार्यवशादागन्तुमशक्तानां तत्रोत्सव . . . . संमेलनेन सहानुभूति प्रदर्शयतां सुप्रसिद्धविदुषामन्येषां च संस्कृतस्नेहिनां नामानि श्रावतानि ।

अहो महतीमिमां पुण्यजनानां नाममालां शृण्वतामस्माकं हृदये लोकानां संस्कृतानुरागः प्रत्यक्षमिवाभासत। एतदनन्तरं सभापतिमहोदयेन स्वीयाबहुविज्ञेयपूर्णा वक्तृता पठितुमुपक्रान्ता। यावदेवश्रोतृवर्गो व्याख्यानलालित्यात्परितुष्यति तावदेव सानुग्रहं समायातस्य स्वनामधन्यस्य श्रीमतो मदनमोहनमालवीमहोदयस्य शुभागमनंभूयस्तरं लोकानन्वरञ्जयत्। सभापतिमहोदयः स्ववक्तृतायां श्रीहरिद्वारस्यैतिहासिकींपुण्यगाथां गायन् ये सस्कृतभाषां मृतभाषां वदन्तितेषांमतं प्रत्याख्याय तस्याः पुनः प्रचारायबहूनुपायानुपावर्णयत्। समाप्तायांतु सभापतिवक्तृतायां तस्याःसारं संस्कृतानभिज्ञश्रोतृजनोपकारार्थं श्रीगिरिधराचार्यो हिन्दीभाषयाऽश्रावयत्। ततश्चविषयनिर्वाचनसमितिसंघटनानन्तरं प्रथमदिनीयं कार्यं पूर्णतामगात्।

द्वितीयदिनेऽर्थाज्ज्येष्ठशुक्लनवम्यां प्रातः सार्द्धाष्टवादनसमये समेलनकार्यं प्रस्तुतम्। आदौलाहोरस्थेनसुप्रसिद्धेन विदुषा श्रीगणेशदत्तशास्त्रिणा संस्कृतभाषा व्यवहारिकीकथं भवेत् अस्मिन् विषये स्वीयो निबन्धः श्रावितः। ततः साहित्याचार्येण एम एपदधारिणा श्रीरामावतारपाण्डेयमहोदयेन संस्कृतशिक्षाकथमुपयुक्ता भवेत्' एतम् विषयम वलम्ब्यमौखिकीवक्तृताकृता। अस्मिन्नेवच विषये भरतपुरवासिना साहित्याचार्येण श्रीगङ्गाप्रसादशर्मणास्वीयो निबन्धः पठितः। ततश्च जयपुरराजसभापंडितेन विद्यावाचस्पतिनाश्रीमधुसूदनशर्ममैथिलमहोदयेन वेदभाषाया वेदमहत्त्वस्यचविषये विलिख्यप्रेषितो· निबन्ध. श्रीगिरिधराचार्येण श्रावितः। निबन्धस्यनिगमागमतत्त्वगाहितां पर्यालोच्यशृण्वती विद्वन्मण्डली बहून्धन्यवादानवदत्। ततश्चमध्याह्नमुपसीदन्तमालोच्य समापितंद्वितीयदिनीयं कृत्यम्।

तृतीयदिनेऽर्थाद्दशम्यांनववादनसमयेकार्यारम्भोऽभवत्। अद्यनिम्नलिखितैर्महोदयैर्निम्नलिखितेषु विषयेषु स्वीयानिबन्धाः श्राविताः।

| निबन्धारः | विषयाः |
|---|---|
| श्रीशालिग्रामशास्त्री | अर्वाचीनसाहित्यं तत्रास्तत्कर्तव्यं च |
| २ श्रीतुलसीरामो जैनः | जैनसाहित्यम्। |
| ३ श्रीगिरिधरशर्म्मा चतुर्वेदः | दर्शनानामाविर्भावकालस्तत् क्रमश्च। |
| ४ श्रीपरमेश्वरानन्द ब्रह्मचारी ऋषिकुलस्थः | वेदाङ्गानि तदाचार्याश्च। |
| ५ श्रीहरिहरस्वरूपशास्त्री झझरवासी | संस्कृतभाषाकथं व्यावहारिकीभवेत्। |
| ६ श्रीसूर्यनारायणशर्म्मा आचार्यः जयपुरस्थः | संस्कृतभाषाकथं व्यवहारिकीभवेत्। |

प्रथमेन संस्कृतच्छटया पञ्चमेनचौजस्विन्याभाषयाश्रोतृणांहृदयान्यावर्जितानि। अनन्तरं संस्कृतोन्नतिविषयकाः केचिदुपयोगिनः प्रस्तावाःस्वीक्रियन्तेस्म। संमेलनस्य स्थायिकार्यालयविषये स्थायिसभ्यादिविषयेऽपिचकेचन नियमा निरधारयन्त। सर्वसम्मत्यास्थायीकार्यालयः श्रीहरिद्वार एवसहकारि

मन्त्रिणः श्रीगिरिधराचार्यस्यप्रबन्धेव्यवास्था-प्यत । स्थायीसभापतिर्महामहोपाध्यायपण्डितवरश्रीशिवकुमारशास्त्रिमहोदयः स्थायीमन्त्रीच विद्यासागरपञ्जाम्बुभूषणश्रीबुलाकीरामशास्त्रिमहोदयोऽक्रियत । सहकारिमन्त्रिणावपि श्रीगिरिधराचार्योऽहंचपूर्ववदेवनिरवाच्यावहि ।

ये प्रतिवर्षं रूप्यमेकमर्पयिष्यन्ति ते संस्कृतानुरागिणः सज्जनाः सम्मेलनस्य साधारणसभ्याः स्युः । कार्यकारिण्याः सभ्याश्चतत्तत्प्रान्तवासिनः ४१ विद्वासोभवेयु । अयं च संस्कृतरत्नाकरः सम्मेलनस्य मुखपत्रंमन्येत । द्वितीयंचाधिवेशनं कुम्भपर्वणि श्रीहरिद्वार एवस्यात् । सम्मेलनस्य प्रारम्भिकव्ययनिर्वाहाय कैश्चनसज्जनैर्द्रव्यमपि दत्तं यथाशक्ति । एतदुत्तरंच सभापतयेधन्यवादाः व्यतीर्यन्त विद्वन्मण्डल्याश्छायाचित्रं चागृह्यत यद्यपि प्रथमप्रकाशिते कार्यक्रमे संमेलनायत्रीण्येवदिनानिर्दिष्टान्यभूवंस्तथाऽपि कार्यस्यावशिष्टत्वाच्चतुर्थेऽपि दिने प्रातर्नववादनसमये सम्मेलनस्याधिवेशनमक्रियत । महामहोपाध्याय श्रीसतीशचन्द्रविद्याभूषणमहोदयः कार्यवशात्पूर्वस्यामेवरात्रौ कलकत्तां प्रस्थित इति कृत्वाचतुर्थदिने भाष्याचार्य श्रीहरनामदत्त शास्त्रिमहोदयः सभापतिपदेऽक्रियत । सभापतिना धार्मिकजीवनस्याऽऽवश्यकतां प्रकटन्ती काऽपिलघ्व्यपि श्रद्धाजननीवक्तृता प्रदत्ता । तदनन्तरं साहित्याचार्य श्रीविधुशेखर भट्टाचार्यस्यसंस्कृतशिक्षा कथमुपयुक्ता भवेत् एतद्विषयको निबन्धस्तत्प्रातिनिध्येन श्रीगिरिधराचार्येण पठितः । भट्टाचार्य महोदयस्यपितृवियोगकारणादनागमनं श्रुत्वाविद्वन्मण्डल्याशोकः प्रकाशितः । ततः कनखलज्वालापुरयोरध्यापकाभ्यां श्रीवंशीधराभ्यां स्वीयौ निबन्धाववधीतौ । बड़ौदाराजपडित श्रीअमृतरामनारायण शास्त्री, आगरनिवासी घनश्यामशर्म्मा, इटावानिवासी श्रीहरिप्रपन्नाचार्यश्च क्रमेण स्वीयामौखिकीर्वक्तृताअश्रावयन् । अद्यापि केचन प्रस्तावाअङ्गीकृताअभूवन् । तदनन्तरं श्रीशालग्रामशास्त्रिविनिर्मितां सुरभारतीसंदेशशीर्षकांललितांगीतिंद्वौ ब्रह्मचारिणौ सुस्वरेणापठताम् । अस्या रचनाचातुर्यमेतेनैवानुमेयं यद्येतत्र सम्स्कृतानभिज्ञा अपिसज्जना उपस्थिता अभूवंस्तेऽपिपुलकिततनवः सन्तः परमंप्रासीदन् । अन्ते चोपस्थितसज्जनेभ्यो धन्यवादान् वितीर्यसम्मेलनपूर्त्तिरकारि ।

मन्यामहे भाविषु सम्मेलनेष्वितोऽप्यधिका विद्वांसः स्वयमेत्यसम्मेलनशोभां परिवर्द्धयिष्यन्ति कार्यकर्त्तृणामुत्साहं चबहुगुणंकरिष्यन्तीति ।

विनीतः

श्रीपूर्णनारायणशर्म्मा आचार्यः

सहकारी मन्त्री ।

---

## मेदकपारसीकेतिहासवीचिः ।

असुरानुत्तरेणासन्पर्वतीया श्रमक्षमाः ।
मेदकाः पारसीकाश्च शकाब्देः पूर्वतः पुरा ॥
अष्टमे शतकेपूर्वं शकाब्देभ्योभवद्बली ।
मेदकानां नृपो वीरः कायक्षार इतिश्रुतः ॥
विनाश्य निन्हवपुरीं जित्वासुरवरानसौ ।
समर्प्य राज्यमास्तीके पुत्रे कालवशं ययौ ॥
आस्तीकतनयां राजा काम्बेशः परिणीतवान् ।
पारसीकेश्वरः पुत्रः कारुवीरस्तयोरभूत् ॥
कालधर्मं गते ताते कारुवीरो महाबलः ।
सहायं सवंगंप्राप्य मेदकानभिभूतवान् ॥
पार्ष्णिग्रहक्रुशाश्वाख्यं लवद्वीपाधिपं बली ।
कारुवीरो विनाश्यासौ यवनानजयत्ततः ॥
आसिन्धोः पश्चिमात्तीरान्मध्याब्धेः पूर्वतस्तटात् ।
विजित्य सर्वान्विषयान्भव्यलूनं व्यनाशयत् ॥
यक्षार्तें लोहिताब्ध्यन्तं सिन्ध्वन्तात्यवनाब्धिगम् ।
काम्बेशाय सपुत्राय राज्यं दत्वा व्यपद्यत ॥
अजपुत्रान्विजित्यासौ काम्बेशः क्रूरविक्रमः ।
नृशंस्यायुपश्चकेवसानं निजहत्यया ॥
दारायुः पारसीकेशस्ततोभूद्वीर्यवान्नृपः ।
विंशतिः क्षत्रपाख्येन विहिताः प्रान्तशासकाः ॥
वार्ताप्रेषणशैलीं स राजमार्गांश्च सर्वशः ।
प्रचार्यक्षत्रपैराज्यं प्रशशास महामनाः ॥
सूषां वसन्ते ग्रीष्मे तु भूपतिः सोश्वपत्तनम् ।
शिशिरे भव्यलूनाख्यं शिश्रिये पुटभेदनम् ॥
मित्रावरुणदेवास्ते जरदुष्ट्रानुगामिनः ।
समादधन्पारसीकाः सतताहितपावकाः ॥

## यवनेतिहासवीचिः ।

——:०:——

सुमेरुविषयादार्याः प्रालेयप्रलयप्लुतान् ।
लङ्घयन्तो गिरीन्वीराःप्रस्थिताःदक्षिणां दिशम् ।
आर्यवंशधराणां च कालेनोद्योगशालिनाम् ।
भारताः पारसीकाश्च सिन्धोःपार्श्वद्वयंश्रिताः ।
यवना रौमकाश्चैव गता मध्याम्बुधेस्तटम् ।
तुङ्गसागरकूलं च शर्मण्यप्रमुखागताः ॥
मध्याम्भोधेरुदक्तीरे प्रायद्वीपत्रयस्थिताः ।
यवनारोमकाश्चैव सुफेनाश्चेति ते क्रमात् ।
शौर्यदर्शनविज्ञाननीतिशिल्पविशारदाः ।
स्वातन्त्र्यप्रणयास्तत्र यवनाः पौरुषप्रियाः ॥
यवनाश्चिररात्रायार्वीरैर्हिरिकुलादिभिः !
सनाथिता विजयिनो युद्धैः कालमयापयन
इलाधिपस्य पुत्रेण प्रियाख्यस्याथ भूभुजः ।
शीला मानलवाख्यस्य परेशेन हृता प्रिया ॥
शीलां यवनराजस्य भार्यां मानलवस्य ताम् ।
प्रत्यानेतुमभूद्युद्धमैलेयैर्यवनैरपि ॥
अखिलेशसुशस्त्राद्यैर्हते वीरवले ततः ।
इलामजेयादुड्डीशः किलिञ्जाश्वप्रयोगतः ॥
जम्बूद्वीपापरान्तेषु श्रीशलेयेषु च भूरिशः ।
सुफेनेषु तथैवासीद्यवनापनिवेशनम् ॥
नवमे शतके पूर्वं शकाब्देभ्यः किलाभवन् ।
पुरराज्यान्यनेकानि यवनानां पृथक् पृथक् ॥
अर्थनासुव्रताचेति तेषां मुख्यं पुरद्वयम् ।
सुव्रता तत्र वीरत्वे शिल्पादौ प्रथितार्थना ॥
श्रीगर्गबोधितान्धर्मानाश्रित्य कृतजीवना ।
व्यायामयुद्धशिक्षादौ सुव्रताः कौशलं ययुः ।
वीरस्त्रीपुंसबहुला अशिल्पा मितभाषिणः ।

दामनिर्व्यूढकर्माणः सुव्रताः कठिनाशयाः ॥
राजद्वय सुव्रतीयसदस्यैर्विनियन्त्रितम् ।
शशास सुवनाराज्यमुद्दण्डं दण्डशक्तिमत् ॥
अतीते चरमे राज्ञि कद्रुनाम्नि सर्वथा ।
अर्थनीयाः स्वतन्त्रत्वात्प्रजाराज्यमतिष्ठिपन् ॥
द्राह्लेण लिखितैर्धर्मैरसतुप्रार्थनाजनः ।
सूरणस्मृतिमाश्रित्य व्यवजह्रे यथा सुखम् ॥
अराजकेर्यनातन्त्रे पृपास्त्रश्रीस्तनादयः ।
प्रबलाः पुरुषाः प्रायः पार्णो चक्रुः प्रशासनम् ॥
कारुणाबद्धमूलेऽथ कास्येशेन च वर्द्धिते ।
साम्राज्ये पारसीकानां दृढे दारायुषा कृते ॥
अर्थनीये प्रवहणैः ससैन्यैः कृतसाह्यकाः ।
जम्बृद्वीपस्य यवनाः प्रचक्रुः कदनं महत् ॥
शमितोपद्रवः सम्राट् सोथनीयेषु रोषवान् ।
मर्दनीय प्रहितवाञ्जामातरमनीकिनम् ।
मगद्राणी प्रविश्यासौ वात्यानाशितनौबलः ॥
प्रत्याजगाम लज्जार्तो जम्बुद्वीप यथागतम् ॥
ततो द्विगुणरोषस्यादेशाद्दारायुषो बली ।
दातिनामा चमूनाथो वहित्रैर्यवनानगात् ॥
मारस्थूणोपत्यकायामुत्तरेणार्थनापुरम् ।
यवनैः पारसीकैश्च संग्रामस्तुमुलोऽभवत् ॥
मल्यादिनाम्ना वीरेण सनाथं यवनायुतम् ।
लक्षसंख्यान्रणक्षेत्रे पारसीकानसूदयत् ॥
दारायुषि ततोऽतीते जराक्षस्तत्सुतो नृपः ।
पञ्चविंशतिलक्षेण सैन्येन यवनानगात् ॥
सा सप्तभिरहोरात्रैः सेतुना यवनाम्बुधिम् ।
नीत्वा कल्पान्तवात्येवाचस्कन्द यवनांश्चमूः ॥
धर्मद्वाराभिधद्रोण्यां सुव्रतीयेन भूभुजा ।
लेपनिद्रेण वीरेण प्राथिता सा मदोद्धता ॥

चूर्णयन्ती बलं लेपनिद्रस्यासौ महाचमूः ।
दग्ध्वार्थनापुरीं रिक्तां प्रससर्पानिवारिता ॥
सारमैयमुखाम्भोधेरथयुद्धमभून्महत् ।
वहित्रैः पारसीकानां यवनानां च दारुणम् ॥
यवनानां वहित्रैश्च तुयास्त्रैः पराजिताः ।
सहस्रपोताविजहुः पारसीका निजं मदम् ॥
पलाय्य पारसीकेशे प्रयाते विषयान्निजान् ।
रणेषु यवनैस्तस्य सैन्यशेषं विनाशितम् ॥
ततोऽर्धशतवर्षाणि परक्लेशाभिधः सुधीः ।
नेताभूद्दर्शनीयानां ज्ञानविज्ञानवल्लभः ॥
अर्थनापत्तनं तस्मिन्नभ्यर्णार्णवनायकम् ।
वयाविभूतिसपन्नैर्ववृधे सुजनैश्चिरम् ॥
रूपकाणि प्रणीतानि विद्वांसो वाग्मिनोऽभवन् ।
प्रासादा निरमीयन्त कुशलाः शिल्पिनोऽभवन् ॥
अतीतेऽथ परक्लेशेऽथनीयैः सुव्रतैस्तथा ।
अभून्महाकलिस्तस्मिन्नर्थनीयाः पराजिताः ॥
अलीकवियशश्छात्रोऽभूत् सुकरार्यस्य चापलात् ।
लेशेन्द्रेण पराभूत सुव्रतैनार्थनापुरम् ॥
स्थवीयसि पुरेऽथाभूदपमान्यो महामतिः ।
जितादर्पोद्धता येन सुव्रता दुर्णयप्रियः ॥
प्रलिम्पो भून्मगद्राण्यां नन्दानां समकालिकः ।
महाबला नृपो येन यवना निर्जिता बलात् ॥
प्रलिम्पस्याभवत्पुत्रोऽलिकचन्द्रः सुविश्रुतः ।
यो विंशतितमे वर्षे राज्यं पैतृकमाप्तवान् ॥
नयन्यवनसैन्यानि सतीर्त्वा यवनार्णवम् ।
पारसीकान्वशीकृत्य सिन्धुतीरमुपागात् ॥
नन्दैः सपालितां प्राचीमद्रष्ट्वैव जिघृक्षितां ।
अनुत्साहहतैः सैन्यैः प्रत्यगाद्विषयान्निजान् ॥

पाण्डेयरामावतारशर्मा एम० ए०
साहित्याचार्यश्च ।

# मुद्राराक्षसविमर्शः ।

सुभाषितरसास्वादबद्धरोमाञ्चकंचुकाः ।
विनापि सुखसम्पत्या सुधियः सुखमासते ॥१॥
सुभाषितमयद्रव्यं संग्रहं न करोति यः ।
स तु प्रस्तावयज्ञेषु काम्प्रदास्यति दक्षिणाम् २
सकृदुक्त न गृह्णाति स्वय वा न करोति यः ।
यस्य *सम्पुटिका नास्ति कुतस्तस्य सुभाषितम् ३
सुलभाः पुरुषाः बन्धा ! सततम्प्रियवादिनः ।
अप्रियस्य तु तथ्यस्य वक्ता श्रोता च दुर्लभः ४
मनवे वाचस्पतये शुक्राय पराशराय ससुताय ।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः ५
( पञ्चतन्त्रकम् )

यानेव शब्दान् वयमुल्लिखामो
यानेव शब्दान् वयमुल्लपाम
स्तैरेव शब्दैः कवयोऽन्यमार्गे
मनांसि कुर्वन्ति नु मोदितानि ।

इति कस्यचित्साधारणसुभाषितमनुस्मरन्तः- काचिदन्या सरणिः कवीनामित्यनुयुक्तांक्तिं वयमपि समर्थयामः ।

किं न श्रवणाभरणीकृतानि काव्यानि भासादिप्रसिद्धकविसुक्तिपीयूषप्रवाहस्नातानि रसपूर्णानि; किं न कविकुलचक्रचूडारत्न स्यानन्यकालिदासस्य भाणतीनामागारायितानि शाकुन्तलादीनि नानारससमन्वितानि भवन्नयनातिथीभूतानि काव्यानि; अपि ग्रावारोदित्यपि दलति वज्रस्य हृदयमिति चमत्कारिकविसौहार्दवाचोऽनयुक्तानि मालतीमाधवोत्तररामचरित्रदीनि रसतडागायितानि अमृतभाञ्जि काव्यानि न सद्भिरास्वादितानि । मयूरचौरादिरम्यस्त्रोतःसु किं नाप्यायिताः सुभाषितबिन्दुचातकाः ? हर्षादीनामप्यकालजलदानां सततधाराप्रवाहैरपि किं न परिपूर्णहृदयालवालाः संवृत्ता पडितप्रकाण्डाः कल्पतरवः ! यद्यपि सर्वोऽपि प्रश्नावसरो ह्यत्रालब्धप्रसरस्तथापि किं चेतश्चेतस्ततश्चिरं स्पन्दते । श्रवोयुगलमपि भूयोऽहमहमिकया सावहितं स्थिरीभूय कम प्यन्यं मधुमयं भणितिपरीपाकविशेषं निःशेषमञ्जसागृहीतुं प्रयतते । बलादिव निरुध्य तद्भूयोभूयोऽनुस्मरणेन मुद्राराक्षसनाटकमेव यद्वशाखदत्तीयं हृदयंगमं भवति । अहो चातुर्यं कवेश्चाणक्यस्य च । अहो सन्धीनां सङ्घटनं नीतिवीजानाञ्च । अहो पारवश्यं वाचकचित्तानां परपक्षावलम्बिनां च । अहो दार्ढ्यं कवियशसां चाणक्यप्रणिधेश्च । अहो वैभवं नवीनास्वादितकाव्यामृतपात्रस्य नवप्राप्तराज्यस्य चन्द्रगुप्तस्य च । ननु यथा; यथा पात्राणि, द्रवोऽपि तान्येवाऽनुबिम्बायते ऐतिहासिकघटनाऽपि कवेर्गुणान्प्रगुणयन्ति, अलं प्रशंसासेतुभिः । कथं न चक्षुष्मत्ता प्रदर्श्यते समालोच्यते च न कवेः काव्यम् । कतमस्मिन् पदे काव्यमिदमारोदुमर्हति विवेचनायां, चिन्ताचक्रमनारूढमेव चेतः प्रकृष्टमुत्तम पदं निजवृत्यनुगमनपुरःसरं पिशुनयति ।

*नोटबुक

कविर्विशाखदत्तो यत्सत्यं वैशाखस्य सुषमामेवापूर्वामाविर्भावयति । कथं न नाम प्रज्ञापि जिह्वापदेऽस्खलन्ती मुद्राराक्षसमपूर्वनाटकं चिरास्वादनलुब्धा चिरं विस्मरति। न च सकृदेव प्रवर्तते समालोचयितुम्। ननु कीदृशी कविताऽस्तीति विभावनायां "गुणवत्युपायनिलया स्थितिहेतुः साधिका त्रिवर्गस्य, मद्वचननीतिविद्या कार्यावाया कविद्रुतं याते"ति स्पष्टप्रवृत्तवाग् कविरेवात्मनो भूयो गुणवत्तां कवितायाः आविष्करोति। विश्रुतनामधेयेष्वपि नानाकाव्येषु श्रामं श्राममन्विष्टोऽयमन्यतमोऽपूर्वः प्रबन्धः सम्यक् संघटितसन्धिसन्ध्यङ्गोऽवलोक्यते । भाषायाः प्रौढत्वं रसस्याविच्छिन्नत्वं गूढनीतिप्रयोगचातुर्यस्य सरहस्यत्वमुभयपक्षप्रदर्शनपुरःसरमुभयनीतिपरिणामज्ञानौत्सुक्यं च वाचकस्यातितरां मोदमुपनयति । प्रतीयतेऽपि कवेरात्मनो वाक्यात्:—

कार्योपक्षेमादौ तनुमपिरचयंस्तस्य विस्तारमिच्छन्
बीजानां गर्भितानां फलमति गहनं गूढमुद्भेदयंश्च
कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि
पुनः संहरन् कार्यजातम्
कर्ता वा नाटकानामिममनु
भवति क्लेशमस्यद्विधो वा ॥ ३ ॥

नान्दीत आरभ्यान्तमंगलश्लोकपर्यन्तं साद्यन्तं सर्वनाटकं वीररसप्रधानत्वात् प्रत्येकं रोचकम्प्रतीयते । नाटकस्यास्य पद्यन्तु किं, पदमप्येकमनर्गलं सम्भावयितुं ब्रह्मणोऽपि क्षमाता न, किम्पुनरन्यस्याल्पज्ञस्य साधारणविग्धस्य जनस्य । नाटकनिर्माणार्थं प्रतीयते कवेरतितरां प्रयत्नः । सूत्रयति च चतुर्थेऽङ्के ।

मम विमृशतः कार्यारम्भे विधेरविधेयतां
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम्
अथ च विहते तत्कृत्यानां निकाममुपग्रहे
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः४।२

काव्यनिर्माणकालेनासीदाशासितं नाटकस्य भाविभूयो मनोहारित्वं, परं पराक्रान्तजननीभूमिमवलोक्य वीररसाविष्टःकविः साणक्यमतितमां कुटिलामेव नीतिं म्लेच्छबलेषु प्रयोक्तुकाममस्तमेव जग्रन्थ । कथंकथमपि भाविनीं भावसम्पत्तिमेव मनसि बहु मन्यमानः कृतकृत्यतायामपि नम्रत्वमात्मनो गणयन् चीयते बालिशस्येति वस्तुर्गुणानपेक्षयैव कथाभूमिमुक्त्वा प्रशशंस । कदाचिदात्मनो हृदयभूमिमेव सरस्वतीप्रवाहसिक्तामिव रसपूर्णां चूडायितशालिस्तम्बकरितोत्कृष्टगुणवतीं व्यंगयभंग्यन्तरेण स्फोटयति ।

## विशाखदत्तः

यद्यपि कविनामसंकीर्तने न कुत्रापि सुगृहीतनाम्नो विशाखदत्तस्याविश्रुतकीर्तेर्नामधेयमुपलभ्यते परं तथापि क्रियात्मकतयैव तस्य परिपाकस्य सूक्तिसुधाकरस्य नाटकस्योपलम्भान्नात्र शंसयः कवेः सत्तायाम्।

वटेश्वरदत्तनाम्नः कस्यचित्सामन्तस्य पौत्र एव प्रतीयते कविः, यतो हि स्वयमेवात्मनो वाक्ये नान्द्यन्ते प्रस्तावनायां प्रस्तौतिः—

"सामन्तवटेश्वरस्य पौत्र इत्यादि······

प्रतिचाणक्यवदपटुं ब्रुवतीं शुश्राव । सचात्मनोऽवज्ञामभिज्ञाय यावत्पश्यति, पुष्टाकरपट्टिकामध्यतो भक्षयन्तं प्लुषिततालुदेशं विवृताननं फूत्कुर्वाणं वालं दृष्ट्वाऽत्मनश्चेतस्येव व्रीडितः पुनश्चप्रकृतिमचिन्तयत् । बलशालितुर्कदेशीयपर्वतकानीकिन्यागृहीतसाहाय्यः विजिताखिल जनपदः सर्वांश्चनन्दकुलसम्बन्धिनो यथातथा मूलत एवोच्छिच्छेद । सर्वार्थसिद्धिश्च नन्दस्यापि तुरीययवीयान्भ्राता तपस्विवेशपरिच्छन्नो वनैकमात्रशरणश्चरैर्विदितसकलतत्वेन मतिमताक्षीणवलोऽपि शत्रुर्नजाने कियन्त मनर्थमुद्भावयेदिति विवेकयता गुप्तघातकैः व्यापादितः ।

कोनु नाम चन्द्रगुप्तस्य मन्त्री भवेदिति चिन्तायां राक्षसमेवातिनदीष्णं तं मन्यमानो मतिमान् रक्षणीयाः राक्षसस्यप्राणा इति सर्वान् आदेश्य पुत्रकलत्रसुहृज्जनादिसहितमेव राक्षसस्वतन्त्रं परित्यक्तवान् परित्यज्यापि सावहितोऽभूत् ।

नन्दानुरक्तप्रकृतिकेष्वेकतमो भक्तिमान्सुबुद्धिशर्मा राक्षसस्तु येकेचन नन्दमनुकृतघ्नता दोषदूषिताः सन्तः पुनरपि स्वतन्त्र्यराज्य बुभुक्षवः सन्ति, तैरहमनुसर्त्तव्यइति प्रजास्वाघोषितविश्वासादेशःचिरं पुष्पपुरेऽपि विहित राजद्रोहः चन्दनदासगृहे निक्षिप्तनिजपुत्रकलत्रः निश्चन्तो बहिरवस्थाय यथा पूर्वं प्रयत्नातिशयेन चन्द्रगुप्तविनाशाय प्रतिपदं प्रववन्ध ।

यथाहिः—

आत्मनो विदितसुहृदाजीवसिद्धेर्द्वारा विषकन्यां चन्द्रगुप्ते प्रयुक्तवान् । चन्द्रगुप्तस्य शयनप्रकोष्ठऽपिभित्तिषु गुप्तघातकान् नियोजयामास, वैद्यमपि अभयदत्ताह्वं विष पानादिना चन्द्रगुप्तविनाशायैवादिष्टवान् । चन्द्रगुप्तचाणक्ययोःपरस्परं कलहमुत्तेजयितुः स्तनकलशादिवन्दिनः कतिपयान्नादिदेश । कौमुदीमहोत्सवसमये सुगाङ्गप्रासादप्रवेशम मकालमेव राक्षसेनाज्ञप्ताः दारुवर्मादयः शिल्पिनो विरचितबहिर्द्वारा नियोजितनानायन्त्रा राजद्रोहिणस्तेऽपि राक्षसप्रयुक्ता एवासन् ।

व्यतिकरे च राक्षसनीतिविपरीता दैवबलोपपन्नाऽऽर्यचाणक्यनीतिविचित्रं रूपमा विस्तनोति । यथाहि दुर्घदर्शिना चाणक्येन "अस्त्यस्माकं मित्रमिन्दुशर्मा नाम चतुःषष्ठिकलानिपुणः स चास्माकमप्रतिहतं कार्यं समापयिष्यती" त्युपयुक्तजनविज्ञानचतुरेण सं गृहीता विश्वस्ताः प्रणिधयः । नानादेशवेश भाषाचारसंचारवेदिनः स्पशाः प्रतिगृहं प्रतिजनपदं प्रतिपुरजन नियोजिताः । आत्मनो विश्वस्ताः सुहृदः गुप्तरूपेण शत्रुभिस्सहसमुत्पन्नविस्रम्भाः परैरज्ञातवास्तवस्वरूपाः मतिमता पूर्वमेव सिद्धार्थकजीवसिद्धिसमिद्धार्थकप्रभृतयः निजकार्यसाधनार्थं संयोजिताः । भित्तिछिद्रगुप्तानां राजद्रोहिणामाततायिनामभयदत्तादीनां विषवैद्यानां, पयोमुखविष कुम्भानां स्तनकलशादीनां पिशुनवन्दिनामनेकेषां सूक्ष्मगतिविजिज्ञासयाऽवहितश्चाणक्यः स्वयमेव प्रववृते ।

शयनगृहगुप्तातातायिनस्तु भक्तावयवपिपीलिकाश्रेण्या प्रत्यक्षसाक्षात्कारिता दाहं दाहं स्वपतिं नन्दमनुजग्मुः ।

विषवैद्यस्तु कनकमयपात्रविपरिवर्तित रागविशेषजनितशङ्केन मतिमता विषाक्त पथ्य तस्मा एव प्रयोज्य नामशेषोऽकारि । स्तनकलशादयः क्षुद्रमनस्काः कनककलहेनैव सन्तोषिताः विफलीकृताः ।

विषकन्या तु जीवसिद्धिद्वारैव पर्वतकं प्रतिप्रेषिता सत्र विषयविलासलम्पटो ऽपीक्षितस्त्रैणगुणः कामार्तो यावदेव निशीथं क्रमते परिकल्पयजीवितश्चन्द्रगुप्तार्धराज्यहरत्वं जहाति । तत्र केचिदन्यामेव कथामुपस्तुवन्ति यथाहिः –

विजितसकलदेशश्चन्द्रगुप्तो लिखित पठितसन्धिपत्रो नन्दमतितरां क्लेशयितुं प्रवर्तते यावत्तावन्नन्दोऽपि विपदमनिवार्यामवगम्य चाणक्यचरणाम्बुजयुगलमेवानन्य शरण मन्यमानस्तद्वानु भेजे पप्रच्छ च जीवनोपायम् ।

चाणक्यश्च "परित्यक्त देशाधिराज्यस्त्व मेकरथारूढः सकलत्रो राजमार्गात्तपस्वीविनिर्याही" त्युपदिश्य विरराम । अप्राप्तानन्य शरण आत्मनोऽनन्यजीवनं जीवन्नरो भद्रशतानि पश्येदिति साधुमन्यमानः यथोपदिष्टः सपरिवारः इतो निष्क्रामति । ततश्च चन्द्रगुप्तः आत्मनो रथमारूढो राजधानी विशति । अनुपमसौन्दर्यं चन्द्रगुप्तमवलोक्य नन्दप्रेमभाजनं तद्दुहिता, तमेवात्मनोऽनुरूप वर निरूपयन्ती गृहीतजनकादेशा निजरथादवतीर्य चन्द्रगुप्तरथचक्रारे पादं क्षिपति । सहसैव भग्नारचक्रमवलोक्य परावृत्तनश्चन्द्रगुप्तो यावत्पश्यति नन्ददुहितरं वरयितुं प्रार्थयमानां निशम्य गृहीतचाणक्यानुज्ञानिज मित्र पर्वतकमपि तथैवान्यस्यां कस्या चित्तरुण्यामनुरक्तमपश्यत् । चाणक्यश्चाबलोकितत्रिकालस्तयोश्चापि पाणिपीडने सम्प्रतिमदात् । यथावसरमनभिज्ञो लम्पटो विषकन्योद्भवकालकूटसम्पर्कमूर्च्छितः सततं मूर्ध्वश्वासान्दध्रे दग्धमुखश्च जलजलमिति साक्रोशं चन्द्रगुप्तमेवानुचुक्रोश चन्द्रगुप्तश्च विदिताखिलवार्तो यावच्चाणक्यं निवेदयति चाणक्य "अयंतेऽर्धराज्यहरः शत्रुरतिकामं म्रियतां नामहालाहलोद्भवच्छ्वासशुष्कः पापः" इति तं समुपदिदेश । चन्द्रगुप्तोऽपि यावत म्रियते न जलं ददाति 'आनयास्यानयामी" त्यपवाहितकालो यथासुख तस्थौ । एवं निजविषयविलासलिप्सयाहूतोऽय पर्वतको नामशेषो भवति । एवं कथाद्वयमपि सुसम्बद्धं भवति यत्तदग्रे चाणक्यच्छलादिनिर्णयेऽस्माभिः सम्यक्तया निरूपयिष्यते । चाणक्यस्य सर्वाऽपि नीतिः राक्षसमुद्रामेवानुगच्छति । दैवयोगात् चन्दनदासगृहे गुप्तस्यामात्यकलत्रस्य भिक्षावितरणसमकालमेव पतिता राक्षसनामाङ्किता मुद्रा यमपटेन भ्रम्यताचरेण कराङ्कगताऽकारि । सैव च मुद्रा चन्दनदासगृहे राक्षसकलत्रमिति च राक्षस च-

न्दनदासयोरप्रतिमं सौहृदं च ततः समुद्भाविनीं नीतिं च समसूसुचत्।

तथैव मुद्रया लेखितेनलेखेन गम्भीरार्थलहरीलोलितेन मलयकेतुना पञ्चराजानश्चित्रवर्मादयः कूलूताद्यधिपतयः हस्त्यादिलोभमिषदुषिताः यथाऽयथम् पशुमारं घातिताः।

राक्षससंग्रहणार्थं चान्ततश्चन्दनदास शकटदासयोरमात्यहृदयङ्गममित्रयोः स्थाने स्थाने शूलारोपणादिना राक्षसहृदयस्य परीक्षां मतिमांश्चणीसूनूर्व्यदधात्। भागुरायणेन "पिता ते चाणक्येन घातित" इति सन्दिग्धवाक्यापवाहिनेन मलयकेतुना विप्रकृष्टदेशस्थितेन निश्चिन्तो मतिमान् चाणक्यो भागुरायणेनैव मलयकेतुं राक्षसादपि विरुद्धार्थं प्रतिपादनकौशलेन विरक्तमकरोत्।

राक्षसमतिपरिग्रहीतो मलयकेतुःपर्वतकपुत्रः कदाचिदन्तर्जातरोषश्चित्रवर्मादिनेनापरिवृतेन विग्रहट विदधीति समुत्पन्नशङ्को विदिततदुपायश्चित्रवर्मादिनाशनसमकालमेव राक्षसमपि परित्याज्यकालप्रतीक्षिभिर्भागुरायणादिभिरेव चाणक्यस्त निजग्राह।

इतश्च शकटदासस्य शूलमावध्यमानस्य परमोपकारिमित्रंसिद्धार्थकः राक्षसस्य परविश्वासभाजनमभूत् चाणक्येङ्गितज्ञश्च सिद्धार्थकः शकटदासं वध्याधिकारिभिः संरक्ष्य राक्षसं प्रापय्य पारितोषिकादिकयाचनादपि संगृहीताभरणदिनानानीत्युपकरणः शकटदासकरलेखितममात्यमुद्रालाञ्छितं च चाणक्यादनतिस्पष्टाभिप्रायं पत्रमुपनीय विरुद्धमेव प्रतिपादयांबभूव इत्यन्ततः सफलितैव नीतिर्मतिमतश्चाणक्यस्य। प्राप्तेपरिचितजीवितवृत्तान्ते शकटदासे "चन्दनदासोऽयं शत्रुजनकलत्रं न समर्पयतीति राजद्रोहित्वादारोप्यतामयं शूलमिति" कठोराज्ञां पुष्पपुरराजस्य श्रुत्वाऽमात्यः समुत्पन्नसौहार्दः सुहृदभिरक्षार्थैजीवनमपि निजं तृणाय मन्यमानो राक्षसो जीर्णोद्यानदर्शनसमुत्पन्नशोकः सहजमेव चाणक्यकरङ्गतोऽभवत्।

चाणक्यश्च प्रणिपातादिक्रियाभिर्मार्दवनीतममात्यं चन्द्रगुप्तस्य साचिव्य ग्राहितवान्।

## चाणक्यनीतिफलम्।

किं फलं चाणक्यनीतेरिति विवेचयितुं तस्यप्रतिज्ञावसान संविवेचनीयम् सर्वमन्यच्च यदप्यस्ति तत्तुसाधनसंपत्तिरेवानुषङ्गिककार्यकारणतामावहति।

अल्पापपत्तिकेन शत्रुसंघातेन "सर्वमपि नीत्याद्याचरण नन्दान्मूलनहेतुक" मिति नानाविध विविच्यते।

केचिद्धि मुद्राराक्षसपोथ्यनुसारमुभयपक्षावलम्बिनां स्पशानां सुहृदां च नियोजनं चाणक्यस्य वृथैवच्छद्मकरणमिति भूयोभूयोगर्दभस्वरेणोन्नदन्ति तच्चैवं तर्ज्यन्ते। अये मुग्धमतयोभवन्तो न जानन्ति महामतेः सहजमौपायिकं नीतिवत्म। गुप्तमन्त्र संरक्षणार्थं विश्वासपात्राणामुभयपक्षपातित्वेऽपि प्रत्य-

श्रो वहिरङ्गत्वे वास्तविकमन्तरङ्गत्व नाम-स्वामिनामप्रतिहतेष्टकार्यसिद्धौ चाऽतरसाध-नत्वमपेक्ष्यते

इत्थ विचारबुद्धया भागुरयणजीवसिद्धिसिद्धार्थकसमिद्धार्थकयमपटचरादीनां चाणक्यस्पशसुहृदामनेकाचार विज्ञानां योग्य पात्रत्वं तेषां कार्यसाधकत्वादेव सुनीश्चयते।

पूर्वञ्चप्रधानमल्ला निर्वहणन्ययेन राक्षसं विप्रलब्धुं ज्योतिःशास्त्रेचतुषष्टिकलानदीष्णं स्वमित्रमेव पूर्वमिन्दु शर्मनामनक्षपणकवेशधारिणंजीवसिद्धिनामान्तर्हितं समुत्पादितमोहादसर्वानुकृतभदन्तप्रतीक्रियम् स्थाने नयोजयांचक्रे।

क्षपणकच्छद्मच्छन्नस्तुजीवसिद्धयपरपर्याय इन्दुशर्माराक्षससौहार्दं याचितश्चाणक्यपक्षमविस्मृत्यैव प्रतिपक्षेऽपि सूचितनिजपक्षपातविषयः कालेकालेऽनुवीक्षितशकुनादिकात्तान्तिकतिथिरात्मनोऽनन्यविश्वासपात्रत्वं स्फुटीकुर्वन् पदेपदेऽस्खलितमैत्रीव्यवहारः क्षणे क्षणे चिन्तितकार्यभारः सर्वापि प्रकटितरिपुनिन्दः समीच्याचातुर्या राक्षसमात्मसाच्चकार। समुत्पन्नविश्रम्भश्चामात्यः प्रतिपक्षं प्रतिकरिष्यन् राज्यलाभाय चन्द्रश्रिय चन्द्रगुप्तं जिघांसन् विषकन्यामेकां रिपुसंहारिणीं जीवसिद्धिद्वारैव प्रयुयुजे।

चाणक्यश्चतादृशीमवस्थां प्रतीत्य 'पादलग्नं करस्थेनकण्टकेनेव कण्टक" मिति निजनीति पद्यानुसारं विषयकन्ययाऽन्तर्लग्नं समुत्पन्नराज्यार्द्धप्रतिश्रवणविस्रम्भमपि वञ्चकमिव भाविप्रत्यर्थिनं पर्वतक जीवसिद्धिकरेणैव व्यापादयाम् स। पर्वतकश्च सरूपामपि विषकन्यां कामुकोऽन्यवृत्तिरिवासमोक्ष्यैव तां भेजेतत्फलंच सन्ततमुपबुभुजे। चाणक्यश्च पूर्वमेवात्मनः सर्वात्मनानीतिमुपदिदेशनिजसुहृदम्, तदनुसरिमेव सर्वात्मनाविफलितो राक्षसः पुनराप कुसुमपुरमेवानुययाविन्युपरिष्टाद्दर्शयिष्यामः। जावसिद्धिरिवापरः प्रसिद्ध सुहृच्चाणक्यस्य सिद्धार्थकानाम स च शकटदासेन राक्षसामत्रेण सायुज्यमायापितः राक्षसेन चसाक मित्रत्वमुपगताऽपि तादृश्वास्य सेवकच्छद्मनाऽमात्यमुपाजजोव।

कश्चित्।

---

# अथ काशिकास्तुतिः।

श्रियामहोरात्रमहो निकेतन।
भियामभूमिर्भुवि भूश्च सुभ्रुवाम्।
समस्ति सन्यस्तसमस्तसम्पदां।
पद पुरारेरुरुकाशिका पुरी ॥१॥

विभाति गङ्गाम्बुचयाञ्चिताम्बरा।
सादिन्दिरामन्दिरमानमन्दिरा॥
सदा हसत्कोकनदच्छदावृता।
न विश्वनाथस्य पुरी न शर्म्मदा॥२॥

कियन्ति सन्त्यत्र न मन्दिराण्यहो।
दिवौकसां यानि हरन्ति मानसम्॥
द्युतिच्छटा या प्रतिवेश्म भासुरा।
न चाकचक्येन कराति चक्षुषी॥३॥

सरस्वती भारतभूमिमीदृशीं ।
विहाय नान्यत्र चकार सा स्थितिम् ।
कथं न सा देवगिरासु लोलुपा ।
तनोतु मोदं हृदि काशिकाश्रिता ॥ ४ ॥
स्वयं वरं शम्भुपदं वितीर्य्यते ।
शिवेन यस्यां मृतकाय गच्छलात् ॥
न कस्य वा मोक्षपुरी मुदेऽस्तु सा ।
मनीषिभिर्भक्तिनिषेव्यविग्रहा ॥५॥
शिवोऽपि यस्यामतिमात्रतोषितो ।
विहाय लिङ्गं शिवमूर्त्तिमाश्रितः ॥
वयस्यतीतेऽपि कुमारलाञ्छन ।
दधौ जनानां हितकामनावृथ. ॥६॥
पुरी मदीयास्ति सुरापगाश्रिता ।
कथं न मन्त्रीभिः सदास्तु सा स्थिता ॥
इतीच्छयासौ नरदेहमादधत् ।
स्वकीयगङ्गाधरतां न वा जहौ ॥७॥
दधाति दामोदरलाञ्छितं क्वचित् ।
क्वचिद्वपुः कृष्णविभूतिभूषितम् ।
न लक्ष्मणस्यापि गतिर्विलक्षणा ।
न चित्तमत्रातनुते प्रहर्षितम् ॥८॥
शिवः कुमारश्च नु योगमीयतु
र्बभूव कृष्णोऽपि न रामतः पृथक् ।
हरिस्तथा शङ्करयोगमाययौ ।
सुराः स्वसम्बन्धमहो न तत्यजुः ॥९॥
विचित्ररूपा नगरी ममेदृशी ।
धुनोतु विश्वम्भर कल्मषव्रजम् ॥
न जातु मद्दृष्टिपथात्तिरोहिता ।
क्षिपत्वकाण्डं मम देहपञ्जरम् ॥१॥
कलौ तपः क्वास्ति मनुष्यमोक्षदं ।
क्व मानसं वा कलिदूषणोज्झितम् ।
कथं नु वास्तवस्य गतिः पवित्रिता ।
विचार्य्य शम्भुर्विदधौ पुरीमिमाम् ॥११॥

न यत्र मुक्तिः पुरुषस्य दुर्लभा ।
विनश्वरं देहमितोऽस्यतो हठात् ।
चकास्ति सेयं किल काशिकापुरी ।
निषेव्यतां किं न नरैर्निरन्तरम् ॥ १२ ॥
निमज्ज्य गङ्गासलिलेऽमलेऽनिशं ।
स्वविश्वनाथस्य विधाय पूजनम् ॥
जना हसन्तो यमयन्त्रणाभियं ।
व्रजन्ति सौख्यं त्रिदिवस्य भूतले ॥ १३ ॥
क्व वेदवेदाङ्गविचारणाविता ।
मतिर्मनुष्यस्य न याति गौरवम् ॥
सरस्वतीपीठमवाप्य मजुलं ।
दधावधर्मोऽपि धियां सुधीरताम् ॥१४॥
धुनोति गङ्गाम्बु शरीरतोमल ।
धियो मलं शास्त्रपरानुशीलनम् ॥
चयं मलानां बहुजन्मसंस्पृशां ।
क्षिणोत्यवश्यं मृतविग्रहार्पणाम् ॥ १५ ॥
त्वमेव धन्यासि पुरीषु काशिके ।
तुलास्ति ते नात्र कथञ्चन क्षितौ ॥
सजीवितं वाथ मृतं शरीरिणं ।
त्वमेव चैकाह्युपकर्तुमीशिषे ॥ १६ ॥
शिवप्रिया प्राणसमा शिवस्य या ।
न यां विमुच्य क्षणमेति वा शिवः ॥
ममापि सा वल्लभतामिता सती ।
दधातु मोदं हृदये दिवानिशम् ॥ १७ ॥
जगति निखिलपूज्या मानदा मानवानां ।
कलिदुरितचयानामेकविध्वंसकर्त्री ॥
भवतु खलजनानां मादृशानां हिताय ।
क्षपितहृदयशल्या काशिका रम्यहर्म्या१८

परमानन्दः 'कविविनोद' 'भारतीभूषण'
'काव्यरत्नाकराद्युपाधिधारी ।

# श्रीषडक्षरः कविः।

विदिता या किल;

कलाविदो बुधा मृग्याः क्रयस्तत्र दुर्लभाः ॥
सरसास्तेषु तेष्वन्यः शक्तिमान् विद्यते न वा ॥

इतिपुराणभणितिः। अत्र हि परश्शताः सततयशोराशिविशदीकृताशाः महाकवयः निजचातुरीधारया सुधारया सुक्तं रसोपज्ञं विदधतीति न केवलं वक्तव्यम्। अपि तु कालिदासादिमहाकविकाव्यरत्नाकरनिमज्जननिर्धूतकलमषा विशेषेण सज्जनाः समुद्गिरन्ति हि तेषां सप्रणयं सप्रश्रयमभिनन्दनानि। धन्यास्ते महात्मनो येषां किल यशोवैजयन्ती विबुधवर्त्मन्यजागरीत्, अजागरिष्यत्, जागर्त्यपि। अस्तु, नात्र वयं विशेषतो वक्तुं यतामहे। एतेषु महाकविरत्नेषु एकः परममाहेश्वरशिखामणिः षडक्षरो नाम महाकविः कर्नाटकजनपदमलञ्चकार। अयं कविः कर्नाटकराजधान्याः मैसूरनगरात् आरात् (यलन्दूर)ग्रामे विद्याजीविना महादेवेन महात्मना गङ्गादेवीगर्भरत्नाकरात् (१५३६तमे शालिवाहनशकाब्दे) साक्षात्कलाधरः समुदेत्य सर्वज्ञमूर्धमण्डनतामाजगाम। अस्योदयेन तदात्वे रत्नगर्भा यथापूर्वं निश्चिननाम्नो चकास्तेस्मेति नात्र पृथगभिधेयम्। तदात्वे कर्नाटकवसुन्धराललामस्य चिक्कदेवराजावतंसस्य संसदं बहवः कवयोऽलञ्चक्रुः। एकदा रसिकशिखामणिः स महीश्वरो वसन्तसमये विहर्तुं सावरोधं सानुचरंसपण्डितकविमित्रमण्डलमाखण्डलवनसाधारणं निजारामममुपेत्य तत्रावरोधेन राजीवरसपरिमलतरे जलाकरे केलीलोलामनुभूय विहृत्य च तत्र तत्र नानावल्लरीवेश्मान्तरेषु ततः समित्रो मधुमाधवीमण्डपस्य पुरस्तादिन्दुशिलातलमवलम्ब्य आरात्कविभिरभिवर्ण्यमानं वनसौन्दर्यं यावत्पश्यति तावदाययौ कश्चिन्माहेश्वरवटुः सुन्दरमूर्तिः पवित्रकीर्त्येव देहप्रभया शान्तया कान्तया च मृणालतन्तुसन्ततेन दुकूलयुगलेन ललाटतललसितभसितपुण्ड्रत्रयेण शरत्पार्वणशशिकरानुकारिणा स्मितेन च सर्वतः किरन्निव सारस्वतं रसम्। ततस्तदायमसाधारणं तेजः समीक्ष्य विस्मितो भूकलत्रः पवित्रतममेनं सम्मान्य स्निग्धमनाः प्रणयेन प्रार्थयित्वा तन्मित्रेण तदभिधानं ज्ञातवान्। ततोऽपि वटुर्यथोचितं राजानं प्रशशंस। स एवायं कविशिरोमणिः षडक्षरः। अथ यथापूर्वं वर्ण्यमाने कविभिरुपवने माधवमधुमधुरिमधुरन्धरे विजगाद स किञ्चिदयं बालकविः। प्रार्थितश्च महीकान्तेन तेन स्मितस्मेराननराजीवः सोऽयं शारदाकीरः कमनीयतमं तमारामं मृदुमधुरया भारत्या छन्दोमय्या वर्णयामास। ततोऽभिनन्द्यानन्दतुन्दिलेन देवराजेन भोजेनेव कालिदासः स कविपुङ्गवः सम्मानितः सद्गुणवर्णनचणैः कर्णेहत्यान्तवाणिभिरभिष्टुतः चिक्कदेवराजसभामलञ्चकार। एतद्वर्णनपद्यान्यपि राज्ञा प्रेरितेनानेन स्वप्रबन्धे कविकर्णरसायने महाकाव्ये

संयोजितानि । एतस्यैव महाकवेर्मित्रमपरं हृदयमिव पद्मकविरासीत् । एकदा एकस्मिन्नेवाहनि सकलगुणपरिपूर्णं प्रबन्धमेकं निर्मातुं राज्ञानियोजितोऽयं षडक्षरकविस्तथैव रसार्णवं नाम महाकाव्यं प्रणिनाय । तदा सभायां कविकुञ्जरादिविरुदभूषितश्चासीत् । अनेन कविरत्नेन कविकर्णरसायनं नाम चत्वारिंशत्सर्गात्मकं विविधवर्णनचातुरीपरीतं सकलगुणसपन्नं ग्रथितं चेतोहरति । अपि च; रत्नावली कविकोटिः अम्बाशतकम् भद्रस्तवः इत्यादयोऽप्यनेनैव ग्रथिताः । न केवलमयं गीर्वाणवाण्येव ग्रन्थानग्रथनात् । अपि तु स्वदेशभाषया राजशेखरं नाम कंचिद्राजानमधिकृत्यासाधारणं राजशेखरविलासं नाम प्रबन्धं वृषभेश्वरविलासं शबरशङ्करविलासं अन्यानपि कांश्चित्प्रबन्धान् जग्रन्थ । स्वस्यैव शबरशंकरविलासे समयमनुसृत्यानेन महाकविना स्वस्य एकादशतमे वत्सरे तद्ग्रन्थप्रणेतृत्वमुपन्यस्तम् । अयं स्वस्य त्रयोदशतमे वयसि राजशेखरविलासं; षोडशतमे कविकर्णरसायनं प्राणैषीत् । काव्यादावनेन दुष्कविनिन्दासुकविप्रशंसात्मकं प्रकरणं नियतमुररीकृतम् । स्वस्यैव कविकोटिग्रन्थे "कविशेषे किमद्भुतम्" इत्येकं प्रकरणं निर्माय तद्वाक्यघटितमेवान्तेपद्यं ग्रथितवान्

रणेन साध्यते सर्वं मठेन म्रियते मही ॥
आधारे रमते हंसः कविशेषे (कवि, शैषे) किमद्भुतम् ॥

अथचायं स्वगुरुमित्रं हरीश्वरं महाकविमपि वारं वारं प्रस्तौति । अनेनैव महात्मना महाकविपुंगवेन हरीश्वरेण ग्रथितायाः काव्यमीमांसायाः व्याख्यावसरे पद्मकविर्हरीश्वरं स्तुत्वा ततः स्वगुरुं वासवराजमप्यस्तौत् । ततः स्वमित्रं षडक्षरमित्थं स्तौति

"जिह्वान्तर्नटदम्बुजासनवधूपादप्रवालस्फुरन्
मञ्जीरद्वयमञ्जुनादविभवश्रीगर्वसर्वंकषः ॥
जीयासुर्भवतः षडक्षरविभोकुन्दारविन्दावली ।
मन्दारद्रुममंजरीमधुझरीमाधुर्यधुर्या गिरः" ॥

इति अयमेव वासवराजः षडक्षरकवेरपि विद्यागुरुः । अयं किल षडक्षरः स्वस्य द्वाविंशतितमे वयसि ( १७७६ शा० शकाब्दे ) परं धाम समासादितवान् । न महान्तं कालमयं जिजीवेति केवलं दौर्भाग्यं कविसरणेः । ततो मित्रव्यसनेन पद्मकविः कान्तारं जगाहे हा हन्त अपि च दौर्भाग्यंकविम्ममयस्य ।

गौरीशंकर शर्मा ।

---

# श्रीरामपादयुगलीस्तवः ।

## [चित्रकाव्यम्]

:०:

श्री—दयिनी भवतु नः किल साम्बुज—श्री
रा—मस्य पादयुगली क्षपिताघपू—रा ।
मे—मान्धनैजसहजाहृतराज्यरा—मे
र—क्षेप्सुरर्कतनयो हृदि यां दधा—र ।१।

क्ष-म्यं विभीषणमियं ननुयं रर—क्ष
तु—ङ्गाभिमाननिजसोदर—धिक्कृतं—तु ।
प्रा—क्सञ्चितप्रचुरपुण्यपरम्परा—प्रा
च्यां—मन्महेऽर्कमहसामिव तस्य लो—च्यां ।२।

र—क्षाधिराडपहृता न यदा शरी—र
क्षे—माय कश्चिदपि रामवधूर्लल—क्षे।
द्या—यन्त्यमुष्य कृतकर्म्म तमीं तुत—द्या
म्या—तस्य यां स्मृतवती निजभक्तका म्यां।३।
च—न्द्रोद्गतिं कुमुदिनीव मुनिप्रिया—च
ल—क्ष्ये कदाहमिति यां सतत शिशो—ल
क्ष्म—त्वं खलु स्वपतिना गमिता विप—क्ष्म
णः—मङ्गः प्रकुपितेन पुरैव वृप—णः।४।
प्र—ध्यातवान् सरसि कोमलवायुकम्—प्र
तीं—रस्थशाखिनिचयां किल मत्तदन्—ती
च्या—च्योहमस्मि भगवन्न ररेमे—च्या
म्म—हलस्थनक वशगो भवतेत्यदम्—भ।५।
र—म्यं ध्रुवस्य किल याभिमतं पुपू—र
तो—न्दूयमानमनसोऽयपदास्तिहे—तो।
र—म्यैर्भृते विशदवार्भिरथापपू—र
क्षे—त्त्रक्र सूनु भगिनोपुलिनेऽनित्र—क्षे।६।
दु—श्शासनेन च परिह्रियमाणविन्—दु
दी—प्रांशुका द्रुपदराजसुता सुवे—दी।
च्यां—च्यांकरी किलदृशां प्रगतातिशा—च्यां
श—म्प्राप्तये मनसियां शरणं लिले—श।७।
त्रु—स्यतप्रभो यदति भीषिकयापि श—त्रु
सू—र्योडुपाव भवतां हि यथा परा—सू।
द—ण्डैश्च तस्य जनकस्य कयाधुतन्—द
न—स्वस्य संस्मरति यांस्म पुरातिदू—नः।८।
ई—डया च योग्र विपिने त्रिदशै रहो—ई
शा—यैश्चचार किल पावितदक्षिणा—शा।
न्या—य्ये पथि स्थितवतां परि पन्थिहा—न्या
ऊजा—प्रद्बला विविधलग्नकुशूलपु—ऊजा।९।

न—कञ्चरी ह्युरसि यां विनिधाय किं—न
की—लालपायि जननीपदवीं वरा—की।
र—काम्बुज द्युतिमतीं सहसापुरा—र
क्षे—मङ्करी गरलजुष्टकुचाग्रल—क्षे।१०।
दा—क्षाय्यराड दशमुखेन निकृत्तपा—पा
श्रेय्—याश्चिर्चपेव गरुति क्षुरया विभ—श्रे।
यां—श्चिन्तयन् मनसि योगिजनैरज—स्यां
र—क्तं वमन् सपदि मोक्षगतिं ससा—र।११।
वि—क्षमापतिः स्वभुजयोः किलयांस्वसे—वि
नं—नम्यमाननखकोटि पदां च नृ—नं।
द—न्दह्यमानगुचिरुग् विनतात्मनन—द
नः—पूज्यतामुपगता जगतां दधा—नः।१२।
वि—प्रः परेत पतिदूतवशः स्वसे—वि
भी—नाशिनीं स्मरति या स्म पुराविदम्—भी।
प—ङ्केन चित्र निज सञ्चितपापभी—प
ण—प्रेतसिन्धु पतनातिभयः स्वरे—ण।१३।
स्तु—त्यः कथं दशसहस्रसुतैर्वृत—स्तु
नैर्—धान्य सद्मनि वदन्निति मृष्टमश्—नै।
ऋ—ष्यत्रिसूनुरिति यां हृदि दुष्टनै—ऋ
त्यां—द्रौपदी स्मृतवती निजभक्तनु—त्यां।१४।
वा—ली पुरः स्थितवतो प्रविलोक्य पी—वा
या—क्षोपमार्जिदहने स्वतनूं विहृ—य।
व्या—पेदिवान्न किमु मोक्षगतिं सुदि—व्या
व्या—गीश्वरैर गणनीयगुणामिमा—व्या।१५।
यु—क्तोमुदा समचनेऽय च यां शुभं—यु
न—न्दीशदेहधवलैस्तलिलैरनू—नं
द—वीकराञ्चितपदं दितिवंशतन्—द
नः—प्राप्तवान् सपदि किन्न किलेन्द्रसे—नः।१६।

ऊ—रीकरोमि न विरिञ्चपदं सुरा—ऊ
र्ध्वं—चापिराममवलोक्य न यूयमी—र्ध्वं।
र—म्यां स्मरन्निति च यां शरभङ्गआ—र
क्षेत्—त्रं विहाय सुगति किल हव्यभ—क्षे।१७।
म—न्दाकिनी रजतशुभ्रजला स्वज—न्म
हा—लाहलोपमितपापहरप्रवा—हा।
वि—न्दत्यथस्म यतएव पदी पुरो—वि।
ष्णुर्—नाम सा गतवतीति यदुत्पति—ष्णु।१८
म—त्स्यादिनी च शबरो श्रुतिसूक्तक—र्म
ध्यं—धापि यां समविन्द्य सुरैरसा—ध्यं।
र—म्भेव भूपिततनूरपवर्गमा—र
क्षेत्—त्रं हविर्भुजि विहाय विदाहद—क्षे।१९।
नृ—स्वामिसूनु भरतोऽपिच यांस्मर—न्नृ
के—त्वग्रजे वसति कानन उग्रघू—के।
श—प्त्वा पुरा स्वजननीं धृतवान्निजं—श
री—रं चतुर्द्दशसमाः सरयूविहा—री।२०।
अध्यात्मजेऽधिजुहवानि जटाशुचा—अ
ध—र्म्यम्बरीषमिति वादिनियां बुबो—ध।
स्ता—च्छंममेति शरणं कलयन् पुर—स्ता
द्वा—चंयमः स कुभृदप्रतिपत्तिम—द्वा।२१।
म—ङ्क्षूद्गमैः क्षुभितवारिचरैर्महान्—म
नः—कोशलेश्वरसुतस्यनितान्तदी—नः।
पा—थोनिधि स्समभियन्द्य च यां पुरा—पा
तु—ञ्चक्षमे निजजलानि निवृत्तमन्—तु।२२।
स—म्पूज्य यां स्वदुरितं सहसा गुहः—स
र्व—स्वर्गवासिजनपूज्यतमां तुथू—र्व।
तः—पूर्व्वपूरभवदायु च नीचजा—तः
पा—पाद्रिखण्डन कृतौ किमुसानशम्—पा।२३।
तु—ष्टूषुको रिपुभयं यदुकोऽपि जा—तु
के—मदुमीव धनितां किल किं डुढौ—के।
श—र्वादयश्च सुमनोनिवहा यद्—श
वः—साददातु सततं सुतरां शिवं—वः।२४।

लक्ष्मण शास्त्री

नागौर (मारवार)

---

# पुस्तकपरिचयः।

——:०:——

जैनसिद्धान्तप्रकाशिनीसभामन्त्रिणा श्रीमता पन्नालालजैनमहोदयेन **सनातनजैनग्रन्थमालायाः**—अष्टौ ग्रन्थाः प्रेषिताः समालोचयितुं मत्करतलमागताः। समालोचनं नाम किमप्येतावदुष्करं कर्म। विशेषता हि शास्त्रीयग्रन्थानाम्। के वा वयं तेषां विश्रुतोद्यमानां विपश्चितां भूयोदर्शनसमुद्भूतामुक्तिमालोचयितुम्। जैनमुनीनां पण्डितानाञ्च विषयप्रतिपादनशैलीं तत्र नैसर्गिकीं निपुणतामभिवीक्ष्य नितान्तं प्रहृष्याम, सरसमधुरवाचां जैनकवीनां काव्यग्रन्था दृष्टा अस्माभिः। साम्प्रतं तेषामेव व्याकरणग्रन्थाः शास्त्रीयग्रन्थाश्च नः पुरःस्थिता दृष्टिमुपस्नेहयन्ति। यत्सत्यं तेषां पण्डितमूर्धन्यानां स्वपक्षसंस्थापनदार्ढ्यं, परपक्षव्युदासनैपुण्यञ्च निकाममानन्दयति पठतां चेतांसि, जैनसाहित्यं हि न केवलं जैनानामेव रत्नमपि तु निखिलानां भारतीयानामेव तत् किमप्यनर्घ्यं रत्नम्, सर्वैरेव विद्वद्भिः भारतीयसाहित्यानुशीलनसमुत्कैर्जैनसाहित्यमप्यनुशीलनी-

यम्, अन्तरा जैनसाहित्यानुशीलनमपूर्णमेव भारतीयसाहित्यज्ञानमिति वक्तव्यम्, जैनैर्विद्वद्भिर्न केवलं धार्मिका एव ग्रन्था विरचिताः, अपित्वेभिः सर्वाङ्गमेव साहित्यं सम्पादितम्।

जैनग्रन्थमालाया अस्याः प्रथमखण्डे पत्रपरीक्षा आप्तपरीक्षा चेति ग्रन्थद्वयं मुद्रितम् आप्तपरीक्षायाः कर्ता श्रीविद्यानन्दिस्वामी, पत्रपरीक्षाप्येतेनैव महात्मना विरचिता, आप्तपरीक्षायां दर्शनान्तराणामाप्तत्वमस्ति नवेति सम्यग्विविच्य जैनदार्शनिकानामाप्तत्वं साधु स्थापितम्।

**समयप्राभृतम्,**—इदं द्वितीयं पुस्तकम्, खण्डद्वये प्रकाशितम्, परमद्याप्यपूर्णम्। अस्य ग्रन्थस्य कर्ता भगवत्कुन्दकुन्दाचार्यः। मूलग्रन्थः प्राकृतभाषात्मकः, टीका च संस्कृतात्मिका। तात्पर्यविवृतिरात्मख्यातिश्चेति द्वे टीके समयप्राभृतस्य सहैव मुद्रिते। अत्र समयस्य आत्मनः प्राभृतं शुद्धावस्था निरूपिता। अत्र प्राकृतस्य संस्कृतच्छायायां कुहचित् स्खलनं विलोक्यते। यथा—

वंदितु सव्वसिद्धे धुवममलमणोवमं गदिं पत्ते वोच्छामि समयपाहुडमिणमो सुदकेवलीभणिदम्,

अस्य संस्कृतच्छायाः—

> वंदित्वा सर्वसिद्धान् ध्रुवाम-
> चलामनौपम्यां गतिं प्राप्ताम्
> वक्ष्यामि समयप्राभृतमिदं
> श्रुतकेवलीभणितम्।

अत्र पत्ते इत्यस्य प्राप्तामिति संस्कृतच्छाया विलिखिता, परं प्राप्तान् इति भवितुमुचितम्। अयं ग्रन्थः प्रौढो दार्शनिकतत्वावभासकश्च।

**तत्वार्थराजवार्तिकम्**—श्रीमद्भट्टाकलंकदेवविरचितम्। खण्डत्रये मुद्रितं, परमसंपूर्णम्, खण्डान्तरे पूर्णतामेष्यति।

**शब्दार्णवचन्द्रिका**—श्रीमदाचार्यवर्यसोमदेवसूरिविरचिता, व्याकरणप्रक्रियात्मकोऽयं ग्रन्थः, अत्र पाणिनिव्याकरणोपमाना एव प्रक्रिया वर्णिता। परं तदपेक्षयात्रत्या प्रक्रिया सरला।

**जैनेन्द्रप्रक्रिया**—आचार्यगुणनन्दि विरचिता, इयमपि प्रक्रिया व्याकरणस्य।

इमां ग्रन्थमालां प्रकाश्य साधु समुपकरोति जैनसमाजं जैनसिद्धान्तप्रकाशिनीसंस्था। सर्वथाभिनन्द्योऽयं प्रयत्नो जैनविदुषाम्। न केवलमेतेन प्रयत्नेन जैना एवोपक्रियन्ते, अपि तु निखिलो भारतीयः संस्कृतज्ञ समाजो, भारती च।

**तत्वसुधालहरी**—न्यायदर्शनस्य संक्षिप्ता पद्यात्मिका व्याख्या, व्याकरणतीर्थपं०हरिदत्तशर्मत्रिवेदिविरचिता, मूल्यम् ।≈) नैयायिकविद्यार्थिनामुपकारकोऽयं ग्रन्थः। भूमिकाप्यत्र ज्ञेयपूर्णा विन्यस्ता। ग्रन्थकर्तुः सकाशात् अमृतसर(पंजाब)इत्यत्र लभ्यते।

**ब्राह्मणमहत्वदर्शकाव्यम्**— पं०अखिलानन्दशर्मकविरत्नमहोदयेन प्रणीतं प्रकाशितञ्च,

प्रसिद्धं हि कविरत्नमहोदयस्य काव्यनिर्माणपाटवम्। किन्निमित्तमासीत्पुराब्राह्मणानां महत्वं, कथंवाद्य तेऽधिक्षिप्यन्ते, कैरुपायैर्ब्राह्मणा आत्मनः स्थानमासादयितुं शक्नुयुरिति वर्णितं ग्रन्थेऽत्र कविरत्नमहोदयेन, साम्प्रतमब्राह्मण्यकाले साधु व्यवसित कविरत्नमहोदयेनेति विलोकयतां नः प्रसीदत्यन्तारात्मा।

**भक्तिरत्नावलिः**— प्रयागस्थपाणिनिकार्यालयेन प्रकाशिता, तत एव च लभ्यते। मूल्यं १॥) सार्द्धैकरूप्यकम्।

श्रीमद्भागवतं नाम भक्तानामतिप्रियो ग्रन्थः। तत एव बहवः श्लोकाः संगृहीताः विष्णुपुरिणा भक्तिरसनिर्भराः श्लोका यथावदत्रगुम्फिता रत्नावलौ। कान्तिमालानाम्नी व्याख्याप्यत्र संग्रहकर्त्रैव संनिवेशिता। धर्मव्याख्यातॄणामुपदेशाकानां भक्तानाञ्चायं ग्रन्थः प्रियो भविष्यतीति विश्वसिमः। ग्रन्थान्ते हिन्दीभाषात्मिका कापि व्याख्या सन्निवेशिता। हिन्दीभाषया निबद्धा भूमिका अनुशीलनीया निखिलैः सम्पादकोऽस्याः कश्चिद् भूतपूर्वसंस्कृताध्यापकः। स च प्रयागस्थ एव भवितुमर्हतीति नो बुद्धिः।

पाणिनिकार्यालयतः बहवः संस्कृतग्रन्थाः अङ्गलभाषानुवादसमेताः प्रकाशिता अद्ययावत् विद्वन्मूर्द्धन्येन, श्रीमता श्रीशचन्द्रवसुमहोदयेन, तदनुजेन वामनदासवसुमहोदयेन च। आभ्यां महोदयाभ्यां बहवः संस्कृतग्रन्थाः आङ्गलभाषया अनूद्य प्रकाशिता। परमेतेन भारतीयानां न कोऽप्युपकारः समजनीति नो बुद्धिः। न कोप्याङ्गलपण्डित आत्मनो ग्रन्थान् संस्कृतभाषया भाषान्तरेण वानूद्य प्रकाशयति। तेऽपि ननु संस्कृतग्रन्थान् प्रकाशयन्ति, परमाङ्गलटीकाटिप्पण्यादिभिः संवलितानेव ग्रन्थान्, येन भवेदुपकारस्तद्देश्यानाम्। परंभारते नेयं रीतिः समादृता भवति भारतीयानामधन्यतया। साम्प्रतं पाणिनिकार्यालयतः **श्रीश्यामाचरणग्रन्थावलि**नाम्ना ग्रन्थमाला प्रकाशयितुमारब्धेति विलोकयन्तो नितान्तं सन्तुष्यामः तस्या एव ग्रन्थावलेरियं रत्नावली प्रथमो ग्रन्थः।

**संस्कृतशिक्षा**—श्रीमता जीवारामशर्मणा प्रणीता। चतुर्षु खण्डेषु सम्पूर्णा, मूल्यम् ।॥) प्राप्तिस्थानं, पं० जीवारामशर्मा उपाध्याय गुरुकुल वृन्दावन।

साम्प्रतं संस्कृतशिक्षायै बहूनि पुस्तकानि निर्मीयन्ते, परं मया दृष्टेषु तेष्वियं संस्कृतशिक्षा बालानामधिकमुपकारिकेव प्रतीयते। अत्र व्याकरणनियमाः तत्प्रयोगप्रकारश्च साधुवर्णिताः।

**संस्कृतबालबोधिन्याश्चतुर्थोभागः**—अस्या, भागत्रयस्य परिचयः शारदायाः कस्यामपि संख्यायां निर्दिष्टोऽस्माभिः। असंस्कृतज्ञान् बालान् संस्कृतं बोधयति बोधिन्याश्चतुर्थोभागः। अस्य मूल्यम् ।) प्राप्तिस्थानम् देवीप्रसादशास्त्री,संस्कृतपाठशालाध्यापकचूरु।

**कार्यक्रमो लेखमाला च**—तृतीयहिन्दीसाहित्यसम्मेलनं कलिकालनगरे महता समारोहेण सम्पन्नम् । तस्यैव विवृतिः करतलमुपनतं न । अत्रखण्डद्वयं वर्तते, प्रथमे खण्डे कार्यक्रमः । द्वितीये च लेखमाला । प्रसिद्धानां विदुषां लेखाः लेखमालायामस्यां स गृहीताः । हिन्दीसाहित्यतत्वमधिजिगमीषूणामवश्य संग्राह्यः कार्यक्रमो लेखमाला च । हिन्दीसाहित्यसम्मेलनप्रयाग इत्यत्र लभ्यते ।

**विद्वद्रत्नमाला**—जैनपण्डितानां धर्माचार्याणाञ्चात्र जीवनवृत्तान्त उपानवद्धो हिन्दीभाषया श्रीमता नाथूरामप्रेमीजैनमहोदयेन । अत्र समानां विदुषां जीवनवृत्तान्त आकलितः, भाषा सरला सरसा च । लेखक्रमो मनोहरः, । इयं रत्नमाला अवश्यं धार्या विद्वद्भिः, मूल्यम् ॥≈)

**दिगम्बरजैनग्रन्थकर्ता और उनके ग्रन्थ**—अय ग्रन्थो महदुपकारको जैनग्रन्थकर्तॄणां ग्रन्थानाञ्चान्वेषणे । अत्र ग्रन्थकर्तॄणां नामानि समयो ग्रन्थाश्च यथाक्रमं विन्यस्ताः । ग्रन्थमिमं विलिख्य नाथूराममहोदयेन बहुपकृता जैना, भारतीयाश्च साहित्यरसिकाः । एतदर्थं साधुवादानाशास्महे श्रीमते लेखकमहोदयाय । मूल्यम् ≡)

**कर्णाटकजैनकवि**—अत्र कर्णाटकजैनकवीनां संक्षिप्तः परिचयः समयस्तेषां ग्रन्थाश्च परिचायिता लेखकेन, अद्यापि लेखकः श्रीनाथूरामप्रेमीजैनमहोदय एव । अमूल्यस्त्वास्य पुस्तकस्य मूल्यम् )॥

**श्रमणनारदः**—अयमुपन्यासो हिन्दीभाषामयः । पालीभाषया निबद्धस्य कस्याप्युपन्यासस्यायमनुवादभूतो ग्रन्थः । अत्रत्या कथा अतीवमनोहरा, शिक्षयति च तत्त्वं, येन जना अतिनिःशङ्कं व्यवहर्तुं पारयेयुः, आसादयेयुश्च निष्काममनुग्रहं भगवतः सुखस्य । मूल्यं लोकसेवा ।

एतेषां ग्रन्थानां प्राप्तिस्थानम्, हिन्दीग्रन्थरत्नाकरकार्यालय,हीराबाग,गिरगाव,बम्बई ।

**स्त्रीधर्मशिक्षा**—श्रीमता लक्ष्मणाचार्यबाणीभूषणमहोदयेनेयं शिक्षा प्रदत्ता, मूल्यम् ।) शारदासदन नरसिंह दवला मलवा, इत्यत्र लभ्यते । अत्र पुस्तके माता कन्यामुपदिशति । कथोपकथनच्छलेन धर्मतत्वं स्त्रीणामाचारश्च वाणीभूषणमहोदयेनोपनिबद्धः । इयं शिक्षा बालिकानां महान्तमुपयोगमावहेदिति नः प्रत्याशा । इयं शिक्षा पाठशालासु स्थानमर्हति ।

**विज्ञानप्रवेशिका**—विदितमेव शारदावाचकानां यत् प्रयागस्थैः पण्डितैः कापि विज्ञानपरिषन्नाम्नीसभा स्थापिता । या हि देशीयभाषासु वैज्ञानिकग्रन्थान् निर्माय भारते सुलभां वैज्ञानिकीं शिक्षां प्रचारयिष्यति । त्वरितमेव समारब्धः समुद्योगो विज्ञानपरिषदेति विलोकयन्तो नितान्तं प्रहृष्यामः । विज्ञानप्रवे-

शिका नामेयं पुस्तिका तत एव प्रकाशिता। श्रीमता महामहोपाध्याय गङ्गानाथझा महोदयेन सम्पादिता, अध्यापक रामदास गौड़ एम् ए० अध्यापक शालिग्रामभार्गव एम्० एस्० सी० महोदयाभ्यां निर्मिता सेयं प्रवेशिका। मूल्यम् ≶)

यत्सत्यं विदुषामेषामयं प्रयत्नो यावन्तमुपकारमारचयिष्यति भारतीयानां, तस्य षोडशीं कलामपि स्प्रष्टुं न पारयिष्यति साम्प्रतिकानां व्याख्यातृप्रवराणां भारतोद्धारप्रयासः। कथोपकथनच्छलेन वैज्ञानिकतत्त्वोपदेशःसमारब्धो महान्तमुपयोगं जनयिष्यति बालकानाम्, किञ्च, शिक्षेयं सरलतामापादिता मनोहरति निखिलानां, समुद्भावयति हृदि मनोरममाशाङ्कुरम्। साधीयान् प्रयत्नो महामहोपाध्यायमहोदयस्य। प्रशंसनीयौच ग्रन्थानिर्मातारौ। साम्प्रतं विद्वद्भिः समारब्धः समुद्योगः धनिकानां कृते किं साम्प्रतमपि नायातः समयः। यद्यद्याप्येते न दूरीकरिष्यन्ति समुच्छूनावयवामुपधानिकां तदा किमेभिर्भूभार भूतैरिति सखेदमनिच्छतापि वक्तव्यमेव।

**कलकत्ता समाचार**—एतन्नामकं हिन्दीभाषामयं प्रतिदिनं प्रकाश्यमान समाचारपत्रम्। धनिनां मरुवासिनां दृष्टिः साहित्ये निपतिता, नन्वद्यतेऽपि याथातथ्येन स्वीयं कर्तव्यं निर्णीयव्यापृताः कर्मणीति विलोकयतां केषां हृदयं नानन्दनिर्भरतामुपयति। धनिकैर्मरुवासिभिः सम्भूयसमुत्थानसमितिः प्रतिष्ठापिता। तत एव च पत्रमिदं प्रकाश्यते। अस्य सम्पादका महता श्रमेणानुसन्धानेन चात्मनः कृत्य निर्वाहयन्ति। किञ्च पत्रमिदं स्वीये नैव मस्तिष्केन परिचाल्यते, धर्मप्रचार एव चास्यमुख्यंलक्ष्यम्। चिरंजीवतु सफलयतुचात्मनोलक्ष्यम्। समुपकरोतुच "हिन्दी" अपराभिधानां भारतीयां भाषाम्। अस्य वार्षिकम ग्रिमं मूल्यं १०) पत्रप्राप्तिस्थानम् च, रामकुमाररक्षितलेन (चीनीपट्टी) कलकत्ता।

**संक्षिप्तसचित्रजीवनी**—श्रीमतः काशीनरेस्यजीवनवृतान्तमत्र समुपवर्णितम्। प० हरिहरप्रसादशर्मणा (वरियारपुर पो० चकिया स्टेटबनारस), विनामूल्यमेव वितीर्यते।

---

# सूचनम्।

---

कैश्चिन्महोदयैः कृपया शारदायां प्रकाशनाय लेखाः प्रहिता मत्समीपमागताः। तेषां प्रकाशनमपीष्टम् परं तत्र नामसमुल्लेखाभावान्नाद्ययावत् प्रकाशयितुमलं प्रभवामः। अतो लेखप्रेषकमहोदया निवेद्यन्ते यत्स्वनामकीर्तनेनानुग्राह्योऽयंजनः इति

सम्पादकः।

Printed by Pt. L. B. Bhate at the Triveni Printing Works and Published by Pt. Chandra Shekhar, Daraganj Allahabad.

## उद्बोधनगाथा

[ १ ]

जागृहि जागृहि भारतमातः

प्रतिष्ठयन्न प्राङ्गलिकोत्सव-

मम्बे स्तौमि मातर्

[ २ ]

बहुजनपदेषु जननि

तव पदचिह्नं, स्फुट ृङ्कितम्

नीतिप्रसविनि धरणि !

[ ३ ]

प्रथिता तव वरकीर्तिः

तव गुणगौरव-कुसुमसौरभ—

वशेन मग्ना पृथ्वी ।

[ ४ ]

सूरजननभूतार्ये

हुना तु सुकृतिर्गताच विकृतिः

कापुरुषोषितराज्ये,

[ ५ ]

नव्ये जगदितिहासे

त्वं हि विगीता प्रथिता वसन्या

हीना त्वं तव वासे ।

[ ६ ]

जागृहि जागृहि भारतमातः,

कातररोदनजनितोद्बोधन

गाथा स्फुरति मातर्

—विजयचन्द्रशर्म्मा ( मजुमदार )

[ हरिद्वार-ऋषिकुल-महोत्सवावसरे समध्यविष्टा संस्कृत-साहित्य-सम्मेलन-नाम्नी विदुषां परिषत्। तत्र हि सभापति-पदं महामहोपाध्यायपदभाजा श्रीमता सतीशचन्द्र-विद्याभूषण-महोदयेनालंकृतम्। तस्यैव सभापतेः संभाषणमुपह्रियते शारदा-वाचकेभ्यः ]

## संस्कृत-साहित्य-सम्मेलनम्।

## सभापतेरभिभाषणम्।

माननीयाः सभ्यमहोदयाः,

प्रथमतः सविनयमिदमावेदनं श्रीमत्सु यदङ्गीकुर्व्वन्तु कृपया भवन्तः सर्व्वथाऽकुशलस्यापि कृतज्ञतापूर्णहृदयस्य मे विनयतातिपुरःसरान् सबहुमानान् शतशः साधुवादान्।

अद्यास्मिन् द्वितीयवार्षिके निखिलभारतीयसंस्कृतसम्मेलनमहोत्सवे प्राधान्येन संस्कृतभारती समनुशीलनधृतव्रतैरभ्यर्थनीयतममहागौरवनिदानं सभापतिपदम् अधिष्ठातुम् अतिशयेनाल्पज्ञमपि मां करुणया समाहूय यः खलु सम्मानातिशयः समारोपितो मयि भवद्भिः, मन्येऽमज्जन्मनि स एकएव सर्व्वोपरि वर्वर्त्ति महामहोत्सवः। न खलु वर्त्तते ममाकिञ्चनस्य सुकविजनोचितं तथा वाक्पाटवं सौष्ठवसमलङ्कृतं येन एतत् गीर्व्वाणगुरोरपि दुर्लभेन एतादृश-सम्मानभरेण जनितं आत्मनः कृतज्ञतातिशयं यथोचितं प्रकटयन् वाचा प्रभवामि समुचितमुपचीयमानमात्मप्रसादं कथञ्चिदपि सम्पादयितुम् ततकृतोऽयमञ्जलिः, सम्यतामवमतो अस्य भवद्गुणगणविलोकनविधेयीभूतमनसो ममाकिञ्चनस्य, भवभवतामात्ममर्मसिद्धमहौदार्य्यसोदरया निरुपधिकरुणया। अत्र किन्तु सकलसौन्दर्य्यसारास्पदे त्रिजगद्वन्दनीयगौरीगुरोर्गिरिराजस्य पादस्पर्शवशेनअवनीमण्डलनन्दनायमाने गङ्गाद्वारे महातीर्थे निखिलभारतीय-संस्कृतसाहित्यसम्मेलनमहोत्सवं वार्षिकं भवद्भिः सम्पादयद्भिः सर्व्वथा प्रकटीकृता एतादृशातुलनीयमहोदयकरानुष्ठानस्य समुचितां भूमिं निरूपयितुं सूक्ष्मविचारसमीक्षाप्रावीण्यस्य पराकाष्ठा।

इदं हि तत् परमआसृष्टेः परमर्षिकुलसेवितं सनातनवर्णाश्रमधर्म्मावलम्बिनामस्माकं महातीर्थं यत्र किल प्रथममतिगहनात् गौरीगुरोरङ्कादवतरन्ती भगवती भागीरथी पुण्यां भारतभूमिं पुण्यतरां सम्पादयितुं प्रसन्नपुण्यशीतसलिलसम्भारवर्द्धमानस्रोतसा प्राचीमभि प्रवर्त्तते हि किल करुणामयी जननीव प्रक्षालयन्ती अस्माकमन्तःशरीरं सकलपङ्ककालुष्यं स्नेहातिशयेन शीतलयति पावयति च सर्व्वदा अन्तरात्मानम्।

अस्यैव महतस्तीर्थस्य वर्णनावसरे समुपलभ्यते तावदिदं पद्मपुराणीयम्—

"सर्व्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा।
हरिद्वारे प्रयागे च गङ्गासागरसङ्गमे॥

सवासवाः सुराः सर्वे हरिद्वारं मनोरमम् ।
समागत्य प्रकुर्वन्ति स्नानदानादिकं मुने ॥
दैवयोगान्मुने तत्र ये त्यजन्ति कलेवरम् ।
मनुष्यपक्षिकीटाद्यास्ते लभन्ते परं पद—
मिति

अत्रैव गङ्गावतारस्य दिव्यां शोभां स्मारयन् भारतीवरपुत्रो महाकविः कालिदासः समश्लोकयत्—

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्म्मिहस्ता ॥

वैदेशिकपरिव्राजकमहापुरुषाणां भारतभ्रमणविवरणोक्तिषु अपि अस्य महातीर्थस्य वर्णनम् अतीतगौरवमस्य अस्माकं मनोदर्पणे प्रतिफलयज्जनयतितरां कामपि अनिर्व्वचनीयां प्रीतिसन्ततिम् ।

तथा हि—

षट्त्रिंशदधिकषट्शततमे खीष्टीयवर्षे मार्च्चेति नाम्ना प्रसिद्धमासस्य पञ्चदशदिवसे इदं पुण्यक्षेत्रमागत्य चीनदेशीयप्रसिद्धपरिव्राजकेन हुयेन्थ्साङ् इति नाम्ना विश्रुतेन महात्मना प्रायेण पञ्चमासान् उषितमत्र । कनखलादिप्रसिद्धस्थानेषु च स निवसति स्म । तेन खलु महात्मना अस्य गङ्गाद्वारम् इति प्रसिद्धनाम्नः समुल्लेखः कृतः । अस्य क्षेत्रस्य सन्निहितं मायापुरं तेन बाहुल्येन अवर्णि । तेन खलु तीर्थेऽत्र निवसन्त्या जनताया आधिक्यम् अवलोक्य नितरां विस्मयः प्रदर्शितः । अस्य क्षेत्रस्य चतसृष्वेव दिक्षु प्रवहतो गङ्गास्रोतसः सौन्दर्यं तस्य महात्मनश्चेतोनितराम् आचकर्ष । तदानीन्तननगरस्य नातिदूरे गङ्गातीरे विशालमेकं देवताधिष्ठितं मन्दिरं तेनादर्शि । तत्र मन्दिरे दैववाण्यादिका बहुविधा अलौकिका व्यापाराः प्रत्यहम् अभवन् इति विश्वसिति स्म स खलु महात्मा । तस्यैव देवमन्दिरस्य प्राङ्गणे विशालमेकं प्रस्तरबद्धं कुण्डम् अभवत् तन्मध्यत एव गङ्गास्रोतः प्रवहति स्म । अस्यैव कुण्डस्य गङ्गाद्वारमिति नामासीत् । मन्ये इदानीमपि तेन महात्मना दृष्टं तत् कुण्डं ब्रह्मकुण्डमिति नाम्ना प्रसिद्धं वर्त्तते । भारतवर्षस्य सर्व्वत एव प्रदेशेभ्यः श्रद्धालवः समागत्य सर्व्वपापनोदनाय तस्मिन् कुण्डे स्नानमाचरन्ति स्मेति महताग्रहेण दृष्टं तेन महात्मना । साम्प्रतमिव तदानीमपि भारतीयनृपतयो धनवन्तो वणिजश्च अत्र विशालास्तीर्थयात्रिगणसमाश्रयणयोग्या धर्म्मशालाः संस्थापितवन्त इति अपि नैपुण्येन परिलक्षितं तेन परिव्राजकवरेण । बहुभिर्यवनजातीयैरैतिहासिकैरपि स्वरचितग्रन्थेषु अस्य क्षेत्रस्य वर्णनं कृतम् । दिल्लीश्वरस्य महतः आकब्वरनृपतेः सभामधितिष्ठता आबुलफजेल् इति नाम्ना प्रसिद्धेन ऐतिहासिकेन तु अस्य हरिद्वारम् इति नाम उल्लिखितम्, मन्ये तदानीम् अस्य गङ्गाद्वारमिति नाम प्रायेण लोकानां स्मृतिपथादन्तर्हितमासीत् ।

तिसियास् (Ktesias) इति नाम्ना तथा प्लिनि (Pliny) इति नाम्ना प्रसिद्धौ द्वौ वैदेशिकौ महात्मानौ अपि स्वीयभारतभ्रमणवर्णनावसरेऽस्य महतस्तीर्थस्य सुचारुतरं वर्णनं कृतम्। आसृष्टेरधुनापि महापुण्यक्षेत्रतया सर्व्वत्र सुविदितेऽस्मिन् महातीर्थे पवित्रसंस्कृतभाषायाः पुनरभ्युदयकामनया समवेतान् भवतः समवलोक्य कस्य नाम साधोः हृदयं नोद्दीप्यते नवनवाशोन्मेषशरच्चन्द्रचन्द्रिकाभिः।

आसीत् पुरा अस्माकं परमुपनयनात् ब्रह्मचर्य्यं चरित्वा परापरोभयविद्यासमासादनार्थं ब्रह्मचारिणां गुरुसदने निवासः। तथा हि तस्य निदर्शनं छान्दोग्ये "वस ब्रह्मचर्य्यम्"। एवमयमर्थो मुण्डकेऽप्यवलोक्यते "भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति" तदेवानुसरति स्म कैवल्योपनिषदि—अथाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच-"अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम्। एवमप्यपरं समाम्नायते तैत्तिरीये "स्वाध्यायन्न प्रमद" स्वाध्यायो ऽध्येतव्यः।" स्मरणमप्यत्रार्थे प्रामाण्यं याति "वेदमेव सदाभ्यसेत्तपस्तप्स्यन् द्विजन्मना (?)।" "योऽनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम्" इत्यादि श्रुतिस्मृतिवचननिचयैरार्य्यतनूजुषां सुरभारतीवैधपरिशीलनेन ब्रह्मचर्य्यपूर्व्वकाचार्य्यसदनवासोऽवश्यं समुचित आसीत्। गुरुमठे उषित्वा हि आम्नायनिकरम् अधीत्य परं कार्य्यं श्रुत्वा एव अभ्यधायि। यथा छान्दोग्ये "तद्धैतद् ब्रह्मा प्रजापतये उवाच, प्रजापतिर्मनवे, मनुः प्रजाभ्यः आचार्य्यकुलाद्वेदमधीत्य यथाभिधानं गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिकान् विदधत् आत्मनि सर्व्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्व्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वयम् एवं वर्त्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्त्तते।" इत्येवं परिनिष्ठितरीतिमाश्रित्याद्यत्वेऽपि ऋषिकुलाख्य-वैधब्रह्मचर्य्याश्रमो विराजते।

अत्र किल संस्कृतसाहित्यसम्मेलनमहोत्सवे वाराणसीप्रयागायोध्यामथुराकुरुक्षेत्रबोम्बेविहारवङ्गमान्द्राजराजपुतानासिन्धुपञ्चनदप्रभृतिप्रदेशेभ्यः समादरभरतः समुपस्थितान् सनातनवर्णाश्रमोचितशिष्टाचारपरम्परासंरक्षणदृढव्रतान् गीर्व्वाणवाणीसमनुशीलनोर्जितयशोज्योत्स्नाधवलितदिङ्मण्डलान् भारतीपदारविन्दसुरभिमकरन्दसारसंग्रहदृढव्रतमधुव्रतान् संस्कृतभाषोन्नतिकृते स्वीकृतातिदूरदेशयात्रामहायासभरान् गीर्व्वाणगुरुकल्पान् मान्यान् समवेतान् अत्रभवतो भवतः परितः पुण्यभरेण समीक्षमाणः ससम्मानप्रीतिभराकलितहृदयः अलब्धानन्दसन्दोहसन्ततानुभवेन चरितार्थतामात्मनः सर्व्वथा श्लाघनीयां बहुमन्यते किलायं भवद्गुणगणवशीकृतचेता अकिञ्चनोऽयं जनः।

मन्ये सुविदितमेतद् भवतां यदिदानीं क्रमशो मन्दीभवद्गीर्व्वाणवाणीप्रचारैर्वैदेशिकैः संस्कृतभाषानुशीलनपरैः विद्वद्भिः सा संस्कृतभाषा अमृतैरमृतफलाय सततमासेव्यमानाऽपि मृतेति मन्यमाना सर्व्वानेवास्मान् व्यथयति स्मारयन्ती खल्वस्यास्तास्ताः प्राचीनगौरवगुणगाथा वृन्दारकवृन्दैरपि समादरगीयमाना अपि साम्प्रतं कथामात्रावशेषाः ।

चित्रम् एतत् यत् अमृतनिःस्यन्दिनी अमृतभाषाऽपि मृतेति व्यपदिश्यते, वैदेशिकविदुषामयं अभित्तिकः प्रवादः सर्व्वथा समुपेक्षणीयः किलास्माभिः । धर्म्ममयजीवननिर्व्वाहोपयोगिषु सर्व्वेष्वेव कार्य्येषु वैदिकपौराणिकतान्त्रिकमन्त्रनिचयान् यथायथं पठतां पाठयतां च अस्माकं यावद् वर्णाश्रमधर्म्मः पवित्रेऽस्मिन् भारतक्षेत्रे स्थास्यति तावज् जीवितैव गीर्व्वाणवाणी पावयिष्यति कर्णकुहराणि इति वैदेशिकपण्डितानाम् अस्यां मृतेत्युक्तिः कथं नाम न निरर्थिका सर्व्वतः समुपेक्षणीया च न भवेत् ?

किन्त्वत्र वर्त्तते यद् विचार्य्यं तत्रावधानं भवद्भिर्दीयमानमभ्यर्थये, जानन्ति भवन्तः यत् चिराय अस्तमितः स समयः, यस्मिन् खलु महति भूवलये प्राचीनतमसभ्यतापदभाजनेषु मिसरबाबिलन् आसिरियपार्शियाप्रभृति-प्राचीनमानवजाति ज्ञानगौरवपूतदेशवास्तव्येषु मनुष्येषु सत्स्वपि प्राधम्येन नेतृपदवीमधिकृत्य अस्मत् पूर्व्वपुरुषाः वसिष्ठविश्वामित्रमौद्गल्यकण्वदधीचिवामदेवगौतमकणादव्यासपतञ्जल्यगस्त्यप्रमुखाः पदरजःपवित्रीकृतधरा धरामरवरा ऋषयः प्रातिभविज्ञानप्रभोज्ज्वलितदिङ्मण्डलमण्डलीभूतया महाप्रदीपायमानया अनयैव गीर्व्वाणभाषया भारतीयसभ्यताया सर्व्वाभ्युदयकरगौरवभरं दिशि दिशि समुद्घोषयन्तः सार्धं वैदिकसाहित्यैः आयुर्व्वेदज्योतिषशिक्षाकल्पव्याकरणधनुर्वेदनीतिकलादिशास्त्रनिवहान् परितः प्रचारयामासुः समन्तात् अज्ञानध्वान्तध्वंसाय धरामण्डलस्य ।

साम्प्रतं किल यूरोपमहादेशे—इंलण्ड जर्म्मणीफ्रान्स्प्रभृतिप्रदेशेषु आमेरिकाख्यमहादेशे एसियामहादेशे च जापानप्रभृतिप्रदेशेषु तास्ता महाजातयः ज्ञानबललब्धमहोत्साहसन्ततयः प्रतिदिनं मानवीयाभ्युदयपराम्परां पदवीं नवनवां समुद्भावयन्त्यः स्व-स्व-मातृभाषासु सर्व्वतोमुखीमुन्नतिं विदधतः परितः प्रतिपदं प्रतिपादयन्ति क्षितितले मनुष्यजातेः प्राणिषु सर्व्वात्मना परमं समुत्कर्षम्, वयं पुनर् अस्मत् पूर्व्वपुरुषमहाजनैः कुलपरम्परया न्यासीकृतं तदेव पुरातनं शास्त्रं परिरक्षन्तः नवीनभावेनाविष्टचेतसः संस्कृतभाषायाः अपेक्षितां विदेशीयभाषान्तराणामिव समुन्नतिं साधयितुं शिथिलप्रयत्नाः सर्व्वथा सभ्यमानवजातिषु आत्मसम्मानं स्थापयितुं नोत्सहामहे ।

सोऽयमस्माकमनुत्साह एव संस्कृतभाषायाः वैदेशिकेषु मृतेति प्रवादमनुनादि जीवयन् अस्माकमेव अयोग्यतां नितरां प्रकटयति । तदेतत् महदनिष्टं निवारयितुं ये खलु उपायाः समवलम्बनीयाः, तेषु एतादृशं संस्कृतसाहित्यसम्मेलनं प्रधानतया विराजते इति मे मतिः । अस्मिन् खलु सम्मेलनोत्सवे मिलितानामस्माकं परस्परपरिचयेन मिथः प्रीतिभरः समवेक्ष्य च पुनः प्रादुर्भविष्यति, अत्र च विद्वद्भिः नानादेशीयैः सहृदयैः विरचितेषु पठितेषु च प्रबन्धेषु आकर्णितेषु मिथो वयं बहूनामपेक्षितानां विषयाणां सम्यग्विज्ञानेन सर्वात्मना समुपकृता भविष्यामः, संस्कृतभाषायां साम्प्रतं केषां विषयाणां प्राचीनरीत्या वैदेशिकपण्डितजनसमादृतया वा अभिनवया शैल्या कीदृक् अनुशीलनं विधेयम् इत्यादि निर्णीय तदनुसारेण संस्कृतभाषायाः समुन्नतये संवत्सरं यावत् प्रयतमानाः पुनः प्रत्याब्दिकसम्मेलने मिलिताः कियत् कृतं कियद् वा अवशिष्यते इति समालोचयितुं प्रभविष्यामः, ये तावद् विषयाः भाषान्तरेषु वैदेशिकेषु शिल्पकलादिरूपाः प्राचुर्य्येण परिपाट्येन च सुनिबद्धाः सन्ति तेषां सातिशयम् अपेक्षितानां संस्कृतभाषायां सन्निवेशः यथा सम्भवेत् तद् अपि अस्मिन् सम्मेलने वयं निरूपयितुं शक्ष्यामः । तदेवंविधबहुप्रयोजनसाधनानुकूलमेतत् संस्कृतसाहित्यसम्मेलनमित्यस्मिन् आशाप्रपूर्णहृदयेषु समवेतेषु भवत्सु संस्कृतभाषायाः समुन्नतये बहूपयुक्ततः प्रकल्पकर्त्तव्यता प्रतिभाति मयाऽपि ये तत्र तत्र श्रीमताम् अवधानदानाय समुल्लेखः क्रियते ।

१ । तत्र प्रथमं तावत् अस्मिन् हरिद्वारे संस्कृतसाहित्यसम्मेलनसौकर्य्यार्थं एको महान् प्रासादो निर्माणीयः यत्र पारत्सरिकसाहित्यसम्मेलनमहोत्सवे सभ्यैरैकमत्येनाभिमतानां कार्य्याणां निर्वाहाय कार्य्यनिर्वाहिकेत्याख्यया विहितायाः सभायाः अधिवेशनं नियमेन स्यात् ।

२ । तस्मिन् खलु महति प्रासादे संस्कृतसाहित्यसम्मेलनमहोत्सवे समागतानां विदुषां शास्त्रानुशीलनसौकर्य्यार्थं प्रतिष्ठापनीयः पुस्तकालयः, अस्मिन् संस्कृतभाषायां मुद्रितानि अमुद्रितानि च यावन्ति पुस्तकानि सन्ति तावतां संग्रहपूर्वकरक्षणाय अङ्गीकर्त्तव्यः कियानपि सुमहान् प्रयासः ।

३ । अमुद्रितदुर्लभसंस्कृतपुस्तकानां संग्रहाय विशेषविदध्यक्षाधीना नियोज्याः खलु यथासम्भवसंख्यं अभिज्ञाः पण्डिताः । ते खलु बोम्बेवङ्गबिहारआन्ध्रकाश्मीरप्रभृतिप्रदेशेषु परिभ्रमन्तः विद्यमानानि यथोचितार्थव्ययेन पुस्तकालयस्थापनोपयोगिपुस्तकजातसंग्रहम्—अन्यत्राप्राप्यानां सौभाग्यतः दृष्टमात्राणां च तथाविधानां पुस्तकानां अवश्यमेवानिवार्य्यं निबन्धो वा कर्त्तुमिच्छन्ति अस्माकम् आवश्यकपुस्तकप्राप्तिनिमित्तकं विधानम् ।

४ । वार्षिकसाहित्यसम्मेलनमहोत्सवस्यानायासेन सम्पादनाय संस्थापनीयः प्रवीणविश्वस्तविद्वज्जननिरीक्षितवैधव्यापारः कश्चित् धनागारः ।

५ । संस्कृतसाहित्यसम्मेलने पठितानां प्रबन्धानां मुद्रायन्त्राङ्कनद्वारेण प्रकाशपूर्व्वकं भूयः प्रचारः यथा स्यात् तदर्थमपि प्रयतनीयम् ।

६ । संस्कृतसाहित्यसम्मेलनव्यवस्थाकारिण्याः सभायाः कार्य्यावल्याः साधारण्येन प्रकाशनसौकर्य्यार्थं संस्कृतभाषया निबद्धम् एकं मासिकपत्रं प्रवर्त्तनीयम् ।

७ । विद्वत्सु संस्कृतभाषाया व्यवहारस्य यथा भूयसी वृद्धिः स्यात् तदर्थम् अपि यत्नो विधेयः ।

८ । ईंलण्डप्रभृतिप्रतीच्यसभ्यदेशीयभाषासु जड़विज्ञानदर्शनज्योतिषरसायनेतिहासशिल्पवाणिज्यकृष्यादिविषयेषु ये समीचीनाः ग्रन्थाः वर्त्तन्ते तेषां संस्कृतभाषया अनुवादपुरःसरं सौलभ्येन संस्कृतशिक्षार्थिषु यथा प्रचारो भवेत् तथा सम्पादनीयम् ।

९ । पञ्जिकासंस्कारः कर्त्तव्यः । तत्र ग्रहणग्रहगतितिथ्यादिगणना यथा अभ्रान्ता स्यात् तदर्थं बोम्बेबङ्गकाशीपञ्चनदमथुराप्रभृतिदेशनिवासिनां विशेषज्ञानां ज्यौतिषिकाणां धर्म्मशास्त्रज्ञानां च आस्तिकानां त्रिदुषां ऐकमत्येन समुद्भाविता रीतिः सर्व्वथा अनुसरणीया ।

मान्याः सभासदः,—

प्राक् परिसमाप्तेः ममैतस्याभिभाषणस्य सविनयनिर्ब्बन्धं निवेदयामि तावदिदं, यत् साम्प्रतं सौभाग्येन अस्माकं जन्मभूमिरियं ब्रिटिशसाम्राज्यस्य शान्तिमयसुशासनप्रभावेण समन्तात् सर्व्वतोमुखमभ्युदयं भजमाना कल्पते खलु संस्कृतभाषायाः पुनरुन्नतिततिसमवलोकनाशां मनसि सन्ततं उल्लासयितुमिति, अस्मिन् खलु शुभेऽवसरे संस्कृतभाषाध्यायिनां प्राचीनवर्णाश्रमधर्म्माचारपरम्परासंरक्षण दृढव्रतानां महत्यपि दारिद्र्ये आधुनिकान् अर्थोर्ज्जनोपायान् सर्व्वतः समुपेक्ष्य अविच्छिन्नपरम्परया अस्मत्पूर्व्वपुरुषब्रह्मर्षिगणसेविताध्ययनाध्यापनादिब्राह्मणोचितवृत्तिमात्राश्रयेण कथञ्चिदपि जीविकायात्रां सम्पादयताम् अधुनापि पुण्येऽस्मिन् भारतवर्षे निवृत्तिप्रधान-वेदनियमितप्रवृत्ति-धर्म्ममादरेण प्रतिपालयतां भवतां यद्यपि प्राचीनतम-भारतीयसभ्यतायाः गौरवदिनेषु तेषु अतीतेषु लब्धपदानि तानि आदर्शभूतानि चरितानि सन्ततं स्मृतिपथमुद्भासयन्ति प्रतिभान्ति मनःसु व्यवसायन्ति च पुनरपि सर्व्वथा स्वानुरूपचरितसाधनाय, युक्तं चैतत् तथापि न खलु विस्मर्त्तव्यं भवद्भिः यत् साम्प्रतं यादृशी खलु परितोऽवस्था भारतीयान् अस्मान् ग्रसमाना सर्व्वथा स्वमहिमानमस्मासु प्रथयति, तस्यामस्यां अवस्थायाम् अस्माभिः केवलं प्राचीनादर्शदर्श-

नपरितुष्टैरेव न स्थातव्यम्। विलोकयन्तु भवन्तः समन्तात् भूवलयस्य तास्ता ब्रिटिशजार्म्मेन्फ्रेञ्चजापानीयामेरिकान् इत्यादि गौरवहेतुसञ्ज्ञाभिः सुविदिताः महाप्राणाः परमसभ्यास्तास्ताः महाजातयः तासां महाजातीनां निज-निज-मातृभाषाभ्युदयाय विश्वविस्मयजननसमर्थास्तास्ता महाचेष्टाः च अस्माभिः अपि अस्मत् सर्व्व-स्वभूतसंस्कृतभाषायाः पुनरुन्नतये तासां महाजातीनां तास्ता महाचेष्टाः सर्व्वथा समनुकरणीयाः, वैदेशिकैः शास्त्रेषु अनुलिखिता इति ताः सावज्ञं नोपहसनीयाः। अस्मत् पूर्व्वतनमहापुरुषगणादर्शचरितानि सन्तु नामास्माकं भाविजातीयमहाचरित्र-प्रसादनिर्म्माणाय महाभित्तिभूतानि वैदेशिकपूतचरितमहापुरुषाणां चरितच्छायावलम्बनेन तासां भित्तीनां उपरि पुनः समुल्लसन्तु विरचिता विश्वतोमुखस्य अभ्युदयस्य हेतुभूतास्तास्ता क्रमिकभूमयः। सर्व्वथा न विस्मर्त्तव्यं महाकवेः भारतीवरपुत्रस्य तत्रभवतः कालिदासस्य अमृतमिव मृतसञ्जीवतमिदं वचः—

पुराणमित्येव न साधु सर्व्वं
न चापि सर्व्वं नवमित्यवद्यम्।
सन्तः परीक्ष्याऽन्यतरद् भजन्ते
मूढः परप्रत्ययनेयबुद्धिः॥

इति तदयं कृतो मया विनयाञ्जलिरन्ततः क्षम्यतां कृपया मे त्रुटिततिः सर्व्वथोऽवसरतः समनुरक्तोऽयमकिञ्चनइतिशम्।

महामहोपाध्याय-
श्रीसतीशचन्द्रविद्याभूषणस्य

## मम कश्मीरयात्रा।

"कुबेरसख्याः ककुभोललाटिका,
यदेति 'कश्मीर' पदाभिधेयताम्।
'सतीसरो नाम तदस्ति मण्डलं,
विचित्रसर्गावभृथः प्रजापतेः।
'वितस्तया यत्र लुठत्तटद्रुम-
प्रसूनसौहार्दभृतोऽलिसम्पदः।
पुरस्क्रियन्ते हठमज्जनोत्सव-
भ्रमत्सुरस्त्रीकबरीसनाभयः।
विवृण्वती कौतुकतन्तुसन्ततिं,
भुवं यदीयामधिगम्य शारदा।
घनैरजोभिश्चरणारविन्दजैः,
करोति सारस्वतदृक्प्रसादम्।
स यत्र भर्गः कपटेश्वराख्यया,
निरस्तलोकत्रयकल्मषक्लमः।
दधद्वपुः काष्ठमयं जले स्वपि—
त्यनुद्गमायेव दृगग्नितेजसः।
बिभर्त्ति 'मार्त्तण्डवपुर्यदन्तिके,
पदं प्रभुर्ध्वान्तगदैकभेषजम्,
उपेत्य पौरप्रमदमुखेन्दुभिः
स्वकान्तिपूरैर्मसृणीकृतातपः।"
(श्रीकण्ठचरितम्, ३ सर्गे)

## प्रस्तावना।

यथा कलिकाता प्रासादमयं नगरम् पेरिस्थानञ्च विविधभूषानिकेतनमिति व्याह्रियेते! तथैव वयं शारदापादरजःपवित्रितं कश्मीरदेशमिमं वैचित्र्यमयमाश्चर्यमयम्मङ्गलमयम्,–अद्भुत-शृङ्गार-शान्त-बीभत्स-रसामाञ्च चित्रमयञ्जगदिति,

प्रकृतिचातुर्यस्य चरमसीमेति, ऐहिकस्यामुष्मिकस्यामेयस्याच्छेद्यस्यानुभवैकवेद्यस्य ब्रह्मानन्दसहोदरस्य परमानन्दस्य भाण्डागारमिति च व्याहरन्तो न क्षणमपि विचिन्तयामः, न च स्मृत्यन्तरमस्माकमतिशयोक्तिगन्धोऽपि । मम्मट-कैयटोद्भटकल्हण-जल्हण-बिल्हण लङ्कक-मङ्खक-चन्द्रक-चटकोपलास-सन्धिमान-सोम-देवाऽनन्दवर्धनाऽभिनवगुप्त-क्षेमेन्द्र-राजानकरत्नकण्ठ-जोनराजादिभिः, शब्दशास्त्रवारिधिमहातिमिङ्गिलैः, ऐतिह्यपिपासूनान्तृषाशान्त्यर्थं "पुरावृत्ततरङ्गिणी"-प्रवाहकैः, अष्टादशभाषाभिज्ञैः कविप्रजापतिभिश्च नूनमस्यैव भारतकिरीटस्य कश्मीरमण्डलस्यान्न जलञ्च भुक्तम्पीतञ्चासीत् । अस्यैव कश्मीरस्य समीरमासेवमानैः, भगवत्या वितस्तायाः पावनामम्बुकणान् पिबद्भिश्च कैयट-मम्मटाऽनन्दवर्धनैः, महाभाष्यप्रदीप-काव्यप्रकाशध्वन्यालोकादीन् अज्ञानतमः पटलक्षेत्रे सहस्रदीधितिरूपान्, प्रकाशालोकमयान् ग्रन्थान्विरचयद्भिर्न केवलमुपकारभारादवनामितश्चिराय शिरः कश्मीरस्यैव अपि तु चतुरुदधिमेखलायितायाः समग्राया अपि भारतमेदिन्याः, आहिमालयकुमारिकाञ्च विस्तारितुं स्फटिकावदात यशोचिसरमास्मीयम् । तैरेव देशस्यास्य "शारदादेश" इति स्फटिकावदातयशोविस्तारिणो नाम्नः सार्थक्यमापादितम् तदपि,शारदाप्रणयिनो महाभागाः, श्रीमतां मनोरञ्जनार्थं शारदादेशस्यैवात्मपर्य्यटनेतिवृत्तं, शारदासम्बन्धात्, श्रीमस्यां 'शारदायां' प्रकाशयितुं दृढमुत्सुकोऽस्मि', मन्ये भवन्तोऽपि भूस्वर्गस्याऽस्मत्पूर्वपुरुषाणां गौरवपटहस्य च कश्मीरस्य संवादं सप्रणिधानं पठिष्यन्ति।

## कश्मीर-पथि

श्रावणकृष्ण १४, ७१ ( २२ जुलाई ) बुधवासरेऽभिनवदेशदर्शनसमीहयेव समुदितो भगवान् सप्तसप्तिः, रावलपिण्डानगरे यद्यपि सन्ति बहवः पार्वतपथाः कश्मीरस्य, परं तिस्रो रथ्याः प्रायशो यातृभिरवलम्ब्यन्ते । यथा—जहलमरथ्या ( रावलपिण्डीतः श्रीनगरम् ); शुपयानरथ्या, बनिहालरथ्या च । तत्रापि प्रथमा सर्वोत्तमा । अस्मिन् मार्गे मरुच्छकटं कर्णीरथो लौहो हलरागिणः च बलीवर्दादिशकटानि सुखेन यातुं शक्नुवन्ति । रावलपिण्डीतः १६६ क्रोश ( माइल ) परिमितमध्वानं एकेन दिनेन मरुच्छकटम्, द्वाभ्याञ्च दिनाभ्यां कर्णीरथः समतिक्रम्य, श्रीनगरं प्राप्नुवन्ति यात्रिणम् । इयं रथ्या किल बहुभिरधिगतयाथार्थ्यैश्च महानुभावैर्निष्पक्षैः संसारेऽखिलेऽप्युत्कृष्टा पार्वतरथ्या परिगण्यते । पण्यद्रव्यवहनार्थं वृषभप्रवहणानि एकाश्वञ्च (एक्का) व्यवह्रियन्ते । तर्हि किल 'घञ्जीभाई एण्ड सन्स' नामकस्य शकटव्यवस्थापकस्य भवनात् १००) मुद्राभ्यः, एकः कर्णीरथो भाटकत्वेनादाय २२ जुलाईदिवसे प्रत्युषसि प्रचलिताः

साधारणकर्णीरथो ४०) रूपकेभ्यः, लैंडोप्रवहणानि च ६०) ७०) रूपकेभ्यो भाटकत्वेन गृह्यन्ते यात्रिभिः, परं रावलपिण्डीतः श्रीनगरपर्य्यन्तं केवलमेकस्मिन् स्थाने परिवर्त्तयन्ति वाजिनः पञ्चषुदिनेष्वतः सकष्टं प्राप्नुवन्ति श्रीनगरं यात्रिणः। घञ्जीभाईकर्णीरथाः पुनरश्वद्वितयेन चाल्यन्ते, पञ्चषक्रोशेषु च तस्यावस्थानेषु परिवर्त्तयन्ति युग्मकम् । अतो निर्विघ्नतया पार्यतेऽतिक्रमणं विषमस्य पार्वतपथोद्वित्रदिवसेष्वेव । राजकीयपत्रप्रेष्य (Postal) विभागार्थमपि कर्णीरथ एवोत्कृष्टतया परिगणितः ।

रावलपिंडीतः सुदूरमुपक्रान्तैरस्माभिः 'छत्र' नाम्नि स्थानेऽमलाम्बुसंकुले प्रस्रवण एकस्मिन् सुस्नातम्, समनुष्ठितश्च दैनिकं कृत्यम् । पलायितैकपदमेव क्वाप्यातपवैखरी हताशा ! शाद्वलपिहिते स्थले न्यग्रोधस्यैकस्याधस्तादुपविश्य सुखं भुक्तम् । ततः प्रचलितैः १ वादनसमये 'मरी' पर्वतस्य मनोरमोपत्यकासमासादिता हन्त ! क्वापक्रान्तमधुनैव घर्मांशोः प्रचण्डतया ? क्वास्तेय ललाटन्तपा तिग्मता ? आकस्मिकं शैत्यं कम्पयति शरीरम् ! अगत्या विनिष्कास्य पेटिकाभ्य ऊर्णावस्त्राणि परिधाय च सुस्थताऽन्वभावि। घञ्जीभाईस्थान एव किञ्चित् कालं विश्रान्तम् । सारथिः परिवृत्तः, अपरः समागतः । प्रस्थायं ७, ४५७ सागरतलात् उच्चगिरिसानुषु निर्मितानि सदनानि सुरपुरसुषमाम्मुष्णन्ति । रुग्णाःस्त्रियश्च पुरुषा आतङ्कहतकपराभूतास्तद्वधार्थं शरण्यमिमं प्रश्रं सानुनयमुपाश्रिताः । बडिशानि गृहीत्वा बहवो मत्स्यमांसलोलुपा आंग्ला भीमकायाः परतो विचरन्ति । अस्तु, वयं मार्गं सुदीर्घमटितुं व्यग्राः इति परित्यज्य कुतुकं तूर्णं पुनः प्रचलिताः । रथांगे प्रचलिते सभैरवगर्जनमपतन्मेघो महाभागः । परं नाशकदस्माकं गतिं रोद्धुम्, जलार्द्रा एव वयं छत्रादिभिरात्मानं रक्षन्तस्त्वरितम्प्रयामः । ततश्चावरोहन्तः सपदि परित्यजन्तः समयाभावात् रम्यस्थानानि, समवलोकयन्तः प्रकृतिरामणीयकम्, चातुर्यं रचनाशक्तेः, बार्द्दलान् भर्त्सयन्तः ६ वादनसमये 'कोहाला' स्थाने समागताः । अस्त्यत्रैको दृढः सेतुः, अपारे ब्रिटिशां राज्यम्, पारे च कश्मीरराज्यम्, मध्ये प्रवहति सकलकलं निनदन्ती स्रोतस्वती वितस्ता। यात्रीणामावासार्थमत्रास्ति भाटकलभ्या पान्थशालाःपरमत्रांग्ला अपि वसन्तीति नास्माभिस्तत्र स्थितम् । किन्तु पारस्थे वर्षालय (बरसाला) नाम्नि स्थाने महाराज्ञःकश्मीरस्यावाससदने गृहीत आवासः । अत्र किल त एव स्थातुम्पारयन्ति ये कश्मीरस्वामिनोऽतिथयस्ते च शाकभोजिनश्चेत् । अस्मत्कृते कश्मीरसचिवस्य तडित् आवासगृहाध्यक्षस्य सूचनार्थं पूर्वमेवागतासीत् । स्थानमिदमस्ति पर्वतवक्षसं विदार्य, वितस्तारोधसि सुनिर्मापितम् । सूपकारेण

पाचितम्भोजनं सुखम्भुक्त्वाऽध्वखेदाऽपनुत्तिनिमित्तं सुप्तं प्रमोदपल्यङ्के।

साम्प्रतं सञ्जातं जुलाईमासस्य २३शं दिनम्। प्रातरुत्थाय, स्नात्वा, सम्पाद्य च दैनिकं नित्यकृत्यम्, ६ होरानादे प्रातरेव पुनरारुह्य शकटम्प्रचलितम्। 'दुलाई' स्थानम्पश्यन्तः, प्रकृतिनैपुण्यमसकृदभिवर्णयन्तो मध्यान्हे 'दोमेल' ग्रामे समागताः। अत्र खलु 'कृष्णगंगा' परिपतति भैरवं निनदन्ती वितस्तायामित्यतएवास्य 'दोमेल' इति संज्ञा। महाराज्ञो विश्रामगृहमत्राप्यस्ति। सेतुरप्यत्र विलसति नवनिर्मितः। वैद्यएकः परीक्षतेऽत्र यदुत कश्मीयात्रिणो निरामया न वेति। अत्रैवास्माभिः २) मुद्रे दत्ते मार्गकरत्वेन राजकर्मचारिभ्यः। द्वे मुद्रे चांग्लेभ्योऽपि कोहालापर्य्यन्तं प्रदीयेते करत्वेनैव। अग्रे मार्गमतिकष्टकारणम्, भुष्टम्, त्रुटितम्, अगम्यञ्च, दुरध्व इति वक्तव्यम्। कतिपयस्थानेषु कुल्यासु निर्मिताः सेतवोऽतिवृष्टिकोपाद् भग्नाः। एकत्र निर्झरेतु परित्यज्य वाजी, बलीवर्द्दैर्वाहितोऽपस्करः। एवमेव कथमपि समतिक्रम्य दुर्गममिदं कान्तारं 'गढी' नामकस्थाने सम्प्राप्ताः। पुनरत्र सारथिपरिवर्त्तनञ्जातम्। अत्राप्यस्ति घञ्जीभाईमहाशयस्य टाँगा-एजेन्सी। पुनः प्रचलिताः, मार्गे शीतलामलजलपूर एकस्मिन्नुत्सोपकूले समुपविश्यापराह्णेऽशनम्। व्रतमेव सञ्जातमनायासेन। तत आरूढाः च 'कोठी' स्थाने समागताः, अत्र सञ्जाता सन्ध्या, परं नात्र महाराज्ञो विश्रामगृहम्, केवलं डाकबंगला वर्त्तते, सत्यप्यन्धकारे चालितं शकटम्। शनैः शनैश्च भीषणम्विजृम्भतेऽन्धकारराक्षसः, शकटानां गतागतो रुद्धैव, हिंस्राणां वन्य पशूनामाक्रमणाशंका निरस्त्रेषु नवमेव हृत्कम्पञ्जनयति, कृष्णपक्षस्यामायाः कालरजिनी, पार्वतकान्तारम्, एकतोऽभ्रंकषाणां गिरीणां गम्भीरा पंक्तिः, अपरतो वितस्ताया रोषपरुषाक्षराणीवोद्गिरन्त्याः श्रवणकटुः कोलाहलः, विनष्टा पदवी, नास्ति सविधे प्रदीपोपि, यदि मनागपि विचलिताः स्युः पथा वाजिनस्तन्नूनमगाधे विषमे च गर्त्ते निपतिष्यामो लोकपरोक्षम्! भविष्यति च वैचित्र्यदर्शनलालसायाः परिसमाप्तिः। हन्त! किं कुर्मः? "लिम्पतीव तमोऽङ्गानि, वर्षतीवाञ्जनं नभः, असत्पुरुषसेवेव दृष्टिर्विफलतां गता!" प्रसार्य चक्षुषी पश्यामः परं—

"आलोकविशाला वः
सहसा तिमिरप्रवेशविच्छिन्ना,
उन्मीलिताऽपि दृष्टि-
र्निमीलितेवाऽन्धकारेण!"

इति 'मृच्छकटिक' विटस्यानुभूतां दशाम्प्रत्यक्षमनुभवामः। उपशल्यं ज्वाल्यमानमग्निं निरीक्ष्य स्थिरताम्प्रापुमः। नद्याः पारस्थस्थाणुषु वसतां गृहेषु दीपानम्प्राभाऽभिनवां कामपि श्रियम्पुष्णाति। यथा यथा प्रवर्द्धते तमस्तथा तथा कौतुकमपि द्विगुणतामेति। एवमेवादृष्टपूर्वं दृश्यम-

वलोकयन्तः क्रमशोऽध्वानमतिक्रमन्तश्च 'उड़ी' नामकं संसथमुपप्राप्ताः। साम्प्रतमस्ति निशीथात्किञ्चिदर्वाक्कालः । महाराजस्य विश्रामभवने पीत्वा पयस्सानन्दं निद्राराज्यमन्वभावि ।

पुनः प्रातःरुत्थायारुह्य रथांगं ७ वादनकाले समारब्धा यात्रा । नवशङ्करनिर्झरे समभिषिक्तम्, समनुष्ठितश्च ब्राह्मं कर्म । 'मह्नूरा' स्थानेऽपि दृष्टं महाराजस्यावासगृहम्, अत्रैवास्ति विद्युत्कार्यालयः, सम्पूर्णराज्ये प्रहीयतइतएव तडित्प्रकाशः। मह्नूराप्रस्रवणं प्रवहत्यनल्पेन जवेन । अत्र खलु नदीवोत्कटमृत्यन्ती, विवदन्तीव च पर्वतशकलेभ्यः सगद्गदं परिक्रामति वितस्ता । अत्र निपतितस्य हतभागस्य दुष्करमुद्धरणम् । मध्यमधिष्ठिते हि भगवति गभस्तिमालिनि सकुशलं वाराहमूलम् (वारामूला) नगरे समुपागता वयम्। दुग्धम्पीतम्, सारथिपरिवर्त्तनञ्च सञ्जातम् । अत्र प्रशान्तगंभीरो वितस्ताप्रवाहः । इतः श्रीनगरपर्यन्तं रथ्योपरि राजतेऽभ्रंलिहानां सफेदातरुणां सैनिकानामिव शोभना पंक्तिः । इतः समारुह्यापरकरं पट्टनचौकीं परित्यज्य, ५-३० समये 'श्रीनगरे' तस्य श्रियोऽनुशीलनार्थं सानन्दं सम्प्राप्ताः । जनरल खड्गबहादुरस्य प्रशस्तहर्म्ये गृहीत आवासः । स्थानमतिसमीचीनम्, पृष्ठतो वहति दुग्धगंगा, परितोऽतिरम्यं कुसुमितालवालाकुलं ललितमुद्यानमपि विलसति, वामतो राजकीयं शिबिरं अपेक्षयाधिकं सुमार्जितं स्थानम्, महानसं ( Kitchen ) पृथगेव राजते । राज्यस्याऽभ्यर्थनाविभागेन प्रागेव सुसज्जितम्भवनम्, आवश्यकञ्चोपवर्त्तनमानीतम् । नाद्य कापि पर्यटितम्, केवलं प्रसुप्तमेव गाढम् ।

## कश्मीरः ।

साम्प्रतं कोऽयं कश्मीरः ? किञ्चास्य सीमादिविषये शास्त्रेषूक्तमिति प्रथमं विचारयामः । कश्मीरः, पुं०, कश् कशेर्मुट् च (उणादि ३०) इति ईरन्, ठन्, मुट् च । कश्मीराख्योः देशः—इति शाब्दिकाः । काश्मीरः, पुं०, कश्मीर एव स्वार्थेण्ऽइति काश्मीरो वा । अस्य सीमानिर्णयविषयं प्रकृत्य शक्तिसंगमतन्त्रे ७ पटल इत्थमुपलभ्यते—

"शारदामठमारभ्य
कुङ्कुमादितटान्तकः,
तावत् कश्मीरदेशः स्यात्,
पञ्चाशद्योजनात्मकः ।"

पञ्चमवेदे हि महाभारतेऽपि काश्मीरस्य पावनन्नामाकर्ण्यते—

" काश्मीराः सिन्धु-सौवीरा
गान्धारादर्शकास्तथा "—इति ।

रामायणेऽप्युक्तम्—

"काश्मीरमण्डलञ्चैव शमीपीलुवनानि च,
पुराणि च सशैलानि विचिन्वन्तु वनौकसः"

निम्नोद्धृतैश्च पद्यैरिदमवसीयते यदस्य मण्डलस्य संस्थापको भगवान् कश्य-

पर्षिदासीत्, तत एव चास्य मण्डलस्य "कश्यपमेरु"—रित्याख्या ख्यातिमलभत, तस्या एव च गच्छता कालेनाजनि 'कश्मीर' इत्यपरूपः श्लोकाश्चेमे—

" पुरा 'सतीसरः' कल्पा-
रम्भात् प्रभृति भूरभूत्।
कुक्षौ हिमाद्रेरर्णोभिः
पूर्णा मन्वन्तराणि षट् ॥
अथ वैवस्वतीयेऽस्मिन्
प्राप्ते मन्वन्तरे सुरान्।
द्रुहिणोपेन्द्ररुद्रादीन्
अवतार्य प्रजासृजा ॥
कश्यपेन तदन्तःस्थं
घातयित्वा जलोद्भवम्।
निर्ममे तत्सरो भूमौ
'कश्मीरा' इतिमण्डलम् ।"

'सतीसरः' इत्याख्ययाऽयं जनपदः ख्यात आसीत् कदापीति प्रतीयते श्लोकैः अयमेव च विषयः 'श्रीकण्ठ चरित' कर्तुः, लङ्ककसोदरस्य मंखकस्य यो हि ११२७ मितात् खिस्ताब्दात् ११४६ मितं खिस्तवत्सरं यावत् सुस्सलसुतस्य जयसिंहमहीपस्य शाशने कश्मीरावनिमलंचकार मुखोद्धृतश्लोकैः प्रतिपाद्यते; तथा हि—

" 'सतीसरो' नाम तदस्ति मण्डलं
विचित्रसर्गावभृथः प्रजापतेः।" अस्तु।

मुग़लकाश्यपीशाः किल सर्वथा हृतात्मानो बहुमन्यते स्म कश्मीरम्। विलासप्रियः शाहजहान् नरपतिः प्रतिवर्षं ग्रीष्मर्तौ कश्मीरमेवासेवते स्म। कश्मीरादितरप्रदेशे रुग्णोऽसौ कश्मीरप्रीतिमित्थमुदाजहार—

"ख़ुर्द गन्दुम आदम अज़्
जन्नत कशीदन्दश बिरूँ।
मन् कि ख़ुर्दम आशेजौ
यारब कश्मीरम् रसाँ॥

अर्थात्—गोधूमभक्षणात् आदमः (माहम्मदानां ब्रह्मा) स्वर्गात्पातितः, अयि भगवन्! मया तु यवाम्बुभक्षणमाचरितम् इति मान्तु कश्मीरं (स्वर्गरूपं) प्रापय!

शाहजहान् राज्ञः पित्रा जहांगीरेण तु कण्ठतः स्वीकृतमस्य भूस्वर्गत्वम्, अद्यापि चानायासमेव निःसरति तदुक्तमिदं पद्यं पारसीभाषाचणानां वदनात्—

"अगर फ़िरदौस बररूए ज़मीनस्त,
हमीँ नस्तो हमीँ नस्तो हमीँ नस्त।
यद्यस्ति स्वर्गो धरित्रीतले
तर्हि नूनमयमेवायमेवायमेव।
(कश्मीरः)

मरणासन्नोऽपि जहाँगीरनृपतिः पृष्टो यदा, यत्किं किमभिलषत्यसौ, सदीर्घोच्छ्वासं सकरुणं सस्पृहश्चोक्तममुना तदा—

" ऋते कश्मरं नान्यदिति।"

"अज़् शाहे जहाँगीर दमे
नज़्अ चु जुस्तन्द,
बा ख़्वाहिशे दिल गुफ़्त कि,
कश्मीर दिगर हिच्।"

किंकिं वर्णयामः? बहूक्तं सर्वैरेव प्रकृत्य कश्मीरम्। न चेदमुपभोगस्थलमित्येवाकलनीयम्, योगस्थलम्प्रत्युत,

शान्तेः किल शरीरिणी देवी, शमदमादेश्च भाण्डागारम्। प्रतिपदमत्र राजन्ते देवतास्तीर्थौकसां च कोटय इत्युदाहरन्त्यत्रत्याः पण्डिताः—

"चत्वारिंशद्यथापि पञ्च गिरिशाः
षष्टिश्च चक्रायुधाः,
ब्रह्माणस्त्रय इत्यनादिनिधना
द्वाविंशतिः शक्तयः,
नीलादीनि शतानि सप्त फणिनां,
तीर्थौकसां कोटयो-
विख्याताश्च चतुर्दशोत्तमतराः
कश्मीरभूमण्डले।"

अन्यच्च,

"त्रिलोक्यां यानि तीर्थानि,
तानि कश्मीरमण्डले,
कश्मीरे यानि तीर्थानि,
तानि वैतस्तिके जले।"

तन्नूनं तीर्थायमानमनवरतमभिवन्दनीयं सुरासुरनमस्कृतञ्च भूस्वर्गायते स्थानमिदमिति विलिखन्तः प्रसीदामः।

कश्मीरराज्येतिहासं सप्रणिधानं यदा विचारयामस्तदाऽतिप्राचीनत्वमस्य, स्वत एव हृदयफलके कमप्यपूर्वममुष्य गौरवस्परिस्थापयति। 'राजतरंगिणी' हि नाम कश्मीरेन्द्रमादिगोनर्दमारभ्य प्रवर्तते, यः किल जरासन्धेन यादवैः साकमाहवे सम्प्रवृत्ते स्वसाहाय्यार्थमाहूतः, समहावीरोपि भगवता लाङ्गलध्वजेन साकमेकदा संरुरोध, महत्यपि विजयसंशये, यादवोऽजयश्रियमालिलिङ्ग काश्मीरिकञ्च भूतलम्! तत्पुत्रो दामोदरोऽपि, गान्धारैः स्वयंवरार्थमाहूतेषु वृष्णिषु, पितृवधलुब्धचेताः प्रतिहिंसालिप्सया तैः सार्द्धं युयोध, प्राप च वीरोचितां सद्गतिम्।

* "अन्तर्वत्नीं तस्य पत्नीं
तदा यदुकुलोद्वहः,
राज्ये 'यशोवती' नाम
द्विजैः कृष्णोऽभ्यषेचयत्।"

कृष्णश्च सासूयान् स्वसचिवान्, इमं पौराणिकं श्लोकमुदीर्य, न्यवीवरत्—

कश्मीराः पार्वतीतत्र,
राजा ज्ञेयो हरांशजः,
नावज्ञेयः सदुष्टोऽपि
विदुषा भूतिमिच्छता।"
(१म तरंगः, ७२)

इत्यतः स्पष्टम्प्रतीयते यत्कश्मीरराज्यमति चिरन्तनम्। यशोवत्याश्च पुत्रो 'द्वितीयगोनर्द' इति ख्यातिमलभत, महाभारतरणाङ्गणे च योऽभवत् सुरपुरपथिकः। परतश्च न ज्ञायन्ते पञ्चत्रिंशन्महीपाला इति सखेदं लिखति कल्हणः—

"आम्नायभंगाभिर्नष्ट
नामकृत्यास्ततः परम्,
पञ्चत्रिंशन्महीपाला
मग्ना विस्मृतिसागरे † ।
(१म तरंगः, ८३)

* राजतरङ्गिणी। १म तरङ्गः, ७० श्लोकः।

† अत्र एम्. ए. स्टाइनमहाभागः A. पुस्तकधतटिप्पणमुल्लिखति—

तदेवं गोनर्दादारभ्य सहदेवपर्यन्तमनवच्छिन्नम्प्रायशः ३७०० वत्सराणि यावत्सुखमुत्पीडिता कश्मीरमही हिन्दूमहीपैः, परतः पञ्चशतवर्षाणि माहम्मदैर्दलितेयं तपस्विनी भूमिः । (सुखजीवनराज्ञा यद्यपि राजद्रोहं विधायाष्टौ वर्षाणि मध्ये शासितं कश्मीरमण्डलम्, परञ्च तद्गणनार्हम् ।) पृष्ठतश्च नाममात्रमांग्लशासनं भुक्त्वाऽद्य पुनरार्य्याणां कछवाहावंशीयक्षत्रियाणान्धर्मराज्य सुखमनुभवति प्रायस्सप्ततिवर्षेभ्यः * । भविष्यति च सुरक्षयतु विविधैरुपद्रवैर्घटितदुर्घटो विधिरेव दक्षिणः ।

"द्वापञ्चाशन्नृपमध्यादस्माकं पंचाशन्नृपा विस्मृताः, अन्येषान्तु द्वापञ्चाशन्नृपाः । यत्पूर्वमुक्तम्—'आगोनर्दात् स्मरन्तिस्म न द्वापञ्चाशतं नृपानिति । अथच—द्वापंचाशतो मध्यात् सप्तदशनृपा अस्माभिर्वर्णिताः । पंचत्रिंशन्नृपास्तु हस्तविषयं न प्राप्ताः । तत्रादिगोनर्दादयः, बालगोनर्दान्ताः चत्वारः पूर्वं वर्णिता । लवनृपादारभ्य शचीनरान्ता अष्टौ वर्णिताः । ततः- 'अथावहदशोकाख्य' इत्यादिनाऽशोकादारभ्य अभिमन्युपर्यन्तं पञ्चनृपा वर्णयिष्यन्ते । एवं सप्तदशनृपा ग्रन्थान्तरान्वीक्ष्य वर्णिताः, अवशिष्टाः पंचत्रिंशत् विस्मृताएव । एवं सर्वे द्वापंचाशन्नृपाः ।

* १८४६ खिस्तवत्सरस्य १६ मार्चदिने ब्रिटिशैरासादितं कश्मीरराज्यं स्वर्गीयेण महाराजश्रीगुलाबसिंहेन ।

साम्प्रतमस्याधुनिकावस्थाप्रदर्शनार्थं किञ्चिदिव प्रयतामः ।

ग्रीकदेशोया देशमिमं 'कशपीरिया इति वदन्ति, साहित्यभाषायाञ्च हरदत्तः लिखति 'कस्पटायरस' इति, हेकटाइस महाशयश्चोदाहरति 'कस्पैलिरस' 'कस्पैयिरस इति वा । सुप्रथितचीनयात्री हुएनत्सांगमहाभागः,—यः ६३१ खिस्ताब्दे कश्मीरमाश्रयत्—देशमिमं 'कियाशिमिलो इति वदति । त्रैविष्टपाश्च 'खचाल' इति, दारदा 'कशरत इति सञ्ज्ञेऽपयन्त्यऽस्य देशस्य । काश्मीरिकाः पुनः स्वभाषायां 'कशीर इत्येव ऋजुनाम व्याहरन्ति ।

कश्मीरमण्डलमिदमस्ति सुस्थितं पीरपञ्जालगिरोणामुत्तरेऽण्डाकाररूपताम्परिदधत् । परितश्चाभ्रंकषैर्नगाधिराजैर्वर्तुलीकृतमपूर्वां सुषमाम्परिदधाति । अस्य दैर्घ्यं प्रायः ८४ कोशमितम्, ३० कोशमितश्च विस्तारः, समग्रभूभागश्च ४,५०० वर्गकोशमितः ।

प्रायशः जम्मूकश्मोरराज्यस्यान्तराले केन्द्रे प्रतिष्ठापितोयं धात्रा कश्मोरदेशः ।

मुज़फ़्फ़राबादमण्डल साहित्यप्रदेशस्य जनसंख्या निम्नरीत्या वरीवर्ति—

| | | |
|---|---|---|
| माहम्मदाः | ... | १२,१७,७६८ |
| हिन्दवः | ... | ६२,४१३ |
| सिक्खमतावलम्बिनः | | १४,७७२ |
| बौद्धाः | ... | ३ |
| अन्यधर्मावलम्बिनः | | २४५ |
| | आहत्य | १२,९५,२०१ |

पुरुषाः ... ६,११,७८०
स्त्रियः ... ६,०३,४२१

वितस्ताया उभयपार्श्वयोः समतलभूमिः । 'डल' संज्ञका बहवोऽम्बुधिप्रतिमा जलाधाराः शोभन्तेऽरविन्दवृन्दविघटनप्रस्फुरितलावण्याः । राजहंसाः, वर्त्तिका अन्ये च मनोहराः पतत्रिणः सहस्रश उपलभ्यन्ते तेषु । प्रधानतया इमे वर्ण्यन्ते डल, वुलर, अञ्चार, मानसबल, तानसर, हाकुरसर, खुशालसर, पैम्बासर प्रभृतयः ।

तण्डुलमत्र प्रधानतयोप्यते । गोधूमाः, लाजाः, सर्षपाश्चापि बहुश उप्यन्ते, शाकाश्च सर्वविधा उपलभ्यन्त आंग्लाः फलमूलादयोऽपि सुखम्वीजितुम्फलितुञ्च पार्यन्तो अत्रत्याश्च प्रायश ओदनमेव भुञ्जते, तथा च पातञ्जलमहाभाष्यमपि कश्मीरे शालिभक्षणप्रथायाः परिपाटी प्रमाणयति, पश्यत, षष्ठान्हिकांते, न वेति विभाषा' इत्यस्य सूत्रस्य भाष्ये भगवानित्थमाह—"उभयत्र, प्राप्ते तावत् अभिजानासि देवदत्त, यत्कश्मीरेष्ववसाम यत् तत्रौदनं भोदयामहे, यत् 'तत्रौदनमभुञ्ज्महि' अप्राप्ते-अभिजानासि देवदत्त, कश्मोरान् गमिष्यामः, कश्मीरानगच्छाम. 'तत्रौदनं भोक्ष्यामहे, तत्रौदनमभुञ्ज्महि" इति ।

ये च केचनात्माभिमानिनः सगर्वं कश्मीरमाहात्म्यानभिज्ञः समुदाहरन्ति सपद्येव-"सुबह दर बाग़े निशातो शामदर-बाग़े नसीम शालामारो लालाजारो सैरे कश्मीरस्तोबस", नूनं न तेऽभिजानन्ति कणशोऽपि कश्मीरमहिमानम्—तस्य लोकोत्तरं वैचित्र्यम् । नेदं शिमला, मसूरी, आबू, प्रभृतिवत्केवलं शैलशिखरमेव, अपि तु प्रकृतिमात्रा सुमार्जितम्भगवतः कैलाशस्याङ्के स्थितमनिमञ्जुलं सुविस्तृतञ्च मण्डलम्—नास्ति यद्वृतेऽन्यत् पृथवीवलय इति निर्मायमुच्यते यत्कृते वैदेशिकैरपि सश्रद्धम् क्रमशो वयमस्य तमपूर्वत्वं, लोकोत्तरचमत्कारितां, निसर्गरामणीयकञ्चोपहरिष्यामः 'शारदा' वाचकानाम्पुरतः । अद्य पुनरेतावदेव ।

( असमाप्तः )

श्रीहरिहरस्वरूपशर्म्मा

---

## भौतिकसुखमीमांसा ।

श्रीमत्मोतामजनरेशरामसिंह के. सी. आई. ई. महाराजाश्रितेन, इन्दोरनगरवासिना विज्ञानभूषणश्रीकृष्णशास्त्रिणा लिखिता ।

भो भो प्रियमहाशया भारतीयाः सांप्रतं जगन्महनीयकालप्रभावाच्छ्रूयते प्रतिदिनं संवर्धमानो महान् कोलाहलो यद् भारतभूदेव्या अवननिरहर्निशं जायमानापि नावलोक्यते तत्पुत्रैः । न ते पुत्रा ये स्वजननीं जनरवेण दुःखितां पश्यन्तोऽपि न यतन्ते तस्य दुःखकारणमपनेतुम् यदि चेदेतत्सत्यं कथं नामपुत्रेष्वपि पुन्नामनरकत्राणकर्तृत्वलक्षणं पुत्रत्वं लक्षितं भवेत् । यदि वयं पुत्रत्वलक्षणोपेतास्तर्हि जननीशोक

व्याधिः कथं चिकित्स्यइतिविषयो विचारपदवीं न नीयते । अत्र श्रूयन्ते बहूनि मतानि, केषांचन महानुभावानामिदं कथनं यत् स्वधर्मत्यागेन, केषांचन एष निश्चयो यज्जातिभेदेन, केषाञ्चन एष तर्को यत् पारस्परिकविद्वेषेण, कतिपयानामयंप्रवादो यदगणितधर्मविभेदेन, केषांचिदिदमवधारणं यन्निगमागमप्रतिपादितवर्णाश्रमाचारविलोपेन, केषांचिदिदमूहनं यत् संस्कृतभाषाप्रचाराभावेन, केषाञ्चनायं राद्धान्तो यद् यज्ञयागाद्यनुष्ठानस्खलनेन, केषामिदमनुमानं यद् भारतीयजनप्रारब्धेन, केचिदिद समर्थयन्ति यद् नैतिकपारतंत्र्येणैव भारतभूप्रसविन्या इयं प्रतिक्षणमनुभूयमानाऽवनतिः परिणतेति । किन्तु राष्ट्रोत्कर्षापकर्षमूलसंशोधने दर्शितप्रकारेषु नैकोऽपि प्रकारउपयुज्यते राष्ट्रविचारतत्त्वनिष्णातैः । राष्ट्रविचारस्तु विभिन्नजनपददशावबोधकनानेतिहासपाठेन कर्तुं शक्यते न घटपटाद्याटोपयुक्तशास्त्रदाक्षिण्येन ।

विविधदेशानामैतिहासिकवृत्तं मतिपथं समानीतञ्चेदिदमेव विज्ञायते यद् येन राष्ट्रेण यत्परिमाणेन पदार्थविज्ञानसमृद्धिः कृता तत् परिमाणेनैव तस्य प्राबल्यं वृद्धिंगतमभूत् पश्यन्तु जपानदेशीयानां स्थितिं या पूर्वं साधरणैवासीत् सातु तद्देशीयानामवधानपूर्वकनानाविधकलाध्ययनेन, शरीरयात्रोपयोगिपदार्थसंशोधनेन, स्वदेशव्यापारसत्तासंरक्षणेन, विदेशीयवस्तुनिर्माणसामग्रीतोऽप्यधिकतरस्वदेशीयवस्तुनिर्माणसामग्रीसंपादनेन, स्वराजनीतिनैपुण्येन, समाजावघातकधार्मिकविभिन्नमतावरोधेन, जनसंघविभेदकानुचितभक्ष्याभक्ष्यतारतम्यप्रसारविघातेन, पारस्परिकविद्वेषबीजभूतानवधिकस्पर्शास्पर्शविचारनिर्मूलनेन, कुमारावस्थायामेव स्वदेशजनिमद्बालकाय शस्त्रशिक्षासमर्पणेन, स्तनंधयस्यान्दोलनसमये स्वदेशः स्वधर्मश्च प्राणादिसर्वस्वबलिदानेनापि संरक्षणीयो यदि भवेत् तदैव जननीदुग्धं सम्मानितं भवेत् तदैव पितृवीर्यं कृतकृत्यतां गच्छेत् नो चेद् धिग् जन्म दोलायामेव मृत्युर्वरीयान्—इत्याद्यर्थकसंगीतानां वीरप्रसविनीभिर्दोलायामेव बालकस्य कर्णपूटीकरणेन, स्वदेशजबालकमात्रेषु शिक्षाप्रचारेण, स्वदेशबांधवेष्वन्योन्यप्रीतिसंपादनेन, अहमहमिकया स्वदेशसंरक्षणाय प्राणार्पणेन जगल्ललामभूतैव भासते एतेषां दर्शितकारणानां मध्ये पदार्थतत्त्वज्ञानमेव राष्ट्रोन्नतौ प्रधानभावं भजते । तदेव राष्ट्रं सम्मुन्नतिशिखरमारोहति यत्र विज्ञानशास्त्रोपयोगः । तदेव धनिकताया मुन्नतरपदवीमवलंबते यत्र विज्ञानविलासः । तदेव सकलश्रेष्ठत्वं याति यत्र विज्ञानलीलाङ्गणम् । तदेव कल्याणभाजनं भवति यत्र च विज्ञानविचारस्यानर्गलप्रचारः पश्यन्तु माहात्म्यं भगवतो विज्ञानस्य यच्छारदाविख्यातपुत्रेण महानुभावेन महात्मना "हर्बर्टस्पेन्सरेण" स्वनिर्मित-

"एज्युकेशन" = "शिक्षा" पुस्तके गीतम्,

(१) अस्ति कश्चन सर्वोत्तमोपायो यो जीवधारिणां प्राणरक्षणैकसाधनीभूतस्वास्थ्यरक्षणे परमोपयोगितां भजते? "पदार्थविज्ञानशास्त्रम्।"

(२) किं तद्गौरवशालि विज्ञानं यदुपजीविकोपार्जनाय निखिलोपायेषु प्राथम्यं भजते? "पदार्थविज्ञानशास्त्रम्"

(३) का सा जीवनोपनिषद् यत्र स्वसन्तानपरिपालनायोपदेशश्रुतयो विलसन्ति? "पदार्थविज्ञानशास्त्रम्"

(४) अस्ति काचिद् व्यावहारिकी विद्या यया सामाजिककर्तव्यपरिपालनं पाठ्यते? "पदार्थविज्ञानशास्त्रम्"

(५) अस्ति किंचन भूमण्डलमण्डनायमानं साधनं येन येन विविधविलासभाजनकलाज्ञानमुच्चतरत्वं नीयते? "पदार्थविज्ञानशास्त्रम्"

अहो! धन्यमिदं विज्ञानशास्त्रं यज्जनजीवनैकभेषजभूतं गर्जति जगद्दारिद्र्यदूरीकरणाय। अतः सम्माननीयमिदं प्रकृतिविलासभूतं विज्ञानशास्त्रं भारतीयैः प्रतिदिनमेधमानाकिञ्चनत्वापसारणायेति प्रार्थये।

---

## अदृष्ट-पुरुषकारौ

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥

उन्नतेर्मूलं पुरुषकार एव। तमन्तरा केऽप्युन्नतिं नाप्नुवन्ति। जगति ये समुन्नतेषु प्रधाना येषु च साम्प्रतं ज्ञानमैश्वर्यं नैपुण्यञ्च दृश्यते, तेषाम्पुरातनैतिह्ये तस्यैवानुगीयते माहात्म्यम्।

यूरोपादयः पुराऽन्धे तमसि निमग्नाः कुसंस्कारैर्मानुषोचितगुणैरिक्तीकृताश्च तद्देशीया आसन्। यदैव प्रवेशं लेभे सदसि तेषां विवेकः तमांसीव भानोरुदयेऽज्ञानतमस्तिरोदधे, सोत्साहमाराधयामासुश्च तद्देशीयाः पुरुषकारम्। केचन ज्योतिर्विद्यायां दर्शनशास्त्रे शिल्पे साहित्ये रसायनशास्त्रे धर्मशास्त्रेऽर्थशास्त्रे लोकशास्त्रे च कृतश्रमाः स्वबुद्धिवैभवेन प्रावीण्यमाविश्चक्रुः। गच्छता कालेन अविवेकसाम्राज्यं निरस्य ज्ञानविजयवैजयन्ती तत्रत्यानानन्दयाञ्चकार। दूरीकृताऽविद्या विद्यया। निक्षिप्तञ्च सुदूरमालस्यमुद्यमेन। यत्र च पुरा दुर्गम्याणि विपिनानि तत्रेदानीं प्रशस्ता राजमार्गा अभ्रङ्कषाः प्रासादाश्च दृश्यन्ते। इतस्ततो विलासकाननानि विलेसुः। विलयङ्गता राष्ट्रविप्लवाः। मनस आनन्दकरो न्यायमार्ग उल्ललास।

ये तु कूपमण्डूकवत् जनिस्थानमुत्सृज्य देशान्तरङ्गन्तुमपारयन्तस्तेऽपि व्यवसायमुररीकृत्य महीमण्डलभ्रमिक्लेशं तृणाय मेनिरे। साधारणा ये पुनः प्राक् खाद्यपरिधेयेभ्यश्चापि स्पृहयामासुस्तेऽपि सम्पदामाश्रयीभूता जाताः। श्रूयते कश्चित् यूरोपीयः पुरा "कथमेत आढ्यतमा

भारतीया" इति तेषां सम्पदमालोक्य साश्चर्यमप्राक्षीत् किन्तु तस्य मानसेऽस्योत्तरं श्लोकरूपेण स्वयमुद्बभौ—

"उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्रदोषः ?"

अहो सहृदयवाचकाः, पुण्यबहुलेऽस्मिन् भारते आर्या येन मन्त्रबलेन पारावारमुन्मथ्य लक्ष्मीममृतञ्च लेभिरे तन्मन्त्रबलमिदानीङ्कुत्र विलीनम् । नियतं यूयं तदेव चिस्मृत्य साम्प्रतं लक्ष्म्याः कृपया वञ्चिताः स्थ । स्मर्तुमशक्यमधुना तद्बलं तावत् "उद्योगिनंपु०" इममेव महामन्त्रं पठत तदनुसारेण च प्रवर्तध्वम् । अवश्यं लक्ष्म्याः कृपां लप्स्यध्वे । अलसा एव अदृष्टं बहुमन्यन्ते दुःखञ्च लभन्ते । सोद्यमास्तु पुरुषकारेण यतन्ते सुखञ्च समधिगच्छन्ति ।

साम्प्रतं भारतीया बहुधाऽदृष्टवादिनः अदृष्टवादसिद्धान्तस्तथा प्ररूढमूले भारते यत् शतात्परेभ्यो वर्षेभ्यः पुरुषार्थिजनसङ्ख्याऽपि न श्लथीभवति, अपि तु प्रत्यहं दृढतामेवाप्नोति, अतो निरुद्यमानां संख्या अनुक्षणं बर्द्धन्ते । यदा तु भारतेऽदृष्टवादः प्रादुरभूत् तदा भारतीयानां कालः सुखेन यापनीय आसीत् । भोज्य-परिधेयेषु काऽपि चिन्ता नाऽऽसीत् । वस्तुविनिमये नापराणि लभ्यानि, तेन सर्वेऽपि स्वाभावान् पूरयामासुः । देशान्तर-लभ्ये वस्तुनि स्पृहा न चक्रिरे भारतीयाः तदानीं व्यवहारे मुद्राः कार्षापणाश्च दुर्लभा आसन् । किन्तु वराटिका एव मुद्रावदादृता मुद्राणामभावम्पूरयांबभूवुः । तत्कालीना "अर्थमनर्थमूलं" मत्वा धनसञ्चयं नादृतवन्तः, धान्यानि बाहुल्येन समुत्पद्यन्ते स्म तेभ्यः श्रममन्तरा परिचारवर्गः पोष्य आसीत् । ग्रामीणाश्च भूतिमद्भिः प्रतियोगितां नाचकाङ्क्षुः । प्रतियोगिताप्रकारस्तु वाणिज्यप्रायेषु नगरेष्वेवाऽदृश्यत । लब्ध्वैतदन्तरं चिराय स्थितिं संप्राप्य भारतीयानां हृदि सर्वान् निरुद्यमिनो व्यधत्ताऽदृष्टवादः ।

दृशा यन्न दृश्यते तददृष्टम् । भवितव्यताऽपि द्रष्टुमशक्याऽतो द्वेऽपि समानार्थके । यच्च परितो जनाः पठंति "क्षणादूर्ध्वं न जानामि किं विधाता विधास्यति' । इत्येवादृष्टस्य मूलम् । समागतां विपदमनिरस्य तदभिभूता "अदृष्टविलसितमेतत्" इति निश्चित्य कमप्युपायं नाङ्गीकुर्वतेऽनिशं तेनैव कृतार्थयन्त्यात्मनः । अशक्यं दूरीकर्तुमदृष्टं इति सदृढं विश्वसन्ति त एवाऽदृष्टवादिनो विपन्ना अपि शान्ततयाऽवतिष्ठंते । ये पुनस्सोद्यमा अदृष्टं तृणं मत्वा पुरुषकारमेवाऽवलम्बन्ते, ते समापन्नां दुर्घटनामवलोक्य साधनैर्विरहिता अपि व्याकुलत्वं नोपयान्ति, नच बिभ्यति, करचरणौ संकोच्य तूष्णीं नैव तिष्ठन्ति,

शीघ्रविलम्बनं वा पौरुषं, प्राधान्येन निश्चित्य तां दूरीकर्तुं यतन्ते। अकृत-कार्याः शान्तिं न लभन्ते हीनप्रयत्ना अपि कथञ्चित् कार्याणि साध्नुवन्त्येव। न तथाऽदृष्टवादिनः जना। अदृष्टपर्यायेषु "दैवं दिष्टं भाग्यं नियतिः भागधेयम्" आदिशब्दान् प्रयुञ्जते तानि उद्यमा-ध्यवसाययोर्विरुद्धानि। "यद्भाव्यं त-द्भविष्यति", "भालपट्टेलिखितमन्यथा कथम्", "निष्फल उद्यमः", "ईश्व-रेच्छा बलीयसी" आदि वाक्यानि प्रयुञ्जतेऽनिशमदृष्टवादिनः। वस्तुतस्तु दैवादीनि पुरुषकारान्तरायाणि। कति-पये युवानः कार्यमारभ्याऽकृतकृत्या झटि-त्येव कर्तव्यमुत्सृज्य दैवादीनि दूषयन्ति पुनः कदापि तदारब्धुं नोत्सहन्ते। ये तु "भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्" इति सततमधीयते तेषां मानसे समुन्नति-ज्वाला निर्वाण-प्राया। शिरस्येव हस्तन्दत्वा कालं यापयन्ति। विचार्यः खल्वयं विषयः। तेऽदृष्टमियत् किमर्थमाद्रियन्ते?

पाठकाः, यदि सम्यग् विवेक्तव्योऽ-स्य हेतुर्भवद्भिरचिरेण ज्ञातव्यः। अदृष्ट-वादरूपो विटपः आलस्याऽसामर्थ्याऽ-कर्मण्यतादिमूलो भवति। प्ररूढमूलः शाखी न शक्यत उद्धर्तुम् अतो मूलसि-द्धान्तमानिनोऽदृष्टवादिन आत्मनस्त्रुटिं संगोप्य परेषां चक्षूंषि धूलिभिरिवादृष्ट-वादवाक्यैस्तिमिरयंति "केन रोद्धव्याऽ-दृष्टगतिः" "यदिच्छति विधाता तदेव भवति" इति वदन्ति।

योग्या अपि कतिपयेऽनुन्नताश्चिरं कालं यापयन्ति पुनरपरे तानतिक्रम्य द्रुतमुन्नतिं लभन्ते। निर्णेतव्योऽस्य हेतुः।

कार्मणा अपि गुणोपयुक्तं मानमल-ब्ध्वा स्वकार्यवैफल्यं च दृष्ट्वा "अदृष्ट-विलसितमेतत्" इति सिद्धान्तयन्ति। न पुनर्विचारयन्ति। यदयमयोग्योऽपि कथंकथमपि लब्धशिक्षः प्रत्यहमुन्नतिं लभमान आस्ते। यद्यपि विरहितोऽपि सद्गुणैः परं चातुर्यादिकौशलान्याचरितुं नितान्तं पटिष्ठः। कानि च तानि कौश-लानि? "उत्थातव्यं जागृतव्यं बोद्धव्यं च स्वकर्मणः। भवितव्यं तथा यत्नैर्यथा-स्यान्न पराभवः" इति पद्योद्धृतान्येव कौशलानि सततमधीत्य समुन्नत्यै चेष्ट-मानो निरलसस्साध्नोति मनोरथान्।

पाठकाः, विचारयत वलिन उद्यमा-दयो गुणा अयोग्यतां निराकुर्वते। औदा-सीन्यादीन्यपि तथा गुणावलीमाच्छाद्य उन्नतेर्मूलं निकृन्तन्ति।

अतः पुरुषकारमन्तराऽदृष्टसिद्धि-रसुलभा शुभादृष्टवन्तोऽपि सत्कृतिभि-रेव दैवमनुकूलं निर्मिमते। सपुरुषकार-मुद्यमभृतां दिष्टं स्वयमेव शर्मदं भवति। निरुद्यमाः पुनर्भाग्यं कदर्थयन्ति।

उद्यमेन विना सुलभं साफल्यमिति निष्पन्नम् अत एवोक्तं नीतौ "उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः। न

हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।" इति

जगति यथा प्रकाशश्छाये वैपरीत्येन वर्तेते शुभाऽशुभेऽपि तथा । विचार्यमाणे नैतयोः पार्थक्यम् एवमदृष्टपुरुषकारौ । कालान्तरकृतानि कर्माण्येव भागधेयानि भवंति अतो नैतयोः पृथग्भावः । अदृष्टवादिनो दिष्टमेव शान्तेः कारणं मन्यन्ते न तथा पौरुषवन्तः ।

ये येऽदृष्टवादपक्षीयास्तेऽपि सोद्यमानामनुग्रहमाकाङ्क्षन्ते । दुःखदारिद्र्यादिभिः परिभूता अपि पुरुषकारपक्षं नावलम्बन्ते । एकत्रीभूय स्वभाविफलमनिशं गणयंति । अन्ये तु समाश्रित्य महोद्यमं लब्ध्वा ऋद्ध्यादीनि यशांसि वितन्वते । अत एव केनचित् (एडवर्ड-डैनिसन) पाश्चात्यविपश्चिता उक्तम् । "भाव्यंजानीयुरिति न अपितु तदर्थमुद्यमभूत एव गुणिनः" इति ।

श्रूयते हि पुरा प्यालिसीमहोदयः (मृण्मयभांडनिर्माणाविष्कारकः) षोडशाब्दं साहसं कुर्वाण एव मनोरथाँल्लेभे । * अतएवोच्यते—

"प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारभ्य चोत्तमजना न परित्यजन्ति ।

मनीषिणः कार्यनाशेऽपि दैवं न दूषयन्ति । स्वात्मनस्त्रुटिं दूरीकृत्य पुनरपि यतन्ते । परीक्षायामनुत्तीर्णाश्छात्रा यथाऽनुत्तीर्णत्वदुःखं विस्मृत्य त्रुटिं विविच्य पुनरपि समुद्यमं न त्यजन्ति लभन्ते च समुत्तीर्णतासुखम् । तथैवाऽलब्धमनोरथैस्सोद्यमैः सदा भवितव्यम् ।

आसीत् पुरा कश्चित् हरिश्चन्द्रनामा धनिकपुत्रः । ग्रामीणपाठालये कथमपि लब्धशिक्षः दशवर्षवयस्कः पितुर्वाणिज्यकार्ये मनो दधार पञ्चवर्षाणि वाणिज्यकौशलं विविच्य स्वातन्त्र्येण व्यापरं चक्रे । तस्य नैपुण्यमवलोक्य पितुर्मनः साह्लादमभूत् । गच्छता कालेन पितुः कार्यभारं स्वयमुदवहत् । व्यापारेणैव लक्षाधीशः सम्पन्नः, पाश्चात्यद्वीपपुञ्जादागच्छन्तस्तस्य प्रभूतद्रव्यान्विता नौः कदाचित् समुद्रे निमग्ना । नष्टानि महता कष्टेन लब्धानि धनानि । इतस्तस्य गृहे दुर्घटना आपतिता जननी जनकोभ्राता परिजनाश्च कालवशं गताः । ग्रामादिव्यवहारे जनैर्महान् विग्रहः समजनि । एवं नष्टा संपत् । पितुर्मातुश्च श्राद्धे पुत्रपुत्रीणां विवाहे च बहूनि धनानि व्ययीकृतानि एव स मलमल्लकशेषः संवृत्तः ।

एतादृश्यामवस्थायां बहवः पुनरामरणमुद्यमं नाङ्गीकुर्वते । किन्तु सोद्यमो निरलसो हरिश्चन्द्रो भूयोऽपि व्यवसायमवलम्ब्य लक्ष्म्याः कृपाधारतां यातः । प्रथमे कृतित्वं मध्यमेऽपव्ययनिमित्तं दारिद्र्यं वार्द्धके च समुद्यमाल्लक्ष्मीलाभश्च

* मृण्मयभांडनिर्माणकौशलानि ।

इत्येतानि तस्य कर्त्तव्यविलसितानि न त्वदृष्टफलानि ।

पाठकाः, भारतेऽदृष्टवादिनां संख्याऽनुदिनं वर्द्धते अतः सर्वे दरिद्रति । निबन्धपाठात् आलस्यं निरस्य भूयोऽपि पुरुषकारेण समुद्यमं स्वीकरिष्यथ नियतमेव महालक्ष्म्याः कृपापात्रतां यास्यथ । किम्बहुना पुरुषकारमन्तरा नास्त्युपायः समुन्नत्यै भारतीयानाम् । अतः "उत्तिष्ठत जाग्रत पुरुषकारमङ्गीकुरुत ।"

—काशीदत्त झा

---

## वैदिकविज्ञानमीमांसा ।

( पूर्वतोऽनुवृत्ता )

सांप्रतं सर्गारंभे प्रवृत्तेषु चतुर्षु वेदेषु लौकिकं विज्ञानमस्ति न वेति विचार्यते । तत्र येषां मते लोकोपकारकं लौकिकं विज्ञानं वेदेषु न विद्यते तेषां मते सर्गारंभे लौकिकव्यवहारबोधकं वेदातिरिक्तमन्यद्भवतु किमपि । परमस्माद्दृशास्तिकमते तु" समिधाग्निं दुवस्यत; अक्षैर्मादीव्यः; घृतैरतिथिं बोधयत; कृषिमित्कृषस्वेति" लौकिकसदुपदेशजातं सकलमपि भगवता वेदेनैव समुपदिश्यते ।

न केवलमेतावदेव गर्भाधानादारभ्यान्त्येष्टिं यावत्सर्वेऽपि संस्कारा वर्णधर्मा आश्रमधर्माश्च वेदेनैव व्यादिश्यन्ते; दृश्यते स्पष्टरूपेण ब्राह्मणक्षत्रियविशां वर्णानामाश्रमाणाञ्च ब्रह्मचर्यादीनां मन्त्रमुखेन वेदेषु वर्णनं यदग्रे यथावसरं यथावकाशञ्च मन्त्रविन्यासपूर्वकं विवेचयिष्यामः ।

किञ्च "तमेव विदित्वातिमृत्युमेती" त्यादिना कर्तव्यकर्मणामन्ते बन्धविमोचनप्रक्रियां "ये केचात्महनो जना" इत्यनेन कर्तव्यविमुखानां बन्धे नियमनं "पितरं च दृशेयं मातरञ्चेत्यादिना" पुनर्जननोपक्रमं "श्रद्धया सत्यमाप्यत" इत्यनेन श्रद्धाभिमुखीकरणं वेदपुरुषादन्यः को नाम व्यादिशेत् ।

किंबहुना वेदानुगामिनामस्माकं मते तु मनुष्यकल्याणकारि लोके यत्किमपि कर्मजातं तत्सर्वमपि जगदेकनाथेन जगदंतर्यामिना जगदीश्वरेण वेदमुखेनैवोपदिश्यते ।

एतदेवार्यधर्मप्रचारकस्य नैष्ठिकादित्यब्रह्मचारिणो दीनानाथोद्धारकस्य वेदमर्मप्रकाशकस्य नियमपूर्वकं वेदानधिगतवतो धृतजगदुपकारव्रतस्य धर्मलक्षणलक्षितस्य देवदेवस्य महर्षेर्दयनान्दस्य हृदयम् ।

अहमेव स्वयमिदं वदामि<br>
जुष्टन्देवानामुत मानुषाणाम् ।<br>
यं कामये तन्तमुग्रं कृणोमि<br>
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥

इति मन्त्रपर्यालोचनया स्पष्टमनुमीयते यत्परमात्मप्रेरित एव स ऋषिरस्माकमुद्धाराय समागतोऽभूत् । करुणावरुणालयं भगवंतमीश्वरमंतरा कस्तथाविधमधिगतमोक्षानन्दं मुक्तजनं बंधनमये लोके

पुनरुद्भावयेत् कश्च तमृषिमंतरा स्वयमासबन्धनः सकलं जगद्बन्धनात्मोचयेत् मरणमितो जगदमरं विदध्यान्नूरलदानामृतञ्च पाययेत्।

धृतब्रह्मचर्यः स हि भगवानागमकाले वेदादिसत्यशास्त्रजातमधिगत्य स्वाध्यायेन तत्पुष्टिं निनाय। यत्र तत्र सहैव प्रवचनद्वारा प्राक्तनसंस्कारपरिवर्द्धितं निजसमीपगतं विज्ञानं परिणति-परभागमनयत्। योगबलेन त्रिकालदर्शी लोकगतां व्यावहारिकीमपि दशां याथातथ्येन भ्रामंभ्रामं विविच्य पश्चाद्वेदविषये निजमतं प्रकटीचकार यदुपलभ्यते तत्कृतऋग्वेदादिभाष्यभूमिकायाम्।

अद्यत्वे तु न वयं वेदाननुगमिष्यामो वेदा एवास्माननुगच्छन्त्विति वादिनः; सर्वथा लौकिककामनाभिराविलीकृतान्तःकरणाः, कमपि कालं यथाकथंचिद्विद्यालयेषु समापयन्तः, परंपरयाप्यनधिगतवेदतत्त्वाः, सदर्पं "नास्ति वेदेषु लौकिकं विज्ञान" मिति यत्र तत्र स्वमतं प्रकाशयन्ति।

केचिदेभ्योप्यग्रे कृतपदाः समस्तमायुषो देशान्तर्गतवेषभाषाव्यवहृतिसमभ्यसने समापयन्तो "गच्छतिभवतिपठतीति" क्रियामात्रमेवाधिगत्य समस्तमपि सारस्वतन्त्रामास्माभिरेव गवेषितमिति मत्वा कविभिरपि दुर्विगाहेषु वैदिकेषु तत्त्वेषु हस्ताहस्तिकया स्वमतं व्याकुर्वंति।

केचिदेषामेव सहजन्मानः कतिपयैरेवाहोभिः "सप्तद्वीपा वसुमती त्रयोलोकाश्चत्वारो वेदा साङ्गाः सरहस्या बहुधा विभिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाथर्वणोवेदो वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावन्तं" शब्दस्य प्रयोगविषयमवगाह्य यस्यान्तमद्यावधि केनापि नोपलब्धं तस्य वेदस्य चरमचूडामेकपद एव परामृशंति।

केचिन्महात्मानः सर्वेषामपि गुरुत्वमात्मन्येव समारोपयन्तः समस्तमपि जगत्करतलामलकीवन्मन्यमाना द्वित्रैस्त्रिचतुरैर्वा दिवसैर्भूतविद्यां नक्षत्रविद्यां सर्पदेवयजनविद्यां शैलूषवन्नाटके नाटयन्तः कपटनाटकनटा इव जगदिदं वंचयन्तः परिभ्रमन्ति।

विलक्षणलक्षणाङ्का तेषामिमां विवृतिमालोक्य मत्स्मृतिपथमवातरत्येकाऽऽख्यायिका सा चेयम्,

महाकवेर्विल्हणस्य (?) प्राचीनतमासु कृतिषु विद्यते "लटकमेलक" नामैकं प्रहसनं तत्र प्रधाननायकपदमध्यारूढोदुर्विनीताना (लटकाना) मेकतमः श्रीमानलाबुस्तनीपतिः कविना व्याजस्तुतिमुखेन स्तूयते स्म।

तद्गुणपारद्रश्वा कश्चिदेकस्तदुपहासकृते विद्यमानेष्वन्येषु नाटकपात्रेषु "किमधीतमनेनेति" सकटाक्षं कर्णाकर्णि कविमेव परिपृच्छति। ज्ञातमनेनास्य रहस्य-

मिति मुदितमनाः कविः ( प्रकाशं ) कोपमाविष्कुर्वाणः प्रश्नकर्तारं सचकितमुद्दिश्य "किमेषामनध्ययनविदुषां बुद्धिविरहेऽप्यति बुद्धिमतां धनाभावेऽप्यतिधनवतामधर्मवतामपि धर्मवतां महाशास्त्रिणां विषये सन्दिह्यते" श्रूयताम्,

गुरोर्गिरः पञ्च दिनान्यधीत्य
वेदान्तशास्त्राणि दिनत्रयेण।
अमी समाघ्राय वितर्कवादा-
न्समागताः फुंकटमिश्रपादाः॥

इति तत्प्रश्नोत्तरभूतं पद्यं पठति। पद्यपाठोत्तरं निन्दागर्भां प्रशस्तिमाकर्ण्य सर्वे देवानांप्रियाः परितस्तमनुगृह्णन्ति कश्चित्पादयोर्लुठति, कश्चित्तमालिंगते, कश्चिद्वन्दते, कश्चिदुपस्तौति, मुदितमनाः फुंकटमिश्रोपि क्षणं कंचिदमात्यपदेऽधिरोपयति कंचिद्धर्माधिकारे कंचिद्दंडनेतृत्वे कंचिद्दूतकर्मणि सर्वानेवमनुगृह्णाति।

मुहूर्तानन्तरं सर्वज्ञोयमिति मत्वा कश्चिदस्य पुरतः समागत्य "भगवन्ननध्ययनपण्डित! विगताक्षरभट्टाचार्य! विद्यावारिधे!

श्लीपदेन च मे पीडा गलगंडोपि बाधते।
गृहिणी ग्रहणीग्रस्ता ज्वरितं बालकद्वयम्॥
तदाशु क्रियतां प्रसादः दीयतां जीवनदानं गृह्यतामलभ्यं यशः साध्यतां परोपकारः" इति सकरुणं विलपति। विलपंतन्तमालोक्य "समागतोऽयं मद्विद्यापरिचयलमय" इति मत्वा सहर्षं फुंकटमिश्रोपि "भो भक्तचूडामणे विगतनेत्रशिरोऽवतंस! निर्दिष्टमेतदस्माकमायुर्वेदाचार्यैः,

यस्य कस्य तरोर्मूलं येन केनापि पेषयेत्।
यस्मै कस्मै प्रदातव्यं यद्वातद्वा भविष्यतीति

तत्त्वयाप्येवमेव विधेयमिति" तमादिशति। सोप्यन्धविश्वासी विगतनेत्रः पण्डितपशोरेतन्मतमाकर्ण्य पुरतोऽवस्थितेष्वनेकेषु द्रुमेषु समीपस्थितमर्कद्रुमं समूलमुत्पाटयांचक्रे। सपत्रं सवल्कलं सपुष्पञ्च तं पिष्ट्वा बालकौ गृहिणीं चापाययत्। स्वयमपि श्लीपदगलगंडयोरुपशमाय तदेवावशिष्टमर्कद्रुमचूर्णमलेपयत्। मुहूर्तादूर्ध्वं बालकौ गृहिणीं च मृतामालोक्य स्वयमपि स्फुटिकाविस्फोटनफूत्कृतिफुर्फुरायमाणवदनः फुंकटमिश्रमुपगम्य भगवन्दयानिधे!

भवदौषधदानेन स्वर्गतौ मे दारकौ दयितापि पञ्चत्वमुपगता ममापि गलगंडस्फुटिताःविस्फुटित।किमधुना विधेयमहमपि नातिचिरादेव भवत्कृपया स्वर्गतौ सुतौ मृतां दयितां चानुगमिष्य इति विलप्य नयनजलधाराभिर्भूतलमभिषिंचति तथा विध्वंतमवलोक्य फुङ्कटमिश्रोपि तदाश्वासनपूर्वकं "वत्स! किमत्र शोचनीयं,

जातस्य हि ध्रुवोमृत्युर्ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येर्थे न त्वं शोचितुमर्हसीति॥"

पठति। जवनिकाप्यवतरति। जवनिकापातोत्तरं सर्वमेतदालोक्य विस्मितमना लटकमेलकप्रहसनप्रणेता महाकविर्विलक्षणोपि—

अपि वेत्ति षडक्षराणि चे-
दुपदेष्टुं शितिकंठमिच्छति।
वसनाशनमात्रमस्ति चे-
द्धनदादप्यतिरिच्यते खलः॥

इति स्वगतं पठति। भावाभिरामेयमाख्यायिकाऽत्रैव समाप्तिमेति।

समितौ समवेताः सहृदयहृदयाः! न केवलमेषा किंवदंतो मयाऽत्रकेवल समययापनायोपन्यस्ता प्रत्युत सदुपदेशग्रहणाय। विद्यतेऽस्यामद्रो निगूढतत्त्वं यद्यत्वे लटकमेलकमेव सर्वैः सर्वत्र नाट्यते। सर्वथानाघ्रातवेदग्रंथाः केवलं दर्शनमात्रेणैव दर्शनानि कृतार्थयन्तः श्रवणेनैव श्रुतिसारमधिगताः स्वीयामभिख्यां सर्वैरुपायैरभिख्यापयन्तः स्वानुकूलमार्गेण गच्छन्तः सन्तः स्वमतं व्याकुर्वंति।

ताननुगच्छन्तोऽन्ये कष्टान्यनुभवन्ति तथापि ते तांस्तथैवानुशासंति, प्रत्यक्षमेषान्धपरंपरा लोके दरीदृश्यते मातरि स्वर्गतायां पालनभिया पितृभिर्बालका गुरुकुले निवेद्यंते; जायायां मृतायां मनुजैर्वानप्रस्थाश्रमो नाट्यते, भोजनसौकर्याय तुरीयाश्रमो नाट्यते तुरीयाश्रमगतैरपि निर्लज्जं पुनर्दारोपगमनं नाट्यते, ब्राह्मणेतरैर्ब्राह्मणत्वं नाट्यते, यवनैः शुद्धिमिषेण यथेच्छं द्विजत्वं नाट्यते, शुद्धिमितैश्च धर्मोपदेशकरणं नाट्यते, धर्मपारवश्येनाश्रमधर्मा पाल्यंते, न च वर्णधर्माः, धर्मरक्षायै गावो न पाल्यन्ते, किंबहुना सर्वैर्जनैः सर्वत्र सर्वदा सर्वैरुपायैर्लटकमेलकप्रहसनमेव याथातथ्येन सर्वांशे नाट्यते। अत एव—

पुरा विद्वत्ताऽऽसी-
दुपशमवतां क्लेशहतये
गता कालेनासौ विषय-
सुखसिद्ध्यै विषयिणाम्॥
इदानीमालोक्य क्षिति-
धनभुजः शास्त्रविमुखा
नहो कष्टं सापि प्रतिदिन-
मधोऽधः प्रविशतीति॥

महाराजस्य भर्तृहरेः कथनं सर्वांशे संगच्छते। सांप्रत पुरस्तात्प्रतिज्ञातविषयपूर्तिकृते "वेदेषु लौकिकं विज्ञानमस्ति नवेति संशयोच्छेदाय च" केवलं लौकिकविज्ञाननिर्बाधकाः कतिचन मंत्राः सर्वविद्याकरण्डाद्भगवतो वेदादुद्धृत्यात्र निवेश्यन्ते। तत्र—

जायस्वन्तश्चित्तिनो मा वियौष्ट
संराधयन्तः सधुराश्चरन्तः।
अन्योन्यस्मै वल्गु वदन्त एत
सध्रीचीनान्वः संमनसस्कृणोमि३।३०।५
समानो मंत्रः समितिः समानी
समानं मनः सह चित्तमेषाम्।
समानेन वो हविषा जुहोमि
समानं चेतो अभिसंविशध्वम् ६।६४।२

मंत्रयोरनयोर्मध्ये लोकमुद्दिश्य भगवता वेदेन "सपत्नीकाः प्रसन्नमनसः कार्यसाधनतत्पराः परस्परं मधुरं वदंतः सर्वे भवंतु भवतां मध्ये विमनाः कश्चिन्मा भवतु भवत्स्वेको भवतां विचारः सभापि सर्वे-

षामेकैव भवतु भवत्वेकीभूतं मनश्चित्तं पानमशनमिति" स्पष्टरूपेण निर्दिश्यते सामान्यतया मनुष्यजातिमुद्दिश्यैतत्कथनम्। वर्णधर्मणामन्यत्र पृथगुपदेशात्।

नास्य धेनुः कल्याणी
नानड्वान्वहते धुरम्॥
विज्ञानिर्यत्र ब्राह्मणो
रात्रिं वसति पापया ॥ ५।१७।१८
ये ब्राह्मणं प्रत्यष्ठीव-
न्येवास्मिंच्छुल्कमीषिरे॥
अस्नॅस्ते मध्ये कुल्यायाः
केशान् वादन्त आसते ५ । १६ । ३
उग्रो राजा मन्यमानो
ब्राह्मणं यज्जिघत्सति ॥
परातत्सिच्यते राष्ट्रं
ब्राह्मणो यत्र जीयते ॥ ५ । १६ । ६

मंत्रेष्वेतेषु ब्राह्मणानां वर्णनं महत्वञ्चोपलभ्यते। यस्य राज्ञो राज्ये विगतजायो ब्राह्मणो रात्रिषु वसति तस्य राज्ये कल्याणो गौरप्यकल्याणी धूर्वहोवृषोप्यधूर्वह इवाचरति। ब्राह्मणमुद्दिश्य यष्ठीवति यश्चास्माच्छुल्कमादत्ते सोऽस्नः कुल्ययामध्ये केशादी सन्कष्टमनुभवति। यो राजा चण्डः सन्ब्राह्मणं हंतुमिच्छति वा यत्र राज्ये ब्राह्मणो जयीते स राजा तद्राज्यञ्च क्षिप्रमेव नश्यतीति संक्षिप्तो मंत्राणामाशयः॥ रोचकवाक्यानां वेदेष्वभावान्नैषा स्तुतिः फलितार्थबोधिकेति प्रत्येतव्यम्। सत्यमेतद्ब्राह्मणानां महत्वमुपवर्ण्यते भगवता देवदेवेन वेदेन। ब्राह्मणपदेनात्र तेषामेव ग्रहणं येषामध्यापनादि षट्कर्म जातं मनुनोपवर्णितम्। एषामेव जगतः स्थितिहेतुभूतत्वमद्यापि प्रत्यक्षी क्रियते निबन्धविस्तरभयात्प्रकृतानुपरोधाच्चात्र न विशेषतो व्याक्रियते।

इममिन्द्र वर्धय क्षत्रियं मे
इमं वृषामेकवृषं कृणुत्वम्।
निरमित्रानक्ष्णुह्यस्य सर्वां
स्तान् रन्धयास्मा अहमुत्तरेषु ४।२२।१
अयमस्तु धनपतिर्धनाना-
मयं विशांविश्पतिरस्तु राजा॥
अस्मिन्निन्द्र महि वर्चांसि धे-
ह्यवर्चसं कृणु हि शत्रुमस्य ४।२२।३
अस्मै द्यावापृथिवी भूरिवामं
दुहाथां धर्म दुघे इव धेनू॥
अयं राजा प्रिय इन्द्रस्य भूयात्
प्रियो गवामोषधीनां पशूनाम् ४।२२।४

मंत्रैरेतैः क्षत्रियाणां महत्वमुपवर्ण्यते। वैदिकधर्मवतामार्याणां राजभक्तिरपि कीदृशीति समुपलभ्यते। प्रजाकृतं राजोपचरणं राजकृतं प्रजोपचरणं च कीदृग्विधमित्यपि स्पष्टतयोपलभ्यते। शेषमन्यत्सुगमम्।

इन्द्रमहं वणिजं चोदयामि
स न एतु पुर एतानो अस्तु।
नुदन्नरातिं परिपंथिनं मृग स
ईशानो धनदो अस्तु मह्यम् ३।५।१
ये पंथानो बहवो देवयाना
अंतरा द्यावापृथिवी संचरंति।

ते मा जुषंतां पयसा घृतेन
यथा क्रीत्वा धनमाहरामि ॥ ३।१५।२
येन धनेन प्रपणं चरामि
धनेन देवा धनमिच्छमानः।
तस्मिन्म इन्द्रो रुचिमादधातु
प्रजापतिः सविता सोमो अग्निः३।१५।६

मंत्रैरेतैर्लक्षणया वैश्यकर्म व्यादिश्यते। व्यवहारवृद्धये वैश्यकर्तृकमीश्वरस्तवनं विलक्षणतयोपलभ्यते। द्यावापृथिव्योरन्तराले विद्यमानैर्देवयानैः करणैः पयसा घृतेन च व्यवहरणं, धनेन कुसीदादिना (प्रपणेन) धनोपार्जनं, स्वव्यापारे निरन्तरमाभिरुच्यं च वाच्यार्थेन द्योत्यते।

निदर्शितमेतावता वर्णवर्णनपरकं मंत्रजातमन्यदप्येतादृशं वेदेभ्यः समुपगन्तव्यम्। सांप्रतं यैरिच्छाद्वेषप्रयत्नसुखदुःखज्ञानैरात्मा लक्ष्यते तान्यतः परं लिंगानि मंत्रविन्यासपूर्वकं निदर्शयामस्तत्र—

शं मे परस्मै गात्राय
शमस्त्ववराय मे।
शं मे चतुर्भ्यो अंगेभ्यः
शमस्तु तन्वे मम १।१२।४

स्वस्ति मात्र उत पित्रे नो अस्तु
स्वस्ति गोभ्यो जगते पुरुषेभ्यः।
विश्वं सुभूतं सुविदत्रं नो अस्तु
ज्योगेव दृशेम सूर्यम् १।३१।४
अन्नस्य भूमा पुरुषस्य भूमा
भूमा पशूनां त इह श्रयंताम् ५।२८।३

मंत्रैरेतैराद्यमिच्छात्मकमात्मनोलिंगं व्यादिश्यते। प्रत्यङ्गं सुखाशंसनं मातापितृभ्रातृणां कल्याणाशंसनं पशुजनपुरुषवाहुल्याशंसनं च प्रत्यक्षमिच्छाव्यंजकम्।

पाशे सबद्धो दुरिते नियुज्यतां
योऽस्माकं मन इदं हिनस्ति
वृश्चामितं कुलिशेनेव वृक्षं
योऽस्माकं मन १०।२।१२।२।३
अग्ने यत्ते तपस्तेन त प्रति
तप योस्मान्द्वेष्टि० २।१६।१
सुमित्रिया न आप ओषधयः संतु
दुर्मित्रियास्तस्मै सन्तु०

मंत्रैरेतैर्द्वितीयं द्वेषात्मकमात्मनो लिंगं व्यज्यते। प्रयत्नसुखदुःखज्ञानान्यप्येवं वेदमंत्रेभ्योऽवगंतव्यानि लिंगानि निबधविस्तरभिया नात्र निर्दिश्यंते। सांप्रतमाश्रमान्व्याख्यास्यामस्तेषु—

आचार्य उपनयमानो
ब्रह्मचारिणं कृणुते गर्भमन्तः।
तं रात्रीस्तिस्त्र उदरे बिभर्ति
तं जातं द्रष्टुमभिसंयंति देवाः११।५।३
ब्रह्मचारी समिधा मेखलया
श्रमेण लोकांस्तपसा पिपर्ति ११।५।४
ब्रह्मचार्येति समिधा समिद्धः
कार्ष्णं वसानो दीक्षितो दीर्घश्मश्रुः ११।५।६

मंत्रेष्वेतेषु ब्रह्मचर्यमहिमा तत्स्वरूपं तत्कर्तव्यं च स्पष्टरूपेण निर्दिश्यते। आचार्यकुले आचार्यकृतं ब्रह्मचारिणामुपनयनं ब्रह्मचारिणां कृते मेखलाजिनयोर्नियमनं परिश्रमपूर्वकं तपश्चरणं समिदाधानं च प्रत्यक्षतया समुपलभ्यते। दीर्घश्मश्रुरित्यनेन क्षुरकृत्यवर्जनं कार्ष्णं वसानइत्य-

तेन कृष्णमृगाजिनधारणञ्च लक्ष्यते। शेषं सुगमम्।

आत्मन्वत्युर्वरा नारीयमागा-
स्तस्यां नरोवपत बीजमस्याम्।
सा वः प्रजां जनयद्वक्षणाभ्यो
बिभ्रती दुग्धमृषभस्य रेतः १४।२।१४
गृभ्णामि ते सौभगत्वाय हस्तं
मयापत्या जरदष्टिर्यथाऽऽसः १४।१।५०
आरोहोरुमुपधत्स्वहस्तं परिष्व-
जस्व जायां सुमनस्य मानः १४।२।३६
आरोह तल्प सुमनस्य माना
इह प्रजां जनय पत्ये अस्मै १४।२।३१

मंत्रेष्वेतेषु पूर्णतया विस्पष्टरूपेण च गृहस्थाश्रमप्रकरणं वर्तते यद्विवरणं ब्रह्मचारिणां पुरस्तान्न कर्तव्यमिति परित्यज्यते।

आनयैतमारभस्व सुकृतां
लोकमभिगच्छतु प्रजानन्।
तीर्त्वा तमांसि बहुधा महांति
अजो नाकमाक्रमतां तृतीयम् ९।५।१

मंत्रेस्मिन्वानप्रस्थाश्रमवर्णन लक्षणया लक्ष्यते। अज इति पदेन देहाध्यासविशिष्टस्य जीवात्मनोग्रहणम्। तृतीयं नाकमिति पदेन तृतीयाश्रमनिर्देशः। न विद्यते अकं पापमस्मिन्निति नाकपदस्य "यास्कीयं" निर्वचनम्।

परीत्य भूतानि परीत्य लोका
परीत्य सर्वाः प्रदिशो दिशश्च।
उपस्थाय प्रथमजामृतस्या-
त्मनाऽऽत्मानमभिसंविवेश ३२।११

येनासहस्रं वहसि येनाग्ने सर्ववेदसम्।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ९।५।१७

मंत्रयोरनयोर्मध्ये संन्यासाश्रमकर्तव्यं व्यादिश्यते। आत्मनात्मानमभिसंविवेशेति ध्यानयोगनिर्देशः। शेषं सुगमम्।

यदन्नमद्मि बहुधा विरूपं
हिरण्यमश्वमुत गामजामविम्॥
यदेव किंच प्रतिजग्रहाह-
मग्निष्टद्धोता सुहुतं कृणोतु ६।७१।१
यन्माहुतमहुतमाजगाम
दत्तं पितृभिरनुमत मनुष्यैः।
यस्मान्मे मन उदिवरारजीत्य-
ग्निष्टद्धोता सुहुतं कृणोतु ६।७१।२
यदन्नमद्म्यनृतेन देवा
दास्यन्नदास्यन्नुत संगृणामि॥
वैश्वानरस्य महतो महिम्ना
शिवं मह्यं मधुमदस्त्वन्नम् ६।७१।३

मन्त्रेष्वेतेषु यदन्नंप्रतिदिनमद्यते तदेवोपवर्णितमस्ति। विरूपमित्यनेन तदेव विविधं विशिष्टरूपं गृह्यते। तत्र विविधं गोधूमचणकादिविशिष्टं मद्गुमोदकादि। उपभोगाद्धिरण्यगोजाविकमप्यन्तपदेन जरीगृह्यते तद्विविधं हुतमहुतञ्च तत्र पितृभिरनुमतं हुतं मनुष्यैरनुमतमहुतम्। तत्रैकं मिथ्याभाषणादिना प्राप्यम् अन्यत्सत्यभाषणेन च। तदन्नं दत्तमदत्तञ्च तत्रान्यैरर्पितम् दत्तम्। बलात्कारेण गृहीतमदत्तम्। समस्तमपि तदन्नं वैश्वानरस्याग्नेः पाचनादिना महिम्ना महत्तममपि शिवं

मधुमत्यास्त्विति प्रत्यक्ष मनुष्यकृतमाशंसनम् ।

यां देव्यः प्रतिनंदंति
रात्रिं धेनुमुपायतीम् ।
संवत्सरस्य या पत्नी
सा नो अस्तु सुमंगली ३ । १० । २
त्वयि रात्रि वसामसि
स्वपिष्यामसि जागृहि ।
गोभ्यो नः शर्म यच्छा
श्वेभ्यः पुरुषेभ्यः १६ । ४७ । ६
रात्रि मातरुषसे नः परिधेहि ।
उषा नो अन्हे परिददात्व-
हस्तुभ्यं विभावरि १६ । ४८ । २
रात्रिं रात्रिमरिष्यन्त-
स्तरेम तन्वा वयम् ।
गंभीरमप्लवा इव न
तरेयुररातयः १६ । २० । ३
यथा श्यामाकः प्रपतन्न-
पदं नानुविद्यते ॥
एवा रात्रि प्रपातय यो
अस्मां अभ्यघायति १६ । ५० । ४

मंत्रैरेतैः प्रत्यक्षं रात्रेः स्वागतमुपवर्ण्यते। देवकृतं रात्रेरभिनंदनं विलक्षणतयात्र समुपलभ्यते । रात्रेः संवत्सरपत्नीत्वेन वर्णनं रूपकम् । धेनुत्वेन वर्णनञ्च लभ्यते वस्तूत्प्रेक्षालिंगम् । सेयं रात्रिरस्मानुषसे ददात्विति प्रत्यक्षं लोकवृत्तम् । यां यां रात्रिं वयं तन्वातरेम तामस्माकं शत्रवो गंभीरमप्लवा इव न तरंत्विति तत्प्रार्थनम्। यथा श्यामाकः श्यामाकं नैति तथा चौरः प्रपतन्नस्मानपि मा प्राप्नोत्विति रक्षाहेतुगर्भं । शेषं सुगमम् ।

—श्रीमदखिलानन्द शर्मा कविरत्नः ।

---

## काशीस्याद्वाद ( दिगम्बर ) जैन-महाविद्यालयस्य दशमवार्षिक-महोत्सवेऽध्यक्षस्य भाषणम् ।

विद्वद्वराः सभ्यमहाशयाः !

विदितमेव भवतां किमत्र समुपागताः स्मः । जैनमतावलम्बिनामत्रत्यस्य स्याद्वादमहाविद्यालयस्याद्य दशमवार्षिकोत्सवस्तत्सम्बद्धं छात्रेभ्यः पारितोषिकवितरणं जिनशास्त्रे कृतपरिश्रमाणां तन्मतानुयायिनां च जैनमतप्रतिपादकानि व्याख्यानान्यस्मिन् दिनद्वयेऽत्र भविष्यन्तीत्यपि भवत्कर्णपथमागतमेव भवितव्यम् । अस्मिन्संवत्सरे छात्रैः किं कृतमध्यापकैः किं सम्पादितं मन्त्रिप्रभृतिभिः कार्यदर्ष्टृभिश्च किमनुष्ठितमित्येतत्सर्वं स्पष्टीकृतमेवाचिरानुवाचितया वार्षिकसमालोचनया । सर्वथा प्रशंसामर्हन्त्यर्हन्मतावलम्बिन एते जैनमहाशयाः । आशास्महे चोत्तरोत्तरं सविशेषं समुत्कर्षमस्य विद्यापीठस्य ।

कीदृशः खल्वयं जिनधर्मः । के नाम तीर्थंकराः । किंचरितौ पार्श्वमहावीरौ । अविभक्तः सुविभक्तो वा जैनसंघः । यद्यपरः कदा बभूव स संघभङ्गः कुतश्चकारणात् । अस्ति किञ्चिदैतिहासिकं प्रमाण-

मेतन्मतस्य प्राचीनत्वद्योतकमुतैतिह्यमा त्रावलम्बी जिनमताडम्बरः । के नामैतेषां धर्मग्रन्थाः । कीदृशानि जैनदर्शनानि । कति वर्णा जैनानाम् । कति चाश्रमाः । किंस्वरूपास्तेषामाचाराः के वै यमनियमाः । अपि साम्यं जैनबौद्धमतयोरुत वैषम्यम् । कश्च तयोः परस्परसम्बन्धइत्येतेऽन्ये चैतादृशाः प्रश्नाः प्रादुर्भवन्त्यस्मन्मनसि विशेषतश्च यदा समुपगच्छामो वयमेतादृशे जनसमाजे । एतान्सर्वान् विषयानधिकृत्यापरिचितांग्लभाषाणां संस्कृतज्ञानां विशेषतः छात्राणां कृते संक्षेपतः प्राचीनग्रन्थकृदभिमतां सुगमपदशालिनीं नैकविधापूर्वविषयविवेचनकुशलां नवीनां लेखपद्धतिमनुसृत्य ब्रवीमि यदहं पश्चाद्यथासमयमांग्लभाषया सविस्तरं प्रवक्तुकामः ।

पुरा किल सुविश्रुतनामधेयः कश्चिदृषभदेवाख्यो महर्षिः प्रादुर्बभूवास्मिन्भारतवर्षे । मिथ्यात्वादिमोहगुणप्रबद्धपुद्गलपङ्कनिमग्नातिकृपणदशापन्नजीवानवलोक्य दयापरवशः सुकोमलान्तःकरणः स आदिमस्तीर्थंकरः सम्यग्दर्शनज्ञानचरित्रात्मकं मोक्षशास्त्रं निर्माय जिनदर्शनमस्मिन् कल्पे प्रकटीचकारेति वदन्ति सम्प्रदायविदः । तदनु चाजितनाथादयो महावीरान्तास्त्रयोविंशतिस्तीर्थंकराः स्वस्वकालेषु निजज्ञानकिरणैरज्ञजीवानां मोहतिमिरं दूरीचक्रुरिति चोपलभ्यते जैनग्रन्थेषु । अस्यामेव वाराणस्यां सप्तमस्तीर्थंकरः सुपार्श्वनाथस्तथा पार्श्वनाथस्त्रयोविंशतितम एवमितो नातिदूरिवर्तिनि चन्द्रपुरग्रामेऽष्टमश्चन्द्रप्रभुरेकादशः श्रेयान्सनाथश्च सारनाथक्षेत्रे बभूवुरिति श्रूयते । एतेषु तीर्थंकरेषु सुप्रसिद्धतमावन्तिमौ पार्श्वनाथमहावीरौ यन्मन्दिराणि दृश्यन्ते बहुषु क्षेत्रविशेषेषु । तत्र बुद्धापरनामकशाक्यमुनिगौतमसमकालीनतया सुप्रथितयशस्तया च श्रीवर्धमानमहावीरस्य तस्मिन्नेव जैनमतनिर्मातृत्वमभिरोपयन्ति केचित्सम्यगनधीतजिनग्रन्था आधुनिकाः । तत्र पूर्वतीर्थंकरप्रचारितमेव जिनमतं पुनः प्रतिपादयामास स महावीरपुरुषो महावीरो नतु स्वबुद्धिपरिकल्पितमपूर्वं मतमिति वस्तुस्थितिः शक्या च प्रमाणीकर्तुमैतिहासिकैरन्यैश्च प्रमाणैः । प्राचीनतमेषु बौद्धग्रन्थेषु नातपुत्तेति सुप्रसिद्धेनैव स्वनाम्नाऽयं यतीन्द्रो महावीरो बहुवारं वर्णितो नतु नवीनमतप्रचारकइति । अयं महात्मा खृस्तशकात्पूर्वं षष्ठशताब्दिकइति प्रमाणयन्ति । आधुनिकास्तावद्विद्वांसस्तं खृस्तशकात्प्राक् पंचशताब्दिकं मन्यन्त इत्यास्त किञ्चिदत्र वैमत्यम् । इदं तावत्सर्वैर्बौद्धग्रन्थेषु कृतपरिश्रमैर्विद्वद्भिर्निर्विवादमंगीक्रियते यज्जिनमप्रतिपादकः श्रीमहावीरः शाक्यमुनेर्गौतमात्प्राचीन इति ।

पुरा किल मौर्यनृपतौ चन्द्रगुप्ते महीं शासति भद्रबाहुस्वामी कश्चिज्जैनाचार्यः स्वतपोबलादागामिद्वादशवर्षदुर्भिक्षसमयमवबु-

ध्य स्वमुनिसमन्वितः शिष्यभूतेन चन्द्रगुप्तेनानुगम्यमानो दक्षिणापथमगमदिति श्रूयते। ततः प्रभृत्ययं जैनजनसमवायो दिगम्बरश्वेताम्बररूपेण द्विधा बभूव, भद्रशेषबाहुवनुयायिनो दिगम्बरा उत्तरपथ वर्तिनश्च श्वेताम्बरा इति च।

बौद्धानां तथा जैनानां प्राचीनग्रन्थेभ्यः शाक्यमुनिवर्धमानौ बिम्बिसाराजातशत्रवादीनां समकालीनौ वर्धमानश्च कुन्दग्रामाधिपस्य सिद्धार्थस्य त्रिशलायाश्च पुत्र इत्यवगम्यते। अजातशत्रोः शाक्यमुनेश्च संलापः सुप्रसिद्ध एव। अजातशत्रोर्मातामहस्य स्वसा वर्धमानस्य माता त्रिशला। अतोऽतिनिकटसम्बन्धादजातशत्रोः पूर्वजैनत्वंसम्भाव्यते। शाक्यमुनिसंवादानन्तरं बौद्धधर्मदीक्षा च तस्य स्वमातामहं वैशालीनृपमाक्रम्य तद्राज्यग्रहणेन वर्धितवर्धमानमन्युतयाऽऽवश्यकेत्यपि विशदम्। भारतवर्षप्राचीनेतिहासे न केवलमयमेवाद्वितीयो जैननामनिर्देशः। अस्त्यन्यो प्राचीनःशिलालेखो मौर्यनृपतिचन्द्रगुप्तऽपि जैनाचार्यभद्रबाहुविषयकः। निर्दिष्ट पूर्वजिनसंघदक्षिणापथप्रस्थानसम्बद्धो ऽयं लेखः कर्णाटकदेशे श्रवणबेलगोलनामकग्रामाध्यवहितचन्द्रगिरौ चन्द्रगुप्तवस्त्याख्यंस्थानान्नातिदूरं वर्तते *। एतद्व्याख्यानेशिलालेखविज्ञानधुरंधरा विप्रतिपद्यन्ते। केचिद्रायिसप्रमुखा आद्यभद्रबाहुचन्द्रगुप्तविषयक इति मन्यन्ते। अपरे विद्वद्वरफ्लीटादयो वितर्कन्ते यथा नायं लेखश्चन्द्रगुप्तविषयको भवितुमर्हति। अत्र समयनिर्देशस्याविद्यमानत्वादस्यलिपेराधुनिकत्वाच्चन्द्रगुप्तकालोपक्षया, लेखवर्तिप्रभाचन्द्रशब्दस्य चन्द्रगुप्तवाचके प्रमाणाभावाद्बहुषु भद्रबाहवभिधजैनाचार्येषु जिनपट्टावल्यां विद्यमानत्वाच्च। किंच शिलालेखे ऽस्मिन्विद्यन्तेऽक्षराणि "आचार्यः प्रभाचन्द्रो नामावनितलललामभूते शिखरिणि निरवशेषेण संघं विसृज्यैकेन शिष्येण.........शिलासु स्वदेहं संनस्याराधितवान्......"। अत्र प्रभाचन्द्र इत्याचार्यस्य नाम न तु भद्रबाहुशिष्यस्येति च लिखति स महाशयः। लिपिविज्ञानशास्त्रबलादस्य शिलालेखस्य समयः षष्ठखृस्तशताब्दिक इति च निश्चिनोति। एतं विषयमधिकृत्योभयपक्षवर्तिभिरुत्तरप्रत्युत्तररूपेण बहवो निबन्धा ग्रथिता इति स्मिथमहाशयनिर्मितप्राचीनभारतवर्षेतिहासग्रन्थस्य नवीनावृत्तिगतस्यावलोकनेन विज्ञायते। उभयपक्षलेखान् परीक्ष्यायमितिहासकारस्तावत्तं शिलालेखं मौर्यचन्द्रगुप्तविषयकं प्रमाणयति। इदंतावदत्रानुसन्धयेम्। जैनसिद्धान्तभास्करनाम्नि त्रैमासिकवृत्तपत्रे मुद्रितेषु प्रतिमाक्षरेष्विदंतावत्स्पष्टं दृश्यते यत्तत्र मूर्धन्यो णकारो ह्रस्य पश्चात्। ह्रवर्णानन्तरं यथा ओकारस्तथा एकारोऽपि

* उपरिनिर्दिष्टः शिलालेखः परिशिष्टरूपेणात्र मुद्रितस्तत्र विवादविषयंयक्षराणि स्थूलपानि।

पठितुं शक्यः । फ्लीटमहाशयेन पठित-वद्यदि प्रभाचन्द्रो नामेति तत्राऽभविष्यत्तर्हि णकाराप्राप्तेः प्रभाचन्द्रोणामेति णकारो नाभविष्यत् । सत्यं बहवो भद्रबाहवो जिनाचार्याः । अस्मिंल्लेखे चाद्यभद्रबाहोः पश्चाद्बहूनामाचार्याणां नामानि दत्तानीतिच । परं लिपिशास्त्रानुसारेणास्य लेखस्यार्वाचीनत्वंनिर्विवादं सिद्धमतोलेखसमयापेक्षया,ऽऽद्यभद्रबाहवनुगाचार्याणां प्राचीनतया चात्र तन्नामानि दत्तानीति वक्तुं शक्यम् । प्रभाचन्द्र इति चन्द्रगुप्तस्य परं दीक्षानामेति च चन्द्रगिरीतिपर्वतनाम्नश्चन्द्रगुप्तवस्तीति-स्थाननाम्नश्च तथान्येभ्यश्च शिलालेखेभ्यस्तत्रस्थेभ्यश्चन्द्रगुप्तस्य तत्र गमनं च प्रमाणयितुं न दुष्करम् । एतेन रायिसल्मिथप्रभृतिभिर्विद्वद्भिः कृतो निर्णयः समीचीनो, मौर्यचन्द्रगुप्तः स्वगुरुभद्रबाहुना सह तत्रागमदितिच प्रतिभाति ।

एतेषां जैनमहाशयानां धर्मग्रन्थेषु श्वेताम्बरीया विद्वद्वरवेबरमहाशयेन तथा जैनदर्शनदिवाकरपदसमलङ्कृतेन याकोव्याख्यपण्डितवरेण सविस्तरं वर्णिततया नात्र पुनर्लिख्यन्ते । दिगम्बरजैनग्रन्थास्तावत्केचिदतिप्राचीनाः । खिस्तीयप्रथमशताब्दिकेनोमास्वामिना जीवाजीवास्रवबंधसंवरनिर्जरामोक्षेति सप्ततत्वविवरणात्मकं तत्वार्थाधिगममोक्षशास्त्रं निर्मितम् । अयमुमास्वामी कुन्दकुन्दाचार्यस्य शिष्यः । कुन्दकुन्दाचार्येणापि बहवो ग्रन्था लिखिता यथा प्रवचनसारः पञ्चास्तिकायः समयसारो नियमसारोऽष्टपाहुडोरयणसारोऽन्येच । भूतबलिश्च धवलजयधवलमहाधवलाख्यान् ग्रन्थान् प्राकृतभाषायां ग्रथितवान् । जयधवलैकांशमूलको गोम्मटसारो रचितो नेमिचन्द्रसिद्धान्तचक्रवर्तिना खृस्तीयसप्तमशताब्दिकेन । बहवश्चान्ये ग्रन्था मुद्रणमपेक्षमाणा विस्तरभयान्नात्र निर्दिश्यन्ते ।

बहवो न्याय व्याकरणादिदर्शनग्रन्था दिगम्बरजैनप्रणीतास्तेषु कतिचिदेव मुख्यतमा अत्र निर्दिश्यन्ते । तत्र व्याकरणशास्त्रे अमोघाचार्यकृता शाकटायनामोघवृत्तिर्यक्षवर्मकृतः शाकटायनचिन्तामणिः श्रीपूज्यपादस्वामिकृतं जैनेन्द्रव्याकरणमभयनन्दिकृता जैनेन्द्रमहावृत्तिः श्रीप्रभाचन्द्रकृतो जैनेन्द्रशब्दार्णवः शर्ववर्मकृतकलापव्याकरणम् श्रीशुभचन्द्राचार्यकृतः प्राकृतलक्षणशब्दचिन्तमणिः स्वोपज्ञटीकासहितः पण्डितराजवर्धमानकृतो गणरत्नमहोदधिरन्ये च ग्रन्थाः । न्यायशास्त्रे श्रीप्रभाचन्द्रकृतः प्रमेयकमलमार्तण्डः श्रीअकलङ्कदेवकृताऽष्टशती श्रीधर्मभूषणयतिकृता न्यायदीपिका विद्यानन्दिस्वामिकृता अष्टसहस्र्याप्तपरीक्षा प्रमाणपरीक्षाः प्रभाचन्द्रकृतो न्यायकुमुदचन्द्रोदयोऽन्ये च ग्रन्थाः । साहित्यशास्त्रे अजितसेनकृतोऽलङ्कारचिन्तामणिर्वाग्भट-कृते वाग्भटालङ्कारकाव्यानुशासने सोमदेवसूरिकृतयशस्तिलकचम्पूकाव्यं वा-

वीरभर्सिंहकृतो गद्यचिन्तामणिः श्रीभगवज्जिनसनेकृतः पार्श्वाभ्युदयः श्रीहस्तमल्लिकविकृता सुभद्रानाटिका समन्तभद्रस्वामिकृतं जिनशतकचित्रबद्धकाव्यमन्ये च बहवः साहित्यग्रन्थाः। दर्शनग्रन्थेषु श्रीअकलङ्कदेवकृतं राजवार्तिकं विद्यानन्दिकृतं श्लोकवार्तिकं श्रीपूज्यपादकृता सर्वार्थसिद्धिर्देवसेनसूरिकृताऽऽला ? पद्धतिरुमास्वामिकृतं मोक्षशास्त्रमन्ये च ग्रन्थाः। प्राकृत (महाराष्ट्री) भाषायां लिखितग्रन्थेषु नेमिचन्द्रकृतो गोम्मटसारस्त्रिलोकसारक्षपणसारौ च,भूतबलिकृता धवलजयधवलमहाधवलाः श्रीकुन्दकुन्दाचार्यकृता नाटकसमयसारात्मख्यातिप्रवचनसारपंचास्तिकायाद्योग्रन्था अन्ये च ग्रन्थाः, गणितशास्त्रे भद्रबाहुस्वामिकृता भद्रबाहुसंहिता सार्धद्वयद्वीपप्रज्ञप्तिश्चान्ये च ग्रन्थाः। पुराणेषु जिनसेनाचार्यकृतमादिपुराणं रविषेणकृतं पद्मपुराणम्। (जैनरामायणम्) वादिराजसूरिकृतं पार्श्वपुराणम्। प्राकृत (महाराष्ट्री) भाषायां लिखितेषु ग्रन्थेषु पुष्पदन्तकृतं त्रिषष्टिशलाकापुराणं तथा हरिवंशश्च प्रधानतमा ग्रन्थाः। न्यायव्याकरणादिविषयेभ्यः प्रचलितग्रन्थेभ्य एतेषु को विशेष इति निर्णेतुमनधीत्यैतान्नैव संभाव्यते एवं तत्तच्छास्त्राधिकारिणां जिज्ञासूनां सौकर्यार्थमयमत्र नामनिर्देशः कृतः।

जैनमतस्य किं तात्त्विकं स्वरूपमित्यत्र विविच्यते। प्रायः सर्वेषु धर्मेष्वस्मिञ्जगति कतिपयभारतीयधर्मान्विहायेश्वरो जगतः कर्तेत्याम्नायते। भारतीयेषु मतविशेषेष्वनीश्वरवादिनोऽपि धर्माबाह्याः। क्षणिकसुखदुःखादिकारणमज्ञानं बन्धस्तदभावश्च मोक्ष इत्यन्यान्यपर्यायशब्दैः सर्वाणि मतानि प्रख्यापयन्ति तत्र साङ्ख्यवद्बौद्धजैनादयोऽपि जगत्कर्तृत्ववानीश्वर इति न वदन्ति। जैनानां मते षड् द्रव्याणि जीवपुद्गलाकाशकालधर्माधर्माः। अनादिरनन्तश्चायं प्रपञ्चः। सम्यग्दर्शनज्ञानचारित्रात्मको मोक्षमार्गः। बद्धदशामारभ्यामुक्तेश्चतुर्दशगुणस्थानानि। तत्राद्यानि पञ्च श्रावकाणामभ्यासानुरोधेन। ततः सप्त स्थानानि जैनमुनीनामभ्यासपरिपाकापेक्षया। त्रयोदशं स्थानं सयोगकेवलिनः। स एवार्हत्पदभाक्। तेषु केचित्तीर्थकरत्वं प्रतिपद्यन्ते न तु सर्वे। चतुर्दशं स्थानं पुनरयोगकेवलिनः। अन्तिमौ द्वौ जीवन्मुक्तौ परमात्मानाविति कथ्येते। सप्त पदार्थास्तेषां यथा जीवाजीवास्रवबंधसंवरनिर्जरामोक्षाः। तत्राजीवपदेन पुद्गलादीनि पञ्च द्रव्याणि गृह्यन्ते। आस्रवो नाम कायवाङ्मनःकर्मयोगः। बन्धो नाम पुद्गलात्मनोर्योगः। आस्रवनिरोधः संवरः। तपो निर्जरा। अजीवाज्जीवस्य पृथक्स्थितिर्मोक्षः। हिंसाऽसत्यस्तेयाऽब्रह्मपरिग्रहाः पापानि। हिंसा नाम प्रमत्तयोगात्प्राणव्यपरोपणम्। तथैवासत्यं प्रमत्तयोगादसदभिमानम्। स्तेयं प्र० अदत्तादानम्। अब्रह्म प्र० मैथुनम्। परिग्रहो मूर्च्छाममत्वपरिणामः।

पुरा किल त्रय एव वर्णा गुणकर्मानुरोधेन समाम्नाता ऋषभदेवेनास्मिन् कल्पे,तत्पुत्रेण ब्राह्मणवर्णोऽपि निर्मित इति जैनानामाशयः। त्रिपञ्चाशत्सन्ति गृह्यसंस्काराः। तत्र त्रैवर्णिकाचारविषयको भद्रबाहुसंहिताख्ये ग्रन्थः। संस्कारकर्मणि पुराणवाक्यानि पठ्यन्त इति च भाति। जैनमतानुसारेणाऽन्यधर्मावलम्बिनो जैनधर्मे गृह्यन्ते।

बौद्धजैनमतयोः को विशेष इत्यत्र किञ्चिल्लिख्यते। बौद्धानां प्राचीनधर्मग्रन्थाः समुपलभ्यन्ते न तथा जैनानामिति बहवोऽनधीतजिनशास्त्राश्चिरं जिन इति शाक्यमुनिर्गौतमस्यैवापरं नामेति मन्यन्तेस्म। उभयमतवादिनः स्वान्तिमधर्मप्रवक्तार जिनार्हन्महावीरसर्वज्ञसुगततथागतसिद्धबुद्धसम्बुद्धपरिनिर्वृत्तमुक्तेत्यादिनामभिर्निर्दिशन्ति, स्वस्वतीर्थकरमीश्वरवत्संमानयन्ति मूर्त्यादिभिश्च पूजयन्ति, तथा च ते स्वमतस्याहिंसालक्षणे धर्मविशेषे दत्तनिर्भरा इति च वदन्ति। अत्र बौद्धमतं जैनमतादतीवभिन्नं तेषामाचार्यपरम्परा भिन्ना तेषां संज्ञाविशेषाश्च भिन्नाः। न केवलमेतौ धर्मावन्यो किन्तु परस्परविरुद्धावेतौ, जिनमतं च तयोः प्राचीनतरम्। तत्र जिनशास्त्रे कृतपरिश्रमा नवीना विद्वांसो वेबरयाकोबीप्रभृतयो, जैनसिद्धान्तादिग्रन्था बौद्धग्रन्थेभ्यो महता कालेनाव्यवहिता? इति प्रमाणयन्ति; श्वेताम्बरग्रन्था देवर्धिगणिसमये लिखिता इतिचाहुः। तत्राद्योपलभ्यमानग्रन्थानां सिद्धान्तग्रन्थग्रथनकालापेक्षयाऽर्वाचीनत्वेऽपि तेषां सम्प्रदायपरम्परयाऽऽगततया प्राचीनत्वमप्रतिहतमिति पाश्चात्याः। दिगम्बरजैनग्रन्थाः केचिद्यथा कुन्दकुन्दाचार्यकृताः प्रवचनसारादयोऽतिप्राचीनाः। खृस्तीयप्रथमशताब्द्यां कुन्दकुन्दाचार्यो बभूवेति 'इंडियन् अण्टिक्वरी' इत्याख्यस्य ग्रन्थस्यैकविंशतितमे खण्डे मुद्रितदिगम्बरजैनपट्टावल्यनुसारेण ज्ञायते। खृस्तीयपञ्चमशताब्दिसमुत्पन्नश्वेताम्बरजैनदेवर्धिगणिप्रणीतग्रन्थेभ्यो दिगम्बरजैनानां कतिपयग्रन्थाः प्राचीनतरा इति प्रतिभाति। सम्यगधीतेषु तेषु ग्रन्थेषु ज्ञायते यज्जैना जिनमहावीरार्हन्सिद्धेतिसंज्ञाभिः प्रायो निर्दिशन्ति स्वतीर्थकरान्महावीरप्रमुखान् तथा बौद्धाः सुगततथागतेत्यादिनामभिः शाक्यमुनिम्। अन्यानि नामानि च यथार्थाक्षराणि विनियुज्यन्ते। बौद्धमतविरुद्धं च मनुजानां देवरूपेण पूजनं मूर्त्यापादनं च। निर्विवादसर्वसंमतप्राचीनत्वस्य वैदिकधर्मस्य तावदेतादृक्पूजनं प्रधानं लक्षणम्। यदि जैनैस्तत्तदन्येभ्यः परिगृहीतमिति स्वीक्रियेत तर्हितद्वैदिकमतानुयायिभ्यो भवितुमर्हति न तादृक्पूजनविरुद्धेभ्यो बौद्धेभ्यः। यो यो हि मतविशेषो येषां सोऽन्येभ्य एव गृहीतोऽभविष्यदि? ति तु नावश्यकम्। सर्वेऽसाधारणा महापुरुषा वाढमेतादृक्पूजनकल्पने सुसमर्थाः। अनेनैवाऽहिंसालक्षणसाम्यं व्या-

ख्यातम् । इदं तावदत्रानुसन्धेयम् । बौद्धाः स्वप्राचीनग्रन्थेषु महावीरप्रमुखजिनवरनिर्देशे न कुत्रापि नवीनमतप्रचारकत्वं तेष्वापादयन्ति । किंतु प्रचलितमतप्रतिपादकत्वमेव जैनानामिति बौद्धग्रन्थकृदाशयोऽनुमीयते । अनेन जैनमतस्य बौद्धमतापेक्षया प्राचीनत्व सिद्ध्यति । शाक्यमुनिः षड्वर्षावधि तपस्यामुग्रां कृत्वा तपसो नैष्फल्यमवगम्य कालान्तरेण सम्बोधिं जगाम नवीनं च मतं प्रख्यापयामास । महावीरः पुनर्द्वादशवर्षावधि तपस्यां कृत्वा तपो बहुफलं मत्वा तपसि सर्वाञ्जनान् प्रेरयामासेत्यस्त्ययं महान्विशेषो बौद्धजैनमतयोः । किंच बौद्धमते न केवलं परमात्मनोऽस्तित्वमनावश्यकं किंत्वात्मनोऽपि सत्त्वमस्ति न वेति न ज्ञायते । जैनमते पुनर्न केवलं जीवास्तित्वं प्रमाणितं किंतु जले वृक्षादिस्थावरवस्तुन्यपि तद्विधीयते ।

एवं स्वरूपमतावलम्बिनां दिगम्बरजैनानां काशीस्थस्याद्वादमहाविद्यालयवद्बहून्यन्यानि विद्यापीठानि बहवः संस्थाविशेषा भारतवर्षे विद्यन्ते । तत्र मोरेनाग्रामे सिद्धान्तविद्यालयं हस्तिनापुरे ऋषभब्रह्मचर्याश्रमम् आरानगरे सिद्धान्तभवनं दिल्ल्यामनाथबालकाश्रमो बहवश्चान्ये छात्राश्रमाः श्रावकाश्रमा विधवाश्रमा जैनमहोदयैः सर्वत्र संस्थापिता अन्यांश्च संस्थापयिष्यन्तीत्याशास्महे । तथा सुबहूनि वृत्तपत्राणि साप्ताहिकपाक्षिकमासिकत्रैमासिककालेन जिनमतप्रसारं कुर्वन्ति । अस्य दिगम्बरजैनसंघस्य भूषणमिव विशिष्टं स्याद्वादमहाविद्यालयस्य मन्त्री कुमारो देवेन्द्रः स्वेनापरिश्रान्तव्यापारेणानेकसंस्था यद्भाविल्वैदासिन्यालस्यादिभ्यो नैकविधप्रायिकविघ्नग्रहेभ्यः परिहरन् स्वमन्त्रप्रभावेणोज्ज्वलीकरोतीति महदनुभाग्यमेतासां संस्थानाम् । आशास्महे च तस्य तत्सदृशान्यजैनवराणां व्यवहारशास्त्रविदग्धाजितप्रसादप्रमुखाणां च प्रयत्नसामर्थ्यात्तथा स्याद्वादविद्यालयाध्यक्षशीतलप्रसादब्रह्मचारिसमानेकतपोधनतपःप्रभावाज्जैनविश्वविद्यालयमल्पेनैव कालेन सुसम्बृद्धजैनश्रेष्ठिवर्गमाहात्म्येनाज्ञानतिमिरान्धं जनं दिव्यचक्षुष्कं करिष्यतीति शम् ।

लड्डुवंश्यः कृष्णात्मजस्तुकारामशर्मा ।

---

## प्रबोधनम् ।

[ गीतिः ]

अयि भारताऽऽशु भूयो
गतगौरवं भजस्व ।
विजहीहि मोहशय्यां
वरबोधमाद्रियस्व ॥१ ॥

( युग्मम् )

उदितो मरीचिमाली
तमिमं मुदा वहन्ती ।
दिगियं विडौजसीया
बलितं ललामभाले ॥ २ ॥

जयपाणिरेयुषी ते
परिबोधनाय धीमन्।
मधुरस्मितैर्नु दन्ती
हसितैर्व्यनक्ति किञ्चित्॥ ३॥
सहसा गतः प्रतीचीं
मृगलाञ्छनः कलङ्की।
भजसे कुतो न संज्ञा-
मयि जागृतिं श्रयस्व॥ ४॥
सहवासिनस्तवाऽमी
सुचिराय जागरूकाः।
गतसंज्ञमालुठन्तं
प्रहसन्त्यहो भवन्तम्॥ ५॥
अहिफेनफेनिलोऽपि
परिपाण्डुराननोऽपि।
गततन्द्र एष चीनः
सुसखा सभाजयस्व॥ ६॥
शिथिलं तवाङ्गवर्गं
परिलक्ष्य दुःखसंघम्।
कथयन्ति हन्त! केचिद्
गतजीवनं भवन्तम्॥ ७॥
नृपधर्मकर्मठानि
परमर्मशर्महाणि।
किमु तात, विस्मृतानि
शुभचेष्टितानि तानि॥ ८॥
भज बोधराजभक्तिं
जहि पारतन्त्र्यपाशम्।
त्यज दैववादवेगं
ननु पौरुषं श्रयस्व॥ ९॥
नहि निःस्पृहोपकारो
न दया विनानिमित्तम्।
क्वचिदद्य, तत् पराशां
परिहाय चेष्टयस्व॥ १०॥
यदि वाञ्छितं प्रियं ते
कुरु कर्म शर्मदायि।
हतचेष्टिताय सिद्धिं
प्रददाति नेश्वरोऽपि॥ ११॥
यदि तात, ते तनूजा-
स्त्वयि भक्तिभावभाजः।
निज देश-वेष-भाषा-
स्वभिमानमाभजेयुः॥ १२॥
शिवपावनं त्वदङ्गं
न विदेशिवस्तुभारैः।
*यदिमे विलाञ्छयेयु-
र्ननु दुःशकं किमस्ति॥१३॥
परमेश्वरेण सृष्टः
समयो हिताय तेऽयम्।
स्मर तत्स्वकृत्यमद्धा
हर दैन्यशृङ्खलानि॥ १४॥
भज संघशक्तियोगं
त्यज भूरिभेदरोगम्।
परिलप्स्यसे सुभोगं
नृपजार्जरक्षितोऽसि॥ १५॥

साहित्याचार्यश्रीशालग्रामशास्त्रिणः।

---

## साङ्ख्य-दर्शनम्।

यल्लीलया जायते च वर्द्धते क्षीयते जगत्।
तन्नौमि पुरुषंनित्यंप्रकृतिञ्च मुहुर्मुहुः॥१॥

---

*'यत्' इत्यव्ययं यदीत्यर्थे।

विदितमेवैतत्सर्वेषां विदुषां यदसार-संसारसागरस्याम्य पारयियासोर्मुमोक्षोश्च पारङ्गमयिता मोक्षयिता च, कर्मोपासन-ज्ञानमितिकाण्डत्रयात्मको वेद एव । अत-एव वेदोदितक्रियमाणकर्म्मसम्पादनसम्पत्त्या क्षालितान्तःकरणमुपासनाधिकारिणमनुशास्ति भगवन्तो महर्षिकपिलाः षडध्ययात्मकं साङ्ख्यदर्शनम् ।

तत्र हि प्रथमेऽध्याये विषया निरूपिताः । द्वितीये चाध्याये प्रधानकार्याणि । तृतीये चाध्याये विषयेभ्यो वैराग्यन्निरूपितम् । चतुर्थेऽध्याये च विरक्तानां पिङ्गलाकुररादीनामाख्यायिका । पञ्चमे च परपक्षनिर्णयः । षष्ठेऽध्याये च प्रकृति-पुरुषविवेकज्ञानं साङ्ख्यशास्त्रप्रयोजनञ्च निरूपितमिति ।... ... ... ... ... तदेवाऽहं विविधविद्याविशारदेभ्यः श्री-शारदापाठकेभ्यः संक्षेपतः समुपहरामि ।

अथाऽस्मिन् शास्त्रे हि पदार्थानाम् चतस्रो विधाः प्रतिपाद्यन्ते । कश्चिदर्थः प्रकृतिरेव कश्चिद्विकृतिरेव कश्चिदुभयरूपः कश्चिदनुभयरूप इति । तदुक्तम्—

मूलप्रकृतिरविकृतिर्मह-
दाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो
न प्रकृतिर्नापि विकृतिः पुरुषः ॥

अत्र केवलाः प्रकृतिः, प्रधानपदवाच्या मूलप्रकृतिः । नासावन्यस्य कस्य चिद्विकृतिः । प्रकरोतीति प्रकृतिरिति व्युत्पत्त्या सत्वरजस्तमोगुणानां साम्यावस्थाया अभिधानात् । मूलञ्चासौ प्रकृतिश्च मूलप्रकृतिः । महत्वादेः कार्यकलापस्येयमेव मूलं न त्वस्याः प्रधानभूताया मूलान्तरमस्ति अनवस्थाऽऽपातात् । बीजाङ्कुरवत् प्रामाणिक्यनवस्था न दोषायेति केषाञ्चिन्मतं न समीचीनं प्रमाणाभावात् । प्रत्युत "प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपीत्यादिप्रमाणवचनतः प्रकृतेः सादित्वाभावबोधनेन निखिलप्रपञ्चमूलकारणत्वस्य स्मरणात् । अत्रापि कार्यकारणभावेविप्रतिपत्तिश्चतुर्द्धा संजायते । तदेव दर्शयामि यथा असतः सज्जायत इति सङ्गिरन्ते सौगताः । तच्च न समीचीनम् असतोऽलीकस्य शशविषाणवत् कारणत्वमेव न सम्भवति तुच्छातुच्छयोः कार्यकारणभावायोगात् । सतोऽसज्जायत इतिनैयायिकादयोऽभिमन्यन्ते । तदपि न प्रामाणिकं कारकव्यापारात्पूर्वमसतां घटादीनां शशविषाणवत् सत्तासम्बन्धलक्षणरूपोत्पत्तेरसिद्धत्वदर्शनात् । नहिनिपुणतमेनापि शिल्पिनाऽसति गगनारविन्दे सत्तासम्बन्धं विधातुं पार्यते । अत एव कारकव्यापारात्प्रागपि कार्यं सदेवास्ति । सत एव कार्यस्यानभिव्यक्तस्य कारकव्यापारेणाभिव्यक्तिरुपपद्यते । सतो ब्रह्मतत्त्वस्य विवर्त्तः प्रपञ्चकार्यजातं न तु वस्तुसदिति वेदान्तिनां मतमपि न निर्दोषम् । अधिष्ठानारोप्ययोश्चिज्जडयोः कलधौतरूप्यादिवत् सारूप्याभावेनारोपाऽसम्भवात् बाधानुपलम्भाच्च । तस्मात्

सुखदुःखमोहात्मकस्य विश्वप्रपञ्चस्य तथाविधमेव कारणमवधारणीयम् । तथा चानुमानप्रयोगो विधेयः, विमतं कार्यजातं सुखदुःखमोहात्मकवस्तुकारणकम् तदन्वितत्वात् यद्येनान्वितं तत्तत्कारणकं यथारुचकादिकं सुवर्णान्वितं तथा चेदं तस्मात्तथेति । येयं सुखात्मता तत्सत्वं । या च दुःखात्मता तद्रजः या च मोहात्मता तत्तमः । एवञ्च सर्वस्य त्रिगुणात्मता वेदितव्या । तथा हि प्रत्येकमभावास्त्रैगुण्यवन्तोऽनुभूयन्ते यथा मैत्रदारेषु सत्यवत्यां मैत्रस्य सुखमाविरस्तीति तं प्रति तस्याः सत्वगुणप्रादुर्भावः तत्सपत्नीनां दुःखमिति ताः प्रति रजोगुणप्रादुर्भावः । एवमन्यदपि घटादिकं लभ्यमानं सुखाकरोति परैरपह्रियमाणं दुःखाकरोति उदासीनस्य च उपेक्षाविषयत्वेनाऽवतिष्ठते । उपेक्षाविषयत्वञ्च मोह एव । उपेक्षणीयेषु चित्तवृत्त्यनुदयात् मुहवैचित्त्य-इत्यस्माद्धातोर्मोहशब्दनिष्पत्तेश्च । तस्मात्सुखदुःखमोहात्मकत्वेन त्रैगुण्यवतः सर्वस्य कार्यजातस्य त्रिगुणात्मिका मूलप्रकृतिः प्रधानपदवेदनीयैव कारणमिति स्थितम् । तदेतत्सकलं मनसि निधायाभिहितं मूलप्रकृतिरविकृतिरिति । एतेन कश्चिदर्थः प्रकृतिरेवेति प्रथमं प्रकारं प्रदर्श्य द्वितीयं प्रकारमाह महदाद्याः प्रकृतिविकृतयः सप्तेति महत्तत्वमहङ्कारः शब्दस्पर्शरूपरसगन्धाश्चैते सप्त पदार्थाः प्रकृतिविकृतय उभयरूपाः सन्तीत्यर्थः । तत्रान्तःकरणपदवेदनीयं महत्तत्वमहङ्कारस्य प्रकृतिर्मूलप्रकृतेस्तु विकृतिः । एवमहङ्कारोऽपि शब्दादिपञ्चकस्य श्रोत्रादीन्द्रियैकादशकस्य च प्रकृतिर्महत्तत्वस्य तु विकृतिः शब्दादिपञ्चकं हि यथाक्रमं व्योमवायुतेजोजलपृथिवीनां प्रकृतिरहङ्कारस्य तु विकृतिरिति बोध्यम् ।

तृतीयं प्रकारमाह षोडशकस्तु विकार इति श्रोत्रंत्वक्चक्षुर्जिह्वाघ्राणाभिधानि पञ्च ज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थाभिधानि पञ्च कर्मेन्द्रियाणि । उभयात्मकं मनश्चेत्येकादश तथा व्योमादीनि पञ्चमहाभूतानीत्येषां षोडशानां गणः षोडशकः स तु विकार एव विकृतिरेव न कस्यापि प्रकृरित्यर्थः । यद्यपि पृथिव्यादीनां गोवृक्षादयो विकारा गवादीनामपि पयोबीजादयः, तेषाञ्च दध्यङ्कुरादयस्तथापि गवादयो न पृथिव्यपेक्षया तत्त्वान्तरम् । तेषां पार्थिवत्वात् तत्त्वान्तरोपादानकारणस्यैवात्र प्रकृतिपदेन विवक्षितत्वात् ।

चतुर्थप्रकारमाह न प्रकृतिर्नापि विकृतिः पुरुष इति कस्यापि तत्वस्येति शेषः ॥

इदमत्र वेदितव्यं । प्रकृतेर्महान् महतोऽहङ्कारः स च सात्विकराजसतामसभेदात् त्रिविधः । तत्र सात्विकादहङ्कारादेकादशेन्द्रियाणि तामसात् तन्मात्राभिधं शब्दादिपञ्चकम् । राजसात्तूभयम् । सत्वतमोभ्यामेवोभयस्येन्द्रियतन्मात्रात्मककार्य-

र्थस्य सिद्धौ रजसो व्यर्थत्वमभिमन्यन्ते केचन तन्न युक्तम् । सत्त्वतमसी स्वयमेवाऽक्रियेस्वकार्यं घटयितुन्न प्रवर्त्तेते । रजसस्तु चलस्वभावतया यदा स चालयति तदैव ते स्वकार्यं कुरुतः । अत एवोभयत्रापि कार्ये सत्त्वरजसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रज इति । शब्दादिभ्यो महाभूतानि व्यजायन्त । प्रणास्तु न तत्त्वान्तरङ्किन्त्विन्द्रियाणां साधारणवृत्तय एव । एवङ्कालोपि न तत्त्वान्तरम् । भूतवर्त्तमानभविष्यदितिव्यवह्रियमाणवस्तुव्यतिरेकेण स्वतन्त्रस्य तत्स्वरूपस्याऽनिरूपणीयमेवास्ति । एतानि चतुर्विंशतिस्तत्वानि पुरुषः पञ्चविंशतितमः । स च नैकः किन्त्वनेकः प्रतिशरीरं भिन्न एव । अन्यथा कस्मिंश्चिदेकस्मिन् म्रियमाणे सर्वे म्रियेरन् जायमाने च जायेरन् पण्डिते वा पण्डिताः स्युरित्यनवस्थाऽऽपद्येत । स चायम्पुरुषः प्रकृतिप्रसूते प्रपञ्चात्मके जगति वर्त्तमानोऽपि स्वयं निर्गुणत्वहेतुना पयसि वर्त्तमानपुष्कर-पलाशवन्निर्लेपः साक्षीवावतिष्ठते । पुरुषो हि नियमेन निस्त्रैगुण्यस्वभाववानेव । यतः प्रकृतिप्रसूतप्रपञ्चस्य सर्वस्याऽपि सुखदुःखमोहात्मकत्वेन भोग्यत्वाज्जडत्वाच्च स्वविलक्षणस्त्रैगुण्यातीतः परश्चेतनो भोक्ता कश्चिदस्त्येव । स एवात्मेति पुरुष इति वा व्यपदिश्यते ।

अथ च पुरुषसान्निध्यवशाज्जडा अपि प्राकृता भावाश्चेतनवदवभासन्ते । प्रकृतिसान्निध्यवशाच्चासङ्गोऽपि पुरुषः कर्तेव सुखादिमानिव चावभासते ॥ एवञ्च प्रकृतिपुरुषसंयोग एवाखिलं संसारप्रपञ्चन्निर्वाहयति । भोक्तृत्वयोग्यता हि पुरुषस्य चैतन्यं भोग्यत्वयोग्यता हि प्रकृतेर्जडत्वं । भोक्तृयोग्यता भोग्ययोग्यतावसरेऽनयोरन्धपङ्गु न्यायेन संयोगः समभवत् । यथा कश्चिदन्धः स्वयं जङ्घालोऽपि स्खलनं परिजिहीर्षुः कश्चिच्चक्षुष्मन्तम्पङ्गुमपि स्कन्धेनोद्वहति । पङ्गुस्तु यच्चक्षुष्मानपि यथेष्टविहारमभीप्सुः कञ्चिज्जङ्घालमन्धमपि समधितिष्ठति । तथैवाचेतना प्रकृतिः स्वप्रवृत्तिनिर्वाहाय चेतनमधिष्ठातारमुद्वहति चेतनोऽपि पुरुषः स्वयमप्रसवधर्म्मा स्वभोग्यप्रसवित्रीम्प्रकृतिमधितिष्ठति । ततश्च भोग्येन प्रधानेन सम्भिन्नः पुरुषो भोग्यधर्मभूतं सुखदुःखमोहजातं स्वात्मन्यभिमन्यमानः कदाचिदपि दुःखत्रयोपघातम्प्रार्थयते । तच्चास्य प्रधानभूता प्रकृतिर्निष्पादयति । नित्यायाः प्रवृत्तिशीलायाश्च प्रकृतेर्विश्रामाभावेन सततं सर्गः स्यादिति न कश्चिदपि दुःखत्रयान्मुच्येतेति केषाञ्चिन्मतन्तु नोचितम् । यतः प्रकृतेरुपरमोऽपि सम्भाव्यते यथा काचिन्नर्तकी नृत्यावलोकनोत्सुकान् रङ्गस्थान् पुरुषान् निजनृत्यकौशलन्दर्शयित्वा तेषामौत्सुक्योपरमे सति सा नृत्यक्रियातो निवर्तते न पुनरनुत्सुकांस्तान्निजनृत्यम्प्रदर्शयितुम्प्रवर्त्तते तथा प्रकृतिरपि स्वसृष्टविषयभो-

गौत्सुकान् प्रत्येकं पुरुषान् भोजयितुम्प्रवृत्ताऽपि यं विगलितवासनम्पुरुषम्पश्यति तम्प्रति न पुनः प्रवर्तते।

केषाञ्चिन्मतन्तु चेतनः स्वार्थंवा परार्थंवा प्रवर्त्तमानो दृश्यते परन्त्वचेतना प्रकृतिः कथम्प्रवर्त्तते निवर्त्तते वेति किञ्चाऽचेतनस्य स्यन्दनादेरिव चेतनाधिष्ठितायास्तस्या अचेतनाया अपि प्रवृत्तिरुपपद्यत इति तन्न युक्तम्। जीवपुरुषाणाम्प्रकृतिस्वरूपाऽनभिज्ञतयाऽधिष्ठातृत्वाऽसम्भवदर्शनात्। तस्मादस्ति सर्वार्थदर्शी परमेश्वरः प्रकृतेरधिष्ठातेत्यपि न युक्तम्। अचेतनस्य क्षीरादेर्वत्सादिविवृद्ध्यर्थमिवाचेतनायाः प्रकृतेरपि पुरुषार्थम्प्रवृत्तेः सुसम्भाव्यमानत्वात्।

प्रकृतिमधिष्ठाय परमेश्वर एव जगत्सृजतीत्ययं निष्कर्षः कञ्चिद्भक्तम्प्रति भगवानाह कपिलः। तत्किम्परमेश्वरः स्वार्थं सृजति परार्थं वेति तदाद्यः पक्षोऽपि न युक्तो यतः पूर्णकामस्य परमेश्वरस्य जगत्सर्जने प्राप्तव्यार्थस्याभाव एव। परार्थपक्षोऽपि न युक्तः। प्रेक्षावतः केवलपरार्थप्रवृत्तेरुदय एव न भवति। कारुण्यात् तथाविधप्रवृत्तेः सम्भव इति कस्यचिन्मतमपि नादरणीम् यतः सृष्टेः प्राक् कारुण्यमेव वक्तुमशक्यं किंच स्वार्थमनपेक्ष्य परःदुःखप्रहाणेच्छालक्षणरूपकारुण्यस्य तस्मिन् समये प्राणिवर्गाणामभावेन तज्जन्यदुःखानामप्यभावान्निर्विषयमेव। पुनश्च करुणया प्रेरित ईश्वरः सुखिन एव सर्वान् प्राणिनः सृजेन्न विचित्रान्। कर्मवैचित्र्यात्प्राणिवैचित्र्यमित्यपि न युक्तम् कर्मपराधीनेश्वरेणाऽजागलस्तनकल्पेन न कोप्यर्थ इति परिभाव्यताम्। प्रकृतेस्तु प्रवृत्तिर्न स्वार्थमपेक्ष्य न वा कारुण्येन किन्तु परार्थैवेति नोक्तदोषप्रसङ्गः। अचेतनानां रथादीनां व्यापारस्य तथैव लोकेऽनुभूयमानत्वादिति दिक्।

भोक्तृत्वयोग्यता हि पुरुषस्य चैतन्यमित्युक्तन्तथा सति चैतन्यधर्मा पुरुषः कथं विगलितवासनो भवेदिति केषाञ्चिदुक्तिर्नादरणीया। यतो नह्युक्तलक्षणञ्चैतन्यं वासनाम्प्रसूते किन्तु क्लेशसलिलावसिक्तायां बुद्धिभूमौ निपतितानि कर्मबीजानि वासनाङ्कुरान् प्रसुवते तदा तु नाहं सुखादिमान् किन्तु त्रैगुण्यातीतोऽप्रकृतत्वादिति प्रकृतिपुरुषविवेकज्ञानमुत्पद्यते तदा तु तत्त्वज्ञाननिदाघनिपीतसकलक्लेशसलिलायामुषारायां तस्यां दग्धानाङ्कर्मबीजानाङ्कुतः पुनर्वासनाङ्कुरप्रसव इति

उत्पन्नतत्वसाक्षात्कारोऽपि पुरुषः प्रारब्धकर्मसंस्कारवशात् सदेह एव कञ्चित्कालन्तिष्ठति। यथोपरतेपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमदेव तिष्ठति। यथान्यकालकलाक्रमेण सति संस्कारोपशमे चक्रम्परिभ्रमणविनिर्मुक्तं सत् स्वभावेनावतिष्ठते। एवं कृतप्रयोजनत्वादुपरतायां प्रकृतौ भोगेन प्रारब्धसंस्कारोपशमे सति विमुक्तदेहबन्धनः पुरुषो निजेन कैवल्यस्वभावेन सम्पद्यते। तथा च श्रूयते-

"भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यत" इति दिक् ।

अथ प्रसङ्गवशतः सेश्वरसाङ्ख्यापरनामधेयस्य "योगशास्त्रस्य" संक्षेपतो मतमुच्यते । एतच्छास्त्रस्य मूलभूतम् "अथ योगानुशासन"-मित्यादिपादचतुष्टयप्रमाणकं सूत्रग्रन्थम्भगवान् पतञ्जलिः प्रणिनाय । तत्र प्रथमेऽध्याये सप्रपञ्चश्चित्तवृत्तिनिरोधात्मकं योगलक्षणं वैराग्यादिसाधनसहितं समाधिश्चोपादिक्षत् । द्वितीये तपःस्वाध्यायेश्वरप्रणिधानादिरूपं क्रियायोगं यमनियमादीनि च बहिरङ्गसाधनानि । तृतीये च संयमपदवाच्यमन्तरङ्गसाधनन्तत्रावान्तरफलभूतं विभूतिजातञ्च तथा चतुर्थेऽध्याये च जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः इत्यनेन परमञ्च प्रयोजनङ्कैवल्यमुपादिक्षत् ।

अत्रापि शास्त्रे पञ्चविंशतिस्तत्वानि पूर्वोक्तान्येव । परं षड्विंशः परमेश्वरः संसाराङ्गारशय्यायाम्परितप्यमानानाम्प्राणभृतामनुग्राहकः सङ्ख्यायते । तदित्थम् । प्रकृतिपदवेद्यायां मायायामधिष्ठातुरीश्वरचैतन्यस्य संक्रममहिम्ना महत्तत्वङ्कालः पुमानिति त्रयः पदार्था अजायन्त । तत्र च बीजेऽङ्कुरवत्प्रकृतौ स्थितानां सत्वरजस्तमोगुणानां क्षोभकरः कालः । अयं ब्रह्मचैतन्यस्यैवावस्थाविशेषः । ततश्च नासौ तत्वान्तरम् । पुमान् संसारी कार्योपाधिर्जीवः । स च स्वतन्त्रोऽनादिरपि प्रकृतेः प्रथमविकारमन्तःकरणपदवेदनीयं महत्तत्वमवष्टभ्य भोक्तृत्वेनोत्थितः । महत्तत्वादहङ्कार इत्यादिप्रक्रिया पूर्ववदेवेति विशेषः ।

केषाञ्चिदभिप्रेतोऽर्थस्त्वत्र पुष्करपलाशन्निर्लेपस्य पुरुषस्य तापः कथमुपपद्यते येन परमेश्वरोऽनुग्राहकतया कक्षीक्रियत इति नादरार्हः । तापकस्य रजोगुणस्य ताप्यः सत्वगुणः स एव च बुद्ध्यात्मना परिणमते । सत्वे हि परितप्यमाने तमोगुणावेशेन सत्वपरिणामबुद्ध्यभेदमवगाहमानः पुरुषस्तप्यत इति । यदाह भगवान् पतञ्जलिः । "अपरिणामिनी हि भोक्तृशक्तिरपि संक्रमा । च परिणाम्यर्थे प्रतिसंक्रान्ते च तद्वृत्तिमनुभवतीति । भोक्तृशक्तिर्जीवचैतन्यलक्षणा यद्यपि न रूपान्तरापत्तिलक्षणम्परिणामं नाप्यन्यदीयधर्म्माक्रान्तत्वलक्षणं प्रतिसंक्रमं वा स्वरूपतो भजते तथापि परिणाम्यर्थे बुद्ध्यादौ प्रतिसंक्रान्ते विवेकतः स्वाभेदेनावगते सति तद्वृत्तित्वम् । तस्या बुद्धेर्वृत्तिविशेषरूपं सुखदुःखादिकमनुभवतीति सूत्रार्थः ।

केचित्तु स्वयमेव पुमान् बुद्ध्यादिभ्यो विविक्तमात्मानन्निश्चित्य विगततापो भवतु माभूदनुग्राहकः परमेश्वर इति वदन्ति तन्न युक्तम् । विविक्तमात्मानं स्वयमेव निश्चेतुं जीवस्यानीशत्वादेव । यथा तिमिरोपहतदृष्टिः पदे पदेऽनुभूयमानं प्रस्खलनादिक्लेशं न स्वयमुन्मूलयितुमिष्टे किन्तु भिषग्वरस्य तिमिररोगप्रणाशनप-

टोरनुग्रहेणैव सञ्जातविमलदृष्टिर्मुक्तक्लेशो भवति ।

तथा जीवोपीश्वरानुग्रहेणैव निरस्ताज्ञानतिमिरो भूत्वा बुद्ध्यादिभ्यो विलक्षणं विविक्तमात्मानमवगत्य कैवल्यामृतसागरमवगाह्य समस्तपरितापान्मुच्यत इति दिक् ।

—व्याघ्रचर्म्माम्बरि-
स्वामिरामकृष्णानन्दगिरिः ।

---

## अथ मारीचवधम् ।

[ प्रथमः सर्गः ]

—०—

रमापतिर्मङ्गलमूर्त्तिसीतया
पितुर्निदेशाच्छुभदण्डकावनिम् ।
विभूषयन् कञ्चन काञ्चनाकृतिं
विलोकयामास कुरङ्गमद्भुतम् ॥१॥

इयं कृतिर्दिव्यशरीरधारिणी
प्रचारयन्ती भुवि चित्रचातुरीम् ।
मनोज्ञनिर्म्माणकलासु वैधसी-
महो मया पुण्यचयैर्विलोकिता ॥२॥

भयङ्कराकारनिशाचराकुले
समन्ततो हिंस्रकुलैर्निषेविते ।
क्व सम्भवोऽस्या रुचिराकृतेर्वने
फलं नु वेदं मम भाग्यसम्पदाम्॥३॥

अहं पुरा येन विनागसा बला-
द्बलीयसा राज्यसुखाद्बहिष्कृतः ।
तदेव दैवं किमु गूढविग्रहं
मदप्रियं हन्त पुनर्विधित्सति ॥४॥

न मन्दभाग्यस्य ममात्र संस्थिति-
र्विषह्यते हा किमु तेन पापिना ।
कुरङ्गतामेत्य पुनर्यदागतं
प्रतारणायां पटुना मदन्तिकम् ॥५॥

सुखैकरूपेण विभाविता क्षणं
क्षणान्तरं दुःखपरिष्फुटाकृतिः ।
कुदैवकेलिर्मयि यातनाप्रदा
विजृम्भते हन्त सहस्रधेदिता ॥६॥

क्व राज्यचर्चातिसुखैककारणं
विपत्तिदैषा क्व वनाधिवासिता ।
क्व सुन्दरी कामसुखाप्तिलोलुपा
क्व राक्षसी सङ्गरखेदसंप्रदा ॥ ७ ॥

इति प्रकामं जगदेकचिन्तने
विचिन्तने तादृशि मग्नचेतने ।
कुरङ्गसौन्दर्य्यमदाद्धृतान्तरा
धरासुता सादरमित्थमब्रवीत् ॥८॥

अयि प्रियायं रुचिराकृतिर्मृगो
विभूषितः स्वर्णसमाभचर्म्मणा ।
द्रुत मदर्थं विनिपात्यतां प्रभो
मनोऽमुना मे प्रसभं हि नीयते ॥९॥

निजप्रियास्याब्जविनिःसृतं वचो
निशम्य चिन्ताविकलो रघूत्तमः ।
तदीप्सिताद्विप्रसहस्रदूषिता-
दतर्कयत्तन्मनसोऽन्यथा गतिम् ॥१०॥

प्रिये किमेषा समुदेति भावना
त्वदीयचित्ते सुविचारपाविते ।
विरिञ्चिसर्गेऽपि किमीदृशो मृगः
कदापि केनापि पुरा विलोकितः ॥११॥

अथाङ्ग मन्ये भयभीतमानसे
तवेह दुःस्वप्नदशेयमुद्गता ।

त्वयान्यथा हा विमलाशये धृता
शुभेऽनवद्याङ्गि कथं कुकल्पना ॥ १२ ॥
वृथाग्रहो हेममृगे विमुच्यतां
क्व लभ्यते स्वप्नभवं हि वैभवम् ।
पिपासितो धावतु नाम विह्वलं
क्व लभ्यते यन्मृगतृष्णिकाद्वयम् ॥१३॥
वनेऽत्र मायाविनिशाचरैर्वृते
पुनर्न शक्या सदसद्विचारणा ।
प्रिये त्वमित्थं विजहीहि चिन्तनं
वृथाप्रयासेन कृतं मनीषिणाम् ॥१४॥
स्वजीवितेशेन वचः समीरितं
निशम्य लेभे न मुदं धरात्मजा ।
न वञ्चनीयास्मि वृथा प्रजल्पनै-
र्न साम्प्रतं बाल्यदिनानि तानि मे॥१५॥
न मानसं वल्लभजातसाध्वसं
मतिर्न मे वा मलिनप्रभा प्रभो ।
स्थितास्म्यहं जागरणे न निद्रिता
कुकल्पनाया मयि कुत्र सम्भवः ॥१६॥
ममाकृतिर्या हि विलोचनातिथि-
र्बभूव माया तु निशाचरोत्थिता ।
तथापि सा गच्छतु नाथ लक्ष्यतां
त्वदीयबाणस्य निवृत्तमर्म्मणः ॥१७॥
द्रुतं समुत्तिष्ठ विधेहि शीघ्रतां
शरासनं बाणयुतं कुरुष्व हा ।
निपातयेमं जविनं बलाद्विभो
न यावदेष क्रमतेऽध्वदीर्घताम् ॥१८॥
हतं मृगं बाणवरेण ते प्रभो
न यावदेनं पुरतो विलोकये ।
ममासवो भारसमत्वमागताः
शरीरतो यान्तु वियोगपद्धतिम् ॥१९॥

इति जनकसुतायां चारुताविश्रुतायां
कटुनिगदितवत्यां जीवितेश प्रति स्वम्।
परमदयितयासौ विप्रयोगाभिशङ्की
हतविधिलिखिताङ्कात्संप्रनष्टे कलङ्की॥२०

इति मारीचवधे प्रथमः सर्गः ।

---

[ द्वितीयः सर्गः ]

जनकजाप्रियमाचरितुं विभु-
र्मृगवधाय बभूव समुद्यतः ।
वचनमित्थमुवाच निजानुगं
*कुसहजं सहजं प्रति लक्ष्मणम् ॥१॥
अयि सहोदर भीमवनस्थितौ
दितिजराक्षसहिंस्रभयं महत् ।
इह सुरक्ष्यतमा मम जानकी
प्रहरता हरतापवता त्वया ॥ २ ॥
क्षणमपीह वियोगमशन्कुव-
न्नथ न यां दयितामहमत्यजम् ।
भवदरिंदमबाहुबलाश्रया-
दहिततो हिततोऽपि च सादृता ॥ ३ ॥
न भवता विजने परिहाय तां
स्वमतजीवितनुल्यसमादृताम् ।
क्वचन वत्स कथञ्चन गच्छतात्
वनभवान्नभवान्मनुते भियम् ॥ ४ ॥
मृगममुं कनकाभमभिद्रव-
न्नहमितो दयिताग्रहनोदितः ।
गहममाशु विशामि तदाक्षये
प्रसरता †सरताविरहाग्निना ॥ ५ ॥

---

* कुसहः = पृथ्वीभारसहनशीलः, तस्मात्सहेन जातम् । †सरता = सेविष्णौ रता = सीता ।

कपटवेषसमाहृतवल्लभा-
नयनयुग्ममिमं हरिणं हठात्।
निशितबाणहतं न करोमि चेत
क्व ममता मम तापकरे करे ॥ ६ ॥

भवति चेच्चिरता विपिनोदरे
मृगमनुव्रजतो मम वेगिनम्।
कुरु न चेतसि वत्स कुचिन्तनं
परिभवोऽरिभवो मम दुर्घटः ॥ ७ ॥

यदि बिभेति कदाचन जानकी
मदनुपस्थितिशोकखिलीकृता।
मम पराक्रमशंसि कथाव्रजै-
र्विरहितां रहितां कुरु तां शुचा ॥ ८ ॥

वच इदं प्रिय विस्मर मा क्षणं
जनकजा विजने न विमुच्यताम्।
खलबलापहृतेयमसाधना
भुवि दशां विदशां तनुते न काम् ॥९॥

मयि तवास्ति हि भक्तिरनुत्तमा
न हि ममात्र मनागपि संशयः।
कुरु सहोदर तां प्रकटीकृतां
कुसमये समये स्वजनं न भीः ॥ १० ॥

इति निगद्य वचोऽनुसरन् मृगं
रघुपतिर्वनमध्यमथाश्रति।
जनकजापरिरक्षणमादध-
द्विवलते बलतेजसि लक्ष्मणः ॥ ११ ॥

रामे याते जनकतनयामोदमातन्वतीत्थं
शेषांशेन प्रकटिततनुं देवरं प्रत्युवाच।
लोकेऽलभ्यं कनकहरिणं रामबाणावबिद्धं
वत्स द्रक्ष्याम्यहमधिकया तृष्णयाग्रे लु-
ठन्तम् ॥१२॥

इति मारीचवधे द्वितीयः सर्गः।

[ तृतीयः सर्गः ]

चलितः परिहाय जानकीं
विपिने लक्ष्मणबाहुरक्षिताम्।
हरिणं पवनातिगं जवे
सहसा दाशरथिर्व्यलोकयत् ॥ १ ॥

नयनातिथितां नयन्नमुं
हृदि मोदं भृशमाप्नुवन्मुहुः।
निशितेषुविभूषितं व्यधात्
प्रजवाहिव्यतमं शरासनम् ॥ २ ॥

चपलोऽयमतीव तीव्रगः
प्लवने दर्शितदिव्यकौशलः।
रघुनन्दनकार्म्मुकस्थितं
विशिखं वीक्ष्य तिरोदधे जवात् ॥३॥

निजलक्ष्यविचित्रचातुरी-
मथ संवीक्ष्य विलज्जितः क्षणम्।
प्लुतिकर्म्मविचक्षणो विभुः
सपदि व्यातनुते स्म लाघवम् ॥ ४ ॥

सरसा हरिणं विदूरगं
निकटस्थं विदधे जगत्प्रभुः।
हृदि जीवितनाशसंशयं
प्रतिपन्नोऽयमगाच्च चिन्तनम् ॥ ५ ॥

कियती मम शक्तिरस्य हा
पुरतस्याज्जगदीश्वरस्य नु।
अथवा मरणोन्मुखस्य मे
सदसच्चिन्तनमस्ति निष्फलम् ॥ ६ ॥

इति निश्चितमृत्युना दधे
कपटाविष्करणे मतिः स्थिरा।
अमुना प्रभुवञ्चने कला
महती नीचतमा समाश्रिता ॥ ७ ॥

पुरतः प्लुतिलाघवं दध-
 द्धरिणोऽयं बहुधा निरीक्ष्यते ।
मुहुरात्तकलासमाश्रयः
 सहसा नेत्रपथात्तिरोहितः ॥ ८ ॥
सविधे क्षणमेव संप्लव-
 न्नतिदूरे विचरन् क्षणान्तरम् ।
विदधे रघुनन्दनश्रमं
 निजमायाबलतः कुरङ्गमः ॥ ९ ॥
रजनीचरमायया हृतो
 भवमायाप्रभुरात्तकार्म्मुकः ।
निदधे हृदि निश्चयं हठा-
 न्मृगनीचस्य वधाय वेगतः ॥ १० ॥
कठिनं पृथुसारसत्कृतं
 विशिखं हा यमराजसोदरम् ।
प्रमुमोच रघूत्तमो जवा-
 च्चलजीवोन्मथनाय रक्षसः ॥ ११ ॥
वियदङ्गणदर्शितप्लुतिः
 सहसा लक्ष्यशरीरमाप्नुवन् ।
विदधे गतजीवितं मृगं
 प्रहितस्तेन शिलीमुखोत्तमः ॥ १२ ॥
पतनावसरे महीतले
 हरिणो लब्धनिजाकृतिः क्षणम् ।
प्रिय लक्ष्मण हा हतोऽस्म्यहं
 स्फुटवर्णं निजगाद सम्भ्रमात् ॥ १३ ॥
दशकन्धरकार्य्यसिद्धये
 प्रददौ जीवितमात्मनो हठात् ।
इयमेव सुसेवकोचिता
 सरणिर्नीचतमेन दर्शिता ॥ १४ ॥
पिशिताशनयोनिमेत्य किं
 सुलभो धर्म्मचयः शरीरिणाम् ।
न तथापि गतिर्दवीयसी
 घटते चेदिह साधुदर्शनम् ॥ १५ ॥
प्रभुदर्शनजातवैभवाद्-
 गतिरेतस्य महत्तमा स्थिता ।
महिमास्ति सतां बहिष्कृतो
 वचसां सत्यमहो बुधेरितम् ॥ १६ ॥
न नरो न च राक्षसोऽधमः
 प्रभुसंदर्शनपूतविग्रहः ।
भवतीह गतेरगोचरो
 वचनं तथ्यमिदं हि भाति मे ॥ १७ ॥
मायामृगं सपदि तत्र निहत्य रामः
प्रत्याययौ जनकजापरिपूतभूमिम् ।
हा हन्त दैवहतकेन विपत्तिसिन्धा-
वित्थं प्रतार्य्य सहसा विनिपातितोऽभूत्
॥ १८ ॥

इति परमानन्दकृते मारीचवधे
तृतीयः सर्गः ।

---

## मुद्राराक्षसविमर्शः ।

[ पूर्वतोऽनुवृत्तः ]

केवलमेतेनैव कतिपयनीतिनाटितकानि प्रस्फुरितानि यथाहि—

प्रथममज्ञातनामधेयं पत्रमेव राक्षसस्य परमसुहृदा शकटदासेन सिद्धार्थकद्वारा लेखितम् । यमपटच्छद्मच्छन्नेनानीतया मुद्रया मुद्रापितञ्च ।

शकटदासस्तु राक्षसामात्यस्य राजद्रोहिणो मित्रमिति कृत्वा शूलमारोप्यता-मित्येव विख्यापितचन्द्रगुप्तशासनश्चा-

णक्यः विज्ञापितभाविसिद्धार्थकेङ्गितान् कालपाशिकदण्डपाशिकादि गुल्माधिकारिणःशकटदासं शूलमारोपयितुमजिज्ञपत् सिद्धार्थकस्य दक्षिणाक्षिसंकोचसंज्ञासंग्रहणमात्रेण जीवनसंशयपदवीमारूढः शकटोऽमात्यसुहृद् सदैव तेन नगरात्पलायां चक्रे निजसुहृन्मुखावलोकनेन चात्मानं कृतकृत्यं मन्यमानो भूयोभूयः शकटः सिद्धार्थकमेव परमुपकारि मित्रं गणयन् मुहुर्मुहुः प्रशशंस। सिद्धार्थकश्चात्मनीनमेव तथा बहुमेने। ततोऽपि किम्? ततश्च सुहृत्प्रापणविषयकं पारितोषिकं ग्राह्यमित्युद्देश्यम्। चाणक्येन पूर्वमेव विचारितं यत् हततातोमलयकेतुरवश्यं राक्षसमतिपरिगृहीतो राक्षसं निश्चयवन्तं कर्तुमना आत्मनः पितृवत्त्वं विधित्सुस्तातेन गृहीतपूर्वाण्याभरणानि प्रदास्यति तान्येवाभूषणानि पारितोषिके गृहीतव्यानीतिसिद्धार्थकं नियुङ्क्ते। तेन किं भाव्यम्?

सैवाभरणपेटिका राक्षसनामाङ्किता सतीसहैवाज्ञातनाम्ना लेखपत्रेण मलयकेतुसन्निधौ सिद्धार्थकेन नेष्यते। आत्मानञ्च राक्षसानन्यसेवकंब्रुवँश्च सिद्धार्थकः आत्मानं राक्षसाच्चन्द्रगुप्तं प्रतिप्रेषितमुक्त्वा सर्वं च लेखार्थं वाचिकं विपरीतं व्याचिख्यासन् मलयकेतोर्मनसि कुलूताद्यधिपतीनां चित्रवर्मादीनां पञ्चानां राज्ञां तद्धनादिजिहीर्षया प्रत्यर्थित्वमुदाजहार। अतो हि सम्भवतः पञ्चशत्रवः परिहार्यारिमलयकेतुद्वारैव घातिता इति पूर्वोक्तन्यायानुकूलाचरणतो भारतसम्राजश्चन्द्रगुप्तस्य पूर्णतया दृढीकरणं फलम्।

तातवधामर्षितेन पर्वतकतनयेन,चाणक्येन तातो हत, उतअमात्येनेति संशयासरणिमनुसरता, "नगरात् केवलं" राक्षसप्रयुक्तविषकन्यया मित्रं पर्वतकं घातितवानितिदोषमुत्थाप्याहंसनिकारं नगरान्निर्वासितोऽन्यतश्च कदाचिज्जीवलोका-देवेति चाणक्यनिन्दापुरःसरं क्षपणकभाषणमाकलय्य राक्षसं प्रतिपत्युद्भूतबहुरोषेण कटकान्निष्कामस्व गृहीतमुद्रः सिद्धार्थकोऽग्राहि। तद्वचनादेव चात्मनो मुख्यसेनापतयः पञ्चकौलूताद्यधिपतयः जघ्निरे स्वाश्रयं च सर्वथैव समूलमुच्छिच्छिदे।

## भागुरायणः।

चाणक्यो हि मतिमान् पर्वतकघातानन्तरं तत्पुत्रं समाश्वसयितुं कमपि तत्सुहृदं निजबुद्ध्या नियोजयामास भागुरायणनामानम्। स च पूर्वगृहीतार्यचाणक्यादेशः आलोचितसकलनीतिमार्गो, रक्षणीयाः राक्षसस्य प्राणा इति निश्चितोद्देश्योऽन्ततश्च निगृहीतव्योऽयं पर्वतकपुत्रोऽपीति कृतमनस्कः शनैः प्राप्तसौहार्दो मलयकेतोः साचिव्यं जग्राह। मलयकेतुश्चानन्योऽयं सुहृदापत्तिरक्षणश्रमो भागुरायण इति समर्पितसकलराज्यतन्त्रव्यवहारस्तस्मिन्नेव भाविनं भारं न्यासांश्चक्रे न कथंचिद्राक्षसमतिपरिगृहीतश्चन्द्रगुप्तं विरुन्ध्यान्मलयकेतुरिति संशयितः गोपं गोपं रक्षासवचनानि क्षपणकवचनानि

सिद्धार्थकवाचिकानि च विपरीतान्येव व्याख्याय राक्षसमेव पर्वतेश्वरघातिनं विनिश्चित्य तं च विश्वास्य राक्षसमलयकेतोरन्तराले वैरमचीकरत् । ततश्च सर्वतः साहाय्यपराङ्मुखो मलयकेतुर्भागुरायणेन भद्रभटादिसाहाय्येन निगृहीतश्चन्द्रगुप्तसकाशं निन्ये ।

पूर्वं च पिता ते चाणक्येन घातितः इति पुष्पपुराद्दूरमेव मलयकेतुर्भागुरायणेनापवाहितः पश्चाच्च भदन्तवचनादनवस्थापितचित्तः भक्त्या नन्दकुलानुरागदृढया तद्वंशीयमेव कदाचिच्चन्द्रगुप्तं वृणुयादमात्य इत्युपेक्षितराक्षसः निजसहायकहननपुरःसरं निराश्रयः स्वयमेवविवेकमतिशून्यः पराहत, इति चाणक्यनीतिलताजालगहनत्वं बोध्यम् ।

## भद्रभटादयः ।

भद्रभटादयोऽपि चन्द्रगुप्तराज्यविशेषाधिकृता नव पुरुषाः कृतदोषानुविद्धाश्चाणक्येन मलयकेतुमाश्रयिताः "एते वयं देवस्य कार्येऽवहिता स्म इति" विशेषगुप्तप्रतिज्ञानुसारं भागुरायणबलेन शत्रोर्बलमधिचक्रुः ।

चन्द्रगुप्तं प्रति च सहोत्थायिन एते भद्रभटादय इति विविधदोषदर्शनपुरःसरं निग्रहानुग्रहायोग्यानां युक्तमेवापसारणमिति सर्वं निर्देशयामास ।

भागुरायणभद्रभटादयश्चाणक्येन दत्तसंकेताः हतेषु चित्रवर्मादिषु सहायकारिराजवर्गेषु सहायहीनमरिभूतं मलयकेतुं निगृह्य चन्द्रगुप्तचरणमूलं प्रापयामासुः ।

## चाणक्यः ।

इयति काले चाणक्यश्च मतिमान् नीतितन्तुविस्तारोर्णनाभः वशीकृतसकलराजमण्डलः सामादिविविधोपायोन्मूलितनन्दान्वयश्चन्द्रगुप्तराज्यं च दृढीकर्तुमना, मनागन्तर्ध्यातनीतिमर्मा, परममर्मान्वेषी, विविधदेश-वेष-भाषासंचारवेदिपुरुषविभक्तसकलनयवर्त्मा, किं चकारेति सर्वतोभद्रमवलोच्यतेऽस्माभिः । ये येहि विश्वासभाजनयोग्यपुरुषा नियुक्ताः पूर्वनिर्णीता एव ते । तदपि चाणक्यस्य अपारमतित्वं द्योतयति । तेषां कार्याणि च यथासमयं विहितानि फलप्रदानि जातान्येवेति नात्र विशेषवर्णनावश्यकता ।

चाणक्यस्य सर्वनीतिविस्तारे सत्यपि स्वयं समुद्भाविते कथमिव शत्रुनीतिप्रयोगपरिहार इति कथंचिदालोचनीयं रमणीयं च प्रतीमः ।

## राक्षसः ।

राक्षसस्तु नन्दस्य प्रथमामात्यः विजिते कुसुमपुरे येषामभीष्टं यशः इति व्याघोषयन् नन्दानुरक्ताः प्रकृतीरात्मपरवशाश्चकार । कुसुमपुरे चाणक्यं चन्द्रगुप्तं चाभिद्रोग्धुं चन्दनदासधनसेनप्रमुखाणि कानिचिन्मित्राण्यनन्यमित्राणि नियोजयामास ।

स्वयं कालान्तरे मलयकेतुसमीपं बलसाहाय्यमूरीकर्तुमुपासर्पत् । तत एव स्तनकलशप्रमुखं वन्दिजनं चन्द्रगुप्तचाणक्ययोरन्तराले विरोधमुपश्लोकयितुं राज्ञश्च "सद्यक्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत्किं नु लोकाधिकं तेजो बिभ्राणः पृथिवीपति" रिति नीतिबीजमुपक्षिप्य राजप्रासादप्रवेशनात्प्राक्कौमुदीमहोत्सवसमयं प्रतीक्षमाणो दारुवर्मादीन् विश्वस्तसूत्रधारान्नियमितयन्त्रतोरणादिसज्जीकरणे गुप्ततया नियोजयाम्बभूव । पूर्वोक्तरीत्या अभयदत्तं च चन्द्रगुप्तं गरलं पाययितुं नियुज्य शयनगृहे च भित्तिसुरंगायां राज्ञः शरीरमभिद्रोग्धुं कांश्चिद् गुप्तघातकानपि रक्षयामास ।

प्राप्तराज्यश्चन्द्रगुप्तो रमणीयं महोत्सवं लुलोकयिषुश्चाणक्यप्रतिषेधने च विकृतमन्युरागउत्तेजितोऽतोऽप्युपश्लोकयद्भिर्बन्दिपुरुषैः कृतकलहकोऽपिचाणक्येन, स्मृतिगुरुताप्रतिक्रियः आत्मानमेव तद्दोषभाजनमवलोक्यग्लानिपरः पुनरपि विनीत इव चाणक्यमेवोपशुश्रूषांचकार । ततो हि शत्रुप्रयुक्तवन्दिजननैष्फल्यम् ।

अभयदत्तो वैद्यस्तु पश्चाद्विवेचित एव । राजशरीरमभिद्रोग्धुमनसो गृहीतसक्तावयवयापि पिलिकापंक्त्या दाहं दाहं भस्मसात्कृताः । प्रवृत्ते च राजभवनप्रवेशे हतेऽपि राज्यार्द्धविश्राणनप्रतिज्ञाभाजने पर्वतके तपस्विनि तस्यैव कनीयान् भ्राता वैरोचकः अर्द्धराज्य तुभ्यं दीयत इत्यनुमतराज्यार्द्धाभिषेकः चन्द्रगुप्त इव वेषभूषाद्युपचारक्रियाभिः सत्क्रियमाणशरीरश्चन्द्रिकायामनभिज्ञातस्पष्टरूपश्चन्द्रगुप्तस्यैव गजवशामारुह्य बहुमानतोऽनुसृत्य सकलराजलोकः प्रविवेश महाद्वारम् । यावत्प्रविशति, दारुवर्माऽपि सहसैव तोरणपातनाय कीलकमाकर्षति परं अगणितसमयाऽवसरतया गजजवविशेषतया च पूर्वं हस्तिपक एव जीवितं जहौ वर्वरकश्च कनकदण्डिकातो यावदसिपुत्रिकामाकृष्य चन्द्रगुप्तं व्यापिपादयिषया वैरोचकमेव चन्द्रगुप्तमुपलक्षमाणस्तमेवासयामास । सकलराजलोकैश्च तौ द्वावपि लोष्टघातं हतौ ।

वैरोचकस्तु मामाय मन्यमानस्तत्प्रतिषिषेध परं चाणक्यः समयात्प्रागेव सज्जिततोरणं दारुवर्माणं शत्रुप्रयुक्तमाशङ्क्य काले योग्यफलमाप्स्यति दारुवर्मन्निति सर्वमितिकर्तव्यं पूर्वत एव चिन्तयामास ।

राक्षसस्तु यद्यपि शत्रुप्रयुक्तलेखमभिज्ञातवांस्तथापि "लेखोयं न ममेति नोत्तरमिदं मुद्रा मदीया यतः सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत्कथ"-मित्यादिसंशयदोलामधिरूढः तदानीमेव सिद्धार्थकहस्तान्मुद्रामभिगम्य नाशकत् सम्यक्तयाप्रतिपत्तुं नीतिमार्गम् । अतएव मलयकेतुरपि विरक्त एव तस्थौ ।

इतश्च चन्दनदासः सुहृद्‌शत्रुणा निगृहीत इति श्रवणविदारणं वचः कर्णाति-

धीकृत्य दूयमानहृदयः "किं गच्छामि तपोवनं न तपसा शाम्येत् सवैरं मनः, किं भर्तृ ननुयामि जीवति रिपौ, स्त्रीणामियं योग्यता । किं वा खड्गसखः पताम्यरिबले नेदं न युक्तं भवेत्, चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात्कृतघ्नं न चेत्" इति विविधकार्यचिन्ताचक्रचञ्चलः कथं कथमपि जीर्णोद्यानमागतः स्मृतपुरातननिजसाचिव्यसमयोदीन इव स्वयमेव चाणक्यचरणे निचिक्षेपात्मानम् शूलमारोढुं सज्जं चन्दनदासञ्च यावत्पश्यति तुरणहृदयः पश्चात्सर्वानेवात्मीयान् जीवसिद्धप्रभृतीन् परकीयान् विजज्ञे । आः, करतलगतोऽयं राक्षसो मन्त्रिबृहस्पतिः । चाणक्यश्च विविधप्रमाणादिविनयक्रियाभिश्चन्द्रगुप्तस्य साचिव्यमनुनीय साधितवान् निजमुद्देश्यम् ।

इदमेव चाणक्यस्य परोपकारित्वम् ब्राह्मणत्वम् नीतिमत्वम् प्रजापालकत्वम् यद्ब्राह्मणायमानसद्दृशाब्राह्मण्यकर्मकलुषितं नन्दमुद्धतनृपं मूलत उन्मूल्य प्रजायै चन्द्रगुप्तसदृशं धर्माविरुद्धं राजानं प्रतिष्ठाप्य राक्षससदृशं मन्त्रिबृहस्पतिं सन्नियोज्य सकलमपि भारतराज्यं भूयोभूय उज्जीवयामास । अन्यथा नन्दसदृशं भूयांसः पापा वसुधामेनां वृथैवप्रादुष्युरिति ।

धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ।
गीता ।

कश्चित् ।

---

## श्रीकृष्णप्रशस्तिपञ्चदशी ।

ब्रह्माण्डगात्रो रविचन्द्रनेत्रः
प्रभञ्जनः प्राण इलाङ्घ्रिरूपः ।
विराडयं प्राक् प्रविराजमानो
वन्द्यो न वन्द्यस्य हि कस्य वन्द्यः ॥१॥

आनन्दकन्दयदुनन्दनसुन्दराङ्घ्रि-
द्वन्द्वारविन्दमकरन्दमिलन्मिलिन्दः ।
तं वन्दनीयनरवन्द्यममन्दभक्त्या
वन्देऽरविन्दनयन नयनन्दिताङ्गम् ॥२॥

दयालवः प्राणिषु सौख्यहेतवः
समस्तसंसारहितं चिकीर्षवः ।
भवन्ति वन्द्या नहि कस्य साधवः
सदा सदन्तःकरणप्रवृत्तयः ॥ ३ ॥

महात्मनां सच्चरितं हि गीयते
विगीयते दुश्चरितं दुरात्मनाम् ।
अलङ्कृतं सर्वजगन्महोदयैः
कलङ्कितं तच्च भवत्यघाङ्कितैः ॥४॥

महोदयानां दययोदितं जगत्
महायशोऽलङ्कृतसुन्दरं दरम् ।
निरीक्ष्य हृद्यं हृदयं दयावतां
वदावदानां प्रणयान्वितं न किम् ॥५॥

न कं स कंसद्विपदेपमानवं
नवं नवं साधु विनीय मुन्मयम् ।
स्वचित्रचारित्र्यपवित्रिताकृतिः
कृती कृतीन्द्रं विदधौ बुधेश्वरः ॥६॥

नयेन सोऽयं विनयेन नीतिमान्
प्रजाः प्रजेशः प्रबभूव भूपतिः ।
प्रजाप्रियः प्राणयितुं न किं तदा
तदातनीर्नूतननूतनैर्गुणैः ॥७॥

महीमहेन्द्राद् वसुदेवनन्दना-
न भूभुजो ये नहि भेजिरे भयम्।
विपत्तपत्ताश्रितभूभुजां भुजा
भुजावलेनायमखण्डयन्मुहुः ॥८॥
बलीन्द्रकन्दर्पसुदर्पहारिणा
विहारिणा केसरिणा मुरारिणा।
रणाङ्गणे वैरिमृगाः कदर्थिताः
कदर्थिता नैव सदर्थिता कदा ॥ ९ ॥
सदर्थिकल्पद्रुम एष नन्दनो
न नन्दनस्थोऽपि ननन्द सोऽर्थिनम्।
तमस्तमस्सार्थमनर्थपातिनं
त्विषामिवेशस्समपातयत्स्वयम् ॥१०॥
पटीयसीं यस्य विमृश्य शेमुषीं
दवीयसी भूर्यविमृश्यकारिता।
तदारिबुद्धिं समुपेत्य वाञ्छितां
स्ववाञ्छितं क्रीडितमाततान सा॥११॥
यदीयतेजःकिरणास्तमः किरं
किरन्ति दूरं स्म भयङ्करा अरिम्।
अशेषभूमण्डलचारिणोऽरयो
रयोत्तमं प्राप्य न बभ्रमुर्न किम् ॥१२॥
बलीयसो यस्य यशोलिनर्त्तकी
सहास्यलास्यं नु वितन्वती सती।
सतीजनानां हृदयं दरादरं
पुरः पुरः सा प्रससर्प कुर्वती ॥१३॥
समं समागम्य सरस्वती स्वयं
द्वयं सदा श्रीश्च मुदापि चञ्चला।
परस्परं प्रेमपरम्परां परां
वितन्वदेतं समसेवतेश्वरम् ॥ १४ ॥
अमन्दमानन्दकरीं गिरां झरीं
झरीं सुधानामपि तां सुधाकरीम्।
निशम्य गम्भीरमनोरमामिमां
न मोहमापन्मनुजोऽस्य कोऽपि किम् १५

वृन्दावनगुरुकुलवासी
—मेधाव्रतान्तेवासी।

---

## चन्द्रभूषणोपाख्यानम्।

( पूर्वतोऽनुवृत्तम् )

बहुमन्यसे स्वधर्मानुष्ठानम् प्रत्युपकरोषि पूर्वोपकारिणम् सुहृदं अपि पलायसे भुजगेभ्य इव चाटुकारिभ्यो मृत्योरिव स्वार्थपरतायाः। अपि बिभेषि परलोकादपत्रादाच्चाऽपि संवरीतुमीशोऽसि लोभहतकमथाऽस्ति ते किञ्चिदकृत्रिमम्मित्रं यस्त्वां वारयेदसत्प्रवृत्तेः, अपि जानासि सत्यभाषणार्जितान् दिव्यलोकान् अपि शृणोषि पठ्यमानानि स्वयम् वाऽत्रलोकयसि पुराणानि कुतोऽथवेदृशानाम् प्रश्नानान्त्वय्यवकाशः यतः साम्प्रतमेवायातोऽस्यवगाह्य पुण्योदकाञ्जन्हुतनयान्नह्यधार्मिकजनदृक्पथमवतरति सा देवी तदलं चैवं विधेन प्रलपितानाऽभूमिरस्मि सम्प्रति पैशाचीं योनिमापन्नो धर्मानुष्ठानस्य तत् प्रकृतिमेवानुसरामि।

अहं हि पूर्वे जनुषि अस्मिन्नेव जनपदे कस्मिंश्चिद् दुर्गते कुले लब्धजनिरधीताङ्गलभाषः परं पाण्डित्यमुपगतश्चाटुकारितायां विपुलमर्थमन्विच्छन्नितस्ततो भ्रमन्नाऽतिदूर एव जन्मभुवोऽलब्धक्लिमप्यन-

धिगतलोकव्यवहारतत्त्वमतितरां मुग्धमपरिपक्वबुद्धिमनेकभृत्यपरिवारमपि असहायं सम्पन्नमपि विवेकशून्यतयाविपन्नमनोरथम्महाकुलप्रसूतमचिरावाप्तविपुलविभवयोगक्षेमपर्याकुलीकृतात्मानङ्किमपि युवानम्, तमासाद्य यौवनारम्भसमुचितमकरकेतनप्रसरयोग्यताम् विज्ञाय तदीयसर्वस्वहरणकृतोद्यमो मन्मथव्यसनमस्मै समुपास्थापयम्, मैरेयपानपरवशमानसश्चैनमकार्षमत्युक्तिसाराभिरहर्दिवं स्तुतिभिरस्तौषम् सचानास्वादितपूर्वविषयोपभोगमुदितमना मनागपि न मे दुरभिसन्धिमज्ञासीत् नापि मयापह्रियमाणमात्मवित्तमवेदीत् न चैतावतापि विपुलेनाऽहमर्थलाभेन समतुष्यम् कथं नामैवं प्रवृत्तस्य मेऽर्थोपार्जने न कोऽपि प्रत्यूहः स्यादित्यचिन्तयम् साधवो हि परोपकारप्रवृत्ताः कदाचिदस्मै चेद्धितमुपदिशेरन् व्यर्थोद्यमस्तर्हि भवेयमिति शङ्काऽऽकुलीकृतोहर्निशं शर्म्म नाध्यगच्छम् । स च सरलहृदयोऽजानन् मम दुराशयम्मयि हितबुद्धिरभूत्, अयोजयच्च मां योगक्षेमकर्मणि, मयि न्यस्तभारश्च हिताहितन्नाबुध्यत्, एवमवाप्ताधिकारोहमवामानयन्द्विजान् देवकुलम् प्रातारयमर्थिजनान् समतापयम् भृत्यवर्गमपावदं सज्जनान् अत्रासयङ्कुलीनानुदवेजयंधार्मिकानभ्यभूवमुपस्थायिलोकम् प्रायोजयं कुवाक्यान्यद्विषम् लोकहितप्रवृत्तानवञ्चयं मन्दमतीनपीडयन्दुर्गतानतर्जयं यतीनभर्त्सयम् महात्मनोऽच्छिन्दं ब्रह्मवृत्तीर्न्यवारयम् धर्मकार्याणि उपाहन्धर्मभीरूनच्छेदयन्तरूनित्येवमुत्पथप्रवृत्तस्य मे किमपि अकर्तव्यन्नाम नासीत् यतो राजपुरुषपरितोषाय घातिता गावो वन्धकीभावमुपनीताः स्नुषा जामयश्च ।

मम हि अधर्ममभ्यसतः सन्ततिरवर्द्धताऽधिकारलाभश्चाजायतैश्वर्यमुपावोयताऽर्थाश्चोपातिष्ठन्त ? न च दैवोपहतधीरचिन्तयम् अस्य दारुणं परिणामम् ।

अथातीतेषु पञ्चमेषु अब्देषु परिपाकमुपगच्छत्सु च ममाऽनयेषु कश्चिद्दारुणो व्याधिरुदपद्यत, कृमयश्च ममाऽङ्गेष्वजायन्त पूतगन्धितया चिकित्सकैः परिवारजनैश्च परित्यक्तो ऽज्ञासिषमसारताम्मर्त्यलोकस्य जिजीविषुश्च भूयोऽभक्षयमभक्ष्याण्यपामपेयान्यकुर्वमकार्याणि तथाप्यहरहरवर्द्धतास्वास्थ्यमेवमुपक्षीणासु शक्तिषु विनष्टेष्विन्द्रियार्थेषु कार्श्यमापन्नेषु गात्रेषु प्रशान्ते जाठराऽनले प्रवृद्धे च शूले पञ्चत्वमयाम् । बान्धवाश्च ममानयसन्तप्ताः परित्यज्य मां गतासुं शय्यायामर्थरक्षाव्यग्रमनसः समभूवन् । एवमग्निसंस्कृते वपुषि अतियातेषु द्वादशाहेषु वैवस्वतभटैर्नियन्त्रितः प्रास्थामन्तकालयम् । न च तात, सन्ति सुलभास्तादृशाः शब्दाः यैस्तत्र दृष्टोऽर्थोऽनुभूताश्च यातनाः शक्नुयामाख्यातुम्, श्रुताश्च पुराणेष्वायुष्मता तास्ताः कथाः पितृलोकमार्गस्य, याश्चाश्रद्धानैरलीका मन्यन्ते, न च तासु अणवपि मामावगच्छामि यदसत्यं स्यात् नातः

प्रसङ्गेऽत्र पुनरुक्तवर्णने तथाऽपिसादृश्य-
माश्रित्य लौकिकानाम्भावानाम् यतिष्ये-
ऽवश्यं वक्तव्यमर्थमुपवर्णयितुम् । यथाह्य-
र्णवङ्कतास्तरयो वात्याऽभिभूताः सुदूर-
मुत्सार्यन्ते प्रवृद्धवेगाश्च शिलोच्चयापात
चूर्णिता विपद्यन्ते एवं याम्यपथं प्रतिपन्ना
वाताहता ग्रहनक्षत्रताराऽऽहतिनिष्पेषि-
ताङ्गा भृशमायास्यन्ते स्पृहयन्ति ते
जीवात्ममात्रशेषाः पाञ्चभौतिकाय कायाय
यतस्स हि स्पृष्टमात्रो विशीर्यते विशीर्णे
च तस्मिन्नुपशाम्यन्ति घातादिसमुत्थाः
सर्वाः वेदनाः न चात्ममात्रशरीराणां
याम्यमार्गपथिकानां तथाविधो विद्यते
पीडोपशमः ।

एवमनुभूयावाग्गोचराः क्लेशपरम्पराः
परेतभर्त्तुरादेशादवाप्य पैशाचीं तनुमनु
विचरामि मर्त्यलोकम् उदन्वन्तमासाद्या-
ऽपि नोपलभे शान्तिमुदन्यायाः क्षुत्परीत-
श्चाऽऽहारसामग्री लब्ध्वा तत् प्रतीकर्तुं
नो पारये । एवमिमं सुवाससं गंधतैलाक्त-
शिरोरुहन्तरुणमवलोक्यैनमगृह्णाम् अलब्ध-
मनोरथश्च आत्मसुखावाप्तौ अस्य पित्रोः
बान्धवानाञ्च दुःखभूरभूवम् प्रकृतिरिय-
मस्याः पिशाचयोनेर्यदन्योपतापे तुष्टिरि-
तरसुखे च दुःखमुत्पद्यते किन्तु सुरापगा-
स्ननापूतकायस्य भवतोदर्शनाल्लब्धपूर्व-
जन्मस्मृतिरनुतपामि साम्प्रतमात्मदुश्च-
रितानाम्, न भूयःक्लेशयिष्यामीमं जनमरण्ये
गिरिगुहासु वा सुखं वत्स्यामि सहिष्ये
च सर्वमथाहमापराधजं दुःखञ्च वाऽनिमि-
त्तमाकुलयिष्यामि किमपि कुलमियं हि
मे बुद्धिरधुनैव भवत्सम्पर्कादुदिता इत्यु-
पकृतमार्येण किन्तु नैतावता कार्यसिद्धि-
मनुपश्यामि भूयश्चाऽवशिष्यते कर्तव्यम् ।
अथ यदि मम दुर्दशोदन्तश्रवणात् सञ्जा-
तकरुणोऽसि मयि, अवैषि वा विपन्नोद्धा-
रकर्मणि परमं धर्मं प्रभवसि वा प्रतिज्ञा-
न्निर्वोढुं तद्गच्छाऽन्वेषयोदारप्रकृतीन्
महानुभावान्निवेदय मम विपद्वृत्तान्तं
प्रसादय च तान् विनीतभावेन यद्यनुगृह्णी-
युस्तेमं निवापञ्जलिदानेन निर्मुच्येयमह-
मस्याः पापयोनेः तदलम्बिलम्बेन गृह्यतां
देशाटनव्ययपर्याप्तोऽर्थराशिः स्वस्थो वः
सूनुरित्युच्येतामस्य पितराविव्युदीर्य
दक्षिणं हस्तमुदधरदुद्धृते च करेन्तरिक्षात्
पञ्च शतानि स्वर्णमुद्राः प्रापतन् इत्थम-
द्भुतघटनादर्शनविस्मितो याम्यपथापन्न
यातनाश्रवणखिन्नमानसोऽर्थलाभसञ्जाता-
मेदोऽविश्वसन्निंद्रियार्थे स्वप्नमिवेमं मन्य-
मानः प्रमृज्याऽक्षिणी सर्वतोऽवलोकयन्
त तरुणमात्मानञ्च मुहुरपश्यम् । स च
स्मयमानः संचित्य ताः स्वर्णमुद्राः अनि-
च्छितोऽपि मे पाणौ न्यधात् विस्मितञ्च
मां विज्ञाय शनैरभ्यधाच्च किमिति महा-
भाग जडीकृतोऽसि साम्प्रतमुचितैव
वाऽदृष्टलोकपारावारस्य तवेदृशो दशा
यतोऽहमपि न श्रद्दधे प्रेतत्वे नापि व्यश्व-
सन्तथाविधासु कथासु किन्तु तेनाविश्वासे-
न तया चाऽश्रद्धयाधुना न किमपि साहाय्यं
क्रियते तदलञ्चिन्तया विचित्राणि नाम

विधेर्विलसितान्याश्चर्यमयो हि जीवलोकः क्व च ते किंविधाश्च महात्मानो येमामुद्धर्तुमीशाः इति तु पूर्वदुश्चरितविभ्रष्टपरिज्ञानस्याऽचहितस्याऽपि मे स्मृतिपथमाधिरोहति तथाप्येष मे निश्चयो यत्ते नातिदूर एवान्वेष्टव्याश्च महात्मानस्सदैव चैकाहारविहारशीलाः परस्परानुरक्ताः द्विषत्स्वपि कृपालवः सहैव सर्वमनुतिष्ठन्ति आकृतिरेव पुण्यभाजनानाञ्चमत्कारिणी दृष्टमात्रैव हरति हर्षयति च मनांसि मनस्विनान्तद्गच्छ समीहितसिद्धये शिवास्ते सन्तु पन्थान इत्यभिधाय मां व्यसर्जयत् ।

अथ वारुणीसंगापयातद्युतिषु नक्षत्रेषु कामुकेषु च तामरसकान्तिहारिवदनायां खण्डितायामिव पुरन्दराशायाम् सुरापगाप्रवाहसंभिन्नपारावारपयः पूररुचिमुषि शवलधूसरे गगनमण्डले सुरगणपरिपीताऽमृतसारतया पाण्डुभावमापन्ने शशिनि नीहारावरुद्धमुखदिक्चक्रवाले सन्ध्योपासनव्यापृतेष्वनूचानेषु दुह्यमानासु गोषु मुच्यमानेषु च पयःपानलोलुपतयाऽसकृत् कृतहम्भावेषु वत्सेषु शयनादुत्थाय प्रबोध्य च परिचारकान् निर्वर्तिताऽवश्यकक्रियोभिवाद्य पूर्वदिवसदृष्टौ जरद्दम्पती तनयस्वास्थ्योदन्तविनिवेदनेनाभ्यनन्दयम् । कृतज्ञतापरवशहृदयतया प्रस्थाननिषेधोन्मुखमानसौ च तौ ज्ञात्वा सविनयमेवमभ्यधाम्, महानुभावौ नातः परम्प्रासयिष्यत्ययं पिशाचहतको वः पुत्रकन्तदपसार्यतां मानसं दुःखमर्चयतन्देवगणाम्मानयतम्भगवतो ब्राह्मणाननुजानीतं माङ्कार्यशेषसिध्द्यै येन नैवम्विधानिष्टघटनाभूमिर्भूयो भवेद्भवत्कुलम् इति प्रलोभनया कथङ्कथमपि गृहीतगमनाऽनुज्ञो भृशमालिङ्गितः स स्नेहमाशितो धूमयानावमोचनस्थानमगाम् । ततश्च मध्यमप्रावहणिकं चातुर्मासिकङ्गमागमपत्रं क्रीत्वा यानाधिरोहणावरोहणयोः स्वाच्छन्द्यमुपगम्य दक्षिणान्दिशमेव प्रचलितो हारीणि समृद्धानि प्रसिद्धानि च पुराण्यवलोकयन्तत्रत्याऽभिज्ञजनमुखाद्द्रष्टव्यानि स्थलानि वस्तुजातञ्चाऽवगत्य साक्षात्कृत्य प्रख्यातजनसङ्गमैकतानमनाऽन्विष्यन्मुक्तरूपान्महात्मनो बहूनि दिवसान्यत्यवाहयम् ।

अज्ञता हि नाम कुतूहलबीजमिति नियमाऽनुसारेण प्रथमतस्तु सर्वोपि पदार्थराशिरदृष्टपूर्वतयाऽतितरां मामरमयत् तादृशञ्च दर्शनं बहुमन्यमानोऽहं प्रहृष्टमनाः पुरात् पुरमगच्छम् । अविश्रान्तोऽवितृप्तश्चापूर्वदर्शनस्य दिवानिशं पर्याटम् । अथैवं गच्छत्सु वासरेषु पृष्टप्रायेषु च तेषु तेषु भावेषु नगरान्तरेषु च भूयस्तान्येव समासाद्य चिरपरिचितानीव मन्यमानोऽनुभूतपूर्वां प्रीतिं नान्वभूवम् इत्येवं वैरस्यमापन्नेषु द्रष्टव्यविषयेषु अनन्यव्यापारो द्विगुणितप्रयत्नो महाजनगोष्ठीषु परिचयमुदपादयम् । तास्वपि क्वचन वाक्छूरान् क्वचिद्वस्त्रालङ्कारमात्रसम्पादितदेहशोभान् काऽपि मधुरभावि-

णोऽविनीतान्तःकरणान् परप्रतारणैकधियः स्वार्थलम्पटान्धार्मिकलिङ्गिनो दुराचारानर्थोपार्जनपटून् निन्द्यवृत्तीन् दुर्दान्तानसन्मार्गसाहसिकाञ्जनानासादयम्। अत्रासिषञ्च धूर्तबहुलतां नरसमाजस्याऽलभ्यतां साधुसमागमस्य विरलताञ्च सच्चरित्राणामित्येवमिष्टानवाप्तिखिन्नमना निवृत्ता पूर्ववस्तुदर्शनकुतूहलः पारदृश्वा प्रवासक्लेशानामभिज्ञो मित्रकुलविरहव्यथानाम् तत्त्वज्ञो जन्मभूमिस्नेहस्य परित्यक्तो धैर्येण गृहीतो व्याकुलतया विरहितः उत्साहेन कवलितो दैन्येनाऽविष्टश्चिन्तताऽऽलिङ्गितो वैमनस्येन निराशः सत्संगसुखानां कर्त्तव्यतान्नाध्यगच्छम्। अनन्यगतिश्चाचिन्तयन्नकोऽपि मेऽद्य फलमस्ति प्रवासचर्यायां तत् प्रतिनिवृत्य विनिवेद्य चेदं वृत्तान्तमेव प्रक्ष्यामि पिशाचहतकं क्व मयाऽन्वेष्टव्यास्ते निर्दिष्टरूपा महात्मानः क्व वा तमेवाद्य द्रष्टुं पारयामि यतो मत्प्रस्थानदिवस एव परित्यक्तस्तेन स तरुणः कथ वा शक्यतेऽन्यत्राऽन्वेष्टुमव्यक्तमूर्तिस्तादृशो जनः इत्येवन्दोलाधिरूढबुद्धिरपि बन्धुस्नेहयन्त्रित उदङ्मुखो यात्रामरोचयम्।

अथाऽतिक्रान्ते मध्याह्ने समाप्तकल्पे च तृतीयप्रहरे यानस्थ एव दक्षिणोत्तरप्रसरां इतस्ततो वृक्षततिमण्डितनितम्बभागां तृणशून्यशिखरप्रदेशां अत्युन्नतया वलाहकाधिमस्तकां त्रिपुरारितनुमिव दुर्गाक्रान्तां हारिणीमनलंकृतां गिरिपरम्परामपश्यम्। तदीक्षणतरलितहृदयश्च यानादवरुह्य बहिर्निष्क्रम्य प्रावहणिकान् गिरिदुर्गदर्शनोपायमप्राक्षम् ते चाऽशक्यमिदमधीशाऽनुमतिमन्तरेणेत्युक्त्वा पथिकाह्वानविधुराः परस्परं कलहायमानाः लब्धवृत्तयश्च क्रमशो गन्तुमारभन्त। अहमप्येकस्मिन् भाण्डपरिच्छदानुचरान् आरोप्यान्यस्मिन् स्वयमारुह्य शनैर्गच्छन्नध्वनि भूयस्तमेवार्थमुद्दिश्य यन्तारमवादिषम्? भद्र, अपि शक्नोषि मां इमं गिरिशिखरस्य दुर्गं प्रापयितुमपि वा जानासि कञ्चिदधीशानुमति लब्ध्युपायम् येनाहमेनं पश्येयम्। इत्युक्तः सोऽभ्यधात् यद्यस्ति कश्चिद्बन्धुर्मित्रं वा अस्मिन्पुरे तदा तद्द्वारैव शक्यानुमतिर्लब्धम् अथ यदि न कोऽपि तादृशो जनोऽत्र भवत्यायुष्मतस्तर्हि पुराद्बहिर्विहितवसतिमांगलदेशीयम् राजराजेश्वरीदूतमदृष्ट्वा न शक्यतेऽयं मनोरथो लब्धुमिति वदन्ननुक्तोऽपि पान्थशालाद्वारदेशे यानमयं प्रापत् अहञ्च तत्रस्थमन्यतमालयं भाटकेन परिगृह्य वस्तुजातम् भृत्यवर्गं च तत्रैव संस्थाप्य वस्त्रान्तराणि परिधाय पूर्वपरिचितं प्रावाहणिकं पारितोषिकदानेन प्रोत्साह्याऽङ्गलाधिकारिजनन्दिदृक्षुः क्षणादुदचलम्। मार्गस्योभयपार्श्ववर्तिनीमविच्छिन्नामारामपरम्परां पर्यालोकयन् सार्द्धक्रोशमध्वानमतिवाह्य त्वरितगतिरुद्यानहृदयवर्तिनमाम्रतरुपरिक्षिप्तमतिमृदुलशाद्वलस्थलवलयितमुच्छ्रितध्वजपरिशोभितमिन्द्रगोपारुणपरिच्छदैः

पश्चाद्भिः प्रतीहारैराक्रान्तद्वारदेशमचिरात् प्राप्तोऽस्मि तदावासम् अथ प्रतीहारमाहूय तदन्तिकप्रहितेऽभिधानपत्रेऽतिक्रान्तेषु कतिचित्क्षणेषु पदाघातमुखरितसोपानमार्गोऽधरौष्ठविवरप्रविष्टधूमपाननलिको-ऽलक्तकप्रतिममुखवर्णोऽरिष्ठास्थिसनाभिनयनश्रोविकसितास्योऽवातरद्द्वितीयभूमिकायाः स्वयमेवाऽधिकारिजनः स च सर्वतोऽवलोक्य क्वासौ मद्दर्शनार्थी महाजन इति दौवारिकानपृच्छत् तदा कर्ण्याहमग्रतो गत्वा कृताभिवादनः स्वाभिजनं विद्याग्रहणमागमनकारणं च तेन पृष्टो व्याकार्षम् । तदाकर्ण्येषन्म्लानवदनो भूमिमवलोकयन् मन्दान्तरम्मामभाषत् महानुभाव दुष्करं हि तत्कार्यं नाम यत्कृते समायातोऽसि मां द्रष्टुन्तथाऽपि साम्प्रतमेवाऽधिगतपुरान्तरगमनाज्ञो यात्राप्रतिविधानव्यग्रतयाऽनीशोऽस्मि भवदभिलषितार्थसम्पादनस्य तदिदं क्षन्तव्यम्भवतेत्युक्त्वा व्यरंसीत् सम्पीडय च करेण कामं करं ससंभ्रमोगर्भगृहं प्राविशदहञ्चेषत्करेष्वपि कार्येषु सिद्धिमलभमानो दैवप्रातिकूल्याकुलितमानसः प्रतिनिवृत्य शून्येनांतरात्मना यानान्तिकमगाम् । तथाविधं मामवलोक्य विफलिताऽयासताञ्च विज्ञाय किञ्चित् त्रस्त इव यानेनेता मूकतां गतो जवेन गच्छंतमश्वं कशयानिस्तुदन् द्रुततरमवाहयत् । मार्गद्वयसंभेदमवाप्य मां व्यजिज्ञपदयं हि पश्चिमाऽभिमुखप्रवृत्तो मार्गः पत्तनदक्षिणद्वारं प्रापयति इतरश्च स एव येन पूर्वमायाताः तत् यदि रोचते महाभागाय तर्हि अनेनैव यथा पुरम्प्रदर्शयन् पान्थशालां प्रापयाम्यायुष्मन्तं अहञ्च चिन्ताव्याक्षिप्तचित्तस्तथैव प्रत्यपद्ये ।

अस्याऽपि पथः परिसरवर्तिनीमुद्यानततिमवलोकयन् एकं पल्वलमपरञ्च शुष्कं सरः समासादयम् । तस्य चतुर्दिक्षु प्रस्तरचूर्णनिबद्धां सोपानपङ्क्तिमीक्ष्यमाणः जलशून्यतया च किमपि खिन्नस्तद्दिदृक्षुः प्रवहणादवातरम् । सोपानपथेन तन्मध्यमवतीर्य जलाभावहेतुमन्विष्यन् किमपि नाध्यगच्छमत्राऽपि विफलोद्यमो यावत् प्रतिनिवृत्य यानमारोहम् तावदग्रतः समायान्तं शृङ्गाक्षिनासिकालाङ्गूलाग्रमात्रकृष्णेन हिमपाण्डुरोणाऽतिबृहत्ककुदलङ्कृतकायेन राजहंसच्छदमसृणलोभद्युतिना आपश्चाज्जानुलम्बितवालधिचामरेण नातिदूरकृशस्थूलकायेन नीलोत्पलच्छविरश्मिप्रोतनासिकेन घण्टाग्रैवेयकध्वनिमुखरितमार्गेणाऽध्वायासजनितफेनसनाथसृक्कणीकतया यशोराशिमिवोद्वमताऽतिक्रान्तशैशवेन द्रुतगामिना गोयुगेन उह्यमानम् सर्वशुक्लपरिच्छदं रथमपश्यम् तद्दर्शनविघ्नितयानाधिरोहणव्यापारो निर्निमेषेण च चक्षुषा तदधिरूढजन दिदृक्षविकसितपुण्डरीकवदनम् रक्तान्तलोचनमुन्नसं सुविस्तीर्णललाटतटमूर्ध्वपुण्ड्रतिलकितभालदेशन्धवलकचप्रायश्मश्रुराजिराजितं सूक्ष्मतनुवलक्षोष्णीषभूषितोत्तमा-

ङ्गं तारकितनभस्तलश्रियम् विडम्बयताऽष्टापदच्छविकुसुमविचित्रितेन मेचककौशेयकंचुकेन द्विगुणितश्रियं रक्तांतदशेन हिमकरशुभ्रेण धौतेन संवीतोद्गूढकायमपिञ्जरोद्गमशिथिलितक्वाचित्कावयवन्तामरसप्रभाभिरंगुलीभिरुपशोभिताग्रहस्तं स्मितमुखमतिगम्भीरमधुराकृतिम् सम्मुखासीनाभ्यां विनयावनताभ्यां बद्धाञ्जलिपुटाभ्याङ्गात्रदाढर्यातातिक्रान्ततरुणकेसरिमहोभ्यान्द्विजराजमिव।ऽङ्गिरसोशनोभ्यां युवाभ्यामुपास्यमानङ्कमपि महापुरुषमवालोकयम् । तद्दर्शनचमत्कृतश्च करधृतप्रवहणदण्डः सव्यचरणक्रान्तचक्रान्तप्रदेशोऽपयातेपि रथे स्फारिताक्षः तामेव दिशं विलोकयन् क्षणमतिष्ठम् । अथ तथाविधं मामवलोक्य विकसितास्यो वाहकस्त्वरितमवादीत् । आयुष्मन् फलितन्ते मनोरथद्रुमेण सिद्धश्च ते समीहितं तदल कालातिपातेनेहैव मार्गोपकण्ठवर्तिन्यारामे प्रयान्तमिमं महानुभावमासाद्य निवेदय आत्मनः कामम् । दृष्टे चास्मिन् सर्वं स्वयमेव सेत्स्यतीति यन्त्राप्रचोदितः पद्भ्यामेव दृष्टपूर्वपल्वलपूर्वतटनिविष्टमाराममगच्छम् । तत्र लकुचसहकारदाडिमकदलीजम्बूप्रभृतियथोचितसंनिवेशरामणीयकहृतमानसः शनैर्गच्छन् पुरतोऽचिरदृष्टतरुणद्वितयानुगम्यमानं मत्तवारणपदन्यासमितस्ततः कुसुमकुलं विलोकयन्तमुपवनमध्यमत्वरयाऽभिमुखं व्रजन्तं आरामपालोपनीतसुरभिप्रसूनादामव्यग्रहस्तमवसरप्रतीक्षकस्तमेव महानुभावमन्वसरम् ।

स च तत्र स्थितमहावीरमूर्तिं प्रणम्य विकीर्य च पुष्पाञ्जलिं प्रतिनिवृत्तस्तदासन्नवर्तिनि शाद्वलप्रदेशे आस्तीर्णेषु मञ्चेष्वेकतममासाद्य प्रथममुपासीने तस्मिंस्तावपि युवानौ पृथगेकैकशो मञ्चान्तरमाक्रामताम् ।

—गङ्गाप्रसाद शास्त्री ।

---

## नीतिमुक्तावली ।

श्रीकवि पण्डित विजयानन्दत्रिपाठिलिखिता

वन्देऽहम्परमीशानं
सच्चिदानन्दलक्षणम् ।
यः सृष्ट्वेदं जगज्जातं
पातुं च बहुधेहते ॥ १ ॥

जडोऽपि महतां सङ्गा-
न्महत्वं लभते ध्रुवम् ।
मृदंशः शुक्तिसंसर्गा-
न्मौक्तिकीभूय भासते ॥ २ ॥

उत्तमोऽप्यसतां योगा-
दसत्वं प्रतिपद्यते ।
अमृतं स्वातिपानीयं
भवत्यहिमुखे विषम् ॥ ३ ॥

शान्तोपि तपतां सङ्गा-
त्स्वगुणैः परिहीयते ।
ततायःपिण्डसम्पर्का-
उज्जलं शैत्यादिभिर्यथा ॥४॥

लब्धवर्णोना श्रयेता-
माहूतः परमन्दिरम् ।

तेजसा हीयते चन्द्रः
प्रविशन् सूर्य्यमण्डलम् ॥ ५ ॥
विद्या कुलवतां नूनं
विनयाय मदाय न।
सोऽपि चेज्जननी पुत्रं
हन्यात्तत्कं निवेदयेत् ॥ ६ ॥
आपन्नं दुर्जनं दृष्ट्वा
न दयेत सुधीः क्वचित्।
सर्पोहि बन्धनान्मुक्तः
प्राणानपहरेत् खलः ॥ ७ ॥
विज्ञः क्रूरं न सत्कुर्या-
द्दोषमेवावहेत्खलः।
भल्लातकोऽक्ष्णाविधूनो-
लुम्पेत्तज्ज्योतिरेव हि॥८ ॥
प्रकाशं मलिनः पश्यन्
दुःखी भवति दुर्मतिः।
तमस्तोमप्रियश्चौर-
श्चन्द्रिकाप्रसरं यथा ॥ ९ ॥
सज्जनैरपि दुःसङ्गा-
च्छूनं दण्डोऽनुभूयते।
दुष्टलौहस्य सम्पर्काद्
घनाघात इवाग्निना ॥१०॥
रूपवान्निर्गुणोपीह
गुणिभिः सह मीयते।
स्वर्णेन गुञ्जाप्रसव-
स्सुरूप इव सज्जनैः ॥ ११ ॥
सभायां खलु मूर्खाणां
शोभते न हि पण्डितः।
सभायां किल काकानां
राजहंस इवागतः ॥ १२ ॥

सहते महतां भारं
महानेव न दुर्बलः।
रसाले बध्यते दन्ती
नार्कवृक्षेऽतिभङ्गुरे ॥१३॥
न यत्र गुणगृह्याः स्यु-
र्न तत्र निवसेत् सुधीः।
पुलिन्दकानां पल्लीषु
चुल्ल्यां ज्वलति चन्दनम् १४
विदुषां सङ्गतिमृते
ह्युपदेशो न लभ्यते।
अकृत्वा गाहनं वार्धे-
र्नहि रत्नमवाप्यते ॥ १५ ॥
यस्मिन् प्रसन्ने न फलं
रुष्टे तु भयमुल्बणम्।
तं न सेवेत मतिमा-
न्नरं वानरसन्निभम् ॥१६॥
उत्तमो नीचसङ्गेऽपि
स्वभावं न जहाति हि।
यथा काकसभां प्राप्तः
कोकिलः पञ्चमं स्वरम् ॥१७॥
यः स्वयं व्यसनी सोऽन्यं
व्यसनान्मोचयेत्कथम्।
न सन्निकृष्टं शीतार्तं
नग्नः सुखयितुं क्षमः ॥१८॥
धनिनो विद्विषोपीह
जनाः कुर्वन्ति सत्क्रियाम्।
दुर्विधस्य न मित्रस्य
परमेतद्धनार्जघम् ॥ १९ ॥
प्रियंवदमपि क्रूरं
मतिमान्न हि विश्वसेत्।

विश्वास्य वीणया व्याधा
विध्यन्ति हरिणं शरैः ॥२०॥
शतधोपकृतोपीह
दुष्टो नोज्झति दुष्टताम्।
सिक्तोऽपि निम्बः शतशो
मधुभिः कटुतामिव ॥ २१ ॥
अधनो नहि सत्कारं
लभते स्वगृहेष्वपि।
धनवान् परगेहेऽपि
पूज्यते देवदेववत् ॥ २२ ॥
सीदत्यतुष्टः स्वगृह
त्यक्त्वा परगृहं भ्रमन्।
नारिकेलफलैस्तुण्डं
हन्त्याम्रविमुखः शुकः ॥२३॥
स एव धन्यो दीनोपि
क्षुद्रं प्रार्थयते न यः।
सारङ्ग एव हि कृती
शक्राद्योऽन्यं न याचते ॥२४॥
लघुनैव प्रयत्नेन
बुधोऽरीन् वशमानयेत्।
प्रवाहो हि जलेनैव
भिनत्ति गिरिदुर्गमम् ॥२५॥
प्रियभाष्यपि नो दुष्टो
विश्वास्यः कर्हिचिद्बुधैः।
मिष्टवागपि सर्पान् हि
विनाशयति बर्हिणः ॥ २६ ॥
दुर्बला अपि भूयांसो
रुन्धन्ति प्रबलानपि।
तृणैरपि समेतैर्हि
बध्यन्ते मत्तदन्तिनः ॥ २७ ॥

भूयांसोऽप्यबला नूनं
प्रबलान् हन्तुमक्षमाः।
जम्बुकैर्मिलितैश्चापि
नहि सिंहो निपात्यते ॥२८॥
सर्वेऽर्चयन्ति पाखण्डान्
न धर्मे शाश्वते स्थितान्।
नटादीननुगृह्णन्ति
मूढा नहि बभुक्षितान् ॥ २९॥
आनन्दयित्वा सुजना-
न्नहि तुष्यन्ति दुर्जनाः।
आस्वाद्यापि रसान्,विष्ठां
त्यजन्ति नहि वायसाः॥३०॥
संसारे हि प्रियो लोभो
न धर्मः श्रुतिसम्मतः।
पालयन्ति बहुक्षीरां
महिषीं नहि गां जनाः ॥३१॥
अक्षिप्ता अपि दुर्वाक्यै-
र्नहि कुप्यन्ति साधवः।
सिक्तोपि कुरसैरिक्षु-
र्ददाति मधुरं रसम् ॥ ३२ ॥
फलं वा तमपि श्लाघ्यं
दत्तमादरपूर्वकम्।
पक्वान्नमपि न श्लाघ्यं
साधिक्षेपमथार्पितम् ॥३३॥
कस्यापि वित्तं न स्थायि
नित्यमायाति याति तत्।
आकाशमण्डले प्रायः
पयोदपटलं यथा ॥ ३४ ॥
स्वाधीनो दुःख्यपि सुखो
परवान्नहि भोगभाक्।

प्रसीदति शुकोऽरण्ये
सीदति स्वर्णपञ्जरे ॥ ३५ ॥
सजातीयोऽरिणाश्लिष्टः
सजातीयभयप्रदः ।
काष्ठदण्डसहायो हि
कुठारः काष्ठकण्टकः ॥३६॥
आपन्नानां हि महतां
महानेव हि शान्तिदः ।
निर्वापयति दावाग्निं
मेघो नहि घटीशनम् ॥३७॥
सुखमूलं हि सन्तोषो
नहि राज्यं धनानि च ।
दुःखीयति नृपः सौधे
कुट्यां भिक्षुः सुखीयति॥३८॥

—विजयानन्द शास्त्री ।

---

## वार्ताः सम्पादकाभिप्रायाश्च ।

**परीक्षार्थिनां वयोनिर्धारणम्**—कलकत्ताविश्वविद्यालयस्य प्रवेशिकापरीक्षायामाषोडशाब्दं कोऽपि परीक्षार्थी प्रवेष्टुं शक्नोतीत्येष नियमो व्यवस्थापितो विश्वविद्यालयसदस्यैः । नियमस्यास्याश्रेयस्करत्वं श्रीमता सरगुरुदासबन्द्योपाध्यायमहोदयेन प्रतिपादितमपि नावगतं तैः । गुरुदासमहोदयमतस्य प्रधानः प्रत्यवस्थाता श्रीसरआशुतोषमुखोपाध्यायमहोदयः । भारतीयविद्यार्थिनां षोडशवर्षात् पूर्वं न मस्तिष्कविकाशो भवतीति कस्यापि पाश्चात्यचिकित्सकस्य मतमेवात्र निदानम् ।

नहि निखिलानां मस्तिष्कविकाश एकविधयैव रीत्या भवन् दृष्टः । श्रुतमस्माभिः, कश्चन वङ्गीयश्छात्रः सप्तदशवर्षवयस्कः समुपलब्धवान् कलोपाध्यायपदवीम् (एम्. ए.) कदाचित्, सन्ति च तथाविधाश्छात्रा यैः विंशतिवर्षेष्वतीतेष्वपि नोत्तीर्णा प्रवेशिका परीक्षा । एवं विधयोरुदाहरणयोर्दृष्टिपथमागतयोः कः सिद्धान्तो व्यवस्थापनीय इति सानुनयमनुयुज्यते चिकित्सकमहोदयस्तदनुयायिनश्च । तथापि नियममम् व्यवस्थाप्यापरोऽयं दुःसहः कीलको निखातो भारतीयानां छात्राणां हृदि । अथवा के वा वयं श्रीमदाशुतोषमुखोपाध्यायमदृशानां विद्वत्प्रकाण्डानां विविच्य व्यवस्थापिते नियमे मतं प्रकाशयितुम् ।

**प्रयागविश्वविद्यालये वेदव्याख्याता**—श्रीमान डा. ए. येनिस एम्. ए. (ओक्सन) महोदयः प्रयागविश्वविद्यालये वेदव्याख्यातृपदे नियुक्तः । एष हि महोदयो वेदतत्त्वं भारतीयान् छात्रान् बोधयिष्यति । अस्मिन् विश्वविद्यालये श्रीमान् माननीयः (आनरेबुल) पण्डितः सुन्दरलालमहोदय उपप्रधानाध्यक्ष (वाइसचांसलर) पदमलङ्करोति। समयोऽदृष्टमपि दर्शयति, अश्रुतमपि

श्रावयति, वेदाध्यापनयोग्यतापि भारतीयेषु नास्तीति हन्त श्रावितं समयेन।

**दानम्**—श्रुतमस्माभिर्यत् नाथद्वारमहाराजेन शुद्धाद्वैतसम्प्रदायाचार्येण श्रीमता श्रीगोवर्द्धनलालमहोदयेन पञ्चविंशतिसहस्रं रूप्यकाणां प्रदत्तम् शुद्धाद्वैतसम्प्रदायग्रन्थाध्ययनसौकर्याय। किञ्चैतावद्धनं प्रदापास्योपयोगः श्रीमतो गोकुलनाथमहोदयस्यआयत्तीकृतः। एष हि महोदयो विद्वान् कर्तव्यपरश्चेत्याशासे प्रदत्तस्य द्रव्यस्य भविष्यति साधु समुपयोग इति। हृदा साधुवादान् प्रयच्छामो महोदयाभ्यामाभ्याम्।

**यूरोपखण्डे युद्धम्**—विदितमेतत् पत्रपाठकानां यत् साम्प्रतं प्रचलतियूरपखण्डे महद्युद्धम्। सर्वे हि यूरपवासिनः सम्राजोऽत्र युद्धे प्रवृत्ताः। भारतप्रभुः सम्राट् पञ्चमजार्जमहोदयोऽपि युद्धेस्मिन् परंबलवज्रोपममात्मनो वीरवाहिनीं नियोजितवान् धर्मस्य न्यायस्य स्वाधीनतायाश्च रक्षायै। दुर्बलरक्षणं हि प्रधानो धर्मो राजशास्त्रे धर्मशास्त्रे च समाम्नातः। दुर्बलोऽयं वेलजियमनृपतिरिति मत्वा मदोन्मत्तैः शार्मण्यैराक्रान्तम् तद्वनम्। परं तत्पक्षावलम्बिनं वृटिशसिंहमवलोक्य सुदूरपराहता शार्मण्यानां विजयाशा। साम्प्रतमुपभुज्यते तैरात्मनो दुश्चेष्टितस्य फलम्। विजयोहि धर्ममनुगच्छति, रक्षितो धर्म एव रक्षति। सम्राट् पञ्चमजार्जमहोदयो हि धर्मरक्षायै युद्धे प्रवृत्त इति नियतं विजयी स एवास्माकं सम्राट् भविष्यति। निखिला भारतीया आत्मनः प्रभोर्विजयं कामयन्ते।

**संस्कृतपाठशालाया वार्षिकोत्सवः**—अहमदावादसंस्कृतपाठशालीयः श्रीचन्द्रशङ्करशर्मा विद्यार्थी सूचयति, अहमदावादनगरे कापि संस्कृतपाठशाला वर्तते, यस्या अयं सप्तदशो वर्षः। अस्या एव सभाया वार्षिकोत्सवो जनवरीमासस्य प्रथमे दिवसे सम्पन्नः। तत्र हि सर चीनुभाई वारोनेट सी. आई ई. महोदयः सभापतेरासनमभूषयत्। तत्र च उत्तीर्णेभ्यश्छात्रेभ्यः पारितोषिकवितरणं, रावबहादुरकमलाशङ्करमहोदयेभ्यो मानपत्रार्पणम्, भासकविकृतदूतवाक्यनाटकाभिनयः सरससरसं शास्त्रिश्रीप्रसिद्धनारायणमिश्रमहोदयानां राजभक्तित्वमधिकृत्य व्याख्यानं छात्राणाञ्च राजभक्तिमयाः परस्परं संलापाः समजायन्त।

**हिन्दीसाहित्यसम्मेलनम्**—निखिलानामेव मानवानां पुरः प्रतिदिनं काप्यभिनवैव कार्यपद्धतिः समुपस्थिता भवति। अभावपूर्तय एव मानवाः प्रयतन्ते। साम्प्रतमस्माकं भारतस्यापि पुरः काप्यभिनवा कार्यपद्धतिरुपस्थिता। साम्प्रतं सौभाग्येन निखिलमेव भारतमेकस्मिन् छत्रे तिष्ठति। एक एव निखिलस्य

भारतस्य शासकः । एतेनैव हेतुना प्रतिदिनं भारतीयेषु प्रवृद्धिमश्नुते बन्धुत्वभावः । कलिङ्गाङ्गवङ्गान्धकप्रभृतिप्रदेशवासिनः परस्परं बन्धुत्वं स्थापयितुमीहन्ते । परमेतदर्थं काप्येका भाषा अपेक्षिता । यां निखिला अपि भारतीयाः सुखेनैवावगन्तुं शक्नुयुः । भारतीयासु सर्वासु भाषासु सुबोधा हिन्दीभाषैवेति निश्चितम् । समस्तेऽपि भारते अस्या भाषायाः प्रचाराय प्रयतन्ते दृढव्रताः विद्वांसः । तेषां हि समितिः "हिन्दीसाहित्यसम्मेलनमित्यभिधीयते । हिन्दीसाहित्यसम्मेलनस्य पञ्चमवार्षिकमहोत्सवो लक्ष्मणपुरे (लखनऊ) महता समारोहेण निर्वृत्तः । भारतीयनिखिलप्रदेशीयाः प्रतिनिधयः समागता आसन् । हिन्दीभाषासमुन्नायका उपक्षेपा निर्द्धारिता अभवन् । बहवो भाषान्तरपक्षपातिनोऽपि हिन्दीभाषाप्रचाराय प्रतिज्ञामकुर्वन् । उत्तरोत्तरमभिवर्द्धतां हिन्दीभाषाप्रचारणबद्धपरिकराणां दृढव्रतानां विदुषामुत्साहपादप इति कामयते जनोऽयम् ।

**वैद्यसम्मेलनम्**—कलिकत्तानगरे महता समारोहेण निर्वृत्तो वैद्यसम्मेलनस्य वार्षिकमहोत्सव इति श्रूयते । भारतीया वैद्याः सम्भूय आयुर्वेदविद्यामुद्दिधीर्षवः प्रतिवर्षं सम्मिलन्ते कुत्रचित् प्रसिद्धस्थाने । इमामेव प्रथामनुसृत्य वर्षेऽस्मिन् कलिकत्तानगरे निर्वृत्तो महोत्सवः सम्मेलनस्य । तत्र च बहवो उपक्षेपा निर्द्धारिताः । सम्मेलनस्य मुखपत्रिका इतः परं संस्कृतभाषायां प्रकाशिता भविष्यतीति विजानन्तः प्रहृष्यामः । वैद्यसम्मेलनममधिकृत्यात्मनोमतमन्यदा वक्ष्यामः ।

## पुस्तकपरिचयः ।

**सनातनधर्मोद्धारः**—काशीवासिना उमापतिद्विवेदिना (नकछेदरामशर्मणा) विरचितः । संस्कृतभाषया विनिबद्धो, हिन्दीटीकोपेतश्च । मूल्यम् प्रथमखण्डस्य ३) द्वितीयखण्डस्य २॥)

नासीदितः पूर्वं सनातनधर्मस्य सकलतत्त्वावबोधकः कोप्येको ग्रन्थः । अतश्च सनातनधर्मतत्त्वं बुभुत्सवो नितरां प्रयस्य मुह्यन्तिस्म । एतत्सर्वमालोच्य श्रीमता पण्डितमदनमोहनमालवीयमहोदयेन तथाविधग्रन्थनिर्माणभारस्त्रिषु काशीस्थपण्डितमूर्द्धन्येषु समर्पित । परं हि तथाविधग्रन्थस्य निर्माणभारः केवलं पण्डितश्रीमदुमापतिशर्मण एव शिरसि न्यपतत् । तेन च महात्मना बहुवायाममङ्गीकृत्य सनातनधर्मोद्धारनामकोग्रन्थःश्चतु खण्डात्मना विरचितः । तस्य च खण्डद्वयं प्रकाशितं समालोचयितुं मत्करतलमागतम् । बृहदवयवस्य ग्रन्थस्यास्य समालोचनं नात्र याथातथ्येन सम्भाव्यते । केवलमेतावदेवोक्तं युक्तं भवति यत् विवादास्पदानां सनातनधर्मतत्त्वानां साधुरहस्यमत्र विवेचितम् । ग्रन्थेनानेन

समुपकृताः सनातनधर्मोपदेशकाः सनातनधर्मावलम्बिनो विद्वांसः स हि भगवान् सनातनोधर्मश्च । ग्रन्थस्यास्यैकासञ्चिका निखिलानामेव सनातनधर्मावलम्बिनां गृहमुद्भासयतु । ये हि सनातनधर्मं प्रतिविप्रतिपन्नास्तेऽपि न तु ग्रन्थमिमवलोक्यात्मनो विप्रतिपत्तीः दूरीकर्तु मर्हन्ति ।

**मङ्गलोदयं जनतायाः पुस्तकानि** – मद्रमण्डले बह्व्यः संस्थाः साम्प्रतं संस्कृतग्रन्थान् प्रकाशयन्ति तास्वेका मङ्गलोदयं जनता अपि संस्कृतभाषायाः मनोहरान् प्राचीनान् नवीनांश्च ग्रन्थान् प्रकाशयन्ती प्रसिद्धमश्नुते, साधुवादांश्च भारतीयविदुषामधिगच्छति । जनतयाऽनया अद्य यावन्मुद्रिता ग्रन्थामत्समीपं प्रहिताः यत्सत्यंग्रन्थानिमाननुवाच्य कोऽप्यानन्दः समजनि जनस्यास्य चेतसि, अभिनव आलोकश्च प्रस्फुरितः पुरः । तेषां ग्रन्थानां नामानि संक्षिप्तश्च परिचयो निर्दिश्यतेऽधस्तात् ।

(१)–अष्टाङ्गसंग्रहः वाग्भटनिर्मितस्याष्टाङ्गसङ्ग्रहस्यायं, सूत्रशारीरस्थानात्मकः प्रथमो भागः । अद्य यावदस्य ग्रन्थस्याचार्यइन्दुना विरचिता टीका अमुद्रिता एवासीत् । साम्प्रतं इन्दुव्याख्यया सहितमष्टाङ्गसङ्ग्रहं मुद्राप्य साधुसमुपकृता भारतीया विशेषतो वैद्याः । अयमाचार्य इन्दुर्वाग्भटस्य शिष्येषु प्रधान इति शक्येतात एव ग्रन्थस्यास्य सारवत्ताविज्ञातुम् । मूल्यम् ५) रूप्यकाणि ।

(२)–अभिज्ञानशाकुन्तलम्, इमं ग्रन्थमधिकृत्य न विशेषतः कश्चिद्वक्तुमिच्छामः । अत्राभिनवांटीकां,–याहि सुबोधा–मुद्रणसौष्ठवञ्च विलोकयन्तः प्रहृष्यामः । ग्रन्थस्यास्य मूल्यम् १॥) विद्यार्थिनो विनैवायासं एतट्टीकासाहाय्येन ग्रन्थमिम याथातथ्येनाधिगन्तुं पारयेयुः ।

(३)–श्रीकृष्णविजयः, श्रीकृष्णचरित्रमधिकृत्य श्रीशङ्करकविना निर्मितं द्वादशसर्गात्मकं काव्यम् । अत्र चरितवर्णनछलेन सुगमयारीत्या रूपनिबद्धाकुत्रचन नीतिः । रचना प्रसादमयी, मनोहरति काव्यमिदं रसिकानाम् । मूल्यं द्वादशाणकाः ।

(४)–कृष्णनाटकम्, इदं हि गीतिकाव्यमिति प्रतीमः । केरलीयेन मानवेद कविराजेनेदं गीतिकाव्यम् विनिबद्धम् संस्कृतभाषा न व्यावहारिकान् विषयान् वर्णयितुं शक्ता इति य आत्मनो मतं द्रढयितुं प्रयतन्ते तैरवलोकनीयमिदं काव्यमिति सशिरःपातमभ्यर्थयामः । मूल्यम् द्वादशाणकाः ।

(५)–विटराजविजयः, कोटिलिङ्गपुरिकोच्चुण्णिराजविरचितः । इदं रूपकं प्रहसनेष्वन्तर्भवति । दुर्बोधानां शब्दानामर्थोऽपि सन्निवेशितो ग्रन्थान्ते, मूल्यं षडाणकाः ।

वाक्यतत्त्वम्—अयमपूर्वः सन्दर्भ इति नात्र लेशतोऽपि सन्देहः । वाक्यनियमाः सरलया भाषयात्र विशदीकृत्य निरूपिताः । संस्कृतभाषायां नाद्ययावदेवंविधोग्रन्थोऽस्मद्दृष्टिपथमागत आसीदितः पूर्वम् । ग्रन्थेनानेन संस्कृतभाषांप्रतिपित्सूनां भविष्यति महानुपकारः । मूल्यम् षडाणकाः ।

इत्थमेव कोकिलसन्देशः, शुकसन्देशः रामवर्मशतकम् देवीस्तवमालिका, पार्वतीविरहः, प्रदोष माहात्म्यम् इत्यादयोग्रन्थामङ्गलोदयं जनतया प्रकाशिनाः, मत्समीपमागताः । स्तुत्योऽयं प्रयत्नो जनतायाः । एतेषां पुस्तकानां प्राप्तिस्थानम् ।

मङ्गलोदयं कं० त्रिचूर ।

**ब्रह्मचारी**—हरद्वारे सनातनधर्मवताम् "ऋषिकुलमि" ति नाम्ना प्रसिद्धो विद्यालयो ननुविदितमेवभवेन्निखिलानामिति मे विश्वासः, तस्यैव ब्रह्मचारीनामकं हिन्दीभाषामयं मासिकमुखपत्रं प्रकाशयितुमारब्धम् । सम्पादकोऽस्य गिरिधरशर्मा चतुर्वेदमहोदयः । अत्र हि सरसाः सनाराश्च लेखाः प्रतिमासं प्रकाश्यन्ते । "वैदिकविज्ञानविन्दु" नामको निबन्धः क्रमशः प्रकाश्यते । "पुरुषार्थ क्या है" इत्यादयो निबन्धाः मनोहरन्ति निखिलानामेव प्राणवताम् । नन्वयं ब्रह्मचारी भारतीयाना गृहेषु सम्मानमर्हति । अस्य दक्षिणाऽपि ननु स्वल्पैव । मूल्यम् सार्द्धैकरूप्यकम् ।

सह । रिमन्त्री ऋषिकुलहरद्वार इत्यत्र लभ्यते ।

**वैष्णवसर्वस्व**—इदं मासिक हिन्दीभाषामयं पत्रं निम्बार्कसम्प्रदायाचार्यैः श्रीकिशोरीलालगोस्वामिभिः सम्पादितं प्रतिमासं प्रकाश्यते । वार्षिकमूल्यं रूप्यकद्वयम् । वृन्दावनवैष्णवसर्वस्वकार्यालयतः प्राप्तुं शक्यते ।

इदं पत्रमनुवाच्य कामं प्रसीदामः । वैष्णवानां वैष्णवधर्मतत्वमभिजिगमिषूणाञ्चैतेन महानुपकारो भविष्यति । वैष्णवदार्शनिका अपि प्रबन्धा यथाप्रस्थानमनुविन्देरन् तथा प्रयत्न आधेयः सम्पादकमहोदयैरितिमेऽनुरोधः । यः कोऽपि वा सम्प्रदायः स निखिलोऽपि दार्शनिकतत्त्वमेवाष्टभ्य दृढतामासादयति, अतः साम्प्रदायिकभावप्रचारकैरत्रनिपातनीया दृष्टिः ।

**हिन्दीगद्यपद्यसङ्ग्रहः**—चतुर्वेदिद्वारकाप्रसादशर्मा प्रसिद्धो हिन्दीग्रन्थकारेषु । तेनैवायं संग्रहो विहितः । अत्र प्रसिद्धानां हिन्दीलेखकानां लेखाः यथावत् संगृहीताः । सङ्ग्रहोऽयमुपकरिष्यति विद्यार्थिनः । मूल्यम् १।) रूप्यकम् । प्राप्तिस्थानं नवलकिशोर प्रेस लखनऊ ।

**भाषावाल्मीकीयरामायण**—हिन्दी चतुष्पदिकादोहाछन्दोभिः संस्कृतवाल्मीकीयरामायणस्यानुवादः श्रीमता-ठाकुरभोगराजसिंहवर्मणा विहितः। धर्म-महोदयस्य छन्दोविन्यासशैली समनुहरति कुहचित्तुलसीदासस्य छायाम्। एतेन केवलं हिन्दीं जानाना अपि वाल्मीकीयरामायणमधिगन्तुं पारयेयुः। पढीना कोठी भोगाँव (मैनपुरी) इत्यत्रग्रन्थ-कर्तुः सकाशाल्लभ्यते।

**ज्ञानशक्ति**—श्रीमता शिवकुमार-शास्त्रिणा गोरखपुरतः प्रकाश्यते हिन्दी-भाषामयी मासिकी पत्रिका। लेखा, रुचिरा, साम्प्रतमपि भाषासौष्ठवं सम्पादयितुमवशिष्यते। मूल्यम् २॥) रूप्यकम्।

**श्रीदुर्गाप्रयोगप्रभा**—अत्र सार्द्ध-नवदुर्गापाठप्रयोगपद्धतिर्वर्णिता। अस्याः प्रभायाः साहाय्यं मान्त्रिका गृहीतुमर्हन्ति। अत्र वर्णिताः प्रयोगाः सद्यः फलावहा इति विलिखति प्रकाशक एव। मूल्यम् ≈) प्राप्तिस्थानम्, गौरीशङ्करशास्त्री हिन्दू हाई स्कूल, भंग।

**भारतगीताञ्जलि**—रुचिरोभिन-वश्च हिन्दीकविर्माधवशुक्लः। तेनैवेयं गीताञ्जलिर्भारतस्य चरणयोः समर्पिता। मनोहराणि गीतानि सामयिकान् विषया-नधिकृत्यात्रनिवेशितानि। आनन्दयन्ति चैतानि पठतां चेतांसि। मूल्यम् ।) प्राप्ति-स्थानम् रामचन्द्रशुक्ल वैद्य, कूचा श्याम-दास, प्रयाग।

**यूरप की लड़ाई**—शिवकुमार-सिंहमहोदयेन साम्प्रतिकं यूरोपीयं युद्ध-मधिकृत्यपुस्तकमिदं विरचितम्। अत्र सम्राज्ञ्या सहितस्य सम्राजश्चित्रम्, मनो-हरति, वर्णितश्चात्रयुद्धकारणम्। पुस्तक-मिदं भारतीयैः पठनीयम्। मूल्यम् ।) प्राप्तिस्थानम्, शिवकुमारसिंह सुपर इन-टेडेन्ट म्यूनिसिपल बोर्ड स्कूल्स,

इलाहाबाद।

अपरेऽपि ग्रन्था मत्समीपं समालोच-नार्थमागताः। स्थानाभावादस्यां सं-ख्यायां तेषां परिचयं दातुमसमर्थाः स्मः संख्यान्तरे प्रकाशयिष्यामः।

---

पं० रामजीलालशर्मणः प्रबन्धेन प्रयागस्य "हिन्दी-प्रेसे" मुद्रिता, चन्द्रशेखरेण च दारागंज-प्रयागतः प्रकाशिता।

तृतीये वर्षे | विद्ययाऽमृतमश्नुते | प्रथम संख्या

## सम्पादकाभिप्रायाः ।

कुट्टनीमतं दामोदरगुप्तो वा श्रीमता कश्मीराधिपजयापीडमन्त्रिणा दामोदरगुप्तेन कुट्टनीमतं नाम कोऽपि सन्दर्भो विरचितः । अस्य सन्दर्भस्य "शम्भलीमतम्" इत्यपरं नाम अत्र ग्रन्थे वर्णितो विषयोऽश्लीलोऽपि ननूपादेयः कथं नाम कुट्टन्य आत्मनो जालं प्रसारयन्ति, तत्र च यूनो निबध्नन्ति इति यत्सत्यं विषयोऽयं भवति सर्वस्यैव श्रेयसे । कुट्टन्या नीतिं विज्ञायैव जनस्तासाम् आत्मानं परित्रातुं शक्नोति । अतश्चायं सन्दर्भः कुट्टनीनीतिज्ञापको महते समुपकाराय भविष्यति लोकस्य । साम्प्रतं कुट्टनीमतविषयपरिचयाय तावदस्माकमुपक्रमः । प्रथममत्र दामोदरगुप्तः किञ्चित् परिचाय्यते, ततश्च कुट्टनीमतसन्दर्भात् संगृह्य केचनोपदेशाः प्रकाश्यन्ते ।

कश्मीराधिपो जयापीडो ननु प्रसिद्ध एव संस्कृतविद्वत्समाजे । तस्य गुरुः क्षीरस्वामी तं शास्त्रेषु प्रौढं चकार । जयापीडसभायामासन् बहवः पण्डिताः । कश्मीरमण्डले कालवशात् विच्छिन्नं महाभाष्यपठनपाठनसम्प्रदायं महता श्रमेण देशान्तरेभ्यः शब्दविद्योपाध्यायान् पण्डितानानाय्य तेभ्यो भूरिवेतनं प्रदाय च जयापीडः स्वमण्डले पुनः प्रावर्तयत् । दीनारलक्षलक्षवेतन

उद्भटभट्टस्तस्य राज्ञः सभापतिरासीत्। भवन्ति चात्र राजतरङ्गिणीश्लोकाः प्रमाणम्।

"क्षीराभिधाच्छब्दविद्योपाध्यायात्सम्भृतः श्रुतः,
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः।
देशान्तरादागमय्य व्याचक्षाणः क्षमापतिः,
प्रावर्तयत विच्छिन्नं महाभाष्यं स्वमण्डले।
विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः,
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः।

आसँश्च तस्य भूमिभर्तुः प्रसिद्धपाण्डित्याः कवयो मन्त्रिणः ते यथा—

मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः॥

अस्यैव महीभर्तुर्मन्त्री श्रीमान् दामोदरगुप्तः समभवत्। यथोक्तं राजतरङ्गिण्याम्।

स दामोदरगुप्ताख्यं कुट्टनीमतकारिणम्।
कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात्॥

यथा बलेर्मन्त्री कविस्तथा जयापीडस्य मन्त्री दामोदरगुप्तः। इत्थं शक्यते वैदुष्यं व्यवहारपाटवञ्च श्रीमतो दामोदरगुप्तस्य विज्ञातुम्।
अयं दामोदरगुप्तोऽपरं कमपि ग्रन्थं निर्मितवान्नवेति न ज्ञायते। अयमेक एव सन्दर्भो दामोदरगुप्तस्य काव्यमालायां मुद्रितः। परमयं सन्दर्भोऽपूर्णः। श्रुतमस्माभिः काश्यां केनापि महाभागेनायं पूर्णो ग्रन्थोऽधिगतो मुद्रितश्च। परं नाद्य यावत् स ग्रन्थो दृष्टिपथमागतोऽस्माकम्।

अयमात्मनो ग्रन्थे कामसूत्रकारं वात्स्यायनं सादरं स्मरति। निर्दिशति च तस्य मतं स्थाने एतदीयं पद्यं मम्मटेन काव्यप्रकाशे समुदाहृतम्। तदित्थम्—

"इयमभिसृतमाली मालत्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभलोचनविषयं त्वया भजता।

इयमार्या दामोदरगुप्तस्य। परमेतद्व्याख्यानावसरे काव्यप्रकाशटीकाकारा नितरां बभ्रमुः। अतश्च कमलाकरभट्टो मालतीमाधवस्थामिमां विजानाति। महेश्वरस्तु मालविकाग्निमित्रस्थामिमामार्यां विज्ञाय "मालत्या" इत्यस्य स्थाने "मालव्या" इति पाठं कल्पयति। अतश्च ज्ञायते यत् काव्यप्रकाशकारेण दृष्टोऽप्ययं सन्दर्भस्तट्टीकाकृद्भिरदृष्ट एवेति। इत्थमेव—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला,

इत्याद्या आर्याः समुदाहृता दृश्यन्ते काव्यप्रकाशे मम्मटभट्टेन। कविकण्ठाभरणे क्षेमेन्द्रोऽप्युदाजहार दामोदरगुप्तस्यार्याम्। तस्मादयं मम्मटक्षेमेन्द्राभ्यां प्राचीनः सिध्यति। अतश्चायं सप्तमशतके समुत्पन्न इति निश्चीयते। महाराजजयापीडोऽपि ७५५ मितात् खिस्तवत्सरादारभ्य ७८६ मितवत्सरपर्यन्तं कश्मीरमण्डलं शशासेति। अस्मादपि स एव समयो दामोदरगुप्तस्य निश्चितो भवति। अधस्ताद् दामोदरगुप्तस्योपदेशमयाः श्लोका निर्दिश्यन्ते।

देशान्तरेषु वेषस्वभावभणितानि येन बुध्यन्ते,
समुपासते न च गुरून् विनयाविकलास्त उष्ट्राः।
निजवरभवनं सुरगृहमुर्वीतलम तिमनोहरं शयनम्,
कदशनममृतमभोग्यितकार्यैकनिविष्टचेतसां पुंसाम्।
जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योन्यम्।
कृतमुखभङ्गो दूरात् करोति निर्दिष्टमङ्गुल्या।
नोपनिहन्तुं विषयाः शक्याः सत्यं तथापि निपुणधियाः
अभिधेयतां न गच्छन्त्यपवादविशेषिताभिधानस्य।

एवमेव बहवः श्लोका दामोदरगुप्तेनोपदेश-मया निर्मिता स्ते ततएवावगन्तव्याः।

## नैषधीयचरितकर्ता श्रीहर्षः किं वाङ्गः

प्रसिद्धे वङ्गभाषापत्रे भारतवर्षे प्रसन्ननारायण चौधुरीमहोदयो विनिर्दिशति—नैषधीयचरितप्रणेता श्रीहर्षो वाङ्ग एवासीदिति। अयं सिद्धान्तस्तेन महोदयेनेत्थं प्रमाणीक्रियते।

पुरेयं प्रसिद्धैवासीत् किंवदन्ती यदयं वङ्गदेशीयः श्रीहर्ष इति, परं मध्ये कैश्चित् कारणविशेषैर्विस्मृतमभवत्। एतन्निर्मितग्रन्थादेवैतत् प्रमाणीभवति यदयं वङ्गदेशीय इति। सप्तमसर्गस्यान्त आत्मानमित्थं परिचाययति श्रीहर्षः—

श्रीहर्षः कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यं।
गौडोर्वीशकुलप्रशस्तिभणितिभ्रातर्ययं तन्महाकाव्ये चारुणि नैषधीयचरिते सर्गोऽगमत् सप्तमः।

अत्र श्लोके प्रयुक्तं "गौडोर्वीशकुलप्रशस्तिभणितिभ्रातरि" इति विशेषणमेव बोधयति श्रीहर्षस्य वङ्गदेशीयत्वम्। गौडभूपस्य कुलप्रशस्तिरचनां गौडदेशीया एव कर्तुमर्हन्तीति चौधुरीमहोदयस्याभिप्रायः। किञ्च विवाहवर्णनप्रस्तावे कविना प्रोक्तम्,

"कापि प्रमोदास्फुटनिर्जिहान-
वर्णैव या मङ्गलगीतिरासाम्।
शैवाललभ्यः पुरसुन्दरीणा-
मुच्चैरुलूलूध्वनिरुच्चचार।

विवाहसमये गौडदेश एवोलूलूध्वनिरुच्चार्यते। तस्मादप्ययं गौडदेशीय एवेति सिध्यति। पुरुषपरीक्षाकर्त्रा विद्यापतिनाप्ययमर्थः प्रमाणीक्रियते।

यत्तु कैश्चिदुच्यते, श्रीहर्षोऽयं महाकविः कान्यकुब्जः, कान्यकुब्जेश्वरादयं ताम्बूलद्वयमासनञ्च लभते स्मेति तदसाधु। यत एतेन न तस्य कान्यकुब्जेश्वराश्रयवासित्वं प्रमाणीभवति। देशान्तरस्था अपि वृत्त्यनुरोधात्, देशान्तरीयराजसमीपं गच्छन्तो दृश्यन्ते। तस्मादयं वङ्गदेशीय इति सर्वैरवधेयमित्यादिशति चौधुरी महाशयः।

अत्रेदमवधेयम्—श्रीहर्षेण गौडोर्वीशकुलप्रशस्तिनामको ग्रन्थो विरचित इत्ययं गौडदेशीयः। परं नैषधीयचरितमप्यनेनैव प्रथितमतोऽयं निषधदेशोद्भवोऽपि भवितुमर्हति, तेनैव हेतुना। आस्ताम्, साम्प्रतं वङ्गपदेन यस्याभिधानं भवति किं स एव गौडदेशः। गौडदेशसीमानिर्देश इत्थं श्रूयते—

वङ्गदेशं समारभ्य भुवनेशान्तगः शिवे,
गौडदेशः समाख्यातः सर्वविद्याविशारदः।

अत्र वङ्गदेशं समारभ्येत्युक्त्या न कथमपि गौडदेशे वङ्गदेशस्यान्तर्भावः कर्तुं शक्यः। वङ्गदेशो हि गौडदेशस्य सीमा आसीत्, न तदङ्गभूतः कश्चन प्रदेशविशेष इति। इत्थं गौडदेशोद्भवः श्रीहर्षः इति स्वीकारेऽपि वाङ्गोऽयमिति न कथञ्चनापि वक्तुं शक्यते।

उलूलूध्वनिर्वङ्गाचारः, तद्वर्णनं ननु साधयति श्रीहर्षस्य वङ्गदेशोद्भवत्वमिति कथनं कथं प्रामाण्यपदवीमारोपयितुं शक्यत इति न विद्मः। कवयो हि निबध्नन्ति तत्तद्देशीयानाचारान् नैष

धवरितेऽपि ननु दृश्यन्ते वर्णितास्तद्देशीया आचाराः। ततस्तद्वर्णकेन कविना तद्देशानां वासिना भवितव्यम्?

यः कविर्यद्देशवासी सतद्दीयानेवाचारान् वर्णयतु इति नायं नियमो धर्मशास्त्रपरिपठितो दृष्टः।

किञ्च गौडाधिपाश्रयिणा कविना न कथमपि कान्यकुब्जेश्वरादासन ताम्बूललाभेनात्मनो महत्त्वं ख्यापयितुं प्रभूयते। एतेन गौडाधिपात् कान्यकुब्जेश्वरस्य महत्त्वं व्यज्यते। गौडाधिपान् महोन्नतः समृद्धिशाली च कान्यकुब्जेश्वरः। अतएव च कविना गौडाधिपाश्रयो न वर्णितः, किन्तु स्वल्पोऽपि कान्यकुब्जेश्वरसम्बन्धद्योतकस्ताम्बूलासनलाभो वर्णितः। शक्नोति वा कोऽपि कविरित्थमाश्रयदातारमवमानयितुम्। अवमानितो वा आश्रयदाता तं कविं मृष्यति एतत् सर्वं विचिन्त्यं चौधुरीमहाशयेन।

**साहित्यप्रचारः**—साम्प्रतं सर्वैरेव साहित्यप्रचारोऽभिलष्यते। अतएव च भारते तत्तत्प्रान्तीयभाषाणां साहित्यप्रचारकृते स्थापिताः सभाः श्रूयन्ते। तत्र विश्रुतोद्यमा विपश्चितो नूनं प्रयस्यन्ते। नूनं तेषामयं कार्यक्रमोभवति नः प्रमोदाय। परं किञ्चिदत्र ते महानुभावाः सादरं सप्रश्रयञ्च निवेद्यन्ते।

केवलं प्रान्तीयभाषाणां साहित्यसमुन्नत्यैव भारतीयसाहित्यस्य समुन्नतिर्भविष्यतीति यदि कैश्चिदुच्येत नूनं तेऽनभिज्ञा भारतीयसाहित्यविषय इति स्फुटं वक्तव्यमेव। भारतीयसाहित्यं हि बह्वीषु भाषासु विभक्तं विशालं रूपमाधाय तिष्ठति। संस्कृतभाषायां पालीभाषायां प्राकृतभाषायां शौरसेनीमाहाराष्ट्रीयादिषु भाषासु च निबद्धाः संस्कृतसाहित्यविषयका ग्रन्थाः। आसां सर्वासां भाषाणामध्ययनाध्यापनादि प्रतिष्ठित्या, तत्तद्भाषाणां ग्रन्थानाञ्च प्रकाशनेन च भारतीयस्य साहित्यस्य प्रचारो भविष्यति कथञ्चिदित्यवधेयम्। यदि साहित्यप्रचारो न निष्फलः, यदि तदनुशीलनेन कस्यापि फलस्योपलब्धिराशास्तुं शक्यते तदावश्यं कर्णातिथी करणीया जनस्यास्य वाक्।

पालिभाषायां प्राकृतभाषायाञ्च बौद्धैर्जैनैश्च ग्रन्था विलिखिता,ः बौद्धानां जैनानाञ्च ग्रन्थाः कथं भारतीयसाहित्ये स्थानमासादयितुं प्रभूयन्ते। नेत्थं विचिन्तनीयं केनापि। धर्मभेदो न साहित्यभेदं जनयितुं शक्नोति,। शेक्सपीयर मिल्टनप्रभृतीनां खृष्टकवीनां ग्रन्था ननु पठ्यन्त एव सर्वैः। इत्थं स्थिते किमपराद्धं बौद्धजैनसाहित्येन। किञ्च पुरा धर्मग्रन्थाध्ययनमेव प्रचुरज्ञानकारणममन्यत, साम्प्रतं तु तथा नास्ति। व्यावहारिका विषया अप्यधुनाध्ययनकोटींप्रविष्टाः, धार्मिकग्रन्थानामध्ययनं न लौकिकं फलं जनयति अतश्च तेषु वीतस्पृहा विलोक्यन्ते मानवाः। यो हि स्वयं धार्मिकः धर्मलब्धेन धनेन च जीवति सोऽपि नत्वात्मनस्तनयान् व्यावहारिकविषयाणां ज्ञानायाङ्गपाठशालां प्रेषयति। न च धार्मिकान् ग्रन्थान् पाठयति। व्यावहारिकविषयज्ञानं स्वयं विनिन्दन्नपि बालान् प्रोत्साहयति। इत्थं स्थिते बौद्धजैनसाहित्यानामध्ययनं प्रचारणञ्च न हानिकरं मन्ये।

भवतु नाम बौद्धजैनसाहित्ये धर्मभेदः, परं हृदयभेदो नास्ति, भारतीयैनैवहृदयेन बौद्ध-जैनसाहित्यमपि निबद्धम्, तत्रापि ननुभारतीया भावाः समुपलभ्यन्तएव, अतश्चार्षबौद्धजैनसाहित्यानां प्रचारो भारतीयैर्विधेयः । इत्थं हि निखिलस्य भारतीयसाहित्यस्यप्रचारः कृतोभविष्यति ।

सत्यं, बौद्धैर्जैनैश्चात्मनः साहित्यप्रचारकृते प्रयस्यते, आर्षैश्चप्रयस्यते । परमेतन्नविस्मर्तव्यं कैरपियत्सम्भूयप्रयत्नःफलवान्भवतीति, पृथक् पृथक् विधीयमाने प्रयत्ने न भारतीयो भावः स्फुटी भवति । भारतीयभावस्य प्राधान्यमेव काम्यते । एषां विरोध, उद्देश्यभेदमाकलय्य परिहरणीयः । नास्ति धर्मशास्त्रे ज्योतिः शास्त्रे च विरोधः, नवैयाकरणो नैयायिकं विनिन्दति । कथमिति चेत्, धर्मशास्त्रे यो विषयो वर्णितो न सज्योतिः शास्त्रे, ज्योतिः शास्त्रे च वर्णितो विषयो न धर्म शास्त्रे वर्णितः । इति कथंनामोभयोर्विरोधः सम्भवेत् । इत्थमार्षबौद्धजैनसाहित्येऽपि परिकल्पनीयम् । ऋषिभिरन्यो विषयो वर्णितः बौद्धैर्जैनैश्चान्यः । कोऽपि धर्मशास्त्रं कोऽपि ज्योतिः शास्त्रं कोऽपि व्याकरणं पठति । धर्मशास्त्रपाठी न ज्योतिःशास्त्राध्येतारं कटाक्षयति कदापि । स्वाधीनत्वात्तत्रतस्य । इत्थमेव कस्याप्यनुराग आर्षसाहित्ये, कस्यापि बौद्धे, कस्यचिच्च जैने । अत्रकोविरोधः ।

सिद्धान्तममुं पुरस्कृत्य संस्कृतसाहित्यसम्मेलनेन प्रयत्नोऽनुष्ठीयत इतिविलोक्य प्रसीदामि । संस्कृतसाहित्यसम्मेलनेबौद्धाः जैनाश्च सादरमाहूयन्ते । आर्षैः कृतमात्मनःकर्तव्यम्, कर्तुं वासचद्धास्ते, साम्प्रतंजैनानां बौद्धानाञ्चावसरः । तैरपि भारतीयसाहित्यप्रचारकृते समारब्धव्यः समुद्योगः ।

* * *

**संस्कृतज्ञानामुपेक्षा** अद्यैवाद्यभारतमित्र पत्रात् संस्कृतपरीक्षाविषयकं किञ्चिद्वृत्तान्तमधिगम्यनितान्तं विषीदामि । विद्यार्थिभिः परीक्षादानसमयेकियान्क्लेशोऽनुभूयते, परीक्षाधिकारिभिश्च किमपि उपेक्षातेषां विधीयत इति वर्णितं तत्र पत्रे नूनमयं क्रमोनिन्द्यो-हृद्यश्च । अपरे परीक्षार्थिनः सम्मान्यन्ते परीक्षाधिकारिभिः, संस्कृतविद्यार्थिनश्च तिरस्क्रियन्ते । अत्रकारणम्, स्वयं विद्यार्थिन एवेति मे मतम् । वक्तुरायत्तो हि समादरो भवति । संस्कृतज्ञाः साम्प्रतमप्यात्मनः सतां परिचेतुमसमर्था एव । केषाञ्चिदहम्मन्यानां मत्या चरितमपि भाग्यविलसितमिति स्वीक्रियत एभिः । बाबूमहाभागानां मते संस्कृतज्ञा मानवा एव न भवन्ति, अतश्च निरर्थक एषां कृते जलप्रबन्धः ।

परीक्षासमये शुष्ककण्ठैः किं प्रश्नाः साधु समाधातुं शक्यन्ते । पिपासितो जनः किं जलदानमपिनार्हति । दृढं विनिन्दापि बङ्कपुरीयाणामिममाचारम् ।

संस्कृतज्ञानां पात्राधिकं सौजन्यमेवात्र हेतुः । एभिः सौजन्यं प्रकाश्यते, अपरैस्तु मूर्खोऽयमिति गृह्यते । महान्तः, सुजनानामेवाग्रे सुजनता प्रकाशनीया भवति, अन्यस्यनयनयोर्न

प्रतिफलति भूवनशतानामपि प्रभा । अतश्च देशकालौ सम्यक् परीक्ष्याचरणीयं श्रीमद्भिः । परोक्षाधिकारिणां मत्याचरितं शिक्षाधिकारिणां पुरस्तादुपस्थापनीयम् । नूनमित्थं सन्तोषकरः प्रबन्धो भविष्यति ।

* * *

**सौभाग्यम्** या संस्कृत भाषा पूर्वं विनिश्चिता, मृतेति मत्वा ग्राम्यकामिनीव दूरतोमुक्तासीव साम्प्रतं बहुमन्यते, तस्या एवाध्ययनाध्यापनादिप्रचारोऽभिलष्यते भारतीयैरिति निरीक्ष्य कोवास्यां बद्धप्रणयो नास्याः सौभाग्यं मन्येत । विहारप्रान्ते मुजफ्फरनगरे संस्कृतविद्यालयः कोऽपिप्रतिष्ठितः, यत्र प्रधानाध्यापकः श्रीमान् वद्या झा महोदयो ऽभवदितिश्रूयते । इदंसौभाग्यं न केवलं संस्कृत भाषायाएव किन्तु भारतस्य भारतप्रणयिनाञ्च । संस्कृतसाहित्य प्रचारेणैव भारतीयानां गुणानां समुन्मेषो भविष्यतीति दृढमवधेयं सर्वैः ।

## मीमांसादर्शनम् ।

[श्रीमता महामहोपाध्याय एम्० ए० पं० गङ्गानाथ झा० डि० लिट् महोदयेन विनिबद्धम् ।]

प्रभाकरः कुमारिलस्य शिष्य आसीदिति न केवलमाख्यायिकामात्रमूलकम् । शेषकृतसर्वसिद्धान्तरहस्यग्रन्थे प्रभाकरमतप्रस्तावे वर्णितमुपलभ्यते–यत् किल अस्यां सूत्रञ्जैमिनीयं शाबरभाष्यमस्य तु । मीमांसावार्तिकम्माहृम्मन्द्राचार्यकृतं हि तत् । तच्छिष्यो[जडाय]लभेदेन शाबरस्य मतान्तरम् । प्राभाकरगुरुश्चक्रे तद्धि प्राभाकरम्मतम् । तत्र भाष्यवार्तिककर्तुं भट्टाचार्यस्य शिष्यः प्रभाकरं, गुरुः अहृमतात्, मतान्तरप्रवर्तकत्वाम प्रन्थभेदकृतमानितवर्णः–इति। यद्यप्ययं सम्बन्धः कुमारिलप्रभाकरयोः पण्डितेष्वपि प्रसिद्धस्तथापि अनयोर्ग्रन्थौ सम्यगवलोक्य नोत्सहे सहसाऽमुं स्वीकर्तुम् । बृहत्याम् प्रभाकरेण भाष्यकारस्य मतङ्कुत्रापि न दूषितम्, अपि तु सर्वं समर्थितमेव, पूर्वपक्षवर्जम्मतान्तरङ्किञ्चिदपि नोद्भावितमेव प्रायशः बहुत्र भाष्यमतन्दूषयित्वा मतान्तरमेव प्रदर्शितम् । तद्यथा प्रथमेऽध्याये द्वितीयपाद प्रथमाधिकरणे, तृतीयपादप्रथमाधिकरणे, तृतीयपादचतुर्थाधिकरणे, तृतीयपादपञ्चमाधिकरणे, तृतीयपादसप्तमाधिकरणे, तृतीयपाददशमाधिकरणे, चतुर्थपादप्रथमाधिकरणे च । यदि प्रभाकरः कुमारिलादर्वाचीनो मतान्तरप्रवर्तयिता चाभविष्यदवश्यमेवायम्भाष्यसमर्थने बद्धपरिकरम्, उक्तानाङ्कौमारिलानाम्मतानाङ्खण्डनमकरिष्यत् । नचोपलभे कस्याप्यस्य चर्चामपिबृहत्याम् किन्तु प्रभाकरीयमतानाङ्कतिपयेष्वधिकरणेषु सूचनङ्खण्डनञ्चोपलभ्यते कौमारिले तन्त्रवार्तिके । तद्यथा–( १ ) प्रथमाध्याये द्वितीयपादे एकत्रिंशत्सूत्रे—'मन्त्रा अर्थवन्तो न वेति' अधिकरणमूलभूतसन्देहस्य प्रकारो दूषितः । अयञ्च प्रकारः प्रभाकरेण उक्तो बृहत्याम् (३।११ पत्रे) । ( २ ) तृतीयपादे द्वितीयसूत्रे—स्मृत्युपोद्बलकानि श्रुतिवाक्यान्यनुमेयानि इति बृहत्याम् (३१।२) उक्तम् । दूषितञ्चैतत् कुमारिलेन ( ३ ) चतुर्थपादे प्रथमे सूत्रे–अस्य पादस्याध्यायसम्बन्धविवरणे भाष्यानुसारेण प्रभाकरः बृहत्याम् । ( ३८।१ पत्रे ) सन्देहमेवमुन्नायितवान्–[illegible] [illegible] इति [illegible] । न

स्वीकृतमिदं कुमारिलेन । ( ४ ) तत्रैव सूत्रे प्रभाकरः प्रथमं सूत्रमपूर्वप्रमाणं द्वितीयञ्चेति सिद्धान्तं मन्यते । इदम् अन्यमिति कुमारिलेन सूत्रद्वयगताविकल्पद्वयविकल्पनेन सूचितम् बृहत्याम् एकस्मिन्नेव स्थले (६४।२ पत्रे) कौमारिलमतेऽस्वरसः सूचितः प्रभाकरेण । चतुर्थाध्यायप्रथमपाद-द्वितीयसूत्रे द्रव्यार्जनाधिकरणे कुमारिलेनोक्तम् — 'क्रत्वर्थे द्रव्यार्जने क्रतुविघातः स्यात्' इति अत्रास्वरसः सूचितः प्रभाकरेण क्रत्वर्थत्वे सत्यमेव न भवतीति याग एव न संवर्तते—प्रलपतमिदङ्केनापि इति वदता । अत्रापि यैर्यैः शब्दैर्मतान्तरमुद्भावितन्ते कौमारिलैः शब्दैर्नसंवदन्ति । अतः यः प्रभाकरेण 'केनापि' शब्देन सूचितः स कुमारिलादन्यएव कोऽपीति मन्यामहे । लेखनप्रणाल्यपि कुमारिलात् प्रभाकरस्य प्राचीनतां स्पृशणाति । प्रभाकरस्य लेखः शबरस्येव विरलवृत्तः स्पष्टश्च कुमारिलस्य तु संश्लिष्टवाक्यबहुलः पृथुवृत्तश्च । तद्यथा ( १ ) मायं हेतुः कस्मात् । शूर्पहोमेतिहेतुः प्रतीयते ( २ ) अथादृष्टार्थमेवेदं सूत्रं वेदमधीत्यानन्तरं धर्मजिज्ञासेति । एवन्तर्ह्यैवैद्वयविधानप्राप्नोति । वेदमधीत्य अनन्तरञ्चेति । यदि च वेदमधीत्येत्युच्यते अन्यस्थापि कर्मणोऽनन्तरन्धर्मजिज्ञासाऽवकल्पते अत्रान्तर्यं विधीयते प्रागपि वेदाध्ययनात् प्राप्नोति । न चादृष्टार्थस्यवाक्यस्यार्थद्वयविधानद्विधा सम्भवति । तन्त्रवार्तिके तथा य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो…… इति कामवादलोकवाक्यवचनविशेषैर्जिज्ञासामनसहितात्मज्ञानोपकारकस्य पर्यन्तस्पष्टात्मतत्वज्ञान विधानापेक्षितवाक्यान्तरोपात्तद्विविधाभ्युदयनिः श्रेयसरूपफलसम्बन्धः स सर्वांश्च लोकानाप्नोति तरति शोकमात्मवित् तथा स यदि पितृलोककामो भवति सङ्कल्पादेवास्य योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि वर्णितानि अन्यच्च कुमारिलः शङ्कासमाधानादिनिरूपणे 'ननु चेत् न', 'स्यादेतत्–तदयुक्तम्' इत्यादि प्रयुंक्ते, प्रभाकरस्तु किमपि शङ्कासमाधानविभाजकन्तादृशञ्चैव प्रयुंक्ते, प्रत्युत प्राचीनभाष्येष्विवप्रभाकरस्य ग्रन्थे शङ्कासमाधानयोर्विवेचनमतीवदुष्करम् । पुनः प्रभाकरस्य ग्रन्थे बहून्युपहासादि वाक्यानि प्राचीन ग्रन्थेष्विवोपलभ्यन्ते । तद्यथा 'अज्ञानकातर्यमायुष्मतः प्रदर्शि‍म्' आहोऽनवस्थितनयनीतिज्ञो भवान् अनभिज्ञो भवान् वैकल्पिकानाम्पदार्थानाम्, मूर्धाभिषिक्तंप्रामाण्यम् 'इन्द्रजालोपमभिदम्' 'अग्रन्थज्ञो देवानां प्रियः' इत्यादि ॥ कुमारिल प्रभाकरयो र्गुरुशिष्यभावविषये यदि शेषकृत सर्वसिद्धान्तरहस्यग्रन्थः प्रमाणीक्रियते तदाशङ्करदिग्विजय चम्पूकाव्य प्रतिपादित शङ्करकुमारिलयोः समकालित्वं न युज्यते तथा शारीरकभाष्ये स्थले स्थले प्रभाकर मतखण्डनमुलभ्यते न च प्रभाकरस्य वर्षशतादि प्राचीनत्वमन्तरेण मुद्रणयन्त्रादि रहिते काले भगवत । शङ्कर स्वामिना तन्मतमुपलब्धुं शक्यते कुमारिलशिष्यत्वे प्रभाकरस्य कुमारिलस्यशङ्करसमकालत्वे च प्रभाकरस्य शङ्करसमकालत्वमर्वाचीनत्वं वा भवेत् न च समकालस्य मतं तदात्वे भिन्नदेशस्थेनोपलब्धव्यं नितरामर्वाचीनत्वे, तस्माच्छङ्करस्वामिनः प्राचीन एव प्रभाकर यदि परं व्यवहारे तु भट्टनयग इतिवादतः शङ्कराचार्यात्कुमारिलोपि वर्षशतादि

प्राचीन इति सम्भाव्यते तदाकथंचिल्लोकप्रसिद्धस्य तयोर्गुरुशिष्यभावस्य सम्भावना भवेत् परन्तु दिग्विजयचम्पूकाव्योक्तं शङ्करकुमारिलयोः समकालत्वसूचकं परस्परसंलापादि कविकल्पनामात्रं न तात्त्विकमिति सिद्धम्।

---

## मनः।

सर्वैरपि तान्त्रिकैरभ्युपेतमन्तःकरणतत्वम्, ते च प्रतिक्षणमाकुलीकृता न परीक्षका एव लौकिका अपि यद्यपि विदन्ति तद्वृत्तम्, तथाप्यनूद्यत एव प्रबन्धेनायं विषयः पुनः प्रणिधानमापादयितुम्। तस्य च करणस्यापि निगडितकर्तृचरणस्य, समीहा चैतन्यानिकेतनस्याप्यधिकृतचेतनस्य, अनुल्लंघितकायसीमाबन्धनस्यापि वाह्यविषयप्रत्ययनिबन्धनस्य, अणोरपि भगवदक्षपादकणादमये सर्वतो विसारिणः, परिणामिनोऽपि कापिलानामनपायिनः, तत्त्वस्याप्यधिगतातत्त्वस्य, परिकलितावर्णस्याप्यद्वैतिनांपरमार्थचैतन्यमूर्धविहरणस्य, सर्वथाऽवस्तु तन्त्रस्यापि योगाचाराणां, क्षणविनाशिचैतन्यवस्तु मोहनमन्त्रस्य, शून्याकारस्यापि माध्यमिकानां सर्व प्रत्ययाधारस्य, अस्तिनास्तीतिव्याहतप्रत्ययसिद्धस्याप्यैकान्तिनां स्वरूपाविरुद्धस्य, पाषण्डमण्डनमण्डनस्य धूर्त्तगण कुलनन्दनस्य सत्यतरून्मूलनविभञ्जनस्य, दोषविभावसुप्रज्वलनेन्धनस्य, सर्वथापि चित्रचरित्रस्य चित्तस्य कथां कर्त्तुं सयत्नं प्रवृत्ता अपि यद्यपि बिभीमस्तथापि प्रफुल्लवदनमिदं स्वयमेवांजसात्मवृत्तमभिदध्यादिति निर्विचिकित्सा वयम्।

मेदिन्यादि भूतपंचकजन्म वपुरेतद्वटादिवद्वानिश्चलं, वारिवाययथानिम्नपथानुयायि तथा, वीतिहोत्र इवाहोस्विदुत्पथपरिपन्थि, मातरिश्वानमनुकुर्वन्नाहो निश्चिन्तमितस्ततो भ्रमणतया भवेत्, परमिदमनुभवन्नभिलषन् यतमानः सतर्कमारभन् कर्म्मोण्यापरिणामं तद्विरोधिनि विप्रतिपद्यमानं समाददानश्चानुकूलानि न तच्छीलमेवानुशीलयतीति भवेदस्यावश्यंकर्णधारः कश्चित्तरणेरिव जलधिवारिपतितायाः।

स चायं विभुर्वाणुर्वा मध्यमपरिमाणाश्रयो वा; तत्रापि चैतन्यवान् चैतन्यमेव वा; चैतन्याकारोपि क्षणिको वा नित्यो वेति सत्यामपि दृष्टिविप्रतिपत्तौ नात्रानवसरे विविच्यते, सर्वथापि तु प्रत्यात्मविदितया सतया न विहीयते। एवं च जानन्नाप्ययमिदम्मया पार्य्यतेऽनुष्ठातुं नेदमिति, कदाचिदैकान्त्यमासेवमानो गर्तनदकण्टकव्याघ्रकरालव्यालमृगपालसमाकुलाध्वव्यतिकरपरिक्लान्ते कथमिति काननान्ते सध्वान्ते ऽशान्ते च प्रविश्याखिलमगण्यमुद्धृत्यारिकुलमुद्दिश्यअधिकरिष्याम इति विमृष्य, हन्त भो! वीरजनिरहं विवदन्तं कालमप्युच्छेद्यमपौरुषञ्च मन्यमानः, प्रक्षिपन्नितस्ततो विद्युज्जालकमिव तडित्वान्, प्रज्वलनास्त्रसन्ततिम्, प्रतिभटभयंकरश्च विमुञ्चन् केशरिकिशोरक इवाशावधूविकम्पनचणं सिंहनादं, गर्जनदादीनि च पवनकुमार इव वारिपूरमतिचंक्रम्यमाणः, केशरिव्यालव्याघ्रादीनि च यतीन्द्र इवेन्द्रियाणि दाम्यन्, जगदिदमकालेऽपि गिलता विशालेन भल्लजालेनभाले प्रहृत्य विजित्य समूलमुद्धृत्य वारिकुलं, तुमुलं चिन-

ध्यानपथमधिकरिष्यामस्तद्दुर्गमित्यलमत्रविचारणयेति, सतर्कोत्तरप्रतिवचनैरभियुञ्जानः केनचिदपरेणसह विनिश्चित्य कदाचित्, कदाचिच्चानिर्धारितमप्यस्तु नामेदमित्थमित्यध्यस्यन्, धिनियुनक्ति कार्य्यानुष्ठाने करणसन्ततिम्। सोऽयं सतोऽस्यै कस्यकेनापरेण विप्रतिपद्यमानेन साभिमानेन समानेन संवादः।

अत्र च परिकरस्य प्रतिद्वन्द्वः, समानस्य चेतनस्य चैकत्र सन्निवेशः, अचेतनस्य प्रज्ञानुगोयत्नः कथमिति व्याघातावतारो भवेदत्रात्मातिरिक्तोन्योपि कश्चिदिति मुखरमपि जडयति प्राज्ञमप्यर्थम्। सन्तु वात्र विचारपदमवतीर्णामनीषिणां दृष्टिविप्रतिपत्तयो, भवतु वा किंकर्त्तव्यताप्रतिपत्त्युन्मुखोविरोधावभासप्रत्ययः सर्वथातूपदर्शितसत्तर्कप्रसरस्य चेतनेतरस्यसमवस्थानमवर्जनीयम्, इदमेव च मन इत्यन्तःकरणमिति चाभिधीयते, तच्चेदं प्रमथ्यमानवारिप्रत्यासन्न शीतांशुप्रतिबिम्बमिव चञ्चलम्, पशूनिव गोपाल इन्द्रियाणि, ग्रन्थिहर, इव, प्रवासिनमात्मानमस्थिराणि विमूढं च कुर्वन्, कुतर्कसंवेदीव सुराप इव प्रमत्त इव च प्रतिपदं स्खलन्नवस्थितमप्यनवस्थितमात्मानं करोति, युक्तं चैतत्, कथन्नु विकम्पसञ्चारिणि, कुण्डवारिणि निश्चलं भवेद्रविबिम्बम्।

ननु भोः! परावरानुध्यानसंप्रणोदितो प्राकृतमण्डानि, तत्र च विनियुक्तो गृहभाण्डानि, इहापि चाभ्यनुज्ञायां तरुकाण्डानि ध्यायंध्यायं त्याजन्त्याजञ्चात्मावमानेन विचरते स्वच्छन्दचारिणे विषयविहारिणेऽकारि किमस्मै सर्वतन्त्रसिद्धान्तेन मनीषिभिरचेतनस्य अदकप्रदानम्, कथंवाहत्य प्रधानतरस्य प्रकृतिकरस्य विशालसमस्यचास्य पुरुषमपेक्ष्याप्राधान्यप्रतिपत्तिः। सत्यमेतत्, पर वस्तुगत्यानैतत्प्रधानं, प्रतीतिरेवात्र विभ्रान्ता मुख्यतायाः। कथमिति चेदभिधीयते, वैश्वानरमातरिश्वनोर्घनिष्ठसंसर्गेण निष्पन्नो सपाचनाखिलधातु संचारणादि कायिकसर्वकार्य्यसम्पादनायालं शारीरः प्राणसमाख्योवायु, एतस्य च निरोधेन निरुद्धप्रकम्पेन चञ्चलं, बाह्यपवनस्येवपानीयं, प्रकृतेस्सत्त्वप्रधानांशपरिणामसंपन्नं सर्वविज्ञानकरणमन्तः करणम् तस्य चात्मनानादिरेव संसर्ग इव संसर्गः प्रायेण संमिश्रणमिवैव प्रतीयते, येनैकस्य धर्म्मा अन्यस्मिन्नितरस्य चापरस्मिन्नवभासन्ते, तदिदमचेतनं पुरुष एव चेतन उपजीवयन् तदुपहृतविषयजातमुपाददानः क्रियासमभिहारेण तथा कृत्याकृत्येषु विनियुयुजे, येनाधुना दृढदण्डनोदनपरिभ्राम्यमाणं स्वेनैवच्च कुंकुलाल इव कृतप्रयत्नोपि सहसा न निरोद्धुंप्रभवति स्वयमेवात्मा, क्षणचतुष्टयं यावन्महता जवेन विघूर्णितं करमपि स्वकीयं सहसा नायन्निरोद्धुं क्षमते, प्रागेवापरिमितेन कालेन संभ्रामितं सूक्ष्मतत्त्वं चित्तम् नहि कुल्यया केदारान् प्रयान्त्यन् कुल्या भंगेन परिस्तुतमन्यथाप्रचलत्यानीय मेवाभिशयनीयम्, नापि धातुमन्तुना प्रणाडिकयोह्यमाना प्रयान्त्यन्ती प्रभार्ये भग्नायामन्तरा प्रणाडिकायाम्, करालेन निजांशुजालेन संत्रस्यन्ती रथ्याप्राणिनः सर्वथा आक्रोशमर्हति सौदामिनी, किन्तु नेतुरयमपराधो येनावश्यकरणीयं नानुष्ठितमनेनाध्व परिपालनम्। इत्थ-

मनु प्राणमाश्रित्य गमयितुमुद्दिष्टमभिकांक्षितं कामाद्भिभीमजन्तुभिर्विभज्याग्रारमाकृष्यमाणं परिहृत्य च तानात्मनानवरुद्ध कथमित्युपालम्भनीयमन्तः करणम्, एवञ्च सततं विश्रङ्खलं गच्छन्तमायान्तं च समासन्नचक्रकथं कोनामैनमावर्जयेद्दूतेऽगाधोयोगिनं योगिनम्। कामाद्यन्तःकरणेषु चाकर्षणादि चेतनवृत्तमुपलभ्यमानं न विमोहयति लोहायस्कान्तवृत्तदर्शनं प्राज्ञजनमित्यलम्।

मुक्तिराम उपाध्यायः।

---

# हरिहरयोरभेदः

[दीक्षायोपुर्यां शैववैष्णवविवादे किंचिद् वक्तव्यम्]

अये मान्यावतंसाः अस्मिन्नेव १९७३ हायने काशिषु काश्यामपि काश्यामिका; यदनवसरे विबुधपुरस्सरेऽपिसमाजेन समजायितम्। अहो! अकाण्डे विद्वत्प्रकाण्डेनापि विलसितम्। हंहो! किमु भारतीयानां धर्म इव परमेश्वरोऽपि सहस्रशाखोऽभूत्। स तावल्लौकिकश्चेदस्तु, वैदिकस्तु नोपपद्यते। किं पल्लवितेन। महाभागा महामदीया ईशायिनश्चाप्येकमेव परमेश्वरं प्रतिपद्यन्ते। तर्हि कोऽयमुपहासास्पदमनात्मनीन उपहासो वर्णाश्रमशृङ्खलानियन्त्रितासु जातिषु। मन्ये, दुर्दैवविलसितम्; यद् विद्यावाणिज्यशिल्पव्यवसायविधुराः कामपि शान्तिमलभमाना व्यर्थं कलहायन्ते यत्र तत्र विप्रवदन्ते। एवमेतन्निवेद्यते तावद् यदि नाम रोचेत।

(१) अयि महाशयाः! यत्र कुत्रापि दर्शनेष्वेक एव परमेश्वरः स्मर्यते; न पुनर्द्वित्रादिः। अतएव श्वेताश्वतराणां मन्त्रोपनिषदि—

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥

इतिश्रूयते (६।११) तथा—

'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद् बहुधा विप्रा वदन्ति अग्निं यमं मातरिश्वानमाहुः

इति (ऋ० सं० २ अ० ३ अ २२ व०) तथैव—

स ब्रह्मा सशिवः सेन्द्रः सोऽक्षरः परमः स्वराट्।
स एवविष्णुः स प्राणः सकालोऽग्निः स चन्द्रमाः॥
स एवसर्वं यद् भूतं यच्च भव्य सनातनम्।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये॥

इति च (कैवा० उप० ८-९)

एवमादिनामगुणसंग्राहकं ब्रह्म। यज्जिज्ञासायै 'अथातो ब्रह्मजिज्ञासा, इत्युत्तर मीमांसाशास्त्रारम्भः। यद्यपि-'जन्माद्यस्य यतः' इत्याद्यधिकरणेन ब्रह्मणो गुणोपाधियोगिन्यो ब्रह्मविष्णुशिवादिसमाख्या न निरूप्यन्ते तथापि जगतो जन्मादिभावविकारानुरोधेन सविशेषनिरूपणार्थं ता इष्यन्त एव। एवमिह ब्रह्माणी वैष्णवीरुद्राणीप्रभृतयो नृसिंहरामकृष्णमूर्तयः शालग्रामबाणलिङ्गाकृतयश्च प्रतिपत्तव्याः। तदेतत् समासव्यासाभ्यां सविभूतिकं नृसिंहतापनी रामतापनीगोपालतापनीषु पुराणोपपुराणेतिहासेषु ब्रह्मविष्णुरुद्रयामलेषु पञ्चरात्रेषु प्रत्यभिज्ञासु च प्रतिपाद्यते। यत्तु खल्वेतेषु बहुत्र पर्यायेणैकस्यैव लीलाविग्रहस्योत्कर्षोऽपकर्ष श्चेत्युभयं स्मर्यते, तत्पुनराराध्यस्याराधनविधि शेषाभिधानाभिप्रायेणैव। 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते; अपि तु स्तुत्यंस्तोतुम्' इति न्यायात्

इयता—

अशब्दमस्पर्शमरूपमव्ययं ।
तथाऽरसं नित्यमगन्धवच्चयत् ॥
अनाद्यनन्तं महतः परं ध्रुवं ।
निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥

इत्येवमादिजातीयकेन श्रुतिजातेन निरूप्यमाणे निर्विशेषे प्रत्यगात्मनि परब्रह्मणि चित्तावतरणार्थं श्रौतस्मार्तलिङ्गबलेन ब्रह्मविष्णुरुद्राद्याकारविजृम्भमाणं सविशेषप्रतिपादनं साधु संगच्छते । तथा च स्पष्टं श्रूयते रामतापन्याम्—

'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥,

इति । रूपकल्पनोद्देशोऽपि तत्र वितत्योपदिष्टो जिज्ञासुभिर्द्रष्टव्य इति । ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः, इत्यादि योगवार्तिकादौ च । तत एव—

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥,

इति । मन्दत्वं मनोनिग्रहाक्षमत्वं, न पुन पदवाक्यप्रमाणपारावारपारीणतावैधुर्यम् ।

इत्यागमेन विरोधशान्त्यै प्रथमा निवेदना ।

(२) अय्युपासकसिंहाः ! यथैको देवदत्तः पच्यादिक्रियासंपादकतया पाचकादिव्यपदेशं लभमानोऽपि नात्मना भिद्यते; तथा परमेश्वरोऽपि भूतभौतिकलक्षणस्य जगत उत्पत्त्यादिविधानेन ब्रह्मादिसंज्ञामधितिष्ठन्नापरो जायते । किंतु पाचकादिवद् ब्रह्मादि नाममात्रयोगीति प्रतीयते । तथा चाध्यात्मरामायणे ।

'अयं च विश्वोद्भवसंयमाना ।
मेकः स्वमायागुण बिम्बितो यः ॥
विरञ्चि विष्ण्वीश्वरनामभेदान् ।
धत्ते स्वतन्त्रः परिपूर्ण आत्मा' ॥ इति

एवं च पाचकत्वादि क्रियया ये गुणा उत्पद्यन्ते ते देवदत्त इव ब्रह्मत्वादिना य उपतिष्ठन्ते ते तावत्परमेश्वरे विश्राम्यन्ति । सैषा-विश्रान्ति गुणोपसंहार न्यायेन । एवं जातीयका गुणास्तु 'अन्तस्तद्धर्मोपदेशात्' इत्यन्तरधिकरणादौश्रुताः स्मृता नातितिरोहिताः । त एते गुणाभेदका इति परेत्वभेदका इति व्यवह्रियन्ते । येषां योगायोगाभ्यां परमेश्वरस्य ब्रह्मादिलीलाविग्रहेषु भेदाभेदौ व्यपदिष्टौ । तत्र पूर्वकोटेः परकोटौ विश्रमः 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यधिकरणाम् । अत्र लाघवार्थं पञ्चायतनीं लक्ष्यीकृत्य मीमांस्यते ।

विष्णुशिव शक्तिगणेश सूर्या इति तावत्पञ्च देवा प्रख्यातगुणकर्माणो महामहिमभागिनः श्रूयन्ते सविस्तरं च स्मर्यन्ते । येषामुपासका वैष्णव-शैव-शाक्त-गाणेश-सौरा-इतिव्यपदिश्यन्ते

विष्णवादीनां भेदकनामानीमानि—

१ गोविन्द···गां भुवं धेनुं स्वर्गं वेदं वा अविदम्
२ चन्द्रशेखरः·········चन्द्रः शेखरो यस्य···
३ गजाननः···········गज आननमस्य······
४ भास्करः··············भाः करोति·········
५ उमा··········ओमा·············

अभेदकानित्विमानि—

१ विश्वंभरः·········विश्वं विभर्ति·········
२ ईश्वरः············ईशितुं शीलमस्य·····
३ विनायकः·············विनयति ····
४ सविता················सुवति·········
५ शक्तिः··················शक्नोति·········

इह भेदकनामग्रहणे पञ्चभिरपि गोविन्दादिभिः परस्परं निरपेक्षा गोविन्दादिव्यक्तयो निम्नागम संकेतिता बुध्यन्ते । अभेदकनामग्रहणे तु विशेषणैरिव पञ्चभिरपि विश्वंभरप्रभृतिभिरेकं विशेष्यमिव वस्तु विशिष्यमाणं बुध्यते, रूपमरूपमपीति सूक्ष्मेक्षिकया निरीक्षणीयम् । अथवा, किमियता आराद् उपासकसंज्ञाप्रकृतय एव व्याकर्तव्याः । एतेन पञ्चानामप्येकता व्याख्याता; किं पुनरेकप्रकृतिकयोहरिहरयोः । एतदेवाभिप्रेत्य धर्मशास्त्रकारैरपि—

'शम्भौ मध्यमते हरीनहरभूदेव्योहरौ शङ्करे—
भास्येनागसुता, रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो, लम्बोदरे ऽजेश्वरे-
नार्याः, शङ्कर भागतोऽतिसुखदा व्यस्तास्तु तेहानिदाः

इत्येवमाकारा पञ्चायतनी निरूपिता । यत्र वरिवस्याप्रकारेण क्रमतः पञ्चानामपि ब्रह्मधाराणां प्रधानोपसर्जनभावौ व्यवस्थाप्यमानौ परम्परमभेदसाम्राज्यसौभाग्यं व्यङ्क्तः । किंवा, किं तावता उपबृंहण दिशा—

'यं शैवाः समुपासते शिवइति; ब्रह्मेति वेदान्तिनो;
बौद्धा बुद्ध इतिप्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः;
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ।'

इत्यपि दूरोत्सारितदुराग्रहग्रहं प्रहीतव्यम् । एतेन मिथोभिद्यमानानामपि प्रणवोपजीव्यानामुपासनाग्रन्थानामेकप्रतिपाद्यता प्रतिपादिता भवति । यद्येवं नाङ्गीक्रियेत, तर्हि सर्वेषामुपजीव्योपजीवकभावापन्नानामपि शास्त्राणां प्रस्थानभेदप्रत्यग्रस्थानभाषाभङ्ग्या शिशून्मत्तभाषणवत्प्रेक्षावतामुपेक्षावलावानुपादेयता प्रसज्जेत । किं बहुना, भेदकं विग्रहं कृष्णादिनामापि श्रीमत्यां गोपालतापन्यामभेदकनयेनैव नीतंश्राव्यते—

'कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥'

इति । द्रष्टव्यात्र नारायणीया व्याख्या । यद्येवं न मन्येत, तर्हि देवदत्ताभिधानवद् रामकृष्णादिनामापि याद्रृच्छिकंभूत्वा स्वचैकल्पेनार्गलापुरदुर्गवदयोध्यामथुरादि फलगुतांगमयेत् ; स्वस्वाध्यायेन वा देशकालपात्रवैषम्यराहित्येपि फलतारतम्यमुत्पादयेत् । नैवं पुनरुपपद्यते ।

किं च कस्या लीलाव्यक्तेर्विराडात्मकवर्णनावसरे ये पातालभूतलव्योमार्यमाब्जप्रभृतय पदार्था अवयव घटकत्वेनोपात्तास्त एव परस्या. कृते कथं संगच्छेरन् । सतिभेदेऽवयविनोऽन्यथान्यथा भवनेन भूमातिशयप्रदर्शनतात्पर्यव्याघाताद् इष्टापत्तावनेकेश्वरतापातात् । अपि च वाजनेयिसंहितायाः षोडशेऽध्याये सप्तशतीमालामन्त्रस्य पञ्चमेऽध्याये श्रीमद्भगवद्गीताया दशमेऽध्याये च समुपदिष्टानां विश्वावभासकानां भावानां काधिकारणे पारमार्थिकी घटना संभाव्येत, अन्योन्यत आकृष्यमाणा वा वालुकाभित्तिरिव विशीर्येत, भगवतो वेदपुरुषस्य तदन्तेवासिनो वेदव्यासस्य वा शिरसि निपतन्ती लौकायतिकान् वाचालयन्ती स्वयं वा छिद्येत । किं तावद् युक्तम् ? एकत्व मिति प्रतीमः । एवं च न केऽपि दोषाः प्रादुःष्युः ।

तदेतद् वर्णबीजप्रकाशे (मुम्बापुर्यां श्रीवेङ्कटेश्वर-यन्त्रप्रकाशिते) मन्त्रोद्धारन्यासपुरस्सरमपि दर्शितम् ।

इत्यागमयुक्तिभ्यां विरोधशान्त्यै द्वितीया निवेदना।

( ३ ) अयि महोदयाः! सम्राट्पृथ्वीराजतः प्राङ् नैषा वर्णाश्रमशृङ्खला सुवर्णभावं हापयन्ती लोहात्मना परिणेमे; यदसाधु शब्दायमाना मालिन्यमधिकयन्ती दुःसहा विभाव्येत । सांप्रत त्वसांप्रतं प्रवर्तमाना समजनीति सर्वप्रत्यक्षं कः प्रत्याचक्षीत । अहह! कालमहिम्ना शाक्ता गाणेशाः सौरा इति त्रयोऽपि लुप्तप्रायाः, केवलं वैष्णवाः शैवा इत्युभयेऽवशिष्टास्तेऽपि भूताविष्टा इव बाबद्यमाना उपलभ्यन्ते । यद्यपि संरम्भिषु निवेदनया वेदनयेव न पराक्रम्यते । तथापियेकतिपये भगवन्तं विष्णुं शिवं वा परमार्थदृशा प्रपन्नास्तानुदारहृदयानुदाहरणीकृत्य किंचित्पुरातत्वं प्रस्तूयते-पूर्वं वैष्णवेषु शैवेषु वा न काप्युपासनाप्रयुक्तो विवादो जजागार । परस्तादपि तावत्तत्र भवत्सु तुलसीदाससूरदास प्रभृतिषु प्रभवत्सु न कोऽपि विवादावसर आपपात । प्रत्युत तत्प्रणीतग्रन्थप्रणयिषु हरिहरयोर्यथोपदेशमनाविलो निसर्गमधुरो भक्तिप्रवाहः प्रववृते । ततस्ततस्तु वादजल्पवितण्डाफूत्कार संधुक्षितः संप्रदायातिक्रमधूमोद्गारपरीतः परस्परविद्वेषवैरस्यवैश्वानरो बहलीभवन्नद्यावधि विद्यार्चींषि दिग्विदिक्षु विक्षिपन् दग्धव्यावशेषतयेव न विश्राम्यति । आः कष्टं भोः, विद्यावाणिज्यशिल्पव्यवसायविधुरेष्वस्मासु कोऽयं सांक्रामिको दुरामयःप्रवर्तते, येन बाध्यमाना श्रुतिस्मृत्युपदेशान् विस्मरन्तः सारमटीकमुत्पथं नीयामहे । तथा नीयमानाश्च साधिक्षेपं प्रातिवेशिकैरुपेक्ष्यामहे । अहो य इदानीम काले-ऽस्माकं वैष्णवानां शैवानां चान्यान्यं संघर्षः प्रसरीसरीति; तत्र केवलमार्थिकं निदानं मन्यामहे । यस्माद् आगमेन युक्त्या व्यवहारेण वा-

'हरिशंकरयोः सितासितं भुजगारातिभुजङ्गलाञ्छनम् ।
वपुरस्तु मुदे विरुद्धयोरपि संसर्गि न भिन्नतां गतम् ॥

इत्यादिकाव्यसृष्टावपि हरिहरयोरेकतायां सुरूढायां तदुपासकयोरुपास्तिमूला भिन्नता कथंकारं संघटेत । कथंचिद् घटमाना वा क शरदभ्रच्छायेव चिराय तिष्ठेत । नसद्यो विलीयेत किम् । शिवकर्तृका हि विष्णुस्तुतिः, विष्णुकर्तृका हि शिवस्तुतिस्तत्र तत्र स्मर्यमाणा तयोः परस्परमलौकिकं हार्दं साधयति-कथयति-घोषयति गाढम् । तत एव ।

'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ।
ईषदप्यन्तरं कृत्वा रौरवं नरकं व्रजेत् ॥'

इत्येवमादि वचनसहस्राणि समुपलभ्यन्ते । येषां पुनराकलनमनीषायां पारमार्थिकदृष्ट्या अपरिच्छिन्नो व्यावहारिकदृष्ट्यापि महामहाभारतायमानः सदर्भःसंजाघटीतितराम् । अत एव केनचिन्महात्मना ।

मया पुराणोपपुराणयुक्ताः ।
साङ्गाश्च वेदाः स्मृतयः समस्ताः ॥
'शास्त्राणि सर्वाणि विलोकितानि ।
न क्वापि दृष्टः शिवविष्णुभेदः ॥

इत्युपाश्लोकि । एतेनावतारा अपि व्याख्याताः । तत्रेयमुपासनादिक् ।

'सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम् ।
संस्थाप्य पूजयित्वाह रामो लोकहिताय च ॥,

इत्यादि; अध्यात्मरामायणे युद्धकाण्डे ५ सर्गे। तथा हरिवंशे।

'तं परिजातकुसुमैरर्चयामास केशवः।
तुष्टाव वाग्भिरीशेशं सर्वकर्तारमीश्वरम् ॥'

इत्यादि, विष्णुपर्वणि पारिजातहरणे १२६ अध्याये। पुनरिह भविष्यपर्वणि शिवप्रसादार्थं श्री कृष्णकर्तृका द्वादशवार्षिकी तपश्चर्या परिणतिः २६७-२७३ अध्यायेषु द्रष्टव्या। कथमत्र मक्षिकाचरणे कुञ्जरसंचार इति विरम्येत। एवम्-'ज्ञानलवदुर्विदग्धं ब्रह्मापिनरं न रञ्जयति' इत्याप्तवाक्यं स्मरता।

'स्वार्थात्, स्ववर्गस्वार्थात्,
स्वसंनिवेशाग्रहात्, स्वविस्रम्भात् ॥
आर्या ग्रच्युन्मार्गं।
विप्रवदन्ते पर न्त्वेवम् ॥'
उभयोरेका प्रकृतिः।
प्रत्ययभेदाच्च भिन्नवद् भाति ॥
कश्चिन्मूढः कलयति।
हरिहरभेद विना शास्त्रम् ॥
इत्युपसंह्रियते। तथा चेदमस्तु।

'सन्तः सन्तु प्रसन्ना निजनिजप्रकृतिप्रकर्षसीमानमाप्ता।
वेदाङ्गोपाङ्गलक्ष्मीषु लघु मतिमतामास्यरङ्गान्तरेषु ॥
निर्वैरो भक्तियोगः प्रसरतु कृतिनामीश्वरे ध्येयकाये।
जीव्यात् सम्राट् पितेव प्रकृतिहितरतो भारतं भातु भूयः॥'

इति चातुर्वर्ण शिक्षा।

इत्यागमव्यवहाराभ्यां विरोधशान्त्यै चरमा निवेदमीति शिवम्।

दुर्गाप्रसाद द्विवेदी ( जयपुर )

—:०:—

## आल्हा।

आल्हा ऊदलेति नाम्ना प्रसिद्धौ क्षत्रियवीरौ कस्यवा श्रुतिपथं नागतौ जनस्य। एतौ हि मध्यमिते कुटुम्बे लब्धजन्मानावपि समूर्जित विभवैर्बहुलवाहिनीनायकै राजभिरप्यनवाप्यां कीर्तिमवापतुः। दीनत्राणं स्वामि कृते प्राणव्ययश्चेति क्षात्रधर्मो नानुपालित एवाभ्यां सहोदराभ्याम्। अनयोः शौर्यं वर्णनमेकेन चन्देलराजकविना कृतम्। महानादरस्तस्य काव्यस्यैतत्प्रदेशे। प्रसिद्धश्चैतत् काव्यमाल्हानाम्ना। वर्षासमये आल्हा चरितं गीयते प्रतिनगरं विहारयुक्तप्रदेशादिषु। आल्हा चरितगानं हि केषाञ्चिद्व्यवसायः। ते प्रतिनगरंगत्वा गायन्ति आल्हा चरितम्। ते गायकाः सत्क्रियन्ते च पारितोषिकदानादिना। अद्य आल्हा चरितस्यकथाभागः शारदावाचकेभ्य उपह्रियते।

चन्देल नृपाणामन्तिमः परमारदेवो नाम राजा बभूव। साम्प्रतं महोवा नाम्ना प्रसिद्धे नगरे तस्य राजधानी समभवत्। दुर्बलः परमार देव इति हस्तिनापुरकान्यकुब्जाधीश्वराभ्यांस निकामं निपीडितोऽभवत्। आल्हा ऊदलश्च तस्य राज्ञः सभासदावभवताम्। बाल्य एव मृतपितृकाविमौ राज्ञा परमारदेवेनैव पोषितावभवताम् परमारदेव महिषी मालहन देवी पुत्रवदिमावपालयत्। अनयोः पितुर्जसराज इति नामासीत् सहिकस्मिन्नपि समरे वीरगति मलभत। ततः परमार देवेनैवानयोः पितृकृत्यं निर्वर्तितमभवत्। क्रमेण वयस्थाविमौ सूर्याचन्द्रमसाविवात्मनः कीर्तिं प्रसारयामासतुः।

तदा महोवानगरं प्रसिद्धमभवद् वीर्यातिशयेन । अनयोः प्रतापसूर्यो नभोमध्यमारूढः प्रतपतिस्मा रातीम् । अयोध्या महोवाधीशवाहिनी, कोवा शकस्तत्सम्मुखं क्षणमपि स्थातुम् । आल्हा ऊदलश्च समुपकृतौ राज्ञा, अनयो र्विवाहो राज्ञैव स्वव्ययेन सम्पादितः, राज्ञी च पुत्रनिर्वि शेषमिमौ पश्यतिस्म । अतश्चानयोरपिराजकुले महती भक्तिरजायत । राजरक्षायै प्राणानपि सुखेन समुत्स्रष्टुं कृतप्रतिज्ञाविमावभवर्तताम् । आल्हा ऊदल प्रतिमौ वीरो यस्य वशेतिष्ठति तं सर्वोऽपिप्राणरक्षार्थी जनः प्रणमेदेव । अतश्चापरे सर्वे राजानः परमारदेवं श्रद्धया सम्मानयितुमुपचक्रमुः । पुनः प्रवृद्धा प्रतिपत्तिर्महोवा राज्यस्य । तत्रत्यः क्षीणश्चन्द्र कलाभिः पूर्णो दिगन्तानुद्भासयितुं प्रवृत्तः ।

तयोःसर्वदा समरप्रवृत्तयोरेव समयोऽत्यवर्तत । तदाहिभारते सर्वतः प्रज्वलितआसीत्समराग्निः । तत एवच वीराः सम्मान्यन्ते । तदाप्रत्यायणं खङ्गझणत्कारोऽश्रूयत । तदा कन्या जन्म महदनिष्टकरमिवामन्यत । यतःकन्याविवाहावसरे समरोदुनिर्वार आसीत् । तस्मिन्नेव काले आल्हा ऊदलश्चजन्माधिजग्मतुः विलास प्रचुरेकाले वीराणामादरो ननुस्वाभाविकएव । राजानो विलासपरा, प्रजाश्चतदनुगाः । कोनाम न्यायः, कोनामसदाचारइति न कोऽपि विजानातिस्म । एतादृशाणामाचाराणा यादृशः परिणामो भवति, तादृशो ननुजातएव ।

( २ )

आल्हा मातुलो माहलजी आसीत् । तस्य हि विलक्षणा प्रकृतिर्न कस्यापि योस्यस्य सम्पदुत्कर्षं मनसापिसोढुं शक्नोति । महोवाप्रान्ते दिने दिने प्रसरन्तींमाल्हा ऊदलयोर्यशोवल्लरीं निरीक्ष्यमाहलजीमहोदयस्तां मूलत उच्छेत्तुं प्रयत्नमारचयत् । परं माहलस्यायं प्रयत्न एव तयोर्यशो वर्द्धनमन्त्रः सवृत्तःमाहलेन सर्वत्र आल्हा ऊदलयोर्निन्दाप्रचारिता । कदाचिदयं राजसभामगच्छत् । तत्र न सन्निहितावभवतामाल्हा ऊदलश्च । राजसभांप्रविष्टो माहलः शोकाक्रान्त मिवात्मनो मुखमण्डलं व्यधात् । तथाविधं तं दृष्ट्वाराजाप्रोवाच । मातुल ! कथं शोकाक्रान्तमिवाद्य भवन्तंलक्षयामि । राजवचनमाकर्ण्यैव माहलस्य नेत्रेऽश्रुपूरपरिप्लुते ऽभूताम् । कपट प्रबन्धकुशलानांस्वमनोवृत्तिषु यावानधिकारो न तावान् योगाभ्यासवशीकृतेन्द्रियग्रामस्य मानवसिंहस्यापि । तेषां हृदयं शोकाकुलं वा भवेत्, परमोष्ठे स्मितरेखा विलोक्यते । मनः प्रसन्नम् नेत्राभ्यामश्रुप्रवाहो निर्गच्छति मनसिप्रज्वलतिमत्सरानलः, परंवाक् सुधारससहोदरा विनिःसरति । माहलोनृपमवदत् । महाराज ! भवत्पाणिपल्लवलालितस्य जनस्यास्य नावशिष्टाः केऽपिमनोरथाः । परं भवदाश्रयप्रवृद्धो जनः प्रत्यर्प्य निवापाञ्जलिंतेभ्यस्तेभ्यो भवदुपकारेभ्यः साम्प्रतं भवद्विषयएव कपटं कर्तुमुद्यत इतिज्ञात्वा नितरां चिन्ताक्रान्तोऽस्मि सञ्जातः । परमारदेवोऽपृच्छत्, अपिममाश्र पुष्टेषु जनेष्वस्ति कश्चिदेवंविधः माहलो वद देव ! अहमेव । राजाचकितोऽपृच्छत् अपि भवान् ? माहलः प्रत्यवो चत् , महाराज ! किमिव वाब्रवीमि ।

कृपापारावारे भवद्धृदये कोऽपिनक्रः प्रविष्टः। मद्भगिनेय आल्हाः। तस्यननुराजापचारो मदीय एव भवति। राजाकिञ्चित् विषण्ण इवावदत्। आल्हा पुत्रसमोमे। महताकष्टेन मयासुपालितः। सकिमद्य मय्यपचारं रचयति। नात्रविषये कथमपि विश्वासमाधातुं शक्नोमि। माहलोमहाराजसमीपमुपसृत्य किञ्चित् कर्णे कथयति।

( २ )

आल्हा ऊदलप्रभृतयो बहवो तुरगसञ्चालनशिक्षाभ्यासप्रवृत्तौ साम्प्रतम्, उपस्थितास्तत्र बहवःप्रेक्षकाः। अत्रान्तरे कञ्चुकिरागत्य-राजाह्वानमश्रावयत्। महाराजस्याकाण्डाह्वानं श्रुत्वा आल्हा किञ्चदिव भीतः सञ्जातः किन्निमित्तमद्यमहाराज आह्वयति। परित्यज्याश्वसञ्चालनं तौ राजसभां प्रस्थितौ। प्रेक्षकाश्चपरस्परं समालपन्तः स्वस्वगृहं जग्मुः। राजानमुपसृत्य वीरसरण्या प्रणम्य च ते यथास्थानं निषीदतुः। राजा प्रोवाच, मत्प्रार्थितं युवाभ्यां प्रदास्यते। कोनियोगोऽनुष्ठेय इति आल्हा सादरं सविनयञ्च प्रत्यभाषत। महाराज आल्हा नकारप्रदानेऽसमर्थः सर्वथा। यतो नकारप्रदानं क्षात्रधर्मे विरुद्धमित्युक्त्वा स्वमातुलं वक्रित ग्रीवो व्यलोकयत्। अनेनैवकोऽपि कपटो विरचित इति निरधारयच्च। आल्हा पुनर्नृपमुवाच। अयं महाराजस्य प्रश्नक्रमो निपातयतिजनममुं सन्देहसागरे। अनभ्यस्तोऽयंजन एवंविधानां वाचां श्रवणे। यथेच्छमाज्ञाप्यताम् भवदाज्ञया ज्वलज्जटालमग्निमप्यालिङ्गयितुमहं समुद्युक्तः, मृत्योरपि प्रतिभटो भवितुं सन्नद्धः। राजा तमुवाच, ममापित्वय्येवंविधएव विश्वासः। आस्ताम्, नाहर नामकोऽश्वस्त्वया प्रदेयो मह्यम्। श्रुत्वैतद्राजवचनं आल्हा परं विषण्णोऽभवत्। कथमियं राजाज्ञापालनीया,। राजाज्ञो धोगणितश्चेत् क्षात्रधर्मोननुकथं तिरस्करणीयो नकारप्रदानेन। महान् मयि राजोपकारः परं धर्मविरुद्ध राजवचनं कथन्नाम मानयितव्यं भवेत्केनापि क्षत्रियवीरेण। इदं शरीरं पालितं महाराजेन तत्सुखेन त्यक्त्वा तदानृण्यं गन्तुकामोऽस्मि धर्मस्तु सर्वात्मना परिरक्ष्यएव। शस्त्रमश्वश्चेति द्वावेव क्षत्रियस्य बाह्यप्राणभूतौ। इमावेवाधिष्ठाय क्षात्र धर्मस्तिष्ठति। तत् किमिदानीं कर्तव्यम्। राज्ञामप्युपकृतमिति सत्यम्, परं मयापि राजसेवाकृतैव। कतिवानापदः सोढा मया राजसेवाकृते। साम्प्रतं तत्सर्वमेकपद एव विस्मृत्य राजामां धर्मच्युतं कर्तुमुद्यतः। अशक्यं साम्प्रतं राजाज्ञापालनम्। आल्हा इत्थं बहुविचिन्त्य निक्षिप्य च क्रोधारुणलोचने माहलदेवे धीरं वक्तुमुपाक्रमत। असमर्थोस्ति राजाज्ञापालने। परमारदेवोऽवदत् किं ममोपकाराणामियं प्रत्युपक्रिया। इयं पदवी मत्कृपयैव श्रीमद्भिः प्राप्ता। आल्हा प्रत्यवोचत्, महाराज, जानामि, सर्वंजानामि। परंप्रत्युपकारतोऽपिक्षात्रधर्मपालनं महद् विजानामि। धर्मविरुद्धं राजवचनं न कथमपिमान्यं भवति, शरीरं पालितं देवेन, तत्सुसज्जमेव देव कार्येषु धर्मविरुद्धं चेष्टितुमपि नाहमात्मानं समर्थं भावये। माहल वचने राज्ञः परमो विश्वासो

आतः। आल्हा च राजानं प्रणम्योवाच, वाजि-शालाभ्यन्तराद्येऽपराधाः सञ्जातास्ते ननु श्रीमद्भिः क्षन्तव्या महाराजैः। साम्प्रतमत्र क्षणमपि स्थातुं न शक्नोमि। इत्थमुक्त्वा राजसभातो सहोदरेण निष्क्रामत् आल्हा माहलदेवमवदत्, काले भवताप्येतत्फलमनुभवनीयमेव।

( ४ )

आल्हा ऊदलयोर्माता देवल देवी। क्षात्रेण तेजसा समुद्भासितमासीदस्या हृदयम्। धर्मपालनाय राजानमपि तृणायमत्वानयो. पुत्रयोः शिरसि करं निधाय वाष्पव्याकुल-लोचनाऽवदत्, वत्सौ, युवाभ्यां यथाह जननी-कृतां पालित धर्म एव श्रेयः सूते। रुष्टो नृपो न किमप्यनिष्टं कर्तुं शक्तः। तत्कृतोऽनिष्टो ननु प्रतिविधातुं शक्यः।

मात्रा प्रशंसितावादाय च तां महोबानगरात् कङ्कसहायौ तौ निष्क्रान्तौ। किमिवानपेक्षितवीरस्य। तदासीद् वर्षा समयः नद्यः प्रवृद्धाः राजसम्मानिताः खला इव कमप्युद्वेगं जनयामासुः पथिकानाम् वारवधूचित्तमिव सुरेन्द्रचापं क्षणेक्षणे वर्णान्तरमादधार। जलधरधारा सिक्ताः पथिकाः कामपि वेदनामन्व-भवन्। वारिवाह व्यतिकरशिशिरा वबुश्च परितः प्रावृषेण्याः समीराः। केकिनां केका-ध्वनिशिखरेषु सम्मूर्छिता कामप्युन्मादतामज-नयन् जीवलोकस्य। कृषीवलकन्यकास्तरु-च्छायनिराद्भिः सपरितोषं जगुः। हरितशा-भिरास्तीर्णा पर्वतानामधित्यकाः, स्फटिकसमानै-र्मासमानैः पतद्भिर्निर्झरैः क्षणप्रभाभिर्विविधा-भिर्वल्लीभिश्च कापि शोभा अलक्ष्यत प्रकृति देव्याः।

साम्प्रतं सर्वे सुखिनः। सर्वे च गृहे निषण्णाः शोभां पश्यन्ति वर्षा नवाम्बु। ईदृशे समये न कोऽपि गृहाद्दूरदिगन्तरे गन्तुमिच्छति। कालविदम्बित एव वर्षा तुल्या स्नेह परित्यज्य-स्थानान्तरमाश्रितु चेत्। अयं नवा मात्रा सह आल्हा ऊदलौ जन्मभूमेः परित्यागतः। तेषां तदानीं तनीं हृदयावस्था वर्णयितुं को वा प्रभु-र्भवति। यत्र बाल्यं नीतं, यद्रक्षायै प्राणा अपि गीकृता, हा, अद्य सैव त्यज्यते। कं वा न दुःखाकरोति जनं मातृभूमिपरित्यागः। दृष्टावयं न्याय इति कदाचिद्राजा परावर्तयितु मस्मान् प्रेषयेत् कमनीयाशया समभितावलो-कयतां येन तेषां वेगोमन्दीभूतः। प्रकृत्या प्रवृत्तं शोकावेगं कथञ्चनदृढ़िनिवारयन्तो निगताः।

गुणग्राहकाः सर्वत्रसदामुपलभ्यन्ते, एकेन मूर्खेण दुर्दैवग्रहेन वा तिरस्कृतोगुणी, अपरेण विचारवतासत्क्रियते। आल्हा ऊदलौ महोबा तोतिर्गच्छितौ देशान्तरं गतौ प्रवृत्तावितितमा-चारमुपलभ्य बहवो नृपास्तावानेतुं स्वभृत्यान् प्रेषयामासुः। तेषु कान्यकुब्जाधीश्वरस्य जय चन्द्रस्य कुमारोऽप्यासीत्। राजकुमारेण प्रेरणा-गृहीतौ तौ कान्यकुब्जनगरं प्रतीयतुः। तत्र महाराजेन सम्मानितौ कृताभ्यर्थनौ परां प्रीत-मापयतुः। राजा जयचन्द्रो हि तावात्मनः सेना-पतित्वेऽभ्यषेचयत्।

विरहितसूर्यं मेरोः प्रान्तं वलीयसा अन्ध-कारेणसमावृतं भवति। आल्हाऊदलाभ्यां

विरहित महोबा नगरे दर्शयितुं कथाप्रसङ्ग-
कान्तुं प्रयत्नोऽकारि। अस्मिन्नवसरे
पृथ्वीराजसेना कुतश्चित् परावर्तमाना मध्ये
मार्गं महोबा नगरतोऽनतिदूरमित्यासं पृथ्वी-
वती। सैनिकानां कीदृशः स्वभाव इति
नाविदितं कस्यापि। निष्कारणमेव चन्देल
चौहान सैनिकाः परस्परं न्ययुध्यन्। चौहान
सैनिकाः खलु इति ते पराजिता परमेण
क्रोधेन जगज्जिघत्सितुमिव प्रवृत्ताः कथं कथ-
मपि राजधानीं प्रापुः। निवेदयामासुश्च सकलं
वृत्तं यथावद्राज्ञे पृथ्वीराजाय नकोऽपि वीरो
महाराज! आत्मनः सैनिकावमानं मृष्यति। पृथ्वी-
राजेन सेनासज्जीकरणायाज्ञप्ताः सेनापतयः ततश्च
समये पृथ्वी राजः सेनासमेतो महोबाभिमुखं
प्रतस्थे। आसाद्य महोबा समीपं स्थान चौहान
सेनानिवेशः स्थापितोऽभवत्, प्रान्तवर्तिनो
ग्रामाश्चतैर्लुण्ठिता निर्दयम्।

चन्देल सेना चौहान सेनाभिमुखं प्रस्थिता
जात उभयोः प्रथमः सम्मर्दः। परं चन्देल सेना
पराजिताभवत्। साम्प्रतं परमालदेवस्य
चक्षुरुन्मीलितम्। आल्हा ऊदलयोरभावो
नितरामतुदत्तम्। परं साम्प्रतमप्रस्तुतचिन्ता
सा। उपायान्तराभावे सेना सज्जीकरणाय
मासावसानोऽवधिश्चन्देलराजेन याचितः, पृथ्वी-
राजेन च तदीया प्रार्थना स्वीकृता। चौहान
राजो नियमान् प्रतिज्ञाश्च सम्यग् पालयति एतेन
प्रतिज्ञापालनदोषेण गुणेनवा कति वा दुःखानि
नानुभूतवानयं तथापि प्रतिज्ञापालनं व्रतं
नामुञ्चत्। मासावधिमयं पालयिष्यत्येवेति
निगतसन्देहाः संवृत्ताश्चन्देल भूभुजः।

मासावधिमधिगत्य चन्देलभूपः परमार
देवो मन्त्रणाय सभां समाहूतवान्। तत्र-
राज्ञापि निमन्त्रिताऽभवत्। तत्रकेनाप्युक्तम्।
इतः स्थानान्तराश्रयणमेव साम्प्रतं युक्तम्। अपरेण
केनचिदुक्तम्, नगरं परितो दृढा परिखा, विधे-
या। राजाप्यथाणुरिव तूष्णीं तिष्ठति अत्रावसरे
राज्ञी प्रोवाच, हन्त वीराणां युष्माकमियं
वाक् यैःपूर्वं समर्जिता पराक्रमेणविजयलक्ष्मीः
साम्प्रतंत एव स्थानान्तराश्रयणं मन्त्रयन्ति
क्वागतं युष्माकमिदानीममन्दं तत्तेजः। सर्वानेव
वीरान् साम्प्रतमपि पुरःस्थितान् पश्यामि,
तथापि श्रीमन्तः पुरेव न विजयश्रिया प्रदीप्त
मुखा विलोक्यन्ते। मन्ये, सादेवल देव्याराभि
धानासाविजयश्रीरुष्टा अस्मान् विहायगतेति।
ननुसेवप्रथमं प्रसादनीया। आल्हा ऊदलश्च
यथा भवेत्तथा समानेतव्यः। राज्ञा कथितं सर्वे-
रेव ससाधुवादं स्वीकृतमभवत्।

जगन्नाथनामकश्चारणःप्रेषितोऽभवत् कान्य,
कुब्जनगरादाल्हाऊदलयोरानयनाय यथासमयं
सम्प्राप्तो जगन्नाथः कान्यकुब्जनगरम्, साक्षाच्च
कार च चन्देलवीरम्। विषण्णं जगन्नाथं दृष्ट्वा
आल्हा प्रोवाच, कवीश्वर, विस्मृतवानसिमार्ग-
मितिप्रतीयते, कथमद्या किञ्चानाविमौ स्मृति
पथमागतौ। श्रुत्वैतद्वाष्पाकुला समभवज्जगन्नाथस्य
दृष्टिरश्रुपूरेण। अवदच्च स आयुष्मन् न शुभे-
ऽवसरे स्मर्यन्ते देवताः। अधुना महोबा नगरं
विधातृरोषानलनिपतितं भस्मसाद्भवति, न को-
ऽपिरक्षिता साम्प्रतं तत्रत्यानाम्। पृथ्वीराज-
सेनया सर्वं नगरं महविदुःखे निमज्जति।

साम्प्रतं चन्देलराष्ट्रं नामशेषतां गन्तुमियातृ-
त्तम्। विलीनानयनरमणीया साश्रीः कुत्रापि,
दुष्प्रेक्ष्यतामिदानीं यातं तन्नगरं प्रेक्षकाणाम्।
विरलान्येव दृश्यन्ते विवृतद्वाराणि गृहाणि। हा
हताः स्मः, हा निरवलम्बाः स्मः, वत्स पश्य शोक-
विह्वलां मातरम्, नाथत्वदेक जीवितां दासी-
मपहायक्वप्रयासि, चिरायान्तर्हितो मे सखा एवं
विधा आर्त नादास्तत्रप्रतिगृहं श्रूयन्ते। पृथ्वी-
राजेनेमां दशां गमिताः स्मः। भूयोभूयो याच्य-
मानस्तेन मासावधिः प्रदत्त। ततः परं युद्धं
प्रवलिष्यति। महाराजेन श्रीमत्समीपं प्रेषितो
भवम्। भावानेव वीरः शरणमिति कृत्वा महा-
राजेनाहमत्र प्रेषितः। अतस्त्वर्यतां सहानुजेना-
युष्मता, रक्षणीया मर्यादा चन्देलनृपाणां। भव-
दागमनान्तरं महतीदुरवस्थामनुभवति राज्ञा-
परमालदेवेनसह चन्देलराष्ट्रम्। बाल्ये युवाभ्यां
यउपभोगास्तत्रभवद्भ्यां भुक्तास्ते ननु साम्प्रतं
स्मरणीयाः। अलंकृता भवतु करवालेन भवतो
हस्तमुष्टिः। त्वरितमेवभवन्मुखचन्द्रमाः समुदेतु-
महोवानभोमण्डले। अन्यथासर्वथान्धकार-
कवलितमेव तद्राष्ट्रं भविष्यतीत्यवधेहि।

आल्हा किञ्चिदिव वक्रितग्रीवः प्रोवाच, जगन्नाथ, अस्थानेऽयमनुरोधस्तत्रमहाराज-
स्यत्र, अस्माकं यत्कर्तव्यं तन्निर्वृत्तमेवेतिमन्ये।
महाराजेनोपकृतावावामित्यत्र नास्तिसन्देहः।
परं ममजनकेनतस्यैव कृते प्राणा अपि परित्यक्ता
इति न विस्मर्तव्यम्। मयैवया महता प्रयत्ना-
राधितोऽपि महाराजः पराङ्मुखः संवृत्तः।
मत्प्रतापात् बहवो नृपाः करदीभूताः संवृत्ता-
महाराजस्य, प्राणानपेक्षमाराधितो महाराज
आवाभ्याम्, तथापि महाराजेनावां राजधानीतो
निष्कासितौ। क्षत्रियान द्विर्भाषते अतश्चमहा-
राजस्याह्वानं ममत्वत्र मिनमेतदुद्धरमण्यशो-
मनमितिमन्ये। जगन्नाथोऽभाषत, अयुक्तमिदं
क्षत्रियस्य तववचनम्। नहि कोऽपि क्षत्रियः
शत्रुसमाक्रान्तां मातृभूमिमुपेक्षते। किञ्च तस्या-
स्त्राणाय तवपिता सभ्रातृकस्त्वमपि महान्तं-
परिश्रममङ्गीकृतवान् तस्यास्त्वादृशोपेक्षणं
नितरां खेदयत्यस्मान्। सङ्कटपतितो मातृभू-
मिमुपेक्ष्यपः क्षत्रियोऽन्यत्र पिण्डपालितो भवति
तस्यनरकेऽपिनास्ति स्थानमिति वदन्ति पूर्वे।
आयुष्मन्, भूते न भवति विश्वासोवीराणाम्,
उद्धरमातृभूमिम्।

—

# पद्मावती परिणयचम्पूः।

[श्रीमता महामहोपाध्याय रघुपतिशास्त्रिणा निर्मिता]

यदीयं नातिवर्तन्त ऊहेहामानमप्यपि।
अजादयः स जयति प्रपन्नार्तिहरो विभुः॥ १॥
अप्रार्थिताः प्रवर्तन्ते तापं हर्तुं परस्य ये।
कथंकारं न ते वन्द्याश्चन्द्रचन्द्रनमज्जनाः॥ २॥
सुखदुःखे जनयितुं बुद्धिमाश्रित्य देहिनाम्।
यः प्रेरयति लोकाँस्त्रीन् स मान्यः पुरुषोत्तमः॥ ३॥
आशुकवीनृशुकवीन् चित्रविधातृन् मधुरविधातृनखिलान्
सा जीयात्कवीणा वरप्रवीणा सरस्वतीदेवी ४
सिन्दूरचितभालः पालः कविताऽवनी खनीकर्तुः।
कालः प्रत्यूहानां बालः शैलाङ्गजन्मनो जयतात् ५
कवयः स्ववयःपर्वतपवयः किल येन गीतमनुभूति।
स्फीतं यशो यशोदानन्दनसम्बन्धि रन्धितारातिः ६
धन्यौ तौ व्यासवाल्मीकी वादितां दधतौ पुनः।
नादितान्यत्पद्मनाभवर्णनाद्रसना ययोः॥ ७॥
चर्वणं न रसज्ञाग्रा द्विजानां न रसज्ञता।
भक्तिभूभवनैर्भव्यमितीवोभयधर्मभिः ॥ ८ ॥
कालिदासगिरां सारमाददाना सविक्रिया।
न काऽलिदासतामाप भारतीया कविक्रिया॥९॥
अभवद्भवभूतिः स वाच्यतानपगताभिधः।
प्रत्यजानाद्य आक्रन्दमुपलानां स्वगोजु गाम्॥१०॥
माघो माघाघिघोषाभ्यांघोषाघोषणतोऽपि सः।
शिशुपालवधव्याजाभिन्ये य उदयत्रयम्॥११॥
श्रीहर्ष एवनैषधे भारतीहर्षणोऽप्यभूत्।
यत्काव्यकलनं कालःकलिकालस्य कलयते॥१२॥
यः किरातार्जुनीयेन बन्येनोन्नीतवान् यशः।
काव्याभिधानप्रकृतिकवीनां भारवी रविः॥१३॥
उदासे भारतीदासे भासे नासेवितुं सतः।
यदासेचनकं बुद्धेस्तज्जिहासेयमंशतः॥१४॥
वर्णाः परिमिता एव रीतियोऽपि निरीतयः।
प्रतिक्षणं परं नव्याः कवीनामुक्तिमम्पदः॥१५॥
पद्यानि मानयन्त्येके गद्यानि कति वा बुधाः।
सम्मृग्यानि यतानीति तानि हृद्यानि कलये॥१६॥
श्रङ्कदेशाद्द्वन्द्वमाधाय हृदि तद्गुणान्।
विवर्णयितु राशासे समेमीष्टं क्रियादिति॥१७॥

साम्प्रतमनुभवमनुभवमाकलय्य निरुपमसुखसाक्षात्कारमन्तरा न स्वार्थमभिमन्यन्ते कश्चन विचक्षणः, बहुप्रकारमपि तन्नात्मनो निस्सीमतामृतेऽशेषोपाधिविनिर्मोकमलं साधयितुं बाधयितुं वाऽनेकविधं दुःखम्। प्रायः प्रयोजकप्रकृतिप्रचुरप्रसर्पणः प्रयोज्याः प्रभवन्तीति प्रक्रमतः कर्मभिराराध्याभिःकालबाध्याभिरिन्द्रादिदेवताभिरुद्भावितेषु सुखेषु कथं नाम निःसीमतानामकामनामनामयं भ्रियादिति निर्विवादम् ततो दृष्टादृष्टाभ्यां श्रुतविश्रुताभ्यां प्रामाण्यं प्रापिते विष्णोः सद्रूपत्वेन कस्यापि वैमत्यमितितदुपासनं शासनंसर्वभयानामुद्रासनं भव्यनिचयानां, निश्चिन्वाना अपि विद्वांसो गुणक्रियाविरहितस्य वाङ्मनसयोरविषयस्य तस्य कथङ्कारमुपासनङ्कर्तुमर्हामेति विमृशन्तो विशन्तोऽनल्पचिन्तादरीमध्यं सतोऽतिगुप्ततयाऽसत्त्वमापाततो भासमानानां चासतां सत्त्वमनुमन्वतां मनमनभिमतं जानाना नानाकल्पनाः श्रयन्तो भगवतोऽवतारेष्वत एव लोकानुग्रहार्थमङ्गीकृतेषु मनो निक्षिपन्तः शेरत पेशेगते प्रति-

प्रयुक्तामधिष्ठ्यानशय्याम् । विचारयन्ति च चिरं चेतसि ।

करुणावरुणालय भो
　　वरर्या ते सत्क्रिया मनुजनुष्षु ।
यानुद्दिधीर्षुणात्मा
　　प्रकृतेः पथि पातितः परेणापि ॥१८।

लोकेभ्यो दातुमालोकं मालोकं गतमात्मना ।
नो केभ्यो दातुमालोलः कालोलक्ष्यं लभेत यत् १६
शरण्यशरणार्थिनामुपकृतेःकृते श्रीहरेऽ
कृतेहकतिनाकृतीरुतसुधाधिगेयाः कृतीः ।
भवानपरवानपि प्रणयिनोऽनुगृह्णन् पुनः
करोति कुतुकी कथाः कलयितुं कृती कस्तथा।२०।

परः सहस्रा भवतावतारा,
　　धृता धरित्रीगुरुभारहाराः ।
ममान्तरं व्यङ्कटशैलराज-
　　निवासिनस्ते पदयोर्निमग्नम् ॥२१॥
ग्रन्थामि तामेवकथां कथञ्चि-
　　न्ननाथिथान्तर्ममनाथ यावत् ।
स्रोतस्विनीतः सलिलं गृहीत्वा
　　तेनैव तां तर्पयतस्त्र राका ॥ २२ ॥

अस्ति च सकलदिग्विलक्षणाऽऽश्च र्यैव, विचक्षणाऽध्वरस्येवदक्षिणा धर्मस्य प्रियतमा दक्षिणादिक् यामधिष्ठायैव च धर्मराजःपरिचेतुमशकन् पापपुण्यवन्ति जगन्ति । अनुतिष्ठन्ति चार्याणि यद्दिग्विभामेनैवार्याः सर्वाणि सुकृतकार्याणि । अध्यावात्सोभयां गुणगृहीतमानस आतापिवातापिपरितापिचरित्रः समुद्रापक्रियाप्रवणो लापामुद्रापतिर्भगवान्मैत्रावरुणिः । यदयनंगतश्चार्यमा सुतवात्सल्यात्सौम्यतां संमेयते । किं बहुना ।

यस्याः पुरो निर्घोशोऽसि।सामाशां तनुतेतनाम् अनन्तोऽपि धरांधर्तुमथ तान्द्रस्तुमीहते ॥ २३ ॥

यस्याविर्भाव इन्द्रप्रभृतिसुरगणा यत्नवन्तो बभूवु र्यंचाध्यासाद्य सेनापतिमतिरिपुजा भीतिबाधामहार्षुः ।
यःक्रौञ्चाद्रिद्विजानामवनपरवशो दारयामासदेव स्कन्दः सोऽप्यन्यदाशास्थितिरतिरहितोऽशिश्रियद्यामतिद्याम् ॥२४॥

यत्सङ्गतो दयावान्
　　सविता वर्षाभिरास्तृणाति धराम् ।
यदयनगतशरदुदित-
　　श्चारुतरश्चन्द्रमाश्चमत्कुरुते ।२५।

यदयननगताभिरारात्स्वार्थःक्षणदाभिरादरादकृश ।
यन्मासेषु चतुर्ष्वपिशेते लक्ष्मीपतिः सुखं शेषे २६
यदाश्रितरवेः क्रियादिवसदैर्घ्यदूरीकृति-
प्रियाहरतिदीनतां दिनमणेर्दिनानां पुनः ।
सहस्रचरणोऽपि यत्पदमुपागतः स्वंपदं
चिरायमनईसितं भजति मानितं मानिभिः ।२७।

तस्यां च ककुभिसुरभितायांमलयेन सर्वतोमहान् सानुमानस्ति श्रीशैलः ।

कथं तमचलं वच्मिचलं वायोगरुत्मतः ।
विजहे स्कन्ध मारुह्यन चलत्यन्तरात्सताम् ॥२८।

एवं हि तस्यागमगतमागममुदाहरन्तिपुराविदः । पुराकिलकृतयुगे हिरण्याक्षेन दैतेयेनोपपीडिता सुपर्वाणः परमेष्ठिनमात्मत्राणाय प्रार्थितवन्तः । भगवन्प्रजापते !

वाढं बाध्यामहे तेन
　　स्वर्लोकाद्भ्रंशिता अपि ।

जीवेमयामनुरसां
सारसातलमापिता ॥२६॥

तदुपधार्य निर्जरगणदुःखप्रतीकारं विधित्सु-र्विधिर्निमीलिताक्षश्चिराय चिन्तितवान्। उन्मीलितलोचनश्च पुरतः सुरवर्त्मनि क्रममाणं नात्यल्पमपि रममाणं खद्योतपरिमाणं भूतमवलोकयांचकार। ध्यायंश्च वेधा नवे धामनि समाधिमाधिनयात्यसत्वस प्रत्यदृश्यत पर्वतप्रायशरीरः सहस्रसहस्ररश्मिप्रतीकाश आकाशमावृण्वन् शब्देन दशदिशः पूरयन् वाराहं रूपं धारयन् सर्वदेवप्रवर आदिदेवः -

किं सत्वं प्रकृतेर्गुणःसमुदितः सङ्घीभवन्भासते
किं वा श्रौतकलाकलापकलितः सत्कर्मपुण्योच्चयः।
सूर्याचन्द्रमसौ दृशौ प्रकटयन्नाम्नायरोमाञ्चितः
किं वा श्वेतवराह एष जयति प्रागात्तधामाचितः ३०

रचितोऽञ्जलिः सुरगुरो!
देवैः सहितेन तेन लिनजनुषा।
जहि दुष्टान् पाहि सुरान-
यतीमव भवति भूरसौ न मृषा ३१

इत्थं विधात्रा परियाच्यमानो
मानोऽजसां भूद्दृदयप्रकम्पः॥
इत्यन्तरिक्षाच्चिमितं महौजा-
स्तोयान्तरे चङ्क्रमणं व्यतानीत् ॥३२॥

तत्र पश्यन् हिरण्याक्षं प्रमाणातीतविग्रहम्।
विधित्सुर्विग्रहं देवो जग्राह सकचग्रहम्॥ ३३॥

दोर्भ्यां यः पृथिवीं निनाय सुतलं शैलानधोधाद्बला-
द्योदेहेन शिलोच्चयानुकृतिना व्याप्य स्थितो रोदसी।
देवेन्द्रा उपधार्य यस्य निनदं याद्दृच्छिकं तत्र सु-
दंष्ट्राभ्यां दलितः स कोलवपुषा क्रव्यादपसद्व्यसुः ३४

अद्यो सद्धिकर्ता मध्ये
सदन्ते त्वामि मां विक्रमम्।
प्रकाशयन्नुभूदारो
भूदारो भूत्स मध्यतः ॥ ३५ ॥

मज्जन्तीं जलसंप्लवे वसुमतीमुद्धृत्य यः केलया दंष्ट्राग्रे तिलकश्रियाय निरवात्यारोनिधेर्मध्यतः। धुन्वानः श्रुतिकृल्लोमतिवहानस्थापयत्पूर्ववत् तांक्ष्वेडादलितामरारिरवतात् क्रोडावतारो विभुः ॥ ३६ ॥

ब्रह्मादयः स्तुतिभिरीशमथैवमेते-
देवं कृतार्थयितुमात्मपदानि भूयः।
सर्वेक्ष्यलोचनमनःकुतुकातिकारि
रूपं श्रियादिह भवानिति याचमानाः ॥३७॥

इत्थमखिललोकनायको नाकनिकेतनैरभ्यर्थ्यमानो मानोन्नतौ नतौ नतो मोघवचनरचनौ भवतामिति प्रभवतां तत्रभवतां विधिशङ्करावामन्त्र्य स्निग्धगम्भीरया गिराऽभ्यभाषत।

ब्रह्मन् सरस्वतीकान्त! हर हैमवतीपते।
भवतोरिष्टमाभास्ये वक्ष्यन्नभिमतां तनुम्॥ ३८ ॥

वत्स्यामि सुरवत्स्यामि
क्षेमं शेषाद्रिवासिनाम्।
अन्तर्हितोन्तर्हिततां
रूपेणान्येन वां श्रये॥ ३९ ॥

॥ इति प्रथमः स्तबकः ॥

अथमानयन्शिवविरिञ्चिवचांसि समानयन्महीमङ्कं नैजं धामावनीमवतितारयिषुः पुराणपुरुषः श्रीशैलापरनामधेयं वैकुण्ठवैभवपरभागं स्वलोकाद्वैनतेयेनानाय्य स्वामिरसाधारणीभिर्विभूतिभिः सानुमन्तमास्तृणन् तस्मिन्नेव

शैलशिखरे-चिरमाक्रीडनमाचकाङ्क्ष क्रोडवपुः । तां ततां सतां मतां नमतां कृतान्तवैभवरोधिकां पुरन्दरपुरोऽधिकां सुकृतसमृद्धिं तत्रावलोकयन्तो मुनयोऽनुनयोत्कोचितसुपर्वणि कस्मिँश्चित्सुपर्वणि क्रतुक्रियामारेभिरे वयांबभूवुः । कर्मान्तरे चेतरनिर्जरेभ्यः श्रैष्ठ्यं-त्र्यामाजानाना अपि विद्वांसोऽस्मिन् त्रिकेतरत मभावायालंमतिमतिरोहितां तन्वन्तः स्वकीयाः कल्पनाः प्रकाशयांचक्रुः ।

ब्रह्माण्डं यत आपदे तदुदयं धर्मस्य मूलानि ये
वेदास्ते यमुपासते स्वयमसौ देवी गिरांयद्गृहे ।
शम्भुं यो जनयांबभूव समभूत्क्रोडाकृतिःश्रीपति
र्यच्छ्वासात्स पितामहस्त्रिजगतां तस्मात्परो
नाधिकः ॥ १ ॥

त्रिपुरकदनकाले यन्महत्वं विलोक्य,
प्रभवति विबुधानामीशिता चन्द्रमौलिः ।
जलधिमथनवेलायामुदश्चद्विषस्य
प्रणयनमपि सन्तस्तस्य तत्त्वं वदन्ति ॥ २ ॥

यःसत्वं ज्ञानखनिप्राणिप्राणनपणं वपुःपृणति ।
पुरुषोत्तमो रमेशो विष्णुः परमःश्रुतिर्जगर्जोच्चैः॥३

कृते त्रेतायां द्वापरं कलिनवन्तोऽधिजिगांसमाना विशेषं तत्तारतम्यपरीक्षणे मुनीनां प्रवरं भृगुम्योजयन् ।

अस्मासु वृद्धस्तपसा
सिद्ध इद्धोऽसितेजसा ।
भृगो तेषु परीक्षस्व
कोधिको वर्ततेजसा ॥४॥

इत्थं पर्यनुयुक्तो भृगुरचिन्तयत् ।

अतीन्द्रियज्ञानविजृम्भितात्मभिः
सशब्दमप्यश्रुति तिष्ठमानैः ।
एभिर्महायोगिभिरीर्यमाणो
मनेति वक्तुं प्रभवामि जानन् ॥ ५ ॥

दिष्टं मदिष्टं कुरुतादनिष्टं
माभूदवज्ञा गुरुषु प्रयुक्ता ।
प्रायोऽपकाराय भवत्यवर्ज्यं
गुरुद्वयातिक्रमलङ्घनं हि ॥६ ॥

विचार्यैवं प्रणम्य सभ्यानभ्याजगाम सत्यलोकाधिपतिं द्रष्टुं चतुर्वदनसदनमृषिपुङ्गवः । कुतोऽप्यप्रतिषिद्धस्तत्र सिंहासनगतं मूर्तिमन्द्भिराम्नायैरुपास्यमानमानन्दधामामवलोकयामास प्रजापतिम् ।

अकृतप्रणयश्चाननुज्ञात एवोच्चैरासनमध्यतिष्ठत्। तमालोच्य विधातामदमलिनमानसमेनं समयुक्तिं करोमीति कोपाङ्कुरं कलयति यावत्तावदेष पलायनपरः परं पर्वतपुत्रीपतिपुरं प्राप स्वकार्यसाधनैकप्रसितः कुशाग्रबुद्धिः तत्र चहिमावदातं कैलाससानुनि ।

ओतन्मयूखामृतरश्मिभालं
स्रोतस्विनीसिक्तजटालवालम् ।
वामाङ्गसंसक्तहिमाद्रिबालं
देवं लुलोके करुणालवालम् ॥ ७ ॥

हृष्यन्मुनिः प्रेक्षित ईश्वरेण
नगात्मजाक्रीडनकेन मङ्क्षु,
दिगम्बरेणातिशयादरेण
प्रयोजितोऽभाषत सोऽचिरेण ॥८॥

शैलीतवासौ किल कांऽत्रशैली
मलं समालिङ्गसि दूरवासाः ।
मुनीश्वरंमामभिगच्छतोद्दीः

कथं न कैलासनिवास!जाता ॥९॥
दुष्टोऽसि पुष्टोऽसि तपोऽहमा त्वं
ताप्त्रीः क्रुधा मेऽसदपोहमात्वम्।
अत्यर्थरोषाकुलशङ्करेणा-
पध्यात एवं द्विजनिर्गिरागात् ।१०।
घ्रावँस्ततोऽविलम्बित
मविलम्बितभागधेयनिघ्न कृतिः ।
निर्विकृतिः सुकृती
कविदायादो हरिगृहे गमं चकमे ।११।
जगाम शुभ्रगुर्भूय
उच्छ्वसन् प्रवसन् सहन् ।
विष्टरश्रवसोधाम
भृगुर्भूरितपाः पुनः ॥ १२ ॥
विलोकयामास विकुण्ठलोकं
ललल्ललामातुलधामलोकम् ।
शोकं जहौ गौरवरोकमोकं
कोकं स सस्मार जिताघमोकम् ॥१३॥
अतिमात्रमानन्दसम्भृतः प्रयानक्षिप्रियाननुभव-
निस्मदामोदरपुरसङ्गतान् रसङ्गतान् वस्तुविशे-
षान्। अतिपरिमलोद्गारी हारी हृद्यं सुमनोहृदां
प्रवहति कलोत्कारिभ्राम्यन्मधुव्रतसम्पदाम् ।
पदमनुपदं श्लिष्यन् सर्वर्तुगोचरपुण्यभूपरिचित-
गुणान् पुष्णन् प्रभञ्जनपुङ्गवः ॥ १४ ॥
अमृतममृतं लोकाः शोकापहारि नदीनजं
जगदुरपरे नक्षत्रेशान्तरङ्गततं विदुः ।
फणिगणभृते लोके प्रोचुश्चिरं निहितं कति-
क्रतुभिरितरे प्राप्यं तानीप्सितानि न धीमताम्१५
यत उभयतस्पाशान्मृत्योर्विमोचयितुं प्रभू-
ण्यधुरधिकभां नालं कल्पक्षये न सुखायितुम् ।
हरिपदसरोजाताज्जातं सुजातजनुः रजो-
रुचिरमचिरं घ्रातं शातं ध्रुवं निदिशन्ति तत् १६
एकतश्च ।
दिव्याङ्गना विमानानां
समानानां स्वभूतिभिः ।
समानानां वीथिकाभिः ।
पूरितं तत्पुरं बभौ ॥१७॥
अन्यतश्च । सनकादिकैः सनातन-
मुनिभिःखनिभिःप्रबोधरत्ननाम् ।
निष्क्रियनिःस्पृहचरितैः
सम्भृतमत्यर्थमुत्कतामभिकैः ।१८।
यत्रारामगतास्तरवोऽप्यात्मारामा इव नन्द-
नानन्दं दूरयन्तश्चकासति । शाला अपि विशालाः
पलाशिनोऽपि पलाशिनामगोचराः पतत्रिनि-
वासा अप्यतत्रिनिवासविषयाः समन्ततः प्रमोद-
माबिभ्रति ।
ये कलशाखिशिखिनो मलिनो न येषां
पश्यन्ति पल्लवमपोढविपल्लवा यान् ।
आलोक्य लक्षणविलक्षितलक्षलक्ष्मी-
र्लोकोत्तरं कलयते कुतुकप्रकारम् ॥१९॥
अग्रतो गतश्च ब्राह्मीमप्यभाषां सतीमप्यनुग्रभावां
प्रकारान्तरपरिगतामपि विप्राकारां जयाधिष्ठ-
ततयाऽजयाऽनवलोकितां विजयाऽऽचिता
मप्यजयाचितां रमारमणशरणद्वारमक्षिपक्षि-
कक्षितां कलयां चकार । रोमाञ्चमिषत आविर्भूते
नाभूतपूर्वेण देहदरीमभिव्याप्योच्छलताऽ
ऽनन्दथुना किर्मीरितान्तःकरणः क्षणमकरण इव
क्रियाशून्यःप्रत्यतिष्ठत् ।
सत्यं मुनीनामसिमानसास्पदं
पदं रमाया भवमङ्गगोष्पदम् ।

कृत्वा तदङ्कित स्वदुःसहया तदा
 प्रभवः भ्रमन्तीति जगन्ति ते मुदः ॥ २० ॥
अज्ञो रजोवृंहितमूर्तिराद्यं
 स्यन्नंस्तमः पङ्किलवृत्तिरन्त्यम् ।
निरञ्जनं व्यञ्जनदूरवर्ति-
 त्रयीफलं भास्युभयं जिगीषत् ॥२१॥

इत्यनेकधा विचारयन् यावदासांचक्र भोज-
स्त्रीचक्रपाणिकृपाणि प्राणितस्तावत् सदनम
ध्यमाविवेश्य वेशान्तः प्रमोदपयसः परःपारेवयसः।
कलये जगद्भ्रमुपोहितुमोमनलरे-
 तलरे शयानमुरगाधिपताऽनु कलरे ।
कलरेवरावनुगते हितभूतिभासां
 जलरेत्सकः किलगुणान् पटुबुद्धिरासाम् २२
देवं ददर्श जलदद्युतिदेहभासं
 वीक्षा विवक्षितफलानुगृहीतदासम् ।
विम्बाधरान्तरुरीकृतमन्दहासं
 पद्माकराऽऽकलितपादविलासलासम् ॥२३॥
यावत्समालोक्य मुनीन्द्रमेत
 मुत्थातुमाकामयते मुरारिः ।
तावन्महत्वं स विवेक्तुकामोऽ
 विध्यत्पदा वक्षसि कौस्तुभाङ्के ॥ २४ ॥
सन्ताडितोऽपि रभसा द्विजपुङ्गवेन
 श्रीकान्त उज्झितसमञ्जनमञ्चभूमिः ।
पादाब्जमस्य करकञ्जतलेन मृद्नन्
 प्रह्वः प्रणम्य मुनिमाह रमासहाय. ॥ २५ ॥

भगवन् भृशमागमनेनानुगृहीतस्यापि पात-
कमान्तरं पातयितुं पावयितुं चामुं पादतल-
मपातयो ममोरसि ततोऽतिसुखितोऽपि दूये-
तरां कमठपृष्ठकठोरोरसि बलवत्तरप्रहारेण हारेण
कमलकोमलं पादतलं क्लिष्टं स्यादित्यभ्यर्थये
चामुमन्तुमननुमन्तुं तापसकुञ्जरम् । यथाकथं-
चिदपि मनोवाक्कायेषु क्लेशितो विप्रः पविप्रकारः
खेदयतिमानसं प्रेक्षावतामितिह्रीणो दीनो विपदि
लीनो भगवदधीनो जीनो हीनो न भवेयमित्य-
हीनो परिशयः पादयोः परिपतन् मुहुर्मुहुर्मुनिं मान-
यामास । यो मामनुगृहीतवता भगवताऽऽहितो
न्यासरूपः पादन्यासः श्रीवत्सवक्षसि नित्यं
निवसता रुक्मीवत्सवक्षाश्चाग्रप्रभृति स्याती
भूयासमित्यनुगृह्णातु कृपालुभूरिणः परः पाराशर्य-
विदाम् ।

 दासा यदिमदासारमुद्रिताक्षा जहुर्धृतिम् ।
 किं नामस्वामिनामन्तःकरणं करुणां त्यजेत् २६
 विशेषदूषिततनू श्रीमत्पादाङ्कभूषितः ।
 न मन्ये ग्लानिमेवेशो द्विजराजकलाश्रितः।२७।

इत्थमनेकधाऽधोक्षजेन सामभिरभिराद्धो
द्विजपुङ्गवो विलक्ष क्षणमतिष्ठत् । अहो इन्दि-
रामन्दिरमुरो मनोजनुरवनिरिन्दाश्चक्षु सवितुः
पदं मन्दाकिन्या इत्यशेषनिधीनां निधिवपु
प्रकाशयतः का नामेयं सहिष्णुता महाशयता च
वर्ण्या स्यादिति विचारयन्तुच्चैरवोचत् ।

 विष्णो चरिष्णो भुवनत्रयेषु
 जिष्णो महिम्नां तव को लघुस्य ।
 पारं लभेताखिलविश्वधाम्ना
 नाम्नोऽपि सीमानमज्ञो न वेद ।२८।

अपराधी पराधीनः परमेष्ठिपितः प्रभो ।
अनुग्रहगिरागीतो मसङ्गमित आगसा ॥ २९ ॥
केवलं करुणागारत्वमेवैको जगद्गुरुः ।
लक्ष्मिमि दत्तदुःखिश्च च्युतः स्यात्तद्गुरुत्वतः ३०

# वानरेन्द्र जातकम्

अतीते (पुरा) बाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्वः कपियोनिं निर्वर्त्य बुद्धि-मन्वित्याश्ववीतप्रमाणः स्थामसम्पन्न एक चारो भूत्वा नदीतीरे विहरति। तस्याः पुनर्नद्या-विमध्ये एकोद्वीपको नाना प्रकारैराम्रपनसादिभिः फलवृक्षैः संपन्नः। बोधिसत्वोनागबलः स्था-मसंपन्नोनद्या अवरतीरतउत्पत्यद्वीपकस्याव-रतो नदीमध्ये एक (पृष्ठ) उन्नत पाषाणोऽस्ति। तस्मिन्निपतति। ततउत्पत्य तस्मिन् द्वीपकेप-तति तत्र नाना प्रकाराणि फलानि खादित्वा सायं तेनैवोपायेन प्रत्यागत्यात्मनो वसनस्थाने उषित्वा पुनर्दिवसेऽपि तथैव करोति। अनेन नियमेन तत्र वासंकलयति तस्मिन्। खलु काले एकः कुम्भीलः सभार्यस्तस्यां नद्यां वसति तस्य भार्याबोधिसत्वमपरापरंगच्छन्तं दृष्ट्वा बोधि सत्वस्यहृदयमांसेदोहदमुत्पाद्यकुम्भीलमाह । ममखल्वार्यास्यवानरेन्द्रस्य हृदयमांसे दोहद उत्पन्न इति। कुम्भीलः "साधुभवति! लप्स्यस इत्युक्त्वा" अद्यतं द्वीपादागच्छन्तमेवगृहीष्या-मीति। गत्वापृष्ठपाषाणेन्यपतत्। बोधिसत्वो दिवसं चरित्वा सायान्हसमये द्वीपके स्थित एव पाषाणमवलोक्यायं पाषाण इदानी (मुच्चता-चष्टे) मुच्चतरोदृश्यते किन्नुकारणमित्य चिन्तयत्। तस्य किलोदकप्रमाणं पाषाण प्रमाणश्च सुव्यवस्थितमेव। तेनास्यैतदभवत्। अद्य अस्यानद्या उदकं नैवजहाति (स्थानं) नच वर्धते। अथचपुनरयं पाषाणो महान्भूत्वा प्रत्येति। किन्नु खलु अद्यममग्रहणायकुम्भीलकोनिष्पन्न इति? समीमांसतैतावदिति। तत्रैवस्थित्वा पाषा-णेन सार्धंकथयन्निव भोःपाषाण! इत्युक्त्वा प्रतिवचनमलभमानो यावत्तृतीयंपाषाण! इत्याह। पाषाणः किं प्रतिवचनं नदास्यति। पुनरपितं वानरः किं भोः पाषाण! अद्यम-मप्रतिवचनं नदास्यासीत्याह। कुम्भीलः। अध्द्यान्येषुदिवसेष्वयं पाषाणो वानरेन्द्र-स्यप्रतिवचनमदात्। दास्यामीदानीमस्य प्रतिवचनमितिचिन्तयित्वा "किं भो वान-रेन्द्र! इत्याह। कोऽसित्वमिति। अहंकुम्भीलक इति किमर्थमत्रनिष्पन्नोसीति, तव हृदयमांसं प्रार्थयमान इति, बौधिसत्वश्चिन्तयति। अन्यो-मे गमनमार्गोनास्ति। अद्यमयैषकुम्भीलकोवञ्चि-तव्य इति। अथतमेवमाह। सौम्य! कुम्भील! अहं-तुभ्यमात्मानंपरित्यक्ष्यामि। त्वंमुखंविवृत्य मांतवान्तिकागमनकाले गृहाण। कुम्भी लानांहिमुखे विवृते अक्षीणिनिमीलन्ति। तत्का-रणमसंलक्ष्यमुखंव्यवतिष्ट अथास्याक्षिणोपि-हिते संमुखंविवृत्याक्षिणी निमील्य न्यपतत्। बोधिसत्वंतथाभावं ज्ञात्वा द्वीपादुत्पतितोग-त्वा कुम्भीलकस्य मस्तकमाक्रम्य तत उत्पतितो विद्युल्लतेव विद्योतमानः परतीरेऽस्थात्। कुम्भीलकस्तदाश्चर्यंदृष्ट्वा तेन वानरेन्द्रेणा-त्याश्चर्यं कृतमिति चिन्तयित्वा भोवानरेन्द्र! अस्मिंल्लोके चतुर्भिर्धर्मैः समन्वागतो जीवः प्रत्यमित्रमभिभवति। ते सर्वेऽपितवाभ्यन्तरे सन्तीतिमन्ये। इत्युक्त्वेमांगाथामाह।

> यस्यैतेचतुरोधर्मा। वानरेन्द्र! यथातव।
> सत्यंधर्मश्चधीस्त्यागः। सद्विषंचातिवर्तते॥

एवं कुम्भीलो बोधिसत्वं प्रशस्य आत्मनो वासस्थानं गतः।

## शिशुमारजातकम् ।

अतीते वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति हिमवत्प्रदेशे बोधिसत्वः कपियोनिं निर्वर्त्य नागबलः स्थामसम्पन्नो महाशरीरः सौभाग्य प्राप्तो भूत्वा गंगानिपतने (संगमे) अरण्यायतने वासमकल्पयत् । तदा गंगायामेकः शिशुमारोऽ अवसत् । अथास्य भार्या बोधिसत्वस्य शरीरं दृष्ट्वा तस्य हृदयमांसे दोहदमुत्पाद्यशिशुमारमाह । अहं स्वामिन्नेतस्य कपिराजस्य हृदयमांसंखादितुकामेति । भद्रे ! वयं जलगोचरा किमिति तं गृहीतुं शक्ष्यामेति । (येनकेनापि) उपायेन गृहाण यदिनलप्स्ये मरिष्यामीति । तेन हि मामैषीः।अस्त्येकोपायइति खादयिष्यामि तत् तस्य हृदयमांसमिति । शिशुमारीं समाश्वास्य, बोधिसत्वस्य गंगायां पानीयं पीत्वा गंगातीरे निषण्णकालेऽन्तिकं गत्वैवमाह । वानरेन्द्र ! अस्मिन्प्रदेशे कषायफलानिखादन् किं त्वं शीर्णस्थानएवचरसि । पारेगङ्गमाम्रलकुचादीनां मधुरफलानामन्तोनास्ति किन्तेतत्र गत्वा (फलाफलं) बहुफलं खादितुं नवर्तते । कुम्भीलराज! गंगाविस्तीर्णा कथं तत्र गमिष्यामीति । यदि गच्छसि-अहं त्वां मम पृष्ठमारोप्य नेष्यामीति । स तंश्रद्धित्वा साध्विति संप्रतीक्ष्य । तेन ह्येहि पृष्ठं मेऽभिरोहेति चोक्ते समध्यरोहत् । शिशुमारस्तोकं नीत्वावासीषदत् । बोधिसत्वः सौम्य ! उदकेमां अवासीषदः किन्नु खल्वेत दित्याह । नाहं त्वां धर्मसुधर्मतायै गृहीत्वागच्छामि । भार्यायाः पुनर्मे तवहृदयमांसे दोहदोत्पन्नस्तामहं तव हृदयं खादयितुकाम इति । सौम्य! कथयतात्वया सुन्दरं कृतं यदिहि अस्माकमुदरे हृदयं भवेच्छाखाग्रेषु चरतां चूर्णं विचूर्णं भवेदिति । कुत्रपुनस्त्वयास्थापितमिति । बोधिसत्वोऽविदूरे एकमुदुम्बरं पक्वफलपिण्डसंपन्नमदर्शयत् । पश्यैतानि अस्माकं हृदयान्येकस्मिन्नुदुम्बरेऽवलम्बन्त इति यदि मेहृदय दास्यसि अहं त्वां नमारयिष्यामीति । तेनहि तत्र नय मामहं ते वृक्षेऽवलम्बमानं (हृदयं) दास्यामीति । सतमादायतत्रागमत् । बोधिसत्वस्तस्यपृष्ठत उत्पत्योदुम्बर वृक्षे निषद्य, सौम्य ! बाल शिशुमार ! एषां सत्वानां हृदयं नाम वृक्षाग्रे भवतीति संज्ञीभवसि । बालोऽसि । अहन्त्वामवञ्चः । तवफलानि तवैव भवन्तु शरीरमेवपुनस्तेमहत् प्रज्ञा पुनर्नास्तीति । उक्त्वेममर्थं प्रकाशयन्निमांगाथामवोचत् ।

अलमाम्रफलैरेतैर्जम्बुभिः पनसैस्तथा ।
यानिपारं समुद्रस्य, वरं मम उदुम्बरः ।
महतीवतते मूर्निनचप्रज्ञातथाविधा ।
शिशुमार! वंचितोऽसि गच्छेदानींयथासुखम ।

शिशुमारः सहसा पराजित इव दुःखी दुर्मना प्रध्यायन्नात्मनो निवेशनस्थानमेवगतः ।

---

## बकजातकम् ।

पुरा एकस्मिन्नरण्यायतने बोधिसत्वोऽन्यतरं पद्मसरं निश्राय स्थितेवृक्षे वृक्षदेवता भूत्वा न्यवर्तत । तदान्यन्तरस्मिन्नातिमहति सरसि निदाघसमये उदकंमन्दमभवत् । बहवश्चात्रमत्स्या भवन्ति । अथैकोबको तान् मत्स्यान् दृष्ट्वा येन केनाप्युपायेनेमान्मत्स्यान् वंचित्वा खादिष्यामीति । गत्वोदकपर्यन्तं चिन्तयन्न्यसीदत् ।

अथ तंमत्स्या ब्रुवन्किमार्य! चिन्तयन्निषण्णोऽसीत्य- प्राक्षुः। युष्माकं (हितं) चिन्तयन्निषण्णोऽस्मीति। आर्य ! किमस्माकं चिन्तयसीति ? अस्मिन् सरसि उदकं परिकम्। गोचर (भक्ष्य) रूपश्चापरोविद्यते महान्, इदानीमिमेमत्स्या किं नामकरिष्यन्तीतियुष्माकं चिन्तयन्निषण्णोऽस्मीति। किंकुर्म आर्य ! इति? यूयं यदिमद्वचनं करिष्यथ अहं व एकैकंमुखतुण्डेनगृहीत्वैकं पञ्च- वर्णपद्मसंछन्नं महासरंनीत्वा विसर्जयिष्यामि। आर्य! प्रथमकल्पादारभ्य मत्स्यानां हितचिन्तको बकोनाम नास्ति। त्वमस्मास्वेकैकं खादितुकामोसीति। नाहं युष्मान् मयिश्रद्दधतो- खादिष्यामि। यदि पुनःसरसोऽस्तिभावं मयि न श्रद्दधत्थ, एकं मत्स्यं मयासार्धंसरोवरंद्रष्टुं- प्रेषयथेति। मत्स्या तस्मिन् श्रद्धित्वा, अयं जलेस्थलेऽपिसमर्थ इति एकं (काणमहामच्छं) कर्कटकमदिशन्। इमं गृहीत्वा गच्छ। सतं गृहीत्वा, नीत्वा सरोवरं विसृज्य, सर्वसरोवरं दर्शयित्वा, पुनरानीय तेषां मत्स्यानामन्तिके विसर्जितवान् सतेभ्यो मत्स्येभ्योसरसः संपत्ति- मवर्णयत्। तेतस्य कथांश्रुत्वागन्तुकामाभूत्वा साधु आर्य! अस्मान् गृहीत्वा गच्छेत्याहुः स्म। बकः प्रथमं कर्कटकमेव गृहीत्वा सरस्तीरं नीत्वा- सरोदर्शयित्वा सरस्तीरे जातेवरणवृक्षे नीलीय तं विटपान्तरे प्रक्षिप्य तुण्डेनविध्यन् जीवितक्षयं प्रापय्य, मासंखादित्वा, कण्टकेवृक्षमूलेपात- यित्वा पुनर्गत्वा विसृष्टोमयाममत्स्यः अन्ये आगच्छन्तु इति, एतेनोपायेनैकैकं गृहीत्वा सर्वान् खादित्वा पुनरागत एकं मत्स्यमपिना- पश्यत्। एकः पुनरत्र कर्कटोऽवशिष्टः। बकस्त- मपिखादितुकामाभूत्वा, भोकर्कटक! मयासर्वे ते मत्स्या(इतोनीत्वा)पद्मसंछन्ने महासरोवरे विसृष्टाः, एहि त्वामपिनेष्यामीति। मांगृहीत्वा- गच्छन् कथं गृहीष्यसीति। दंशयित्वा गृही- ष्यामीति त्वमेवंगृहीत्वा गच्छन्मांपातयिष्यसि नाहं त्वयासार्धं गमिष्यामि। कर्कटकोऽचिन्त- यत्। इमान् मत्स्यान्गृहीत्वासरसि विसर्जनं नाम नास्ति। चेयदि पुन मां सरोवरे विसर्जये दित्येतत्कुशलं नोचेद्विसर्जयिष्यति (तदा) ग्रीवामस्यच्छित्वा जीवितं हरिष्यामि। अथैनमे- वमाह सौम्यबक! नखलु (त्वंसुगृहीतं यथा भवेत् तथागृहीतुं शक्ष्यसि, अस्माकं पुनर्ग्रहणं सुग्रहणं चाहमलेन (कर्मारायुधदंशकसदृशेना- ग्रभागीय हस्तद्वयेन) तवग्रीवां गृहीतुंलप्स्ये तव ग्रीवां सुगृहीतां कृत्वा त्वयासार्धं गमिष्यामीति। स तं वञ्चितुकाम इमं मन्त्रमजानन् साध्विति- संप्रतिज्ञातवान्। कर्कटकः करमारदंशेनेव आत्मन अलेन तस्यग्रीवांसुगृहीतांकृत्वेदानीं गच्छेत्याह। सतंनीत्वा सरोवरं दर्शयित्वा वरणवृक्षाभिमुखःप्रयातः। कर्कट आह "मातुल! इदं सरोवरमितः त्वंपुनर्मामितोनयसि। बक, प्रियमातुलक! प्रियभगिनीपुत्रोसि मेत्वमित्यु- क्त्वा, त्वमेषमयिस्वभारमुत्क्षिप्य विचरन्मां दास इति संज्ञीकरोषीतिमन्ये पश्यैतं वरण- वृक्षमूले कण्टकराशिं यथामयाते सर्वेमत्स्याः खादितास्त्वामपि तथैव खादिष्यामि, कर्कट आह, एते मत्स्या आत्मनो बालतया त्वया खादिता अहं पुनस्ते मांखादितुं नदास्यामि, त्वामेवपुनर्विनाशं प्रापयिष्यामि। त्वंहिबाल- तयाममवञ्चितभावं न जानासि। म्रियमाणावु-

वृक्षमूले कण्टकराशिं, यथामयाते सर्वेमत्स्याः खादितास्त्वामपि तथैव खादिष्यामि, कर्कट आह, एते मत्स्या आत्मनो बालतया त्वया खादिता अहं पुनस्ते मां खादितुं नदास्यामि, त्वामेवपुनर्विनाशं प्रापयिष्यामि। त्वंहिबालतया ममवञ्चितभावं न जानासि। म्रियमाणावुभावपि मरिष्यावः। एतत्तेशीर्षं छित्वा भूमौक्षेप्स्यामीत्युक्त्वा, संदंशेनेवालेन (आत्मीयाग्रहस्तद्वयेन) ग्रीवांनिष्पीडयतिस्म । स वलितेन मुखेनाक्षिभ्यामश्रूणिस्त्रवता ; मरणभयतर्जितः, स्वामिन्! अहंत्वां न खादिष्यामि जीवितंमेदेहीत्याह । यद्येवमवतार्य सरसि मां विसर्जय। स निवृत्य सरोवर एवावतार्य कर्कटकं सरपर्यन्तेपङ्कपृष्ठेऽस्थापयत् । कर्कटकः कर्तरिकया कुमुदनालं कृंतन्निव तस्य ग्रीवां कर्तित्वोदकं प्राविशत् । तदाश्चर्यं दृष्ट्वा वरणवृक्षमधिष्ठिता देवता साधुवादं ददाना वनमुन्नादयन्ती मधुरस्वरेणेमांगाथामाह ।

नात्यन्तनिकृतिप्रज्ञोनिकृत्यासुखमेधते ।
आगसिनिकृतिप्रज्ञो बककर्कटकाविव ॥

---

## महामायास्वप्नम् ।

तदा किल कपिल वस्तुनगरे आषाढिनक्षत्रं-घुष्टमभूत्। महाजनो नक्षत्रं क्रीडति। महामायादेवी, पुरे पूर्णिमायाः सप्तमदिवसान् प्रभृति विगत सुरापानं माल्यगन्धविभूतिसम्पन्नं नक्षत्रक्रीडमनुभवन्ती सप्तमदिवसे प्रातरेवोत्थाय गन्धोदकेन स्नात्वा चत्वारिंशत्सहस्राणि विसृज्य महादानंदत्वा सर्वालङ्कारविभूषिता वरभोजन भुक्त्वोपोषणाङ्गान्यधिष्ठायालंकृतपर्यन्तं श्रीगर्भं प्रविश्य श्रीशयने (निपतिता) शयिता निद्रामुपक्रममाणेदंस्वप्नमपश्यत्। चत्वारः किलैनां महाराजानःशयनेन सार्द्धमुत्क्षिप्य हिमवन्तं नीत्वा-षष्ठियोजनिके मनःशिलातलेशतयोजनिकस्य महाशालवृक्षस्याधस्तात्स्थापयित्वैकान्तेऽस्थुः। अथ निशि देव्य आगत्य देवीमनातप्तदहं नीत्वा।

मानुषमलहरणार्थंस्नापयित्वा दिव्यवस्त्रं (निवास्य) परिधाप्य गन्धेन विलेप्य दिव्यपुष्पैरलङ्कृत्य "ततोऽविदूरेरजतपर्वत, तस्यान्तिके कनकविमानमस्ति, तत्र (प्राचीनशीर्षकं) प्राच्यांकृतशीर्षकं" दिव्यशयनं प्रज्ञाप्य (निपातयामासु) अशीशयन्।

अथबोधिसत्वः श्वेतवरवारणो भूत्वाततोऽविदूरे एकः सुवर्णपर्वतः, तत्र चरित्वा ततोऽवरुह्य रजतपर्वतमभिरुह्योत्तरदिशत आगम्य रजतदामवर्णया शुण्डया श्वेतपद्मंगृहीत्वा क्रौञ्चनादंनदित्वा कनकविमानं प्रविश्यमातुःशयनंत्रिकृत्वः प्रदक्षिणीकृत्य दक्षिणपार्श्वताडयित्वा कुक्षिं प्रविष्ट इवाभूत्। एवमुत्तराषाढानक्षत्रे पुनर्जन्मागृह्णात्। पुनर्दिवसे प्रबुद्धादेवीतत्स्वप्नं राज्ञे न्यवेदयत् । राजाचतुष्षष्टिमात्रान् प्रमुखब्राह्मणान प्रक्रोश्य (आहूय) हरितपत्रायां लाजादिभिः कृतमङ्गलसत्कारायां भूम्यां महार्हाण्यासनानि (प्रज्ञाप्य) दर्शयित्वा तत्रनिषण्णेभ्या ब्राह्मणेभ्यः सर्पिमधुशर्कराभिः संस्कृतेन वरपायसेन (सुवर्णरजतपात्रीः) हिरण्मयी रजतमयीश्चपात्रीः पूरयित्वा सौवर्णरजतपात्रीभिश्च प्रतिकुब्ज्यादात् । अन्यैश्चाहतवस्त्रकपिलगोदानादि

भिस्तान् समतर्पयत्। अथ तेभ्यः सर्वकामैः संतर्पितेभ्यः स्वप्नं निवेद्य किं भविष्यतीत्यप्राक्षीत्। ब्राह्मणा आहुः।माचिन्तय महाराज! देव्यास्ते कुक्षौ गर्भः प्रतिष्ठितः, स खलु पुरुषगर्भो न स्त्रीगर्भः पुत्रस्तेभविष्यति। सयद्यगारमध्यावत्स्यति। राजाभविष्यति चक्रवर्ती। यद्यागारान्निष्क्रम्य प्रव्रजिष्यति बुद्धो भविष्यति लोके विवृत्तच्छद इति।

---

## बुद्धस्योत्पत्तिः।

महामाया देवी, पत्रेणतैलमिव, दशमेमासि कुक्ष्याबोधिसत्वं परिहृत्य परिपूर्णगर्भा पितृ (ज्ञाति) गृहं गन्तुकामा शुद्धोदनमहाराजाय न्यवेदयत्। इच्छाम्यहं देव! कुलान्तिके (पितृगृहे) देवदहनगरं गन्तुमिति। राजासाध्विति संप्रतोष्य कपिलवस्तुतो यावद्देवदहनगरं मार्गं समं कारयित्वा कदलिपूर्णघटध्वजपताकाविभिरलंकारयित्वा देवीं सौवर्णशिबिकायां निषाद्यामात्यसहस्रेणोत्क्षेप्य महता परिवारेण प्रैषयत्। द्वयोः पुन र्नगरयोरन्तरे उभयनगरवासिनामपि लुम्बिनिवनं नाम मङ्गलसालवनमस्ति। तस्मिन्समयेमूलतः प्रभृतियावदग्रशाखं सर्वं प्रफुल्लमभूत्, शाखान्तरैः पुष्पान्तरैश्च। नानावर्णभ्रमरगणा नानाप्रकाराश्चशकुनिसंघा मधुरस्वरेण विकूजन्तो विचरन्ति। सकलं लुम्बिनिवनं चित्रलतावनसदृशं महानुभावस्य राज्ञः सुसज्जितापानमण्डलमिवाभवत्। उदपादि देव्यास्तद्दृष्ट्वासालवनाक्रीडं क्रीडनायाभिलाषः। अमात्या देवीं गृहीत्वा सालवनं प्रविविशुः। सा मङ्गलसालमूलं गत्वाशालशाखां गृहीतुकामाभवत्। शालशाखा सुस्वेदितवेत्राग्रमिवावनम्य देव्याहस्तसमुपागच्छत्। सा हस्तं प्रसार्यशाखामगृह्णात्। तावदेवचास्याः प्रसूतिवाता अचालिषुः। अथास्याः परितः शाटीं क्षिप्त्वा महाजनोनिष्क्रान्तः। शाखां गृहीत्वातिष्ठन्त्या एवचास्या गर्भोत्थानमभूत्। तत् क्षणमेव चत्वारोऽपि शुद्धचित्ताः श्रेष्ठब्राह्मणाः सुवर्णजालमादाय संप्राप्ताः, तेन सुवर्ण जालेनबोधिसत्वं संप्रतिगृह्य मातुः पुरतः स्थापयित्वा "देवि! आत्तमना भव" महेशाख्यस्ते पुत्रउत्पन्न इत्याहुः। यथा पुन रन्ये सत्वा मातृकुक्षितो निष्क्रमन्तः प्रतिकूलेनाशुचिना मांक्षिता (लिप्ता) निष्क्रमन्ति नैवं बोधिसत्वः। बोधिसत्वः पुनर्धर्मासनत अवतरन् धर्मकथकइव निश्रेणीत अवतरन्पुरुषइव च द्वौहस्तौ द्वौपादौ च प्रसार्यस्थितो मातृकुक्षिसम्भवेन केनचिदशुचिनाऽमाक्षितः शुद्धोविशदः काशिकवस्त्रे निक्षिप्तमणिरत्नमिव द्योतमानो मातृकुक्षितोनिष्क्रान्तः। सत्यप्येवं बोधिसत्वस्यबोधिसत्वमातुश्च सत्कारार्थमाकाशतोद्वेधारे निष्क्रम्य बोधिसत्वस्यमातुश्चास्य (प्रसवकालीनरक्तसंमिश्रजलम्) ऋतुमवागाहयताम्।

---

## चत्वारिपूर्वनिमित्तानि।

अथैकदिवसे बोधिसत्व उद्यानभूमिं गन्तुकामः सारथिमामन्त्र्य "रथं संयोजय" इत्याह स। साध्विति प्रतिश्रुत्य महार्हमुत्तमरथं सर्वालङ्कारैरलंकृत्वा कुमुदपत्रवर्णाश्चतुरोमङ्गलसैन्धवान्

योजयित्वा बोधिसत्वं प्रत्यवेदयत्। बोधिसत्वो देवनिमानसदृशं रथमभिरुह्योद्योनाभिमुखमगमत्। देवताः "सिद्धार्थकुमारस्याभिसंविबोधनकाल आसन्नः पूर्वनिमित्तं दर्शयिष्याम इति एकं देवपुत्रं जराजर्जरं खण्डदन्तं पलितकेशं वक्रमवभग्नशरीरं दण्डहस्तं प्रवेपमानं कृत्वा दर्शयामासुः। तं बोधिसत्वः सारथिश्चपश्यतः। ततो बोधिसत्वः सारथिं (प्रत्याह) सौम्य! कोनामैषपुरुषः केशा अप्यस्य न यथान्येषामिति महाप्रदाने आगतनयेन पृष्ट्वा तस्य वचनं श्रुत्वा धिगस्तु बत भो (वो) जातीयान्, यत्र हि नाम जातं जरा प्रज्ञाप यिष्यतीति" संविग्नहृदयस्तत एव प्रतिनिवृत्यप्रासादमेवाभ्यरुहत्।

राजा "किं कारणं ममपुत्रः क्षिप्रं प्रतिनिवृत्त इति" अप्राक्षीत् "देव! दृष्ट्वा जीर्णपुरुषमिति"(राजा)जीर्णं पुरुषं दृष्ट्वा प्रव्रजिष्यतीत्याह। "कस्मान्मांनाशयथ, शीघ्रं पुत्रस्य (कृते) नाटकानि सज्जयथ; सम्पत्तिमनुभवन् प्रव्रज्यायै मतिं न करिष्यति" इत्युक्त्वा रक्षकान् वर्धयित्वा सर्वदिशास्वर्धयोजनेऽर्धयोजनेऽस्थापयत्। पुनरेकस्मिन्दिवसे बोधिसत्वस्तथैवोद्यानं गच्छन्देवताभिर्निर्मितं व्याधितं पुरुषं दृष्ट्वापूर्वनयेनैव पृष्ट्वा संविग्नहृदयो निवृत्य प्रासादमधिरूढः।

राजापिपृष्ट्वोपर्युक्तनयेनैव संविज्ञाय पुनर्वर्धयित्वा समन्ततस्त्रिगव्यूति प्रमाणे प्रदेशे (आरक्षम्) रक्षकानस्थापयत्।

अपरं पुन रेकस्मिन् दिवसे बोधिसत्वस्तथैवोद्यानं गच्छन् देवताभि निर्मितं कालकृतं (मृतं) दृष्ट्वा पूर्ववदापृच्छ्य संविग्नहृदयः पुन निवृत्य प्रासादमभ्यरुक्षत्। राज्ञापि पुनः पृष्ट्वापर्युक्तनयेनैव संविज्ञाय पुनर्वर्धयित्वा समन्त तो योजनप्रमाणे प्रदेश आरक्षंस्थापितम्।

ततः पुनरेकदोद्यानं गच्छन्तथैव देवताभि निर्मितं सुनिवृत्तं प्रव्रजितं दृष्ट्वा "कोनामैष- सौम्य!" इति सारथिमप्राक्षीत्।

सारथिः किञ्चापि बुद्धपादस्याभावाद् प्रव्रजितं प्रव्रजितगुणान् वा न जानाति, देवानु भावेनपुनः, "प्रव्रजितोनामैष राजन्नित्युक्त्वा" प्रव्रज्याया गुणानवर्णयत्। बोधिसत्वः प्रव्रज्यायांरुचिमुत्पाद्यतस्मिन्दिन उद्यानमगमत्। दीर्घभाणकाः पुनराहुश्चत्वारिनिमित्तान्येकस्मिन्नेव वासरे दृष्ट्वागमदिति।

## महाभिनिष्क्रमणम्।

तस्मिन्समये राहुलमाता पुत्रं प्रसूतेति श्रुत्वा शुद्धोदनो महाराजः "पुत्राय मे तुष्टिं निवेदयथेति" शासनं प्राहैषीत्। बोधिसत्वस्तच्छ्रुत्वा "राहुलो जातो, बन्धनं जातमित्याह। राजा "किं मे पुत्रोऽवोचदिति पृष्ट्वा तद्वचनं श्रुत्वा" इतः प्रभृति मे नप्तूराहुलकुमारइत्येव नाम भवतु। बोधिसत्वोऽपिखलु रथवरमारुह्य महता यशसातिमनोरमेण श्रीसौभाग्येन च नगरं प्राविक्षत्। तदा कृशा नाम्ना गौतमी क्षत्रियकन्योपरि प्रासादवरतलगता नगरप्रदक्षिणां कुर्वाणस्य बोधिसत्वस्य रूपश्रियं दृष्ट्वा प्रीति सौमनस्यं गतेममुदानमगासीत्।

नूनंसानिर्वृतामाता, नूनं सनिर्वृतः पिता।
नूनंसानिर्वृता नारी, यस्याः पतिरयं पुमान्।

बोधिसत्वस्तच्छ्रुत्वाचिन्तयदाहचैवम यम्। एवं रूपमात्मभावं प्रशंसन्त्यामातुर्हृदयं निर्वृत्तं भवति, पितुर्हृदयं निर्वृत्तं ( सुखितं ) भवति। (प्रजावत्या) भार्याया हृदयं निर्वृत्तं भवति। कस्मिन्नु खलु निर्वृत्तेहृदयं निर्वृत्तं नाम भवति अथास्य क्लेशेषु विरक्तमानसस्य (मनसि) एतदभवत् "रागाग्नौ निवृत्ते निवृत्तं नाम भवति, दोषाग्नौ मोहाग्नौ च निवृत्ते निवृत्तं नाम भवति। (अपूर्ण)

---

# आयुर्वेद महत्व परिचय:

[ले०—शिवचन्द्र शर्मा मिश्रः काव्य साङ्ख्य तीर्थ] आयुर्वेदाचार्यश्च।

दृष्टैरानुश्रविकैश्चापि प्रयत्नशतैर्निवारयितुमशक्येन जन्मजरामरणादिक्लेशसङ्घेन संहतेऽस्मिन् संसारेऽयोगातियोगमिथ्यायोगसेवितैः कम्प्रकलापैरनिशं परिक्लिश्यमानान् विविधातङ्कानलदन्दह्यमानमानसान् यावानुपचिकीर्षुभिः परमकारुणिकैर्महर्षिभिः स्वास्थ्यमभिरक्षितुं व्याधींश्च विनिहन्तुं प्रवर्त्तितो विवर्द्धितो विशेषितश्चायं भगवानायुराम्नायो जगदुपकारितया जगदिदं विद्योतयन्नद्यापि विजयते।

यस्य लोकोत्तरान् सकलपुरुषार्थसाधनैकनिदानभूतस्वास्थ्याभिरक्षणोपयुक्तान् हेतुलक्षणौषधात्मकान् सावशेषमादाय न केवलेयं भारतवसुन्धराऽपितु कृत्स्नेयं धराधारतया आर्त्तानामभिधीयते।

सोऽयमष्टाङ्गोऽपि हेतुलक्षणौषधात्मके भागत्रये विभज्यते इतराङ्गानामस्मिन् भागत्रय एव सन्निविष्टत्वात्। अतएव शास्त्रमिदं त्रिसूत्रमिति पूर्वजैर्व्याह्रियते—यथाह भगवांश्चरकः-

हेतुलिङ्गौषधज्ञानं स्वस्थातुरपरायणम्
त्रिसूत्रंशाश्वतं पुण्यं बुबुधेयं पितामहः। इति सूत्रस्थाने

तत्र सर्वेषां रोगोत्पादकानां बाह्यानामाभ्यन्तराणाञ्च भावानां हेतुकोटौ प्रवेशः। व्याधीनां तदुत्पादकानां वातपित्तश्लेष्मणां शारीराणाञ्च यन्त्राणामामाशयकृत्प्लीहफुफ्फुसहृदयादीनामाकृतिविकृति भावबोधकान्यरिष्टसुचकानि चेन्द्रियादिविज्ञानानिसर्वाण्येव लक्षणकोटावन्तर्भवन्ति। विकारजातोपशमकराणामाहारविहारदेशभेषजा-दीनां सर्वेषामौषधकोटावन्तर्भाव इति भवति संक्षेपतः सर्वाङ्गानामस्मिन् भागत्रये सन्निवेशः।

व्याध्युपसृष्टानां व्याधिपरिमोक्ष एव चिकित्साशास्त्रावतरणस्य तदुपजीविनाञ्च साध्यमिति सञ्जातस्य व्याधेरुपशमं विधित्सुना वैद्येनादौ रोगस्तद्धेतुरधिष्ठानं, तद्रूपं, प्रकृतिभावश्चेत्यादयोविषयाः विज्ञेया भवन्ति। नहि सर्वमशेषविशेषं व्याधितत्त्वमनुपलभ्य व्याध्युपशमने प्रवर्त्तमानो भिषक् महार्घैरपिभेषजै र्व्याधिपरिमोचने कर्म्मणि, कथमप्यलम्भवतीति प्रागौषधविधानात्साध्यस्य रूपमन्वेष्टव्यं भवतीत्याह वैद्यकतन्त्रप्रणेताभावमिश्रः

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्
ततःकर्म्म भिषक् पश्चात्ज्ञानपूर्वं समाचरेत्—इति

चरकश्च—साध्यासाध्यविभागज्ञो
देशकालविभागवित्

काले चारभते कर्म्म
यत् तत् साधयति ध्रुवम्--इति

तत्र रोगपरीक्षाकर्म्मणि सकलरोगाभिनिवृत्तिकराणां वातपित्तश्लेष्मणां परिचय इव तदधिष्ठानस्य शरीरस्य तदन्तर्गतानां प्रकृत विकृतदोषाधिष्ठानभूतानां हृदयादीनाञ्च निर्म्माणस्वरूपं कार्य्यक्रमश्चेत्यादयो भावा विजिज्ञासितव्या भवन्तीति शारीरविज्ञानस्योपयोगित्वमारोग्यशास्त्रे प्रतिपादयन् भगवांश्चरकः प्रोवाच--

"शरीरविचयः शरीरोपकारार्थमिष्यते भिषग्विद्यायाम्, ज्ञात्वाहि शरीरतत्त्वं शरीरोपकारकेषु भावेषु ज्ञानमुत्पद्यते तस्माच्छरीरविचयं प्रशंसन्ति कुशलाः" ।

येतु शारीरज्ञानमनपेक्ष्यैव व्याध्युत्पत्तिज्ञप्तिहेतुभूतस्य निदानस्य स्वत्वमुरीकुर्वन्ति, नूनं तेषामियं प्रतिपत्तिः सर्वथा भ्रान्तिमती। त्रिदोषपद्धत्या न कथमपि शारीरज्ञानपेक्ष्यैव प्रवर्त्तमानया सम्भवति निस्संशयं विकार विज्ञान मतिनेदं केवले शस्त्रावचारणे कर्म्मण्येवोपयुज्यतेऽपितु कृत्स्न एवायुर्वेदीयसमुद्देश्ये नितरामपेक्षितोऽस्योपयोग उपेक्षितश्चेदुपेक्षकान् सर्वत्रैवोपक्षिपति ।

दोषैककारणानां व्याधीनां कथं सम्भवति भेद इति तद्भेदजनकत्वं संप्राप्तिभेदस्यैव परिकल्प्यते तच्चेदं परिकल्पनं तत्तदवयवपरिचयशून्यस्य न कथमपि सम्भाव्यत इत्यादावेवं सर्वत्र शारीर ज्ञानमन्तरा चिकित्सकानां चिकित्साकर्म्मनैपुण्याभिलाषो व्याकरणज्ञानमन्तरा शास्त्रान्तराधिगमप्रयास इव सर्वथोपहास्य एवेति चिकित्सकेन प्राक् च्छारीरं विज्ञानमेवोपार्जनीयम् । यथाह भगवांश्चरकः—

शरीरं सर्वथा सर्वं सर्वदा वेत्ति यो भिषक्
आयुर्वेदं स कार्त्स्न्येन वेद लोकसुखप्रदम् । इति

तत्र शारीरन्नाम नरदेहतत्त्ववर्णनपरं प्रधानं विज्ञानं, पूर्वाङ्गञ्चायुर्वेदस्येति प्राह भगवान् धन्वन्तरिः सुश्रुते ।

"तस्याङ्गवरमाद्यं प्रत्यक्षानुमानोपमानागमैरविरुद्धमुच्यमानमवधारयेति"। तदिदं शारीर विज्ञानमायुर्वेदे प्रायशः शल्यतन्त्र एवान्तर्भवति। आयुर्वेदस्य प्रथमाङ्गशल्यतन्त्रं एकमपि ज्ञानकर्म्मात्मकतया भागद्वये विभज्यते । तत्र-येन विज्ञानबलेन शरीरनिर्म्माणोपादानं तदङ्गप्रत्यङ्गानाञ्च निखिलमेव तत्त्वं परिज्ञायते तच्छल्यतन्त्रस्य ज्ञानात्मको विभागः शारीरविज्ञानमिति नाम्ना प्रचरति, यस्य एनाटमी ( Anatomy ) तिसंज्ञा पाश्चात्यचिकित्साविशारदैर्विधीयते । तदिदं विज्ञानमस्थितत्त्वं, (Osteology) सन्धिबन्धतत्त्वं, (Syndesmology) मांसपेशीतत्त्वं, ( Myology ) नाडी तत्त्वं, (Angiology ) स्नायुतत्त्वं, (Neurology) आभ्यन्तरिकयन्त्रतत्वं, (Splanchnology) प्राण तत्त्वं, मर्मतत्त्वञ्चेत्यादिविभागेषु विभज्यते ।

शल्यतन्त्रस्यापरश्च विभागः कर्म्मात्मकः शस्त्रसाध्यानां मूढगर्भाश्मरीभगन्दरादि विविध विकाराणां शस्त्रोपयोग प्रयोगप्रतिपादनपर पाश्चात्य चिकित्साविशारदैः सर्जरी' ( Surgery ) तिनाम्ना निगद्यते ।

बहवोहि ज्ञानलवदुर्विदग्धा अनवलोकितायुर्वेदग्रन्था आयुर्वेदाचार्य्याणां शारीरविज्ञाने संशयाना "अज्ञातशरीरत्तत्त्वा एत" इत्यधिक्षिपन्ति। तेषामधिक्षेपोऽयं तदज्ञानविलसितो धाष्टर्य विलसितोऽस्मद्दौर्भाग्य विलसितोवेति तत्र न किञ्चित् प्रतिपादयामः, उदाहरामस्तु केवलं तेषां विज्ञानप्रभोद्भासितान्येतदर्थद्योतकानि कतिचित् स्थलानि, यत्र विद्यमानास्तेषां ज्ञानकर्म्मात्मकमाहात्म्यद्योतनपराः बहवोहि सिद्धान्ताः दृक्पथमुपयास्यन्ति दर्शकाणाम्। यद्यपीदानीन्तना उपलभ्यमाना आयुर्वेदीयग्रन्थाः मनुष्यहतकानां घातकाचारादवशिष्टकतिपयांशाः प्रक्षिप्तांशबहुलाः लिपिकरसंस्कर्तृदोषोपनिबद्धाः महार्घा अप्यपरिमार्जिता रत्नराशयइव कतिचिदेवावशिष्यन्ते, तथापि तत्तत्स्थलप्रदर्शितां विचारपद्धतिं प्रविलोक्यापि किञ्चिद्द्वस्यावलोकनमात्रेणैव यदि कश्चित्तेषां शारीरज्ञाने विप्रतिपद्येत नूनमसौसर्गेऽस्मिन् कुत्रचिद्रचनावैषम्यं विलोक्य धातूरचनाचातुर्य्येऽपि संशयीत। आयुर्वेदीयशारीरविज्ञानं यदिदानीमुपलभ्यते तत्सर्वथाऽविकलं व्यवहरणीयञ्चेति न वयमपि निःसंशयं ब्रूमः, ब्रूमस्तु केवलमेषां प्राक्सद्भावमिदानीं संस्करणीयताञ्च। शारीरविज्ञाने विबोधिततत्वानां विधिः यत्पूर्णतादर्शनेऽपि तत्सामयिकतत्पूर्णतापरिज्ञानं तेषां तत्तदवयवाधिष्ठित विकारेषु शस्त्रपातनोपदेशादिना स्फुटमेवानुमीयते यतो नह्यविदितशरीरतत्वानां कथमप्येतादृशे दुस्तरे कर्म्मणि प्रवृत्तिः सम्भवितुमर्हति।

अत्रहि सृष्टिकारणं, गर्भाधानप्रकारो, गर्भाधायकलोहितरेतः सन्निपातेऽपि गर्भानवस्थितेर्हेतुस्तदाधानसमयो, मासभेदेनाङ्गविशेषोत्पतिः प्रसवविलम्बहेतुः, प्राणनिरूपणमस्थिशिराधमनीस्नायुसन्धिप्रभृतीनां सङ्ख्यायोगवर्णनामाभ्यामाशयपक्वाशय प्रभृतीनामाशयानां यकृत्प्लीहवस्तिवृक्कहृदयपुप्फुसादीनां यन्त्राणां कर्म्माणि संघटनप्रकारः, सप्तोत्तरं मर्म्मशतं, तन्निर्माणं, तदाघातपरिज्ञानलक्षणं, तत्परिहारश्चेत्यादयो बहवोहि शारीरविज्ञानपरिचायकाः, विषयाः सन्ति समुपनिबद्धाः येऽद्यापि विपर्य्यासविलोपपरिकल्पनादिभिस्सह समुपलभ्यन्ते।

अस्मिन् शास्त्रे शरीरमिदं पाञ्चभौतिकं पञ्चभूतगुणमयमेकस्य चेतनाधातोः संयोगात्सचेतनं षड्धातुकमित्युच्यते। धातुशब्दश्चात्रारम्भककारणमुपलक्षयति, तेन शरीरान्तर्गता अचेतनभावाः पञ्चमहाभूतहेतुकाश्चैतन्यञ्च चेतनस्यात्मनो धर्म्मइति विज्ञायते। इहहि त्वचः, कलाः (Membranes) पेश्यः स्नायवः (Ligament or fibrous tissue) शिराः (Veins) धमन्यो ( Arteries ) रसायन्यो ( Lymphatics ) नाड्यः Nerves) स्रोतांसि रसरक्तमांसादयो धातव आशयाः एकादशेन्द्रियाणि दोषाश्चेत्यादयः शारीरस्थिलिमूलभूताः पदार्था वर्ण्यन्ते।

तत्रायुर्वेदविदः सुश्रुतादयः षडिति च चरकादयस्त्वचो वदन्ति। ता एताः निखिलाङ्गावरणरूपाः अधिष्ठानं स्पर्शेन्द्रियस्य षडङ्ग शारीरमवतत्य तिष्ठन्ति। तत्र सुश्रुतस्यावभा-

सिनीतिप्रथमत्वचःसंज्ञा, चरकस्यतु उदकधरा। प्रथमाहि त्वक् सर्ववर्णानवभासयति पञ्चविधाञ्चच्छायां प्रकाशयतीत्यत्रभासिनीति सुश्रुतकृतसंज्ञा, वहिदाहादिना स्फोटे जायमाने तमुदकेन पूरयतीत्यभिप्रायादुदकधरेति तस्याश्चरककृतापि संज्ञा संगच्छत एव। गौरः कृष्णो वा पुरुष इति बहिर्गतत्वमवलोकनेनैव प्रतीयते। वह्न्यादिना दाहे च जलपूर्णाः स्फोटा उद्गता भवन्तीति प्रत्यक्षमेव सर्वेषाम् तस्मात् पाश्चात्यैरणुवीक्षणदिदर्शनैर्वीक्षितस्य त्वग्भागद्वयस्य प्रथमो भागः पूर्वोक्तस्वरूप आयुर्वेदविदां प्रथमत्वगेव, अपरास्तु पञ्च षड् वा त्वचोऽन्तस्त्वग्भागेऽन्तर्भवन्ति।

कला(Membranes) स्तु धात्वाशयान्तर्मर्यादाः

स्नायुभिश्चाप्रतिच्छन्नान् सन्ततांश्च जरायुणा।
श्लेष्मणा वेष्ठितांश्चापि कलाभागांस्तु तान् विदुः। इतिसुश्रुते।

स्नायुभिः शुभ्रसूक्ष्मतन्तुभिः प्रतिच्छन्नानन्योन्यानुप्रवेशेन निष्पन्नान् जरायुणासूक्ष्मजालकेन सन्ततान् व्याप्तान् श्लेष्मणावेष्टितान् श्लेष्मगततारल्यपैच्छिल्यपूर्णान् कलाभागान् विदुः।

अयमभिप्रायः—

धातूनां रसरक्तादीनामाधेयपदार्थानामाशयानामामाशयपक्वाशयादीनामाधारभूतानामन्तरे मध्ये मर्य्यादा व्यवधायिका, तेन धात्वाशयान्तर्मर्य्यादेतिरूपनिर्देशेन जलाशये स्थितस्य जलस्य तत्तलभूमेश्च मध्यवर्त्ति पङ्क इव धात्वाशयमध्यवर्त्तिनः सूक्ष्मपटरूपाः पदार्थाः कलाशब्देनाभिधीयन्ते।

या अधिकृत्य—"तास्तु सूक्ष्मकौशेयवासःसमाकारा" इति प्रत्यक्षशारीरकर्तुरुक्तिः फलितार्थाभिधायिनी।

गमनोत्थानभाषणनेत्रनिमीलनादिकाः सर्वा एवशारीरचेष्टाः प्रायशो मांसादेव निष्पद्यन्ते। अस्थिपञ्जरेण सम्बद्धस्य मांसस्य सूक्ष्माः बहवो हि ग्रन्थयो निर्मिताः सन्ति। एषामेव मांसखण्डानां पेशीतिपारिभाषिकीसंज्ञा प्रवर्त्तते शारीरविज्ञाने। मांसपेशीनामभ्यन्तरेषु स्पन्दमानानां रक्तसंवहनप्रणालिकानां तत्रत्यसूत्रादीनाञ्च स्पष्टतो दर्शनं भवति प्रत्यक्षद्रष्टृणाम्। पेशीनामाकारः परिमाणञ्च बहुधा परस्परं भिद्यते। काचिद्दीर्घायामवती वर्तुला चान्या स्थूला सूक्ष्मा चेतरा मध्यस्थूला शीर्षकृशा च काचिदेवं त्रिकोणा चतुरस्रा चेति बहुविधाः पेश्यो भवन्ति। पेशीनिर्म्माणन्तु मांसखण्डैः सूत्रैश्च भवतीति विनिश्चयो विपश्चिताम्। भावमिश्रोऽपि पेशीनां निर्म्माणप्रकारमभिदधत्—

"यथार्थमुष्मणायुक्तो वायुःस्रोतांसि दारयेत्
अनुप्रविश्य पिशितं पेशीर्विभजते तथा इति

पेशीनां मांसमयत्वमेव प्रतिपादयति, सुश्रुतश्चाकृतिपरिमाणबाहुल्यं सन्ध्यस्थिशिरासंयोगित्वं स्नायु प्रच्छादकत्वञ्च। तद्यथा :—

तासां बहुलपेलवस्थूलाणुपृथुवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशभावाः सन्ध्यस्थिशिरास्नायुप्रच्छादकाः यथादेशं स्वभावत एव भवन्तीत्येतत्सर्वमेवानवद्यं शारीरं तत्वं परःसहस्राब्दप्राचीनविचारविलसितमिति को नाम प्राच्यशारीरविज्ञानस्य महत्वातिशयं न स्वीकुर्य्यात्।

प्राञ्चोहि पेशीपरिसङ्ख्याने तासां पञ्चशतींप्राहुः। नव्या अप्येकोनविंशत्यधिकपञ्चशतीमितिनैतत्परिसङ्ख्यानमनिवार्य्यंभेदमावहति।

पेश्योहि प्रवृत्तिस्वातन्त्र्यपारतन्त्र्याभ्यां द्विधा विभज्यन्ते। तत्र काश्चित् स्वतन्त्रप्रवृत्तयः। एवंविधाः पेश्यो हृदयान्त्रहन्वादिनिर्म्मापिकाः सन्ति, एताः स्वयमेव स्वकार्य्ये प्रवर्तन्ते। तासां प्रवृत्तिनिवृत्ती केनापि प्रयत्नशतैरपि न वशीकर्तुं शक्येते। परतन्त्रप्रवृत्तयस्तुपेश्यः पुरुषप्रवृत्त्यधीनाः शाखादिषुवर्तमानास्तासां प्रवर्तनस्य पुरुषेच्छाधीनत्वात्।

अस्थिविचारे तत्सङ्ख्यां परिगणयन् सषष्ठिशतत्रयमस्थ्नांप्राह भगवांश्चरकः, शतत्रयञ्च सुश्रुतोमहर्षिः। यथा सुश्रुते—

"त्रीणि सषष्ठिन्यस्थिशतानि वेदवादिनो भाषन्ते, शल्यतन्त्रे तु त्रीण्येव शतानि"।

पाश्चात्यास्तु षडधिकं शतद्वयं शतद्वयं वास्थ्नां परिगणयन्ति। एषुमतेषु परस्परमुपलक्ष्यमाणोऽपिगणना भेदो गणनाप्रकारभेदादेव जायते। षडङ्गेऽङ्गेऽस्मिन् नखान् दन्तान् दन्तोलूखलांश्च गणयन्ति चरकमतानुयायिनः कायचिकित्सकाः। ननु नखान् दन्तोलूखलांश्च सङ्ख्यानेऽस्थ्नां परिगणयन्ति सौश्रुताः शल्यचिकित्सकास्तेष्वस्थितत्त्वादर्शनात्। नव्यास्तु दन्तानपि त्वग्विपरिणाममेव मन्यन्ते, नच परिगणयन्ति सन्ध्यन्तराले परशुकान्तरेषु श्वास-पथे नासाप्राचीरादौ च वर्त्तमानानि तरुणास्थीनीति सर्वथैव तन्मते मतान्तरापेक्षया न्यूनत्वमस्थ्नामुपपद्यते। इतोऽर्द्धशताब्दीपूर्वं प्रतीच्या अपिशल्यतन्त्रविदः प्राच्या इव दन्तानस्थिष्वेवान्तर्भावयन्तिस्म। किन्त्विदानीमाविष्कृताभिनववैज्ञानिकानुसन्धानेनात्रास्थिघटकावयवाभावं परिलक्ष्य तान्यस्थीनीति स्वपूर्वसिद्धान्तं दोषयुक्तं प्रत्याययन्ति। एवमहर्निशं परिवर्त्तमानस्तेषां सिद्धान्तोयावत् स्थैर्य्यं न याति तावत् विज्ञानजातं न कथञ्चित् स्थिरामवस्थांप्रतिपद्यते; नचतत्सम्वादेन सहसैव तदितरस्यासत्यत्वप्रतिपादयितुमेव केनापि शक्यते।

प्राचीनाः शल्यतन्त्रविदोऽप्राप्तपञ्चविंशतिवर्षस्याप्रौढस्य पुरुषस्य शरीरास्थिपरिसङ्ख्यानमर्वाचीनास्तु—पञ्चविंशतिवर्षवयस्कस्य प्रौढस्य कुर्वन्तीतिपृथग्वयोग्रहणादस्थ्नां सङ्ख्याने परस्परं भेदः सम्पद्यते, यतोहि बहून्येवम्विधान्यस्थीनि सन्ति यानि बाल्यावस्थायामेकाधिकान्यपि युवावस्थायां पारस्परिकमेलनेनैकीभवन्तीति द्वितीयमिदं भेदकारणमस्थ्नां परिसङ्ख्याने पूर्वापराचार्य्याणां सञ्जायते। अनुमानञ्चेदं तत्रतत्रप्रदर्शितेनास्थिसङ्ख्यानेन भवति। सुश्रुते तु अवर्षशतकस्य शरीरस्य व्यवच्छेदं विधाय प्रत्यक्षदर्शनमुपदिष्टम्। तत्र वर्षशतकस्य जीर्णशीर्णशरीरेन्द्रियोपादाननिचयस्यैवाप्रौढस्याप्यसम्पूर्णाङ्गप्रत्यङ्गोपादानपुष्टेर्ग्रहणमर्थतो निराक्रियतएव, पञ्चविंशति वर्षवयस्कयवपरिपुष्टाशेषधातुत्वनिर्देशात्। तस्मादस्थ्नां परिसङ्ख्यानभेदः प्रायशोगणनाप्रकारभेदादेवभिद्यत इति।

अस्थीनि पुनराकृतितः पञ्चविधानि भवन्ति कपालरुचकवलयतरुणनलकसंज्ञकानि। तत्र

कपालाकृतीनि कपालास्थीनि शिरसि, रुचकाकृतीनि दशनास्थीनि, पार्श्वपृष्ठास्तु वलयानि, शाखासु नलकानि, घ्राणकर्णादिषु तरुणानि। इहहि वर्णितानि रुचकास्थीनि तरुणास्थीनि च नास्थिगणनायामिदानीन्तनाः परिगणयन्तीति प्रागेवोक्तम्। वेदवादिनोहि सषष्ठित्रिशतमस्थ्नां प्रतिजानन्तो नखान्दन्तोलूखलांश्चापि परिगणयन्ति। अत्रेत्थमनुमीयते, तेहि शरीरान्तर्गतानां कठिनानामस्थिभिन्नानामपिपदार्थानां काठिन्यदर्शनमात्रेणैव तेषामस्थित्वं व्याचक्रुरपरे पुनर्नैवम्।

इदानीं लभ्यमाने,चरकग्रन्थे निर्णयसागरादौ मुद्रिते हिन्दीटीकामये प्रतिज्ञातस्याप्यस्थिनिचयस्य तथा परिसङ्ख्यानविपर्य्यासो दृश्यते येन न कथमपि सषष्ठित्रिशतमस्थ्नां पूर्य्यते। हन्त! तावदयं ग्रन्थानामेवं विधो दोषराशिर्लिपिकरप्रमादविलसितएवेति स्मारं स्मारं कियन्त एवंविधाः विपर्य्यासा विहिताः प्रतिसंस्कर्तृभिः प्रक्षेपकैर्लिपिकरै टीकाकारैश्चेति नितरां खेदमापाद्यतेचेतः।

सन्धयस्तु (Joints of Articulation) दशाधिकं शतद्वयं सुश्रुते, सहस्रद्वयं च चरके वर्ण्यन्ते। यथाह वाग्भटः—

> अन्यन्तरिस्तु······सन्धीनां च शतद्वयम्।
> दशोत्तरे सहस्रे द्वे निजगादात्रिनन्दनः।

इहहि शल्यतन्त्रे वर्णितेन सन्धिशब्देनास्थिसन्धयएव गृह्यन्ते, तदितरसन्धीनामसङ्ख्येयत्वात्। यथाह सुश्रुतः—

> अस्थ्नांतु सन्धयो ह्येते केवलाः परिकीर्त्तिताः।
> पेशीस्नायुशिराणान्तु सन्धिसङ्ख्या न विद्यते॥

चरके पुनस्तदितरसन्धिग्रहणादेव द्विसहस्रोत्तरसन्धीनामभिहिता। सन्धयस्तु द्विविधाश्चेष्टावन्तोऽचेष्टावन्तश्च। तत्र शाखाहनुकटीषु च सचेष्टा इतरे पुनरचेष्टा। यथाह सुश्रुतः—

> शाखासुहन्वोः कट्याञ्च चेष्टावन्तः सुसन्धयः।
> शेषा सुसन्धयः सर्वे विज्ञेयाः स्थिराबुधैः॥

आकृत्या च सन्धयोऽष्टविधाः प्राचाम्। कोरोदुखलसामुद्गप्रतरतुन्नसेवनीवायसतुण्डमण्डल शङ्खावर्त्ताश्चेति। एतेचाकृतिभेदाः प्रायशः प्रत्यक्षदर्शनादिनेदानीमप्यनुभूयन्ते।

इहहि नवस्नायु ( Ligament or Fibrous tissue ) शतानि। सप्त शिरा ( Veins ) शतानि। चतुर्विंशतिर्धमन्यो ( Arteries ) या उर्द्ध्वाधस्तिर्य्यग्गामितयाऽऽनन्त्यं प्राप्नुवन्ति। नाड्यः ( NerVes ) सार्द्धत्रिकोट्यः शब्दादिसंज्ञानां चेष्टावेगविशेषाणाञ्च प्रवर्त्तिन्यो जीवनमरणप्रत्ययभूताः याः विस्तरेण योगशास्त्रे वर्ण्यन्ते।

परिणाममापद्यमानानां धातूनामभिवाहीनि स्रोतांसि द्वाविंशतिः। रसरक्तमांसमेदोऽस्थिमज्जशुक्राणीति सप्तधातवः प्रीणनजीवनचालनस्नेहन धारणगर्भोत्पादनकराः। आमाशय ( Stomach ) पक्वाशय ( Intestines ) गर्भाशयादयः उपलक्षणार्थकाः सप्त [illegible] स्रोतांस्चेति परिसंख्याता बहवः स[illegible] स्थान कर्म्मभेदात्।

एवं पुनर्बहूनि शारीरस्थानगतानि स्थलानि सम्प्रतिऽस्मिन्नायुर्वेदे दृश्यन्ते यत्र प्रदर्शितानाम

र्थानां सम्यगवबोध एव गुरुपरम्परायपलापात्, स्वयञ्च तेषां बहुदोषदूषितत्वान्नभवति। तत्र तत्र किञ्चत्तत्वप्रकाशस्फुरणमात्रमवलोक्यैव वयमिदानीं तत्तत्कालीनविस्तरानुमानं कर्तुं शक्नुमः; परं हा हन्त !! शोचनीयोऽयं विषयो !!! यद्वयं वाक्छूराएव ते विषयाश्चापि तथैव सम्पन्ना इति न किञ्चिदुपयोगोऽस्माकस्मिद्विषयाणाञ्चापरिमार्जितानां सम्भवति तेषुपरमाश्चर्य्यकरेषु कार्य्येष्विति सर्वथा स्वविषयपरिसंस्कारार्थं जागृतिकालोऽयं वैद्यानां न प्रमादस्य।

तथाचेतः शतद्वयवर्षपूर्वं यां रक्तसंवहनक्रियां प्रकटय्य पाश्चात्यपण्डितः सरविलियमहार्वो महोदयः पाश्चात्यदेशवासिनाँ परमपूजनीयो बभूव, सैव रक्तसंवहनक्रिया परसहस्रवर्षाधिकप्राचीनेषु भग्नावशेषेष्वप्यायुर्वेद ग्रन्थेषु वीजरूपेणासाद्यते। चरकसुश्रुतयोः सूत्रस्थाने शोणितवर्णनीयेऽर्थे दशमहामूलीये चैतत्प्रसङ्गः। पाश्चात्यानामौक्सीजनसंज्ञकेन वायुना या रक्तशोधनप्रणाली फुफ्फुसगता दृश्यते सैव प्रणाली शार्ङ्गधरेऽपि किञ्चिद्विपर्य्यासेन परिलक्ष्यते। बहिराकृष्टश्वासवायुवर्णनप्रसङ्गे शार्ङ्गधरेण—

नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम्
कण्ठाद्बहिर्विनिर्याति पातुं विष्णुपदामृतम्।
पीत्वा चाम्बरपीयूषं पुनरायाति वेगतः
प्रीणयन् देहमखिलं जीवयन् जठरानलम्।
शरीरप्राणयोरेवं संयोगादायुरुच्यते
कालेन तद्वियोगाद्धि पञ्चत्वं कथ्यते बुधैः।

अत्राम्बरपीयूष विष्णुपदामृतम्वाऽऽकृष्टस्य शुद्धवायोः सारमयं तत्वं रक्तसंशोधनादिकर्म्मणां सहायकम्। तदेव पाश्चात्यै विद्वद्भिरौक्सीजनेतिनाम्ना व्यवह्रियत इति वदन्ति महामहोपाध्यायपदभाजः एम० ए०, एल० एम० एस० इत्युपाधिधारिणो वैद्यावतंस कविराज श्रीगणनाथसेनमहोदयाः। वक्तव्यमत्रैतदेव यदायुर्वेदप्रक्रियायां क्रमशः शरीरतत्वानां शरीररक्षणोपदेशानाञ्चोत्तमोत्तमवर्णनमभूत्; परमद्यतद्ग्रन्थरत्नानामभावात् विद्यमानेष्वपि संस्कर्तृप्रभृतीनां दोषवशात् परिवर्त्तन ह्रासश्च समाजनि। उपनिषत्सु, पुराणेषु, धर्म्मशास्त्रेषु, तन्त्रेषु च शरीरतत्वानामायुर्वेदीयविषयाणांचाद्यापि समुपलभ्यमानं वर्णनं तदानीन्तनीयमायुर्वेदोन्नतिं प्रकटयति। आयुर्वेदप्रदर्शितां सरणिमवलम्ब्यैव प्रवर्तिताः प्रवर्द्धिताः परिष्कृताश्च चिकित्सान्तरपद्धतयस्तत्तदाचार्य्यैः प्रणीता इत्यत्र नास्ति काचिद्विप्रतिपत्तिर्यतोऽद्यापि तत्र विद्यमानाः बहवो विषयास्तत्तदायुर्वेदीयविषययाणां संस्कृतरूपमेवावलम्ब्य प्रचलिताः प्रविलोक्यन्ते।

शल्यतन्त्रस्य याभिः क्रियाभिरिदानींतनास्सभ्यदेशाः ईश्वरसृष्टिरत्नस्वरूपतया परिगीयन्ते, गर्वञ्च विदधते, तासामाविर्भाव एतस्य वृद्धतमस्यायुर्वेदस्याधिपत्ये बहुकालपूर्वमेवाभूत्। मूढगर्भोऽ ( Difficult labour )—श्मरी (Calculus) चेति विकारद्वयमतिदुश्चिकित्सतयाद्याप्यभिधीयते। एतादृक्कठिनतमाना शस्त्रसाध्यविकाराणामपि निवारणविधिरायुर्वेदेऽनन्यसाधारणीं रीतिमवलम्ब्य लिखितो विलोक्यते। सुश्रुतस्य मूढगर्भचिकित्साप्रकरणे सर्वथासौ द्रष्टव्यएवास्ति विधिः। मनस्विना श्रीमता उमेशचन्द्रमहोदयेनैकत्रैवमुल्लिखितम्:—

The subjects of मूढगर्भ and अश्मरी which relate to difficult delivery and operation of stone respectively, are treated in so masterly a manner that Dr. Charles (the then principal of the Calcutta Medical College) desired to see them. At his request, Dr. Durgadas Gupta and myself translated them into English and submitted the said for his perusal. Dr. Charles highly praised the process of delivery in difficult cases and even confessed that, with all his great experience in midwifery and surgery, he never had anyidea of the like being found all the Medical works that came under his observations. [Vaidyaka-Sabda-Sindhu P. P. 36.]

कलिकाताराजकीय चिकित्सालयाध्यक्षेण डाक्तर चार्ल्स् महोदयेन विजिज्ञासिते आयुर्वेदप्रतिपादित मूढगर्भाश्मरीचिकित्सितविधौ पाश्चात्यचिकित्साविशारदो दुर्गादासगुप्तोहञ्च तत्तच्चिकित्सास्थनमनूद्य धात्रीविद्याविशारदाय तस्मैप्रदर्शितवान्। बहुशः परिदृष्टकर्म्मणा सकलशस्त्रोपचारनिपुणेन तं तयोश्चिकित्सितविधिं परि दृश्य सुचिरं विमृश्यातीव श्लाघं श्लाघमभिहितम्—यदीदृशो विधिरेतयोर्नमया कुत्रापि दृष्टइति ।।

एवमेव मर्म्माहतं हस्तपादादिकं संछिन्न व्रणविद्धं मस्तिष्कञ्च विदार्य्य तदुपचारक्रमः सुश्रुतादिनिर्दिष्टस्तथा दृश्यते; यदवधानेनेदानीन्तनैर्विधीयमानानां कठिनतमानां कार्य्याणामपूर्वतामनन्यसाधारणताञ्च प्रतिपत्तुं न प्रवर्तते चेतः । यथा ।

क्षिप्रेषु तत्र सतलेषु हतेषु रक्तं ।
　　गच्छत्यतीव पवनश्च रुजं करोति
एवं विनाशमुपयान्तिहि तत्रविद्धाः ।
　　वृक्षा इवायुध विघातनिकृत्तमूलाः॥
तस्मात्तयोरभिहितस्य तु पाणिपादं ।
　　च्छेत्तव्यमाशुमणिबन्धनगुल्फदेशे॥
तथाच-मस्तिष्कव्रणोपचारे ।
शिरसोऽपहृते शल्ये वालवर्ति प्रवेशयेत् ।
मस्तुलुङ्गश्रुतौ क्रुद्धो हन्यादेनं समीरणः॥ इत्यादि

एवं बहूनि खल्वाश्चर्य्यजनकानि कर्म्माण्यायुर्वेदीयग्रन्थेषु सर्वाणिवोपयोगिनो । विषयानवलम्ब्यवर्णितानि दृश्यन्ते, येषां वर्णनं ग्रन्थान्तरुपमेव सम्पत्स्यत इति तत्सन्निवेशो नात्राल्पीयसि निबन्धे कर्त्तुं शक्य इति विरम्यतेऽस्मात्प्रसङ्गान्निवेदनीयमिदमावेद्य । यद्यमायुर्वेदः सर्वैरेव तत्वर्णनैरूपेतोऽपि प्रागिदानीं तद्ग्रन्थानां भग्नावशेषतया कच्चिल्लिपिकरप्रमादात्, कच्चित्संस्कर्तृदोषात्परिवर्त्तिताभिप्रायः परिस्खलितवर्णन समयपरिवृत्त्याच्च तत्कालीनता दृगाचारेभ्यो नितरां भिद्यमानाचारेऽस्मिन समये शल्याङ्गेन तादृगुपकारमप्रवर्त्तयन यदि स्वल्पमेव साहाय्यमुपलभेत तदातीव हितं भारतीयप्रजानां भवेत् ॥

एवञ्चायुर्वेदस्य सर्वाङ्गानांमहत्वमादाय यदिकश्चिदुभयविद्याविशारदोऽन्यचिकित्साशास्त्रेणेमं तुलयेत् तदा स्वयमेवैतस्य महिमातिशयमन्यापेक्षया स्वान्त आकलयेत् ।

विस्तृतोह्ययं विषयो नाल्पेन समयेनाल्पमतिभिरस्माभिः प्रकाशयितुं शक्यत इत्यत्र परित्यज्यते अपराङ्गानां विचारः ।

अधिगतव्याधिहेतुलक्षणस्य वैद्यस्य चिकित्सावसरः । साच यतोऽभिनिवर्त्तते पद्धते, स्तद्विज्ञानवर्णनमयमङ्ग "कायचिकित्सा" नामायुर्वेदस्य सर्वाङ्गेभ्यः परिपुष्टं स्वप्रतिद्वन्द्विताया न समानतामावहति । नचेदं वाक्यमात्मश्लाघापरं कथमप्यवगन्तव्यम् । इदानीं शोचनीयाया परिस्थितावप्यायुर्वेदस्य तादृक्त्वोपलम्भात्, अन्यैश्चापि बहुदर्शिभिरेतदर्थस्य स्वीकृतत्वात् ॥ चरकस्य चिकित्साप्रणालीं प्रशंसता अमेरिकनबहुदर्शि-प्रसिद्धचिकित्सकेन एम० ए० एम०-डान्युपाधिधारिणाजार्जक्लार्केना ( Dr. Clarke, M. A. M. D. ) भिहितम्—

"If the Physicians of the present day would drop off the Pharmacopia all the modern drugs and chemicals and treate their patients according to the methods of Charaka there would be less work for the undertakers and fewer chronic invalids in the world."

(अपूर्ण)

---

काशिकराजकीयप्रथमपरीक्षार्थि छात्राणां कृते समुपयुक्ता सूत्रनाऽभूतपूर्वावसरश्च ।

## ॥ रामायणभारतसङ्ग्रहः ॥

परमसरलया सुविस्तृतया, संस्कृतटीकया विमलाभिधया भाषाटीकया च समन्वितः । विद्यार्थिजनावलम्बनैकयष्टिरिवेयं टीका वर्तते । इमां संगृह्य समालोच्यच परीक्षोत्तरणमोपत्करं स्यादन्तेवासिजनेन । अस्य पुस्तकस्याध्ययनेन छात्रा व्युत्पन्नाः सदाचारसम्पन्नाः प्रत्नेतिहासज्ञाश्च भविष्यन्तीत्यादिप्रतिपादिका महीयसां निःसङ्कोचंनैकेषां पण्डितप्रकाण्डानां सन्तिपरितोषयित्र्यः समनुमतयः । नाद्यावधि क्वाप्यन्यत्र मुद्रिताभ्यामपूर्वव्याख्याभ्यामलंकृतमिदमेतत्सकलं पुस्तकदर्शनसमकालमेव स्फुटीभविष्यति प्रेक्षावतामित्यलं तद्वर्णनेन । न भवति करकङ्कणावलोकनायदर्पणाकाङ्क्षा जुलाईमासस्य १५ पंचदशदिनात्पूर्वं त एव गृहीतॄणां कृतेऽस्य मूल्यम् ॥) ततः परमधिकम्भवेत् ।

अचिरादेवैतः कापि "संस्कृतपुष्पमाला" प्रथममध्यमपरीक्षार्थिछात्राणां बोधसमृद्धये सरलसरलैः पदविन्यासैर्विचित्रैर्मनोज्ञैश्च कथासंदर्भैर्विभूषिता प्रकाशयिष्यते सुरभाषायाम स्खलितस्वाशयप्रकाशनाभिलाषिभि र्निबन्ध (रचना) लेखनपाटवमिच्छुभिश्चेयमवश्यं संग्राह्या । ये गृहीतुमिच्छन्ति तैस्त्वरितमावेदनीयम् । मुद्रिते प्रथमे पुस्तके तत् वि० पि० पर्यायेण प्रेषयिष्यते । येप्रागाणकषट्कं प्रवेशशुल्कंप्रदास्यन्ति ते स्थायिग्राहका भविष्यन्ति तेभ्यश्च मूल्येनबिनापुस्तकमेकंवर्षसमाप्तावुपहारत्वेनप्रदास्याम । प्रतिवर्षं मालायाश्च पुष्पत्रयं विकसित स्यात् प्रायः कस्यापि कुसुमस्य मूल्यप्रमाणकाष्टकादधिकं न भवेत् ।

मुखविलासः ( पता )

**पं० सदाशिव शास्त्री**

दारागञ्ज-प्रयाग ।

## सम्पादकाभिप्रायाः

गहनं हि कर्मवर्त्म, बहुविचार्यापि जनो न तत्त-
ं विज्ञातुं प्रभवति, बहुप्रयत्नयापि न तत्सुकरं
धातुं शक्नोति । जनो विचिन्तयति "इत्थमा-
येयं कर्म सम्पादयिष्यामि, एते किलोपाया मया
र्धारिताः, एभिरुपायैः करगतैव सिद्धिर्भविष्य-
स्माकम्" । परं दृष्टमेतद्बहुशो यन्न सफलोजनः
फलमनोरथो भवतीति । गुरवोनुशासति, वत्सा
यं पन्थाः शोभनः । अनेन गच्छन् नकोऽपि दुःख-
ग् भवति, मित्राणि सानुरोधं बोधयन्ति, अय हि
लप्रदः पन्थाः । समाश्रयणीयस्त्वयाप्ययमेव ।
र किं तेन पथा गच्छन्तः कति सफला अभवन् ?
दाचिच्च गुरुभिर्मित्रैश्च स पंथा निन्द्यमानो दृष्टः ।
तः किं विधेयं किं न विधेयमिति न कोऽपि
तत्त्वतः परिच्छेत्तुं शक्नोति । कमपि सफलं जनं
दृष्ट्वा तेनाध्युषितं पन्थानञ्चाप्यनुमाय गुरूणां
मित्राणाञ्चाप्युपदेशाः प्रवर्तन्ते । अतएव च कर्मव-
र्त्मनो गहनता व्यपदिश्यते । उपदेशपराश्च भवन्ति
गुरवो मित्राणि च । अत्रेदं वक्तव्य, नायं जनः
सफलतामधिगन्तुं समुत्पन्नः । स्वल्पा शक्तिर्मान-
वस्य, स्वल्पञ्च बलम्, तथाविधो मानवः साफल्य-
मधिगन्तुं शक्नोतीति न स्पृहणीयं वचः । अतश्च
ये साफल्यं पुरस्कृत्य प्रवर्तन्ते प्रवर्तयन्ति वा, नूनं
हतमनोरथास्ते परावर्तन्ते विषण्णाश्च भवन्ति ।
यतोऽविज्ञाय प्रवृत्तिस्तेषाम् ।

किन्नाम साफल्यम् । साम्प्रतमस्माभिस्तु केषा-
ञ्चनेन्द्रियतर्पकाणां पदार्थानामुपलब्धिरेव तदिति
निश्चीयते । यद्येकेन धनमुपलब्धं स्यात्तदा स

सफल इति प्रोच्यते, किञ्चापरोऽपि तदैव सफलः परिगण्येत, यदा तेन धनं समार्जितं स्यात्। ईदृश एव साम्प्रतं साधारणानां विश्वासः। नैतत्सा-फल्यलक्षणमित्यभिज्ञा वदन्ति। साफल्यं नाम क्रियावसानम्, क्रियावसानं तदैव भवति यदेप्सितं समुपलभ्येत। प्राप्तधनोऽपि धनार्थं प्रयतते, अतो धनोपलब्धिः साफल्यमिति कथं वक्तुं शक्येत। इत्थमेवाधिकाधिकं विचार्यमाणे न किमपि तत्त्वं निश्चितं भवति। तस्मात् किं कर्म हातव्यम्? नेत्युच्यते। प्रकृतिस्त्वां नियोक्ष्यतीत्यागमात्। तस्मादनभिसन्धाय फलं कर्तव्यमिति मत्वानुष्ठेयं तत्।

## हरिहराम्बाविद्यालयः

साम्प्रतं संस्कृतेति शब्दश्रवणसमकालमेव घूर्णितमस्तिष्का भवन्ति केचन विज्ञाः, भारतीयानां धनिकानां सविधे न तथाविधो जनस्तिष्ठति यो नाम्नापि संस्कृतं परिचिनुयात्। भारतीया राजानः किल केवलं राजानः। न कस्मिन्नपि विषये मनोनुयोगार्थमेभिरात्मलाभोऽधिगत इति राजपरिचारकास्तं बोधयन्ति। ते चात्मपरिचारकाणां वचसि विश्वासमाधाय तथाविधमेवात्मानमवगच्छन्त्यनुतिष्ठन्ति च। एवंविधे व्यतिकरे कथन्नामेयं वराकी संस्कृतभारती भारतीयेभ्यो धनिकेभ्यो राजभ्यश्च प्रदीयमानं हस्तावलम्बमभिगच्छेत्। अतएव चास्या अभ्युदयसूर्यः कस्मिन्नपि निबिडान्धकारे गह्वरे निलीनस्तिरोहितश्चेदानीमस्माकं दृष्टिपथात्। यदि हरिहरप्रसादनारायणमहोदयसदृशा द्वित्रा राजानो नाभविष्यं-स्तदेयं नामशेषाऽभविष्यत्।

पाटलिपुर-प्रान्ते अमावाँ-नामकमास्ते प्रख्यं प्रसिद्धञ्च राज्यम्। अस्य राज्यस्याधीशाः साम्प्रतं श्रीमान् हरिहरप्रसादनारायणमहोदयः। नूनमयमेव स महाराजो येन हि वराकी संस्कृतभारती निष्कामं सेव्यते। महोदयेनानेन स्वनगरे हरिहराम्बाविद्यालयनामकः कोऽपि संस्कृतविद्यालयः प्रतिष्ठापितो वर्तते। तत्र तत्तद्विषयाणां द्वादशाध्यापका नियुक्ता वर्तन्ते। अध्यापकेभ्यः प्रभूतं वेतनं प्रदीयते, पठन्ति बहवो विद्यार्थिनः। विद्यार्थिनामपि कृते भोजनाच्छादनपुस्तकादिव्यवस्था महाराजेनैव विधीयते। संस्कृतभाषया सहाङ्गलभाषाया हिन्दीभाषायाश्च शिक्षणं तत्र भवति। वर्धतां महाराजस्यायं सुरभारत्यामधिकाधिकोऽनुराग इति कामयते जनोऽयम्।

## संस्कृतसाहित्य-सम्मेलन-महोत्सवः

संवृत्तः सम्मेलनमहोत्सवो महता समारोहेण लाहोर-नगरे। द्वारवङ्गाधिपतिस्तत्र सभापतिपदे वृतोऽभवत्। प्रदत्ता च महाराजेन संस्कृतभाषया वक्तृता। महाराजोऽयं संस्कृतज्ञ इति विज्ञाय प्रसीदामः। श्रूयते यदस्मिन् वर्षे प्रयागे साहित्यसम्मेलनं भविष्यतीति। श्रीमता गिरिधरशर्ममहोदयेन लिखितालेखादन्यः सर्वः सम्मेलनविषयको वृत्तान्तो विज्ञातः स्यात्।

## संस्कृतविद्यालयः

मुजफ़्फ़रनगरे संस्कृतविद्यालयः कोऽपि प्रतिष्ठापितो भूपशिक्षाविभागेनेति जानन्ति शारदा-वाचकाः। अयं जनस्तं विद्यालयं विलोक्य नितान्तं

प्रीतः समभवत् । सन्ति ननु तत्र नियुक्ता विश्रुतो-द्यमा विपश्चितः । तत्र प्रधानाध्यापकपदे नियुक्तो बबाझामहोदयो ननु विदित एव भवेत् । शारदा-पाठकानां परिचितः सांख्य-काव्यतीर्थ आयु-र्वेदाचार्यश्च श्रीशिवचन्द्रशर्ममहोदयो हि तत्र आयुर्वेदाध्यापकः । सन्निमतं सांख्यपुराणकाव्य-तीर्थः श्रीमान् यमुनाप्रसादत्रिपाठी तत्र पुराणा-ध्यापकः । व्याकरणाध्यापकश्च वैयाकरणकेसरी श्रीमान् शशिनाथझामहोदयः । एवं विधानां विदुषां नियोगात् पारेगिरां सौभाग्यं तस्य संस्कृतविद्या-लयस्येति निःशङ्कं ब्रूमः ।

तत्र केवलं मैथिलच्छात्राणामेव कृते वृत्ति-प्रद व्यवस्था वर्तते । अतश्च मैथिलेतराश्छात्राः क्लेशमनुभवन्तोऽस्माभिर्दृष्टाः । इयं वृत्तिः केन-चिन्मैथिलेन महाराजेन प्रदत्ता । नात्र महाराजस्य दोषं गणयामः । परमेतावदवश्यं कथयामो यन्नैतत् महाराजोचितं कर्म । महाराजानां कर्मौदार्योपेत भवति । वृत्तिप्रदाने जातिव्यवस्था हि प्राकृतानाा-मेव शोभते न महाराजानाम् । आस्ताम्, औदार्यं नाम गुणः, परं यदि कश्चनौदार्यं नाश्रयेत्तदा किं स विनिन्दनीयः स्यात् ? मैथिलेन महाराजेन यत् कृतं तत्साधु । साम्प्रतं मैथिलेतरेण महाराजेन केनचित् मैथिलेतराणां छात्राणां कृते वृत्तयो व्यवस्थापनीयाः । एतदर्थं प्रयत्न आधेयः कर्मचा-रिभिः । प्रयत्नपर एव सिद्धिमासादयति ।

*

शारदायाः प्रथमसंख्यायां श्रीमतो महामहो-पाध्याय-रघुपतिशास्त्रि-महोदयस्य चित्रं प्रकाशितं वर्तते । सोऽयं महोदयो ग्वालियरराजकीयसंस्कृत-पाठशालायां प्रधानाध्यापकपदमलङ्करोति, महा-द्येनानेन निर्मिता पद्मावतीपरिणयचम्पूः शार-दायां क्रमेण प्रकाश्यते । अतः कृतमस्य महोदयस्य परिचयाधिक्येन ।

---

## प्राचीनार्वाचीन-शिक्षणसरणिः

एतर्हि किल सकलकलाकलापाकलितकलेवरैः, प्रसृतप्रशस्तविवेकमुक्तशोकैः सुधाकरैरित्थं आग-द्यते इयमेवोपदिश्यते देशना यदनुसर्तव्या भारती-यानामार्ष्या सरणिः इयमेवात्मतत्त्वावबोधैकतरणिः अधिगन्तव्या भव्या विद्या कुशलकामुकैः यथाधि-गन्तुं शक्येत प्रत्नानामितिहासः, ईश्वरविश्वासः, दार्शनिकविकाशः, रागद्वेषपाशः, जागरूकं भवि-ष्यति सत्वम् अमुकः सन् जनयति पदार्थस्तत्त्वम् किमधिकं साहित्यदर्शनेतिहासज्ञाने श्रुतिस्मृत्युप-निषदां समधिगते नवश्चेको नामावशिष्टो विशिष्ट-स्तत्त्वविवेकः, किन्नामशिष्टमवशिष्टन्तदा प्रति-भास्यति यस्मै भूयो विदध्येत प्रयासम्, स प्रया-सेन भूयो भूयनाकुलादिभावानु साक्षात्मेतद्वाचक-वरेण्य पु, प्रत्नानेहाहापितदेहाः, संचितपीतपवित्र-रचितगेहाः आत्मनिष्ठैकमतिकाशकित्यकत्रिलोक-लालायितरसनालौल्याः यत्नुतत्त्वैकनिष्ठाः नैष्ठि-का ऋषिपुङ्गवाः कथङ्कार कालंयापयन्तिस्म । कथं कारञ्च कणादः कणादनं कुर्वाणो विशेषान् पदा-र्थान् स्वनिर्मितवैशेषिके व्यवस्थापयामास । गौतमः कथं धेनुचराधपणाहृत्याकादिमनुदंशकपकाम्, गौतमां विविच्य व्यावृणोद् विबुधा इव बुधानां चारुचर्च्यपि, कपिलः कपिरिव मानसानां चित्त चाञ्चल्यके निर्माणपाटवं संदर्श्य, दर्शनमिन्धुं समवगाह्य पाञ्चभौत्युर्य्यामादयो दयमाना जनताश्च

रामायणादीन् ग्रन्थानवीक्ष्य तत्कालीनां सभ्यतां सदाचारं पद्धतिं आश्रमान् शौर्यं धैर्यं प्रेम वासं राज्यं राजशिक्षां कलां, इतरदखिलं कार्यजातमाकलयितुं प्रभविष्यन्ति पक्षपातादैन्यहृदयाः, त ओजःपुञ्जपूजिता भूपैः सम्राजोऽप्यविगणय्यात्मतत्त्वं भेजिरे । गुरवे स्वार्पणैकोद्देश्यपूताध्ययनपटून् वटून् पाठयन्ति गुरवः, पर्णकुटीरके, साकं विद्योपलाभेन लेभिरे शारीरिकात्मिकमानसिकोन्नतिमपीति ब्रह्मपरायणास्तच्चारिणस्तदुपार्जितौजसो भेजुः शौर्यं, दधिरे धैर्यम् भीमा इवोत्तस्तरुभीमास्तरङ्गिण्यः, उच्चैस्त्रिपुरनायासेनोन्मत्तगजान्, एकेनैव सायकेन भेदिरे छत्राणीव राजमानानानि पादपपत्राणि, राजन्यजना जन्येषु शिक्षास्वविकलकलासु वले जलीयस्थलीयमहाविमानयानिर्माणे न कुतोऽपि देशान्नोनत्वं मेनिरे, आसां चक्रिरे त एव, एवं विधस्तदानीन्तनः शिक्षाक्रमः, त एव त्रिभिर्विभागैर्बभञ्जिरे ।

व्याकरणं वर्षत्रयेण निरुक्तनिघण्टू अष्टसु मासेषु, महामुनिपिङ्गलाचार्यकृत छन्दःसूत्रम् एकेन वत्सरेण, गद्यपद्यमयानि काव्यानि वर्षणैकेनोपनिषदः ततः षट्सु वर्षेषु, चत्वारो वेदाः सशाखा वर्णः स्वरः साममात्रावलसामसन्तान इति क्रमोपक्रमाः, वेदान् वेदौ वेदं वाधिगत्योत्तरं ज्यौतिषप्राण्यर्थवनस्पतिशास्त्राणि यथेष्टं स वर्तन्तिस्म । आयुर्वेदधनुर्वेदगान्धर्ववेदा अपि, तत्रायुर्वेदे चरकादिषु भेदनं छेदनं लेपनं समीकरणपूर्वरूपसम्प्राप्त्युपशयोपेतं निदानं चिकित्साप्रकार औषधम् पथ्यापथ्यविवेचनं वर्षचतुष्टये इति, धनुर्वेद आग्नेयास्त्रं पाशुपतास्त्रं वायव्यास्त्रं वैद्युतास्त्रंमायास्त्रं मोहनास्त्रं ब्रह्मास्त्रमूर्छनोन्मूर्छनास्त्राणि इषुणा हननम् आकर्षणम् अक्षौहिण्या भेदनमनेकविधान्यस्त्रशस्त्राण्यायुधानि । गान्धर्ववेदे तावत् समावर्जिका सर्वकरणानां रचना कलकलायमानानि शोकमोककोककोकिलाकीरककुलानि निःकलहानि क्रियन्ते, तरङ्गायिततरललोलकल्लोलं जलं प्रश्लिषन्ति तास्ता महामहिममधुरगानकलाः, एवं समाहमत्पूर्वजाः पेठुरधिजग्मुः पारेशास्त्रम्, अध्ययने कृतबहुलपरिश्रमा ते रागग्राहविगलितपलितलोमा भवन्तिस्म, न जायन्तेस्म अकालकवलितकलेवरा न तथाविधोऽद्यत्वे ज्ञाननिधिः, तत्र भवतः स्रष्टुः सृजनचातुर्यं प्राकृते पर्वतादौ व्यनक्ति स्म यद्वारतं जर्जरितमिदं निखिलजगज्जालमोहमालिनाऽविगणय्य तद्गौरवं करालकालांशुमालिना नितरां बभ्रमीति तच्चक्रम् ।

नास्पदवलोक्यते नावगण्यतेतदानीन्तनीया सत्ता, द्रागेव प्रहरति प्रहारीव प्रहरणेन झटित्युज्झति जालमालां यया न पार्यते दूरीभवितुं कदापि केनापि कुत्रापि कथञ्चिदपि, भूयो भूयोऽभिभूयतेऽभिमानी, चक्रवर्तिनमपि स्वचक्रं वशुलीकरोति, राजानो दरिद्रायन्ते, दरिद्रा राजन्ते एतस्य महात्मनः सहस्ररश्मिरपि सहस्ररश्मिभिः समालोचयितुं न प्रभुः किमुतैकया वराकस्येति अस्तु नाद्यत्वेऽनुसर्यते सरणिः, तथाविधा नान्तेवासयाचार्यान्तिके समुष्यसदाचारेण विचरति, न प्राचीनापत्स्यते पद्धतिः, अद्यत्वे प्रायशश्छात्रा उद्देश्यहीनाः संस्कृतमधीयते, द्वादशवर्षेण व्याकरणमेव कैश्चित्समाप्यते, एतस्मिन्नन्तरे गार्हस्थ्ये विधिना प्रतिबध्यन्ते, विद्याध्ययनमभिगच्छन्त्यालस्यम्, अपरैः परीक्षार्थिभिर्वर्षद्वयेनैव तत्र सम्य-

गतवेधमितैर्व्याकरणस्य न निरुक्तमीमांसादीन्यवगम्यन्ते, इतरैः कैश्चिदन्यान्यशास्त्रानुशीलिभिरधीयत एव न व्याकरणम् यतोऽनुशीलनमपि दुर्घटं शास्त्रस्य सर्वस्य, कश्चनैकशास्त्रापूर्णोऽपि विध्यति विद्या, यतो यथापूर्वं कल्पयन्ति किमधिकं न विद्याकाले वेदान्ते सर्वाण्येव तन्त्राणीति ।

किमु वेदगतैश्चर्चा, परीक्षार्थिनां तावद्बालविद्यार्थिनां चरित्रमपि? श्रूयते साहित्याध्ययनेन निदर्शनार्थं काशीस्थप्रथमापरीक्षायां विप्रलम्भशृङ्गारवर्णनात्मकं मेघदूतम्, पाञ्चालराजकीयपरीक्षायां पञ्चतन्त्राणि पञ्चतन्त्रस्य, कालिकातापरीक्षायां हितोपदेशः । यद्यपि पञ्चतन्त्रहितोपदेशौ नैवविधौ याभ्यां सम्भाव्येत कापि विशेषेण हानिः, परमेतर्हि किञ्चिदपि दोषो दूषयति बालान्, माद्यत्वे ब्रह्मचर्याश्रमे वर्तमानेष्वपि तथास्मरणशाकरोभ्रमोकः न तादृशमोजस्तेजः, नष्टप्राय एव सदाचारो भ्रष्टप्रायस्तत्प्रचारः परान्नलाभ एव जीवनसर्वस्वम्, मोहालस्यमदाभिमानित्वस्ताब्ध्यादयो दोषाः,कोपिनपावराणि मित्राणि येषां अक्षत्वेऽपि पण्डितमानिनः, आचारहीनत्वेऽपि सदाचारिणः, निस्तेजस्त्वेऽपि सौजसः, प्राक्पारपाटाकुटीरकामलपः प्रत्यायन्ति आत्मानं धर्मपारचारकेण आत्रया इवाभ्यवहरन्ति ( तमालपत्रमासाद्य अति विध विदधति ) धूम्रवातेन हरितायन्ते हरितः, बाष्पयानामवान्तःकृष्णयन्ति कोमलं हृदयम्, प्रकृतिवशात्स्वयमाचरन्तोऽपि अपरान् प्रवर्तयन्ति कुत्सितं कर्माणि, नास्तिकमानसिकशक्तिभ्यां पारयुज्जते आत्मानम्, हन्त ! न तथा दुःखावह पाश्चात्यज्ञानध्यानाद्वियातविचारेतषु मांसजमाषाद्येषु दोषमावहति गर्हितं कर्मयथा परितः संस्कृतसंस्कृताध्येतृषु छात्रेषु, अन्ययथति विचारान् सुधियः, अयि पात्रापात्रविचारहृदयाश्छात्राः ! उन्नमयन्तु आत्मनो विचारम्, मुखरयन्तु दिगन्तान् परिपोषणेन भारतस्यगौरवम्, स्थिरयन्तु संस्कृतास्पदम् नायमेवेन लेख इति कृत्वात्रैव कामयेऽवसानम् ।

उदयशङ्करभट्टः

---

## भूरवलैव

नालञ्जलितुन्दचञ्चला चलति च नलिनीकुलोल्लसनमूलः । इह खलु साम्प्रतमिदानीन्तनन् नमतवितनयानस्मवलम्बितविविकिस्मिनमतिगनिप्रातविघटितेशप्रकटितस्पष्टघटनापाटवोद्घाटककपाटपाटनपटुताशालिनलिनमतिमलिनगतयः प्रथितनिखिलगुणगणमणिप्रवेकाभरणममलं तमभिगतनिखिलनिगूढतत्त्वविषयविमर्शसारज्ञानोपकृतिसयत्नप्रज्ञमुनिरत्नसयत्नाविर्भावितनिखिलतत्त्वरत्नप्रवरमुनिवरसदासहर्षमपि नजानन्त्यानुभवद्गवद्वेदव्यासादिमहानुभावैस्समभिहितानितिहितसहितानुष्ठानोपलक्षणा विनयावधानिर्णये वितथमतिगत्यापन्ना व्युत्पन्नान्तर्वृत्ति पुरुषमहानुभावोद्भाविता अध्यमात्रेना मलिनाशया महाशया भूयांसः समुल्लसन्तितरां सर्वत्र । तदेतेषामनधिगताखिलनिगमागमप्रतिपादितान्तर्निहितनिगूढतत्त्वविषयनिचया व्युत्पन्नमतीनामनुपलब्धवर्णाश्रमधर्मविचाराचारनिकायनैपुण्य श्रवणानामुद्रिक्तरजस्तमोवेगोद्भाविताविद्यास्मितारागद्वेषाभिनिवेशात्मकपञ्चक्लेशाभिभूतात्मनां परिभाविताखिलनिगमागमपुराणादिप्रतिपादितावलिमलिनमतीनामलिनानां विमलापानुलापावलिलवणतुषारनिकरा-

नातिव्याहितः। स्वगृहे पितृपितामहमातृभ्रातृप्रमुख-प्रियपरिजनानां सद्भावात्तत्र निरन्तर सुखमासीत् कर्मस्थाने च स्वोपरितनविद्यालयाध्यक्षपुरुषाणा-मसीमानुग्रहलाभेन छात्रेषु च सदध्यापकतानि-मित्तकप्रतिष्ठालाभेन प्रतिवर्ष समीप्सितवेतनवर्द्ध-ननिमित्तेन च निर्बाध सुखमनुबभूव।

अवसरेऽस्मिन्नेतदपि वक्तव्यमत्र प्रतिभाति प्रथमं तस्याङ्गलभाषाशिक्षाप्रावण्यमवलोक्य प्रायः सर्व्व एव स्वग्रामीणा महत्तराः क्षुद्रतरा अपि तं विविधव्यङ्ग्योक्तिपरम्पराभिरुपहासितवन्तो नित-न्तुश्चायथादोषानारोप्य तदुपरीत पूर्वमुक्तम्। तेन तु तदानीन्तनान् प्रति न किमपि प्रातिकूल्य-माचरितम्,सोढाश्च तेषां तथाविधाः कटुव्यवहा-रास्तूष्णीम्। परं मनसि प्रतिज्ञात यदि कदाचित् प्रयत्नस्यास्य मे साफल्यं भवेत्, तदा यथैऽका-रणमदिच्छाव्याघातका मूढाः स्वयं प्रवृत्ता एव स्वपुत्रादीनाङ्गलभाषां शिक्षयेयुस्तथैव प्रयत्नः कार्य्यामया। अथ प्रतिज्ञैषा तस्य समयेनैव सम्पू-रिता। नामुष्य प्रयत्नोऽपेक्षितः। लवपुरे तस्य क्रमशः परिवर्द्धमानामुन्नतिमाकर्ण्याकर्ण्य ते हि प्रतिपक्षा ईर्ष्यया मात्सर्य्येण कारणान्तरेण वा परिवर्त्तितमनोभावा एकैकशः स्वपुत्रादीनाङ्गल-विद्यां शिक्षयितुं प्रवृत्ता बभूवुः। येनेदानी भट्-टपल्ल्यामाङ्गलविद्याविदुषामेव सर्वथा प्राबल्यं सजातम्। पर "चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च" अत्रावसरे तस्यादृष्टचक्रस्य विप-रीतभागः समुत्थितो बभूव। प्रथम स्नेहमयी जननी तस्य सहसा सान्निपातिकज्वरेणाक्रान्ता दिवसत्रयाभ्यन्तर एव परलोकमियाय, तदानी स लवपुरं स्थितः वैद्युतिकवार्तावहयन्त्रद्वारा प्रेरित

वृत्तमिदं विज्ञाय स्वगृहं प्रति चलितः। आगत च निरन्तरसुखहास्यपूर्णं गृहं विषमशोकच्छाय मलिनं हाहारवमुखरीकृतं विलोक्य हृदयमस्य विदीर्णमभवत्, मूर्च्छितश्च क्षितितले निपपात। अथ तत्पितामहचरणाः कनीयान् भ्राता च अन्ये च स्वजनाः सर्वे शोकविह्वलचित्ता अपि ससम्भ्रमं समेत्य तथाविधं तं जलसेकादिशी-तलोपचारेण लब्धसंज्ञ कृत्वा विविधप्रबोधवचनैः सान्त्वयित्वा च कथमपि सुस्थ चक्रुः। अथ यथाविधि स्वर्गतायाः जनन्याः श्राद्धादिकृत्य सम्पाद्य मासद्वयं स्वगृह उषित्वा पुनः स्वजनैर्लवपुरे प्रेरितो भग्नहृदयेन दुःखदुःखेनैव स्वकार्य्यमनुष्ठातुमारेभे। ततो मासचतुष्टयान्ते सहधर्म्मिणी चास्य शैशवा-वस्थास्थितं कन्याद्वयं स्वजनांश्च परित्यज्य पर-लोकं प्रस्थिता बन्धुवर्गाणां पूर्व्वोत्पन्नं शोको-च्छ्रायं द्विगुणं वर्द्धयामास। एतद्वृत्तमपि तस्मै यथाकालं स्वजनैः प्रेरितं, किन्त्वसौ गृहमनाग-त्यैव तत्रत्यैर्बन्धुवर्गैः सममहर्निशं शोकोपशमो-पायभूतानि बहुविधानि क्रीडाकौतुकानि कुर्व्व-न्नगाधं शोकसागरमुत्तर्त्तुमियेष। कालेन लघूभू-तश्च प्रथममतिदुःसहत्वेन प्रतीयमानः शोकावेगः सार्द्धैकवर्षान्ते गृहमागत्य पितृपितामहचरणैः सनिबन्धमाज्ञप्तः पुनर्दारपरिग्रहं चकार। सा इदानीं तद्गृहस्वामिनी संवृत्ता। तस्यामसौ षट्पुत्रान् कन्याञ्चैकामुत्पादयामास। पुत्रेषु चत्वार एव साम्प्रतं वर्त्तन्ते। ज्येष्ठः श्रीभवभूतिभट्टाचार्य्यः कलिकाताराजकीयसंस्कृतविद्यालयस्यान्यतमोऽ ध्यापकः, मध्यमश्च श्रीभवविभूतिभट्टाचार्य्यः कलिकाताविश्वविद्यालयसर्व्वोच्चसंस्कृत ( एम. ए ) परीक्षाया समुत्तीर्णः। अपरौ तु द्वावनुजाव-

ऽतुना विद्यालये विद्यामभ्यस्यतः। अथ द्वितीयदारान् परिणीय स पुनरेव लवपुरं प्रत्यागतः, पूर्वतः सुस्थतरहृदयेन स्वकार्य्यं कर्तुमारेभे।

अहो दुर्दैवपाकः!

"एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ती" त्येषः लोकस्तस्मिन्नक्षरशो यथार्थो बभूव। ततो वर्षान्ते पुनरेकमात्रस्य प्राणेभ्योऽपि प्रियतमस्य कनीयसो भ्रातुः परलोकप्रस्थानवार्त्ता तदन्तिकमुपगता तं पूर्व्वतोऽप्यधिकतरं शोकविधुरं कृतवती। इत्थमुपर्य्युपरि दुःसहशोकशल्योपहतं तदीयहृदयं नितरां भग्नमभवत्। स सर्वथा निरुत्साहः स्वजीवितेऽपि सम्यक् श्लथादरो बन्धुभिर्मधुरवचनैरहर्निशं प्रबोध्यमानः कथं कथमपि निजकर्त्तव्यकर्माणि निर्व्वाहयामास। समागते तु ग्रीष्मकालीनानध्यायावसरे नितान्तभग्नहृदयेन स्वगृहमाजगाम। अहो यदितः पूर्वं नन्दनकाननम् इव सर्वतः सुखकरमासीत् श्मशानमिव महादुःखकरं हाहारवपूर्णमवलोकयामास तद्गृहम्। अशान्तिपराणां वर्षीयसां पितामहचरणानां तथा वार्द्धक्यमुपेयुषां पितृपादानाञ्च दुःसहशोकोच्छ्वासविधुरां शोचनीयामवस्थामवलोक्यापि सदुःसहमपि स्वशोकं कथञ्चिल्लघूकृत्य तान् परिसान्त्वयितुमारेभे। क्रमेणैतान् कथञ्चित् प्रकृतिस्थान् विधाय पुनर्लवपुरमागतः पूर्व्ववत् स्वकार्य्यमनुतस्थौ। लवपुरे पुनरागमनात् परं वर्षमेकमतीतम्। तदुपरि दुर्ग्रहकोपस्य तथापि न शान्तिरभवत्, प्रत्युत पूर्वतो भृशं ववृधे। ये खल्वेतावत्पर्य्यन्तं वर्षीयांसोऽपि दुःसहशोकावेगविधुरा अपि षोडशवर्षीययुवान इव शोकविधुराणां शेषपरिजनानां प्रधानावलम्बनभूता आसन्, येषां महार्घोपदेशवचनपरम्परया निगृहीतोऽप्युपर्युपरि संघटमानसुदारुणशोकावेगाः परिजनवर्गाः स्वस्वकर्म्मनिरता आसन्, ते परमनिष्ठावतां ज्ञानवतामग्रेसराः पितामहपादा अस्य द्व्यशीतितमवर्षे वयसि नश्वरमानवदेहं विहाय निर्व्वाणमगमन्। अथ तथा प्रधानावलम्बनभूतानामेकान्तपुत्रवत्सलानां पितृदेवानामन्तर्धानेन प्रथमत एव निरन्तरातिविषमशोकापातभग्नहृदया क्षीणधैर्याः पितृपादा अस्य अनाथा इव असहाया इव भग्नमनहृदया निश्चेष्टा निरुत्साहा दुःखदुःखेन समयमतिवाहयितुमारेभिरे। तेषां तथाविधं दशापरिणाममवलोक्य तान् विहाय तथाविधदूरदेशेऽवस्थानमात्मनो भविष्यदुन्नतिपरम्पराकारणमपि नास्मै रोचते स्म। प्रथमं पितृचरणान् स्वकर्मस्थाने नेतुकामः तं सन्निबन्धमनुरुरोध, न तु तेभ्यः प्रवत्स्या वाऽयं रुरुचे। अत्रावसरे कलिकाताराजकीयसंस्कृतपाठशालायां संस्कृताध्यापकपदमेकं शून्यमभवत्। तदानीन्तनतद्विद्यालयाध्यक्षेण महामहोपाध्यायेन महेशचन्द्रन्यायरत्नेन सममस्य पूर्वत एव प्रगाढपरिचयः स्थितः। सोऽपि तस्मिन् विशेषेण स्नेहवानासीत्। तेन चास्य समीपे तत्पदग्रहणं प्रस्तुतम्। सोऽपि तथाभूतपदग्रहणं स्वोन्नतिप्रतिबन्धकीभूतं जानन्नपि तदानीं नावस्थैर्यं मन्यमानो बन्धुवर्गभूयोभूयो निषिध्यमानोऽपि प्रबोध्यमानोऽपि स्वात्मनः पितृशुश्रूषा श्रेयसी विभाव्यानः पदमेतदङ्गीचकार। एतावानेवास्योन्नतिसमयः। अथाधःपतनसमयसमारम्भः। अनन्तरमेतदाख्यानद्वारा पाठकानामस्योपाख्यानादरोत्पाद-

नेन । स्वदेशागमनाद्दशवर्षान्ते पितृचरणा अस्य स्वर्लोकमारूढाः। ततो विपुलसंसारभार एकाकिनस्तस्योपरि पतितः। किन्तु स स्वभावसिद्धासीमसहिष्णुतया सुदक्षकर्णधार इव बहुविघ्नादिपरिवृतं संसारार्णवं सुखमतरत् । अविचलितधर्मबुद्ध्या कर्त्तव्यमार्गात् कदापि न भ्रष्टः, सुदृढशास्त्रप्रत्ययेन प्रभूतार्थलालसामप्यगणयित्वाशास्त्रीयविषयेषु कदापि न पदं चकार। कालक्रमेण वृद्धत्वमापन्नः चिरराजसेवालब्धां पेन्सनाख्यवृत्तिं लब्ध्वा वर्षचतुष्टयमात्रं तामुपाभुंक्त । तदर्थस्य अलपत्वेऽपि स्वकीयकर्तव्यपथात् लेशमात्रमपि न स्खलितः, चिरलालितस्य विद्योदयाख्यस्य संस्कृतमासिकपत्रस्य प्रकाशनञ्चावरोद्धुं न शशाक।

पण्डितश्रीहृषीकेशशास्त्रिणश्चरितप्रसङ्गे तदानीन्तनप्राच्यप्रतीच्यविद्यालयाध्यक्षस्य पञ्जाबविश्वविद्यालयरेजिष्ट्रारपदमलङ्कुर्वतः डाक्टर डि, डब्ल्यू लिटनारमहोदयस्य विद्वज्जनादराश्रितवत्सलत्वगुणग्राहित्वादिधर्म्माणामनुल्लेखेन न केवलं चरितमिदम् असम्पूर्णं तिष्ठेदपितवश्यकर्त्तव्यपालनजनितो महानधर्मोऽपि भवेदिति विविच्य चात्र महात्मनस्तस्यापि किञ्चित् कथ्यते। स हि महात्मा न केवलमाङ्गलभाषाभिज्ञानामग्रणीरासीत्, परं ग्रीकलाटीनफ्रेञ्चप्रमुखासु प्रतीच्यभाषासु विशेषाभिज्ञता-सम्पन्न-स्तथारव्यपारसीकपोस्तोवुर्दू हिन्दीप्रमुखासु भाषास्वपि तत्तद्देशजात इव सम्यक् व्युत्पत्तिं लेभे, भारतवासिनां सर्व्वविधसमुन्नतिकामः प्रकृतबन्धुरभवत्। तस्यैव महात्मनः अविश्रान्तप्रयत्नेन समुचिताभिश्चेष्टाभिश्च पञ्जाबविश्वविद्यालयस्य प्रथमाविर्भावः सञ्जातः। पञ्जाबविश्वविद्यालयसूत्रपातादनन्तरमेवासौ कस्मिंश्चित् रहस्यभूते कर्म्मणि दौत्यकर्मकरण सर्वप्रधानराजपुरुषेण भारतभूमेः पाश्चात्यसीमान्तेषु [illegible]तोऽभवत् । ततश्च शास्त्रिणः प्रथमलवपुरगमनावसरे नासौ महात्मा तत्र स्थितः। पियारसननामधेयः कश्चिदपरश्वेताङ्गस्तदानीं तत्कर्माण्यनुतिष्ठति स्म । विद्वत्कुलधुरन्धरोऽसावपि प्रथमदर्शनादेव शास्त्रिणि विशेषतः प्रीतिमान् सानुग्रहदृष्टिश्चाभवत्, चकार च शास्त्रिणं प्राच्यविद्यालयसंस्कृताध्यापकपदे स्थापयितुं महान्त प्रयत्नम् । तदीयेनानुग्रहेणैवास्य तत्पदलाभे कृतकृत्यता सञ्जाता। अथ डाक्तरलिटनरमहोदयो यदा तदागन्तुककर्माणि साधयित्वा लवपुरं प्रत्यावृत्य स्वपदं पुनरधिचकार, तदा पण्डितोऽसौ प्राच्यविद्यालयसंस्कृताध्यापकपदे स्थितः । डाक्तर लिटनरमहोदयस्य तु स्थितेऽपि भारतवासिनामुपरि निरतिशयप्रेमणि पाश्चात्यशिक्षाविकृतमस्तिष्केषु वङ्गदेशीयेषु काप्यप्रीतिः स्वभावत एव स्थिता। ततश्चासौ निजाधिकारान्तर्गतविद्यालये वङ्गदेशीयं तमध्यापयन्तमवलोक्य तदुपरि दर्शनक्षण एव सावज्ञदृष्टिं निक्षिप्य तेन सहानादरव्यवहारं कृतवान् । किन्तु तथाविधानादरभावो न चिरस्थायी बभूव। स्वल्पीयसैव कालेनेतरपण्डिता सुलभानां तदीयासाधारणगुणगणानां परिचयं प्राप्य न केवलं तिरोहितस्तदुपरि सावज्ञभावः प्रत्युत परस्परेण समं बन्धुत्वं प्रादुर्भूतम्। ततः प्रभृति निरन्तरमेव पण्डितस्यास्य समुन्नतयेऽस्वय चेष्टते स्म। सर्वेष्वेव स्वकर्मसु तमन्तरङ्गं कृतवान्। तेन सहामन्त्रणमन्तरेणासौ विद्यालयसम्बन्धि किमपि कर्म न चकार। शास्त्रिणो लवपुरसम्बन्धत्यागात् पासवट्कपूर्वं निरन्तराविश्रान्त-

...रिश्रमेण डाक्तरमहोदयस्य स्वास्थ्यभङ्गः संवृत्तः। ...नासौ वर्षद्वयं यावत् स्वकर्मतो विश्रामं लब्ध्वा- ...लभूमौ गतवान्। स चेत् तदानीं लवपुरे अस्था- ...स्यत्, तदा शास्त्रिणं कथमपि स्वदेशमागन्तुं ना- ...वमस्यत्। यतोऽसौ स्वदेशयात्रायाः प्राक् राज- ...कीयप्रतीच्यविद्यालये (Lahore Government College) तदानीं वर्त्तमानस्य संस्कृताध्याप- ...कस्य पेन्सनाख्यवृत्तिप्राप्तिसमयमदूरभाविनमव- ...गम्य तत्पदे शास्त्रिणं स्थापयितुं तदानीन्तनप्र- ...धानराजपुरुषं सनिर्बन्धमनुरुध्य स्वदेशं गतवान् ...श्च तत्तथैवाङ्गीकृतम्। किन्तु—

"प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहु साधनता।

विदितैतत्सर्ववृत्तान्तोऽपि दुर्ग्रहकुटिलकटा- ...क्षविषयीभूतः शास्त्री त्वरितत्वरितं स्वदेशमागत्य ...दर्थं दुर्ग्रहैः सङ्घटितं पदं जग्राह। नात्मप्रतिष्ठां ... भविष्यदुन्नतिपथार्गलतां, न डाक्तरमहोदयस्य ...दुपरि निरतिशयस्नेहान्, नापि पञ्चनदे निज- ...प्रतिष्ठामुख्यसहायभूतस्य रायश्रीनवीनचन्द्रस्य ...सनिर्बन्धमनुरोधं विगणय्य स स्वदेशमेवागतः। ...अथ वर्षद्वयान्ते लिटनारमहोदयः शास्त्रिणमवलोक्य ...निरतिशयं चित्तक्षोभमवाप। स स्वयमविलम्ब्य ...कस्यचिदावश्यककर्मणो व्यपदेशेन तं प्रत्यावर्त्त- ...यितुं कलिकातानगरे समेतः तस्मै प्रस्तुतराजकीय- ...प्रतीच्य विद्यालयसंस्कृताध्यापकपदेन समं पञ्चा- ...बविश्वविद्यालयसहकारिरेजिष्ट्रारपदमपि दातु- ...मङ्गीचकार। शास्त्री च स्वजनहस्तेषु वृद्धानामसहा- ...यानां शोकाविधुराणाञ्च पितृचरणानां रक्षणावेक्ष- ...णभारं सानुनयं विन्यस्य पञ्चनदाभिमुखं पुनश्च- ...लितः। किन्तु मासाधिककालं तत्र स्थातुं न

शशाक। यतस्तत्रत्या हि तदुन्नतिप्रतिबन्धकस्य ... पायान्तरमवेक्षमाणाः तस्य शरीरे दारुणजीर्णज्वर- रोगस्य सञ्चारं कृतवन्तः। येनासौ प्रत्यहं प्रात- क्षणं परिक्षीणशरीरधातुरात्मनो मृत्युं प्रतीक्षमा- णस्तस्थौ। लिटनारमहोदयस्तु तस्य तादृशीं शरी- रावस्थां विलोक्य तमधन्यानामप्रवेश्यं स्वप्रभा- पया निर्दिश्य तस्मै गमनागमनव्ययव्यपदेशेन मुद्राणां द्विशतीं प्रदाय स्वयमेव स्व...श प्रत्यापित- वान्, किन्तु न तं विसस्मार। कालेन स पेन्सना- ख्यवृत्तिं लब्ध्वा स्वदेशं गतोऽपि यावज्जीवं प्रतिमासं विद्योदयप्रकाशसाहाय्यार्थमस्मै पञ्चाव- शतिमुद्राः प्रददौ। तस्य स्वर्गारोहणादुत्कर्षान- न्तरं तत्पुत्रेण तद्दानस्यावरोधः कृतः। एतस्या- ख्यमस्य चरितम्। अथेदानीं तत्कृतानां निब- न्धानां नाममात्रेण परिचयं दत्त्वा प्रबन्धोऽय- मुपसंह्रियते।

किञ्चातः पूर्वं तद्रचनावृत्तान्तस्य किमप्य- न्यदपि प्रस्तूयते, विद्यते किल घड्साहि- त्यस्य क्षेत्रेऽपि तस्य कृतप्रयत्नस्य तस्य लोके ... ख्यातिः। कति नाम स्वनामधन्या- नामि सामयिकपत्राणि तस्यालौकिकप्रतिभानु- पमाकलितप्रबन्धप्रसूनैः मण्डितान्यासन्, कति चाङ्गलसंस्कृतग्रन्थास्तदनुवादालोकं लभमाना वङ्गीयपाठकेषु नलिन्य इव भास्करस्पर्शात्, कुमु- दिन्य इव चन्द्रकिरणावलेपात् विशदा विकसिता- श्चैव देदीप्यन्ते, तेषु च वङ्गेषु धर्माधर्मविचारेषु प्रमाणत्वेन गृहीतानां स्मार्त्तभट्टाचार्यापरनाम- श्रीमद्रघुनन्दनविरचितानां "स्मृतितत्त्वनिबन्धानां वङ्गानुवादोऽस्याक्षयकीर्तिमुद्घोषयति, यावदेव वङ्गे- षु हिन्दुसमाजः स्थास्यति तावदेवास्य सा कीर्ति-

प्रसिद्धा भीष्यन्तेऽतः । परकमकानां सम्भक्तिमदन्तरीं —मुद्रितानामनिबन्धपुस्तकमञ्जूषेव गतास्ते महापुरुषा देवनिलयम् । अतीव कुक्षण एव मार्गशीर्षमासीयपञ्चदशरजनी प्रभाता यस्मिन्नेव दिवसे अन्तकेनेव प्रबलज्वरेण ते आक्रान्ताः । स ज्वरः क्रमशो जटिलतामापद्यमानो दारुणस्य सपातिकविकारेण परिणतः सुदक्षभिषक्चेष्टा अपि विफलाश्चकार, येन मार्गशीर्षमासीयत्रयोविंशवासरे विहाय नश्वरदेहं अविनश्वरयशसः शास्त्रिणः प्रमुक्तकण्ठं रोरुद्यमानान् परिवारान् प्रबलशोकपीडितानगण्यबन्धुमित्रशिष्यांश्च परित्यज्यामरधाम प्रस्थिताः ।

तत्कृतसंस्कृतपुस्तकानि ।

(१) सुपद्मव्याकरणव्याख्यानम् ।
(२) कवितावली ।
(३) राजपुत्रागमनम् । ( अधुनादुर्लभत्वमापन्नम् )
(४) प्राकृतव्याकरणम् । (इंरेजी-अनुवाद-सहितम्)
(५) संस्कृतश्रुतबोधः ।
(६) प्रबोधचन्द्रोदयनाटकव्याख्या ।

तत्कृतहिन्दीपुस्तकानि ।

(१) छन्दोबोध
(२) अर्थसंग्रहानुवादः
(४) दत्तकचन्द्रिकानुवादः
(५) हिन्दीव्याकरणम्

} एतानि लवपुरे लालामिहिरचन्द्रेण प्रकाशितानि इदानीं कुत्रापि न वेति न ज्ञायन्ते ।

तत्कृतवङ्गभाषालिखितपुस्तकानि ।

(१) उद्वाहतत्त्वानुवादः ।
(२) तिथितत्त्वानुवादः ।
(३) प्रायश्चित्ततत्त्वानुवादः ।
(४) श्राद्धतत्त्वानुवादः ।
(५) मलमासतत्त्वानुवादः ।
(६) शुद्धितत्त्वानुवादः ।
(७) मेघदूतपद्यानुवादः ।
(८) शाण्डिल्यसूत्रभाष्यानुवादः ।

शास्त्रिणो मृत्युसंवादं यानि वङ्गीयाङ्गलसामयिकपत्राणि घोषयामासुः, अत्र प्रसङ्गे तेषामनुल्लेखेन चरितमिदमसम्पूर्णं स्यादिति एव तेषां कतिचिदुल्लिख्यन्ते—

Statesman:—The famous Oriental Scholar late of Lahore and Calcutta Sanskrit Colleges, and Editor Vidyodaya of Bhatpara, Pandit Hrishikesh Shastri breathed his last at his residence (Bhatpara) on the 9th. Instant at the age of 65. He had a profound knowledge of all branches of the Sanskrit Shastras and edited and compiled innumerable works in Sanskrit, Bengali and Prakrita.

Daily news:—Death of a Pandit. A correspondent reports that Pandit Hrishikesh Sastri, who was a famous oriental scholar late of the Lahore and Calcutta Sanskrit Colleges and Editor "Vidyodaya" of Bhatpara died at his residence at Bhatpara on the 9th instant at the age of 65.

Englishman:—The death took place on Tuesday of Pandit Hrishikesh Shastri, the famous Oriental scholar at his Bhatpara residence. Pandit Hrishikesh was 65 years of age and was a recognised authority on Sanskrit literature. He was Professor of the Calcutta Sanskrit College at the time of his death. Formerly he held a

similar appointment in the Lahore Sanskrit College. He was the author of several standard works in Sanskrit, Bengali, Hindi, and Prakrita and editor of the Vidyodaya, pulished at Bhatpara. By his death Oriental learning loses one of its most profound scholars.

Empire :–Pandit Hrishikesh Sastri, the wellknown oriental scholar, late of Lahore and Calcutta Sanskrit Colleges and Editor of " Vidyodaya " of Bhatpara, breathed his last at his residence ( Bhatpara ) on Tuesday at the age of 65. He had profound knowledge in all branches on Sanskrit Shastras and edited and compiled innumerable works in Sanskrit, Hindi, Bengali and Prakrita. His loss is irreparable in the Oriental linguistic world.

Telegraph :—Pandit Hrishikesh Shastri at first professor sanskrit Oriental College, Lahore and then of the Government sanskrit College Calcutta, died on Tuesday last at Bhatpara at the age of sixty five. His marvellous command over many languages xtorted admiration even from many a European scholar of distinction. His ably conducted ' Vidyodaya," a monthly sanskrit Magazine of merit, the first of its kind in India, having a circulation even to England and Germany, has at present been running in its forty third year, an age seldom attained by any oriental magazine. His works in the field of Sanskrit, Bengali and Hindi literature are as meritorious as they are numerous in short, as an oriental scholar, he was one of the most luminous of the galaxy of stars that have even now been shining in the literary firmament of India with the waning lustre of sanskrit learning. What is more, he was a pious and orthodox Hindu possessing independence of opinion and strength of mind not to be overpowered by the inducements and temptations of pecuniary interests at the sacrifice of his religion and conscience. Bengal is today much the poorer at the loss she has sustained by the death of Pundit Hrishikesh Shastri, as a man of his type, at once uncovetous and strong minded, is a rare object in our society now-a-days.

* प्रसङ्गेऽस्मिन्नेतदप्यवश्यं वक्तव्यं यत् शास्त्रिणः परलोकगमने बङ्गीयसाहित्यपरिषदेकशोकसभामाजुहाव । यत्र सभापति-महामहोपाध्याय श्रीयुत हरप्रसादशास्त्रि सि, आई, ई, महोदयः शास्त्रिणः लोकान्तरगमनविषयं विनयशीलत्वाद्यधिकविविधसद्गुणराशींश्च सम्यक् समालोच्य तस्य प्रतिभामयजीवितस्य घटनावलीम् एकैकशः समुल्लिख्य श्रावयत् शास्त्रिणो वियोगे बङ्गमातुरेकः सुसन्तानो नष्ट इति । समवेतसभ्यजनास् तत्र शास्त्रिणः उपलक्ष्य गभीरशोकं प्रकाश्य तेषां शोकार्त्तपुत्रेभ्यः गभीरसहानुभूतिसूचकं पत्रमेकं प्रेरयामासुः ।

* बङ्गवासीत्यामृतबाजारादू च बङ्गीयपत्रैः प्रकाशितं शास्त्रिमहोदयस्य शोकवृत्तान्तमत्र पाठकेभ्यःसमनुवाद्य प्राभवद् । ( सा० सं० )

कुमारीगणं तासु मध्येस्फुरन्तीं
वसन्तश्रियं रूपिणीं काञ्चिदार्च्छत् ॥३०॥

किञ्चित्पुर उपसृत्य
प्राघुणिकीभूय भूतपतिभवने ।
श्रीपतिरवलोक्य स्त्रीं
श्रीरिति मेने ननन्द चात्यर्थम् ॥ ३१ ॥

अपरिचितां मनुजनुषाऽ-
नूढतया भूयसीं धुरं गतया ।
निर्वर्ण्य सोऽवरुद्धां
चिरं विधाय स्मराद्वयं भूयः ॥ ३२ ॥

अथानुयोगं प्रति कैटभारिः
करोति कामं कुतुकेन यावत् ।
तावत्स ताभिर्ददृशेऽबलाभि-
राश्चर्यविस्फारितवीक्षणाभिः ॥ ३३ ॥

अहो अहो कोऽयमहोऽभिरामं
महोऽभिराममन्मितकोटिकामम् ।
तन्वन्नतन्वञ्चितकान्तिराहुः
किमेनमिन्दुं पुनरेति राहुः ॥ ३४ ॥

यदि भानुमान्स शीत-
गुर्यदि वा विधुर्न दिवोदयः
किमु सूक्तिभिः कमनीयता-
मर एव भेदकतापरः

यदपादि येन विरञ्चिना
सुन्दरतालक्ष्मी न इयं यथा
निरमायि तेन परः पुमान-
नुरूपसम्पदसौ किल ॥ ३५ ॥

इति सरससमालापशालिनीनां विलासि-
नीनां वचसा साचीकृतग्रीवमानञ्जितगात्रयष्टिरासि-
तसलिलद्रुविभ्रममनभ्रसुधावर्षं किं किमिति गभित-
हर्षं व्याहारपराकरपरागपूरितवयस्याउत्पराकतं मा
हसाकर्णनचटुलकर्णावीषदुत्क्षिपन्तो तां दिशमा-
कलयांचकार यामशिश्रियच्छ्रीनिवासाभिधानो
महानिधिः । अरुण्यरत्नभेदादिव परभागं गतयाऽ-
रुणतया भक्तानुरक्ततां कलयता तलयुगलेन शोभि-
तमेकादशानामपि रुद्रमूर्तीनां शशिकलामौलितां
भालयितुमुत्पादितान् दशेन्दूनस्युपसम्पाद्य प्रणो(ग)-
कारमाननेनानवरत नखस्थितया न स्वरूपेण सेव-
मानान् भावयन्तं प्रकटशिलीमुखमुखौ सज्वलाचितः
स्मरस्य निषङ्गाविवोदितपञ्चाङ्गुलीके परिसवल्ला-
वण्यप्रणालीभूतकनककाण्ड इव जङ्घयेक्षणभया-
दिव बद्धगुल्फग्रन्थिरचनं प्रकाशयन्तं पद्मभूप्रभव-
प्रभूतप्रभावप्रभाजनप्रमुखापिकाधारिसंचारिस्तम्भा-
विवोरू धारयन्तं कनककिङ्किणीकाननकलकलित-
नाभीहृदे अगाधित अरयन्तं पीतपटपुटितकटितट-
विलसद्वनमालया पुरुषायितं पद्मायाः पल्लवयन्तं
कौस्तुभमणिव्याजतः सत्त्वगुणप्रधानतां प्रथयन्तं
व्यथयन्तं महांसि श्लथयन्तमंहांसि स्तनाङ्कणेन
परिणाहिना श्रीरङ्गाङ्कणेन श्रीवत्सलक्ष्मणा करु-
णाकामगवीवत्सेन वत्सेन विभ्राजमानं शेषस्पर्द्ध-
येव भुवनभरधारणाधवलौ बहू पञ्चानां महा-
भूतानां प्राणानां च पृथक् प्रार्थितकल्पवृक्षशाखौ
धृतदशनखाञ्जावच्छन्नतूरशोभिनौ चक्रधारका-
वपि परचक्रविदारकौ अमदगदङ्कारावपि सगदौ
मुहुरीक्षमाणं कमलकमलाक्षसुदेन चन्द्रमा विधु-
न्तुदेव वदनेन काममपि पक्षं पुष्यन्तमीक्षणाभ्यां
पुष्यवन्तौ श्लिष्यन्तमपि सुममलकाञ्चनमनु-
नीलालककलितकिरीटकोटि कोटिकन्दर्पलावण्यं
कविवचोदवीयसं यवीयसं कमपि कमनीयाकृति-
मवलोकयांचकार दिव्यपुरुषम् ।

दृष्टेऽपि बिम्बाकुलमीलते स्म
तामीक्षयैवाहृतसर्वभावाम् ।
भावान्तरप्राणपदं चकार
स्वे चेतसीदं किमदृष्टपूर्वम् ॥ ३६ ॥

किं कुन्तला अमी किं वा कमलालिङ्गिनोऽलयः ।
अभिचन्द्रं तमोबाधाऽथवा किमनुधावति ॥ ३७ ॥

अङ्कितालिककस्तूरी पङ्कसङ्क्रमङ्कनम् ।
अथवा द्विजराजस्य माननीयकलङ्कनम् ॥ ३८ ॥

कुङ्कुमान्तरिते नीले स्निग्धे वा भवतो भ्रुवौ ।
सन्धिसंलग्नकह्लारकुसुमेषुधनुः किमु ॥ ३९ ॥

अध्यासामासतुर्नासामिषुधी किं समायकौ ।
चेतोभुवो जगज्जेतुमासन्दीके किमक्षिणी ॥ ४० ॥

द्विजद्युतिस्मितकलाकवलीकृतरागयोः ।
आभैवाधरयोः सान्ध्याचष्टमीन्दू अनूहते ॥ ४१ ॥

कुण्डलालङ्कृते एते श्रुती किं जीवभार्गवौ ।
श्रयतो रूपसम्पत्ते लक्ष्मिते बालरक्षसः ॥ ४२ ॥

बाहुयुवाहूतिचटूमृणालप्रियतापटू ।
फणपाशौ किमु बद्धू वासुकेरर्दितबद्धू ॥ ४३ ॥

रक्षोविक्षोभकस्यापि मम सङ्क्षोभकारणम् ।
अधिवक्षोऽवधिः क्षौद्रसम्पदोऽक्षोदयैकदिक् ॥ ४४ ॥

उदरं सुदरम्भावभिन्निभाति किमन्तरम् ।
गण्डशैलनितम्बानां मध्ये सोपानभूमिकम् ॥ ४५ ॥

ऊरू किमिन्दुजिस्त्वर्या वक्षेन विराजतः ।
नाभीहृदमतीरोत्थकदलीमकतिद्वयम् ॥ ४६ ॥

चरणौ किं वितरणौ कनकं कनकलयोः ।
वासार्थिनोः सरोजाते मकरन्देन तुन्दिले ॥ ४७ ॥

एवमन्योन्यमतिकौतुकेनेक्षमाणयोः शिक्षमाणयोः पञ्चशरसम्भ्रमरसमसविलसितमजनि कापि दशा कशाघातसमुद्भवबाष्पपूर्णिवरणचरणयोः किशोरयोरिव कर्णीरथमा । अनाविव शून्यामिव प्रशमस्ताविव मूकाविव बधिराविव लग्नमनस्केनां तौ मतौ वमितां गतौ समवनां चुर्यवदमन्माशयवर्तिना जनेन । श्रीनिवासस्तु पौरुषेण कथञ्चिदवलम्ब्य धीरतां जलकणकितकण्टकितकायः स्वरं साध्वसाराध्वमकपदमल्पस्वरवर्णमवीकमन किञ्चिदपि वक्तु प्रकारयितुम् ।

नितम्बिन्यो यूयं वदत वदन त्वत्पुलिभर-
क्रमाक्रान्ताशाः काः कुत इह वने सञ्चरथ च ।
इयं का वा धन्या जयति मनुजन्याभिसुषमा-
भुवं धन्याद्धन्या मनुवहति देवीत्वपदवीम् ॥ ४८ ॥

इत्यमलार्थमायासेन कथं कथमपि पञ्चषाणि वाक्यानि कथयति कमलाकान्ते प्राप्ते कलान्तक्लिन्ना वयस्यां विलोकयन्त्यौ कृपा व्यथापथावृतमञ्जीरां विचारान्तरं हिन्तयन्तीं मन्थयता मनसा दूयता हृदयेन क्लाम्यता वदनेन निष्क्रयेण पाणिपादेन स्खलितामिव सुप्तामिव मत्तामिव कीलितामिव स्मरीहालीभुजङ्गकुभिः सरभावयन्त्यौ विस्तरेणोत्तरदानाय मञ्जुघोषां नाम राजदुहितुरन्तरङ्गपरिचारिकां प्रार्थयांचक्रुः सुभ्रुवः । सा च राजकुमारीचरणङ्गचरी सहचरी मञ्जुभृपकान्ता तदभिमुखी प्रससार ।

## चतुर्थः स्तबकः ।

देव, श्रूयतां यदि कौतूहलमेतद्वृत्तान्तमन्यगन्ताम् । अस्ति भुवनत्रयप्रथितमहिमा हिमालय इवार्यावर्तसीमान्तलङ्घने विन्ध्याचल इव परामृष्टाखिलभूभृत् पुरन्दर इव सहस्राक्षः पयोधिरिवाभङ्गो पृथिवी सहिष्णुतायां कल्पपादपः परोपकृतौ सुकृतौ समुत्पादितशरीरः सोमवंशप्रसूतिः सकलभूमण्डलसामन्तकिरीटकोटिसमार्जितपदपद्मकेसराकाशराजो नाम भुवनपालः । तस्य च प्रजापति-

क्व यातं कुम्भोद्भवयोः मिश्रवर्णम्-
सुधासीकारंश्चैन आह्लादहेतु ।
मनः प्राणप्रीयान्तीरान्यपूर्णा-
यद्वेवं मतं वामतन्वी भुवनाम् ॥ ९ ॥
वदत वदत भो भो किं किमेतद्वयस्याः
किमपि मयि मनेयं प्रक्रिया वोतुयस्याः ।
अधिकमर्धकपोलं ज्ञानमालोक्य वस्तु
प्रकृतिविकृतिभूत्या आपदा यो न वस्तु ॥ १० ॥
विलपन्तीमतिवेलं
कुररीमिव चक्रसहचरीमिव ताम् ।
वृत्ततमा योषाणां
मञ्जुलघोषा कथञ्चनावोचत् ॥ ११ ॥

अयि राजतनये विदितनये किमर्थमत्यर्थमनर्थकमायास्यतेऽलौकिकश्रेयःपरम्पराजनो पन्नगोऽनोऽधिकतरं किमिति कलुषीक्रियते अगदञ्चनं निरञ्जनं लोचनयुगलं निर्भरनिश्वासाहतिविसंस्थुलो म्लानिमानीयतेऽधराभोगो विषादेन सुधामहती मारोप्यते कुमुदबान्धवो जीवितसंशयमानाय्यते सकलः सखीसमूहो विरोधिनोऽपि चक्रमारस हंसपरभृतोऽतिविलपन्तो विरमन्ति केलाश्चः कैव कथा सेवकलोकस्य तदुत्सपृष्ठावलोकय सुधाधवलतरङ्गैरपाङ्गैरुज्जीवय वागमृतासारैः । क्रीडत्स खयमस्माभिरधिमध्यन्दिनं गन्तुमीहस्त राजभवनमतिक्रान्ते किल काले कदाचिदुद्भ्रममानमानसौ पितरौ कुप्येतां न प्रज्ञावानैन्द्रियजालिकेन सुमुग्धवृत्तिको भवितुमर्हति यच्च स्यातुमपि नाशकाद्रूकुमारि सञ्चुकोच कस्तस्मिन्नसितवपुषि मोचकनुषि प्रेमानमातन्वाकाशि गल्पवच्याकण्याभवस्याकाशराजस्य सर्वतो धन्या कथमन्यायपथे पदमाधातुमीहेथा, मन्यामहे सम्यगसमेवास्य दुरभिनिवेशस्य श्रेयो न कन्यान्नयलाः कृते न तोडाण्डो वरणोपातिरस्माद् सकला अपि सहचरीः, प्रत्यस्ते शिरःशेखरकरकमलयुगलाभिरालिभिः सविनयमभ्यर्थ्यसे गृहानभिगन्तुमिति । सा च राजकुमारी कामकोदण्डकदर्थिता सखीभिरभ्यर्थिता न किञ्चनभाषत केवलं मुक्ताफलस्थूलैरश्रुभिः स्तनौ क्षालयन्ती शिबिकामारुह्य मन्दिरमभिप्रतस्थे । साकमेव राजकुमार्या सकलः सखीनां जनः परिपतितप्रसूननूपुरं पुरं प्रविवेश ।

व्याधिबाधितसर्वाङ्गः साधिनाधिकवेदनः ।
श्रीनिवासोऽपि सौधाग्रमारुह्यारोपयत्तनुम् ॥ १२ ॥
चन्द्रोऽपि दहति मन्दो वातः शैरोऽपि धूनोति ।
आवश्यकेऽपि कुत्ये प्रवर्तितुं चञ्चलीतिं दूनोति ॥ १३ ॥
विपरीतवृत्तिकं तं
विलोक्य वकुलाऽऽकुलान्तराऽवादीत् ।
स्वामिन्किमद्यशोषेऽ-
शोषेशोऽपि प्रयासमायासि ॥ १४ ॥
शौर्यघना धैर्यघना भवादृशाऽलर्यायना निमित्तेन ।
मुञ्चन्ति न प्रकाराः कनमः सततः प्रवर्तकोऽवीतः ॥ १५ ॥
वद भव दयालुरेषा
यवराहाक् प्रगल्भमिदाली ।
दूरायता दुःखोदधि
मेधि विमो मयि चिराय विश्वासी ॥ १६ ॥
आकर्ण्य वाक्यमीशः
किञ्चिदुदञ्चितशिराः शयनदेशात् ।
सम्मार्जिताक्षियुगलः
संहृत्य दारमानमादरे वाचम् ॥ १७ ॥

अयि मत्प्राणत्राणकुशले वकुले किं कथयाम्यतनं क्लेशकारणं सर्वथा दूनमेव दुनोति दैवो नाभिदंन्य दहतीति । योऽप्येष्वांसि विपरीत-

रोमि किं किल चिन्तितवान्कुसुमशरणेनाकविर्मा- णविकायां वेधा न रजोऽन्धीभूतलमलनेत्रचनः स विवेकमोष्टे खलु सा सहचरीसरस्वत्यपि गान्धार- संजननयेव पतिमन्धमवाप्य मन्ये स्वमन्धितवती सहजं विज्ञानमनर्थकः प्रहारोऽपि वज्रमूर्तेः कोमल- वपुषो भवतीति विमृशतोऽनितरां दूयते मनो वनोपगतस्यापि मम नोच्छिनत्ति कदर्थना शमभां- वरमोदनभोजनोजीवो न पुनर्गरलगिलितरसा- स्वादनस्तदभ्यर्थयेद्भुततरं प्राणप्रयाणप्रकारवित- रणाय भवतीं न पुनः कायगोपनायेति वदन्नेव मोह- मभिपेदे अनसोयातुर्नारायणः। सा च तस्यानर्ही गर्हापदमापदमवलोक्य चिन्तयाञ्चक्रे किमयं सक- लकलाकलयिता प्राकृत इव विकृतिमापन्नो मुह्यति बलवदस्वस्थो लक्ष्यते। किमत्र प्रतिकर्तव्यं प्रायः कन्दर्पः कन्दलितः फलेन योजयन्नपाराध्यति नान्यत्सन्तापकारणं स्यादिति न तदुत्थितेनैवाचा- रेणोपचरितव्यः स्वामी भर्तृभक्तप्रधाना हि भृत्यानां धर्मधुरा।

> आनीय शैवाललताः सरोभ्यो-
>
> न्यधत्त तद्वक्षसि कौस्तुभाङ्के।
>
> मृणालमालानितमङ्गभिसा-
>
> वचीभरचन्दनादिग्धकृत्तौ ॥ १८ ॥

> सरोजदलानमितव्यजनवायुनाऽशिश्रिय-
>
> स्स्थलाम्बुजानिकेतकी कुसुमगन्धवासेचनैः
>
> तथा कृतवती यथा प्रभुरपव्यथात्मा पुनः।
>
> प्रफुल्लवदनाम्बुजा वच उदाहरन्नीक्षितः ॥ १९ ॥

> अकुले किमाकुले मयि
>
> बाहुरुपचारैः समीहसे कुशलम्।
>
> यद् जीवनमिच्छसि मम,
>
> तनु शशाङ्कमुखजनां युक्तिम ॥ २० ॥

> किं मुधा जल्पितेनात्र नाथ ब्रूहि विकोविनम्।
>
> त्वमेव कुरु विद्धि, न तथैव हुतोऽवकृत् ॥ २१ ॥

अयि वत्सले पुनः क्षीरसागरमन्थनात्सुधा- मुत्पाद्य सुराणामसुरीकरणसम्बन्धिनं निबन्धमनु- सन्धानाभृशं पर्यनुयुनक्ति तदाऽवहिता भूत्वाऽऽक- र्णय दुरदृष्टस्याहृत्य व्यसनवागुराबन्धनहेतुभूतमु- दन्तम्। अद्यप्रभातायां शर्वर्यामस्ताचलमभिला- षुके रमासोदर्ये कुमुदबान्धवे सङ्कोचमञ्चत्सु कुमु- देषु सतोभावेन चन्द्रमसमनुसरन्तीषु तारासु स्तेन इव प्राभातिको वातो मुष्णन् पद्मवनेभ्य आमोद मन्दमन्दमान्दोलयन् केतकीः संधारयन्मालतीसु मनःप्रसृतिं पिबन् प्रस्रवणशीतलशीकरान् निभ रमुत्काहृतां निद्राय मानिनीमनु मम मानसम्। उत्क लिकाऽऽकुलश्च भृशं दूयमानः सखिमात्रसहाये वनविलोकनेन मनो विनोदमभीप्सुर्द्वाराद्गुदगमम् तत्र कस्मिंश्चिदवकाशे सकाशे निभृतमाकाशे ध्वनिमशृणवं पलायमानानां भीतानामिवाबला नाम्। उपगम्य चापश्यं मत्तमतङ्गजं विकुर्वाणं ततस्ततश्च कुमारिका इतस्ततोधावतारप्सरस इव सुरलोकादवतीर्णास्तासु चैका राजदुहितर मुदुहितरङ्गुघुनीतरङ्गभङ्गकवलितमङ्गललसद्- कुन्दकुन्दप्रभाभिरामा रामां प्रभवन्तीं नवं तीर्थ- राज विभावयितुं मुक्ताकलापचित्रितसिन्दूररचित- चित्रकबरीभरेण निटिलतु गङ्गजशशिकलितकु- ङ्कुमितमध्यभागभ्रुयुगलेन च मदर्थमेव मन्ये वेधसा स्वकौशलमलं भावयताऽऽविर्भाविताम् नितान्तलावण्यलहरिकां काञ्चिद्कुमारिकाम्।

रामजीलालशर्मणः प्रबन्धेन प्रयागस्थ "हिन्दी प्रेसे" मुद्रिता,
चन्द्रशेखरेण च दारागञ्ज, प्रयागतः प्रकाशिता।

## सम्पादकाभिप्रायाः

यो हि ददाति, यश्च करोति तस्यैव लोके प्रतिष्ठा भवति । दानं कर्म च प्रतिष्ठाहेतू । यो न ददाति न च करोति, न तं कोऽपि विजानाति, विज्ञायापि तिरस्करोति, अतश्च प्रतिष्ठार्थिनो दानपराः कर्मपराश्च भवन्ति । बहवः सम्पन्नाः सम्पद्यन्ते च ये न ददति न च कुर्वन्ति, तान् मात्राऽपि कोऽपि न परिचिनोति, न च तान् श्लाघते ।

अतश्चोच्यते –

दानकर्मपरो लोके लोकैः संस्तूयतेऽनिशम् ।
विश्वात्मनः सपर्या हि यतस्तेन विधीयते ॥

*

दानं प्राधान्येन द्विविधम्, स्वार्थं परार्थञ्च । स्वस्य लौकिकं पारलौकिकं वा फलमुद्दिश्य प्रदीयमानं दानं स्वार्थम्, यत्तु परस्य कल्याणमुद्दिश्य प्रदीयते तत्परार्थम् । स्वार्थं परार्थञ्चेत्युभयमपि दानं कल्याणं जनयतो मानवस्य । यथा स्वार्थं फलमुद्दिश्य प्रदत्तेन दानेन शारीरिकं सुखं भवति, मनोरथाश्च सिध्यन्ति, तथैव परार्थेन दानेन मनस्तृप्तिरुपपद्यते आत्मा आनन्दवान् भवति । अतएव स्वार्थदानात्परार्थदाने विशेषतः प्रवृत्तिर्भवति विज्ञानाम् ।

*

विद्यादानमन्नदानं वस्त्रदानं धनदानमभयदानमिति बहुविधं दानं श्रूयते । तत्र न मर्त्यैः सर्वविधं दानं क्रियते । यदि नाम कश्चन तेषु सर्वेष्वपि शक्तः स्यात्तदा न स केनापि प्रतिषिध्यते, फलभाक् च

भवति। परमेष्ठेनैकमपि सेव्यमानं फलमुत्पाद्-यति, कश्चन श्रियं ददाति, कश्चनान्नं ददाति, कश्चिदभयं ददाति। "दत्वा विमुच्यते जन्तुः सर्वस्मादिह बन्धनात्" इति बहुविधं स्तुतं पूर्वैर्दानम्।

*

संस्कृतज्ञा न ददति न च कुर्वन्ति, अतएव तिरस्कृता भवन्ति। धनं विद्यामभयं वा किमपि न ददति संस्कृतज्ञाः। धनदानं संस्कृतज्ञानां कृते न विहितं धर्मशास्त्रकृद्भिरिति मतममीषाम्, विद्यादानमपि कर्तुमसमर्था एते। यतः सैव जीविका, निर्बलानां कृतेऽभयदानमपि कर्तुमशक्यमेव। एवं विधैरेव कारणैर्दानाद्विरता भवन्ति संस्कृतज्ञा महाभागाः। न किमपि कर्मैषांकृते योग्यम्, निखिलजगन्मूर्धन्यानां कृते निखिलकर्ममूर्धन्यभूतमेव कर्मापेक्षते, तच्च साम्प्रतमपि नाविर्भूतम्। अतश्च संस्कृतपण्डिताः कर्मणोऽपि पराङ्मुखा एव तिष्ठन्ति। इत्थं न दानं नापि कर्माभिमतं पण्डितानाम्। एतन्निमित्त एव साम्प्रतं तिरस्कारः पंडितानां भवति। दानकर्मपराङ्मुखानां सामाजिकानामभिनन्दनं न दृष्टं कुत्रापि। परं पण्डितैस्तु सामाजिकैर्विधीयमानमभिनन्दनमात्मनः कृते काम्यते। इयं कामनाप्येषां कृतेऽपरस्तिरस्कारहेतुः।

*

नूनमस्ति भारतीये समाजे ब्राह्मणानां विशेषतः संस्कृतज्ञानां महती प्रतिष्ठा। देवा इव समर्च्यन्तेऽत्र प्रतिगृहमेते। परमियमेषां सपर्या स्वाभाविकी वा सहेतुका वा, स्वाभाविकी चेदद्यापि तथा भवितव्यमेव। यदि सहेतुका चेत्तदा कः स हेतुरिति विचार्यताम्। पण्डिता वदन्ति पुरा आसीज्जनताया हृदये धर्मभावः। धर्मभावोह्रसनादेव ब्राह्मणसमादरेऽपि विलयं गन्तुमुपक्रान्त इव दृश्यते पंडिता आत्मनः समादरे जनतायां धर्मभाव हेतुत्वे परिकल्पयन्ति। साधु, अङ्गीक्रियते पंडितानां वचः। परमत्र साद्यमनुयुज्यन्ते ते महाभागाः, अपि नामानुष्ठितः श्रीमद्भिः कोऽपि प्रयत्नो येन धर्मभावो दृढं तिष्ठेत्। प्रयत्ने विहितेऽपि यदि साफल्यं नाधिगतं भवेत्तदा श्रीमद्भिर्धर्मह्रासे कलिर्हेतुतया कल्पनीयः स्यात्? नानुष्ठितं किमपि न चानुष्ठानं काम्यते। इत्थं भवतएव धर्मह्रासे कारणं निर्दिशन्ति बहवः। ते कथनमात्मीयं प्रमाणयन्त्यपि।

अहं मन्ये पुरा बहूपकृतं ब्राह्मणैर्लोकस्य, पुराभवैर्लोकाराधनमेव परमं कर्तव्यममन्यत। साम्प्रतिकैरस्माभिस्तु लोकविद्वेष एव प्राधान्येन स्वीक्रियते। न दीयते न क्रियते, अयं नाम महान् लोकविद्वेष एव। लोकं द्विषन् न लोकेन पूज्यते। अपगतो धर्मभावो जनताया हृदयादिति पण्डितैर्न वक्तव्यम्। एवं विधं वचनं साम्प्रतिकानां धर्मोपदेशकानामेव मुखात् शोभते, नन्वद्यापि सन्ति धार्मिकाः। नन्वद्याप्यनुष्ठीयन्त एव धर्म्याः क्रियाः। अद्यापि देवाः पूज्यन्ते सम्मान्यन्ते गुरवः, तिरस्क्रियन्ते पापिनः उपेक्ष्यन्ते अधार्म्याः। तथापि धर्मभावो ह्रसत इति कल्पना केवलमनभिज्ञानामेव कृते शोभना न पण्डितानाम्। पण्डिता हि वस्तुस्थितिं तत्त्वतो विविच्य वदन्ति। अतश्च धर्मभावह्रासे वा संस्कृतज्ञसमादरह्रासे वा नूनमपराध्यन्ति पण्डिता एव न लोकाः, नापि कलिः।

एकेन साधयितुमशक्यं बहुभिर्मिलितैः साधयितुं शक्यत इति बहुशोऽनुभूतोऽयं प्रयोगः। गुरु-

[illegible]निःसन्देहमवश्यमेव इति पूर्वैर्दृष्टम-स्माभिः साम्प्रतमपि दृश्यते । संस्कृतज्ञा वदन्ति, के मयैकेन कर्तुं पार्यते । महाभाग, सत्यमुच्यते, संस्कृतनिर्माणाय विहितः कोऽप्युपायः श्रीमता । [illegible]निर्माणे के विघ्नास्ते ननु परिचीयते श्रीमता, [illegible]साध्योपाया वा निर्धारिताः श्रीमता, नोचेद् श्रीमतः फल्गुवचः ।

आत्मदोषमन्यस्य शिरसि समारोपणायै-वेत्थं निगद्यते 'किं मयैकेन कर्तुं पार्यते' इति । सर्वेऽपि पण्डिता एकैकशः इत्थमेव वदन्ति, परं यदा कश्चन सर्वेषां सङ्घं स्थापयितुं प्रयतेत तदा स आत्मनिर्दोषितासमर्थक एव वदति नाहं तत्र गन्तुं शक्नोमि, स हि मामपमन्यते । अयं क्रमः साम्प्रतिकानां पण्डितानां, तथाप्येते समादरं कामयन्ते । विचित्रमिदं वैदुष्यम् ।

* * *

प्रयागीयेण्डियनप्रेसमुद्रितस्य संस्कृतपाठ्य-पुस्तकस्य प्रथमोभागः समुपलब्धः । इदं पुस्तकमवलोक्य नितान्तं प्रीतः समभवम् । इदं पुस्तकम-मिनवसरण्या विनिर्मितमिति विलोकयन् कोवा संस्कृतप्रणयी प्रसन्नविकसितविलोचनो न भवेत् । संस्कृतशिक्षापि सुगमा यथा भवेत्तथैव प्रयत्ने निपतिता दृष्टिः शिक्षाविभागस्येति सौभाग्य संस्कृतभाषायाः संस्कृतज्ञानाञ्च ।

आङ्ग्लपाठशालासु द्वितीयभाषात्वेन संस्कृतमधीयानानामुपयोगाय रचितमिदं पुस्तकम् । षष्ठश्रेणिविद्यार्थिनां पाठायेदं पुस्तकं प्रकाशितम् । परिचितान् पदार्थान् अवलम्ब्य सरलैरल्पपदैर्वाक्यै-र्वर्णितो विषयो नूनमुपकरिष्यति विद्यार्थिनः । पञ्चमपाठपर्यन्तं लघुवाक्यानि प्रयुक्तानि । ततश्च छात्रयोः संलापः, व्यायाम, आम्रवृक्षः सुसन्ततिः कुम्भकारः सिंहः पिपीलिका कृषीवलः कूपः सूर्य-चन्द्रश्च, समयो, लोहः प्रभातम् राजदम्पतीत्यादयो विषया वर्णिताः । एषु पाठेषु सामयिकं ज्ञानं लभ्यते उपदेशाश्च, अनन्तरं व्याकरणज्ञानार्थं चक्रं सन्निवेशितम् । साम्प्रतं संस्कृतभाषायाः काठिन्यं परितः उद्घुष्यते । काठिन्ये शिक्षासरण्या उपयुक्त-ग्रन्थानाञ्चाभाव एव हेतुरिति मे मतम् । एवंविधै-र्ग्रन्थैः संस्कृतशिक्षा सरला भविष्यति ।

अत्र ग्रन्थे ये दोषा तेऽधोनिर्दिश्यन्ते सप्तर्षि-रित्यस्य स्थाने सप्तर्षय इति भवितव्यम्, अष्टपादा यस्येतिस्थाने अष्टौ पादा यस्येति, सङ्ख्याबोधकं बालकचित्रं निरर्थकमिव प्रतीयते ।

हार्ई स्कूले — इति न भाव्यम्

गुरुकुलादित्यस्य स्थाने गुरुगृहादित्युचितम्, 'केसरिणं निगृह्य'-"निगृह्य" इत्यस्यस्थाने धृत्वा, वशीयित्वा वा भवितव्यम् । निग्रहो नाम दण्डोक्तं वा । न निगृह्य पञ्जरे स्थाप्यन्ते केसरिणः किन्तु प्रलो-भनादिभिर्विविधैरुपायैर्वशीयित्वा बन्धयित्वा वा ।

"कहार्य" इति न शोभनम्

राजदम्पतीनामके पाठे सिंहासनारूढौ तौ वर्णितौ परं चित्रे सिंहासनं न दृश्यते ।

चतुर्विंशे पाठे — गङ्गाजले स्नानात् पानाच्च" इत्यत्र तस्य पानाच्चेति उचितम् ।

एवंविध उत्तमे ग्रन्थे किञ्चिदपि दोषम् द्रष्टुं कामयते मनोऽयम्, अतएव कामम् त्रुटि-पञ्चको निर्दिष्टः ।

## मल्लिनाथः कवीन्द्रः

अथ कवीन्द्रः प्रसिद्धष्टीकाकारेषु, बहूनां काव्यग्रन्थानां टीका निर्मिता श्रीमता मल्लिनाथेनेति नात्र किञ्चिदपि विशिष्य वक्तव्यं विशेषतो विदुषां पुरस्तात् ।

वर्णितोऽयं महाकविर्भोजप्रबन्धे बल्लालेन, परं बल्लालवर्णनं नेतिहासविदां सम्मतमिति सुव्यक्तमेव । यतस्तेन पूर्वापरसमुद्भूतानां बहूनां कवीनामवस्थितिर्भोजसमय एव निरूपिता । को नु खलु रघुवंशादिकर्तुः कालिदासस्य बाणस्य समकालिकत्वे विश्वासमादधातु । अतश्चोपेक्ष्यैव बल्लालवर्णना इतिहासविद्भिः ।

नूनमयं दाक्षिणात्यः । दाक्षिणात्यप्रदेशे कार्नाट भाषामयं कथासङ्ग्रहनामकमेकं पुस्तकमस्ति तत्र हि पेद्दूभट्टचरितनामकः कोऽपि निबन्धः प्रकाशितो वर्तते । पेद्दूभट्ट इति मल्लिनाथस्यैव नामान्तरम् । तत्र चेत्थं वर्णितो मल्लिनाथः । देवपुरे निवसन्तिस्म कोऽपि देववर्मा, अति प्रसिद्धो वेदज्ञः शास्त्राध्यापकश्च । तस्यैव पुत्रो मल्लिनाथः । अयं हि बाल्ये वयसि स्थूलबुद्धिरासीत् । अतश्च नाशकत् किमप्यध्येतुम् । परिणते वयस्ययं कामपि कन्यकां परिणीतवान् । अयं मूर्ख इति पेद्दूभट्ट इत्यस्य नामान्तरमजनि । श्वसुरालयेनितान्तं धिक्कृतोऽयं कामपि वेदनामवापत् । इत्थं विषण्णो मल्लिनाथः स्त्रीसम्मत्या काशीमध्येतुं जगाम । तत्र च किमप्यध्यापककुलं प्रविवेश । अध्यापकेन चादिष्टः पथिस्थितः शिवमन्त्रं जजाप । अध्यापकाज्ञयैव तदीया पत्नी घृतस्थाने निम्बतैलमेव मल्लिनाथाय दातुं प्रववृते । एतद्धि निम्बतैलदानं मल्लिनाथस्य घृतनिम्बतैलभेदज्ञानपरीक्षार्थं विहितमासीदध्यापकेन । क्रमेण वर्णमाला शिक्षिता मल्लिनाथेन तदा हि निम्बतैलस्य कटुताप्यनुभूता । विज्ञापयामास च मल्लिनाथो गुरुपत्नीम्, गुरुरप्येतद्विज्ञातवान् । समभवन्मल्लिनाथस्य बुद्धिविकाश इति विज्ञाय नितरां प्रमोदमापद्गुरुः अशिक्षयच्च सर्वात्मना तम् । ततो गुरुकृपयाऽचिरादेव सर्वाणि विद्यास्थानान्यध्यगच्छन्मल्लिनाथः । अचिरेणैव च तत्कीर्तिः सर्वत्र प्रसृता बभूव" । इयं कथा कालिदासीयकथामनुहरति ।

कविरयं चतुर्दशशतकस्यान्तिमे भागे समुत्पन्न इति विज्ञायते तैस्तैः प्रमाणैः । अनेन बहूनां काव्यानां टीका विरचितेति प्रोक्तमेव पूर्वम् । एतन्निर्मितासु टीकासु व्याख्यापाटव प्रौढिविवेचनामित्यादय सन्त्येव गुणाः । आत्मनिर्मितटीकासु महोपाध्याय कोलाचल मल्लिनाथ सूरिरित्यात्मनाम स्वयं लिखति कविरेव । अत्र केचिद्वदन्ति "कोलाचल" कवेर्देश नाम, केचिच्च वंश नामेति विमृशन्ति । वंशबोधक एवायं कोलाचल शब्द इति प्रामाणिका वदन्ति महोपाध्याय इत्युपाधिर्मल्लिनाथस्य ।

अस्य द्वौ पुत्रावभूताम् । एकः पेद्दार्यः, अपरश्च कुमारस्वामी, अयं कविषु कालिदासं कविशिरोमणि मन्यते, अतएव रघुवंशटीकाप्रारम्भे "सकलकवि शिरोमणिः कालिदास" इति वदन् कालिदासे हार्द प्रेम प्रकाशयति ।

काव्यटीकाकारेष्वयमेव प्रथम इति न मन्तव्यम् यतो दुर्व्याख्या विषमूर्च्छितां कालिदासीयसूक्तिमुज्जीवयितुमेवायं सञ्जीविनीं टीकां जग्रन्थ । दक्षिणावर्तनाथादयोऽप्यपरे टीकाकारा मल्लिनाथात् पूर्वमभवन् । एषामेव सरणिरनुसृता मल्लिनाथेन । रघुवंश कुमारसम्भवमेघदूतानां कालिदासीयका-

ख्यानां टीका विरचिताः । एषां तिस्रोऽपि टीका सञ्जीविनी नाम्नाख्यायते । महाकवेर्भारवेः किरातार्जुनीयमपि घण्टापथसमाख्यया व्याख्यया समलङ्कृतवान् मल्लिनाथः । महाकवेर्माघस्य शिशुपालवधमपि सर्वङ्कषाटीकया समभूषयत्, नैषधीयचरितस्य जीवातुनाम्नी टीका विरचिता कविनानेन, भट्टीकाव्यस्य मल्लिनाथविरचिता सर्वपथीना नाम्नी कापि टीका समुपलब्धा । विद्याधर विरचित एकावलीनामकोऽलङ्कारग्रन्थोऽपि व्याख्यातो मल्लिनाथेन । सा व्याख्या तरलनाम्ना प्रसिद्धा । तार्किकरक्षानामकस्य ग्रन्थस्यापिटीका निष्कण्टका नाम्ना विरचिता मल्लिनाथेन, तन्त्रवार्तिके सिद्धाञ्जनं विरचितं मल्लिनाथेन । स्वरमञ्जरीपरिमलनामकस्य ग्रन्थस्यापि टीका मल्लिनाथेन विरचिता इति विज्ञायते । प्रशस्तपादाचार्यविरचितस्य वैशेषिकदर्शनव्याख्यारूपस्य प्रशस्तपादभाष्यस्यापि मल्लिनाथनिर्मिता टीका वर्तते ।

नायं केवलं टीकाकार एवासीदपि तु निपुणः कविरपि । व्याख्यातग्रन्थानां सर्गारम्भे सन्ति नन्वेतन्निर्मिताः श्लोकाः, ये मल्लिनाथस्य नैपुण्यं बोधयन्ति । किञ्च रघुवीरचरितनामकं किमपि काव्यमपि विरचितमनेन । अद्याप्यप्रकाशितमिदं पुस्तकम् । त्रिवङ्कुरीयेण श्रीमता गणपतिशास्त्रिणा समुपलब्धेषु ग्रन्थेषु रघुवीरचरितमप्यस्ति, परं तदपूर्णमिति महान् विषादः ।

---

## पाश्चात्य-विज्ञानम् ।

[ लेखकः इन्दौरस्थकृतमहाविद्यालय साहित्यशास्त्र-प्रधानोपाध्यायविज्ञानविभूषणपण्डितश्रीकृष्णनाथः ]

"पदार्थविज्ञानशास्त्रस्य व्याख्या"

रसतंत्रस्य प्रारम्भपुस्तके कतिविधाः पदार्था अस्माकं दृष्टिपथमायान्तीति सम्यक् प्रतिपादितम् । रसतन्त्रज्ञः किं करोति ? पदार्थान् कथं तोलयित्वा तद्गतपरिमाणं निष्कासयति, कथञ्च शोधयति इयन्तः पदार्था मिश्रिता, एते विभिन्नाः कर्तुं शक्याः, तदतिरिक्ताः शुद्धा, नैते पृथग्द्रव्येषु विभक्ता भवन्तीति भवद्भिरवलोकितमेव । वस्तुतोऽस्मिन् जगति विद्यमानानां परस्परं विभिन्नस्वभावानां बहुविधपदार्थानां निरूपणं कृतप्रायमेव । किन्त्वेषां पदार्थानामवस्थापरिवर्तनं न भवद्भिरद्यापि कृतम् । अत एव किमपि तद्विषयकमवश्यं विज्ञापनीयम् । प्रतिक्षणं परिवर्तनशीलाः खलु पदार्थाः दृश्यन्ते पश्यन्तु स्वात्मानम् । कदाचिद् यूयं स्मयमानमुखाः कदाचित् क्रोधताम्राक्षाः, कदाचित् शोकाश्रुपरिप्लुतनेत्राः, कदाचित् ऊर्जस्वलाः कदाचिदलसाः, उदासीनाश्च भवथ । इत्थमन्येऽपि पदार्था ये ह्यस्मिन् जगति वर्तन्ते ते सर्वेऽपि क्रमशः परिवर्तनचक्रे पतन्ति । अद्य प्रकृतिमुखं भासुरं सुस्मितञ्च विभाति, श्वस्तदेवानुज्ज्वलं खिन्नञ्च परिलक्ष्यते । पर्जन्यः पतति घनगर्जितं श्रूयते समुद्रश्च क्षुब्धः सन् कल्लोलैरास्फाल्यते अन्यच्च गृह्यताम्, अयःपिण्डं भूमौ पतितं, तदादौ स्पृष्टं सन् शीतभावम् अनुभूयते, किन्तु तदेव तापेन ताम्रीकृत्य [वह्निनिष्कासितञ्चेत् विभिन्नदशायां परिणतं भवति, यदि

स्पृष्टश्चेद् दाहो भवति अथवा तदेवायःपिण्डं गुलिकाप्रक्षेपिण्यां निधायाग्नेयचूर्णेन प्रज्वाल्यै- स्स्पृष्टश्चेद् दारुणवेगेन बहिरागत्य सहस्रशः सम्मु- खस्थान् संचूर्णयति।

इदमवलोक्य कथं न निश्चीयते यत् शीतम- यःपिण्डं गुलिकाप्रक्षेपिण्यां स्थापितादयःपि- ण्डादत्यन्तं विभिन्नस्वरूपम् तथैवाप्रेरितादयः पिण्डात् प्रेरितमयःपिण्डं विभिन्नकार्यकरं भवति।

अस्मिन् विशालभूमण्डले प्रतिक्षणं परिणाम- शालिपदार्थेषु समुत्पद्यमानदशास्वभावरूपादीनां परिवर्तनाय नियतं कारणं मपेक्षते। यथा भवन्तं रोरुद्यमानमसुखिनञ्च दृष्ट्वा पृच्छामः किमस्य कारणम् तथैवालसं तन्द्रालुमनुत्साहञ्चावलोक्य कारणस्य गवेषणेन यथा ज्ञायतेऽस्य दशा परिवर्त- नस्य कारणं तथैव जड़पदार्थानामवस्थास्वभाव- परिवर्तनेऽनुभूते सति, कारणान्वेषणेनावश्य परि- वर्तनस्य कारणानि गवेषितानि भवन्ति। इदं गवे- षणं वयमिदानीमुपरिष्टात् करिष्यामोऽतः साव- धानैर्भवितव्यम्। भगवतीप्रकृतिसाम्राज्ये स्थिता- नां पदार्थानां प्रतिक्षणं जायमानपरिणामस्य कारण- संशोधने इत्थं क्रियमाणं प्रश्नः प्रयोगशब्देन व्यव- ह्रियते।

२—"गतिपदार्थस्य व्याख्या।"

आदौ गतिशब्दस्य भावः सम्यग् ज्ञातव्यः। स्थूलस्य परिवर्तनं गतिशब्दस्यार्थः। युष्मासु क- तिपयै रिदंश्रुतमेव यद् इयं घना पृथ्वी यस्यां वयं निवसामः सूर्यस्य समन्ताज्जवेन परिभ्राम्यति। किन्तु साम्प्रतमयं विचारो दूरेऽस्तु यद्दृश्यं वेगेन संभ्रम्यमाणाप्यस्मान् समुचितमनर्गलं स्थिरैव धारयति। अस्त्वेवम्, वयं वेत्रासने स्थिताः कथ- यामो निश्चला वयमिदानीमिति किन्तु प्रकोष्ठ इतस्ततश्चलन्तो जानीमो वयमिदानीं गतिमन्त इति साम्प्रतं गतिपदस्य यथार्थाशयबोधायैतस्तत संचलनापेक्षया कस्यां दिशि कुत्र रेखायां कियत् वेगेन वय गच्छाम इत्यपि विचारणीयम्। तत्राद् वेगपदस्य सम्यगाशय-विज्ञानाय विचार इत्थं कर्तव्यः, गृहात् बहिः सरलराजपथे समानगत्य घटिकात्रयमनवरोधं सञ्चलन्तो वयं जानीमो निर्गम नस्थानाद् घटिकाद्वयेन क्रोशचतुष्टयं सम्प्राप्ता इति तदैकया घटिकया क्रोशद्वयपरिमितस्थलस्योल्लङ्घने नास्माकं वेगः प्रतिघटिकं क्रोशद्वयस्यैवास्तीति निश्चितं भवति। इत्थं गतिपरिमाणेन यो निश्ची- यमानः स एव वेगो भवति। वाष्पशकटिका, स्वावस्थितिसमये मन्दं चलति मध्येमार्गं प्रतिघटिक पञ्चक्रोशपरिमितवेगेन, यदा स्वावस्थितिस्थाने समायाति तदा नकिमपि, इत्थं तारतम्येन वर्तमा नस्य वेगपरिमाणज्ञानं कथं कर्तव्यम्?। अथवा कोऽर्थोऽस्य कथनस्य यद्वाष्पशकटिका स्वाव स्थितेः प्राक्प्रतिघटिकं पञ्चक्रोश-परिमितवेगेन सञ्चलितेति। किन्तु इत्थं वेगनिश्चयो न शक्तितार- तम्येन वर्तमानस्य कर्तुं शक्यते। परन्तु तस्यैव वेगपरिमाणं ज्ञातुं शक्यते, यः समानगत्या स्वचि राममपहाय सरलमार्गेण गच्छति। वेगकालस्य नैकः प्रकार उपयुज्यते। कदाचिद् प्रतिघटिकमियत्तः क्रोशान् कच्चित् प्रतिविकलमियतोहस्तार्धान्। यदि कूपे कश्चन पाषाणखण्डः पातितश्चेत् प्रथमविक लायां षोडशहस्तार्धपरिमितवेगेन सञ्चलित आसी- दिति दृष्टिपथमायातस्य पाषाणखण्डस्य वेग प्रतिविकलं षोडशार्धहस्तपरिमित एव कथ्यते। एवं षष्टिविकलाभिः कला भवति षष्टकलाभिश्च

घटिका सम्पद्यते । अस्यां पुस्तिकायां वेगपरिमाणज्ञापनाय यथावसरं प्रायो विकलाऽर्धं स्तयोरेव प्रयोगं करिष्यामो न क्रोशघटिकयोः ।

शक्तेर्व्याख्या

कोऽयं पदार्थो यो निश्चले द्रव्ये गतिमापादयति चञ्चले च गतिमवरोधयति, अयं शक्तिरूपः पदार्थो य इत्थं करोति, शक्तिरेव द्रव्यं गतिमत् करोति शक्तिरेव यद्यवरोधकतया नियुक्ता चेद्द्रव्ये विद्यमानां गतिमवरोधयति । यः पदार्थः स्वगतिमत्तायामधिकां शक्तिमपेक्षते तस्यैव गत्यवरोधेऽधिकशक्तिरपेक्षिता भवति । यत् क्रीडाकन्दुकं हस्ताभिघातमात्रेणापसरति । तदेव वैपरीत्येनोपयुज्यमानाघातेन नैश्चलमापाद्यते किन्तु वाष्पशकटिकातुल्यगुरुमत्पदार्थस्य नैश्चल्यापादनायाधिकतरशक्तेरपेक्षा भवति ।

अत एव इदं निर्णीयते यत् स्वगतावल्पां शक्तिमपेक्षते, तस्य गतिनिरोधोऽल्पशक्त्यैव कर्तुं शक्यः शक्तिर्द्रव्येषु गत्यापादनायैव न केवलमपेक्षिता भवति किन्तु गतिनिरोधायापि तथैवापेक्षते । इत्थं यो निश्चलगतिमत्पदार्थयोर्दशां परिवर्तयति स एव शक्तिपदस्य वाच्यो भवति “प्रयोगः” इदं प्रमाणीकर्तुं हरेणुमयुक्तं लोहभाजनं दक्षिणकरेण गृहीत्वा वेगेनोपरि सञ्चालय, यावद् स्वकरः उपरिष्टाद् बलवत् संलग्नात् काष्ठदण्डात् संरुद्धो न भवेत् । अनेन किं जातं यद् हरेणुसयुक्तं भाण्डमुपर्यनर्गलं संचालितमासीत् तदेवाकस्मान्निश्चलमभूत् । प्रथमं वायुवेगेन लोहभाण्डमुपर्युत्सारितम् । लोहभाण्डेन च स्वान्तरालवर्तिहरेणवः सञ्चालिताः अनन्तरवेगेनोपरिगच्छन् हरेणुविशिष्टलोहभाण्डकरः ऊर्ध्वं स्थितात् संलग्नकाष्ठदण्डादाकाण्डे संरुद्धः । इदमस्मादभूत् यत् काष्ठदण्डेन सभाण्डकरस्यावरोधः कृतः, करेण च घृतभाण्डं सञ्चलनादपरुद्धम् । किन्त्वेव सजाते स्वाधारस्यावरोधेऽपि आन्तरालिकहरेणुकणानामुच्चैः सञ्चालनमविरुद्धं तिष्ठति तेन च बहवः कणाः भाण्डपरिसरादुपरि निर्गच्छन्तो भूमौ प्रविकीर्णा भवन्ति ।

द्वितीयः प्रयोगः

कस्मिंश्चिद्भाजने संस्थाप्यन्तां हरेणवः । वेगेनोपरि सञ्चालनापेक्षया भाण्डस्याधः सञ्चालनं सत्वरं यावच्छक्यं क्रियताम् अत्र हस्तेन प्रदत्तो वेगो भाण्डं सत्वरमध आनयति किन्तु भाण्डस्य प्रशिथिलहरेणून् न कथञ्चिदाकुलयति । तस्मादिदं परिणतं भवति यद् भाण्डस्य शीघ्रमभूयमानामधोगतिं तत्रस्थहरेणवो नानुसरन्तो, भूमावितस्ततो विकीर्णाः पतन्ति ।

क्षणं विरम्य विचार्यताम् । आभ्यां प्रयोगाभ्यां किमधीतं भवति । प्रथमप्रयोगादिदं ज्ञायते यत् भाण्डस्योपरि संचालनेन लब्धगतयो हरेणवः ऊर्ध्वस्थदृढसंलग्नकाष्ठदण्डात् संरुद्धभाण्डवेगा अप्यनर्गलमुपरिगच्छन्त एव स्थास्यन्ति, यावत् ते नापि वेगेन संरुद्धगतयो न भवन्ति काष्ठदण्डेन हरेणूनामुपरि संचालनं नावरुध्यते किन्तु पृथिव्यां विद्यमाना, पदार्थाकर्षणशक्तिरेव हरेणून् अधोभूम्यां सपातयति । अत एव गतिमतः पदार्थस्य संरोधाय वेगोऽवश्यमपेक्षते । पुनर्द्वितीयप्रयोगेऽस्माभिर्भाण्डमधः सञ्चालितम् । किन्तु हरेणुभाण्डस्याधः सञ्चालनाय हस्तेन प्रदत्तो वेगो भाण्डवर्तिनो हरेणून् न कथमपि समाकुलितान् करोति । अतस्तथैव तेषां नैश्चल्यं भवेत्, यावत् पदार्थाकर्षणशक्तिस्तान्

अधोभूम्यां नाकर्षयेत्। अतो निश्चलपदार्थमधः- स्खालयितुमपि वेगोऽवश्यमपेक्षितो भवति इत्थं वेगः कार्यद्वयमापादयति। प्रथम गतिमद् द्रव्य निश्चलं करोति तथैव निश्चल द्रव्य गतिमत् करोति। किन्तु विद्यमानोऽपि वेगो द्रव्ये कदाचिदकिंचित्करो भासते। कथमेतत् सम्पद्यते। अत्रेदमुत्तरम् यत् पूर्वं विद्यमानो वेगोऽन्येन तुल्यविरोधिवेगेनावरुद्- ध्यते तथा हि यद् भारवत्परिमाणं हस्तेन धृत तदेव स्वाधारभूताङ्गुल्यपसारेण पृथिव्याकर्षणशक्त्या ऽतिशीघ्रमध आनीयते। यावद् हस्ताधारेण तद्- भारवत्परिमाणं तिष्ठति तावत् पृथिव्याकर्षणशक्ति स्तत्र न कार्यकारी भवति अथवा तदेव भारवत्परि- माण काष्ठफलके यावत् धृतं तिष्ठति तावदिदं भूमौ न पतति किन्तु यदा काष्ठफलकमपसारितं भवति तदेव तद् भूम्यामानीयते। अत्र या गुरुत्वा- कर्षणशक्तिः पदार्थान् अध आकर्षयति सा पदार्था- धारेणावरुद्ध्यते। एतस्मादिदमधीतं भवति यत् वेगो द्रव्यस्य गतिं निवारयति अथवा द्रव्यो गति- मापादयति स एव समानावरुद्धवेगेन निरुद्धो भूत्वा द्रव्ये न कामपि विकृतिं सम्पादयति।

---

## भाषामुपदेशाः

[ श्रीमता प० गिरिजाशङ्करशर्मणा संगृहीताः ]

वर हि मानिनोमृत्युर्नदैन्यं स्वजनाग्रतः॥ १॥
भद्रकृत्प्राप्नुयाद्भद्रमभद्र चाप्यभद्रकृत्॥ २॥
यश्चात्यार्यपरोवाद खलसंवाद शृङ्खला॥ ३॥
अविवेकिनि दुर्दर्शे रतिः काहि मनस्विनः॥ ४॥
निसर्गोह्येष महतां यदापन्नानुकम्पनम्॥ ५॥
रिपुष्वपिहि भीतेषु सानुकम्पाः महाशयाः॥ ६॥
नाधर्मश्चिरमृद्धये॥ ७॥
सङ्कटे हि परीक्ष्यन्ते प्राज्ञाश्शूराश्च सङ्करे॥ ८
उपायरससंसिक्ता देशकालोपबृंहिता।
सेय नीतिमहावल्ली किन्नाम न फलेत्फलम्॥ ९
नहिदुष्करमस्तीह किञ्चिदध्यवसायिनाम्॥१०
कष्ट हि बान्धवस्नेहं राज्यलोभोतिवर्तते॥ ११
अनार्यजुष्टेन पथा प्रवृत्तानां शिवंकुतः॥ १२॥
को हि मार्गममार्गं वा व्यसनान्धोनिरीक्षते॥१३
उदारसत्व वृणुते स्वय हि श्रीरिवाङ्गना॥ १४।
निवृत्तपापसम्पर्काः सन्तो यान्ति हि निर्वृतिम्॥
प्राणानुदारा विसृजन्त्यर्थिनो न पराङ्मुखान् १५
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तञ्चजीवितम्॥ १७
प्राणिना हि निकृष्टापि जन्मभूमिः पराप्रिया॥१८
काम न श्रेयसे कस्य सङ्गमः पुण्यकर्मभिः॥१९॥
जितक्रोधेन सर्वं हि जगदेतद्विजीयते॥ २०॥
धर्मकीर्तिकरी सा च लक्ष्मीरिह महीभुजाम्॥२१
कस्य नाभ्युदये हेतुर्भवेत्साधुसमागमः॥ २२॥
मिथ्यापरापकारो हि कृतः स्यात् कस्य शर्मणे २३
अपृष्टैरपि कर्तव्यस्तैश्चकाले हितं प्रभोः॥ २४॥
सधीरो यो न सम्मोहमापत्काले न गच्छति॥२५
अप्रियस्यप्रथमतः परिणामे हितस्य च।
वक्ता श्रोता च यत्रस्यात् तत्र श्रीः कुरुते पदम् २६
न शृणोति सतां मन्त्रमसताञ्च शृणोति यः।
अचिरेण सलम्प्राप्यविपदं परितप्यते॥ २७॥
गुणिनोन विशेषोस्ति न सतुष्टस्य चासुखम्।
धीरस्य च विपन्नास्ति नासाध्यं व्यवसायिनः २८
अजानानो हठात् कुर्वन् प्राज्ञमानी विनश्यति॥२९
अश्रेयसे न वा कस्य विश्वासोदुर्जने जने॥३०॥
हितोपदेशोमूर्खस्य कोपायैव न शान्तये॥ ३१॥
वज्रादपि हि वीराणां चित्तरत्नमखण्डितम्॥३२॥

येन खल्वन्धकारं सपदि दूरमपसरेत्, पद्धतिश्च सरलोज्ज्वला पुरतः स्फुरेत्। प्रकाश एवानुसन्धातव्यः।

"कलहः किल तिमिरं नापनयेत्, बलप्रयोगो वा। पुरस्तात्प्रतीतस्यालोककिरणस्यैव प्रभावात्तमः समग्रं शनैर्विलीनमर्हति।" —वङ्गगीतिः

ज्योतिरद्भासितान्तःकरणा अपि कश्चिद्विवदमानाः केनाध्यक्षीकृताः? ते खलु समदृष्ट्यैव पश्यन्ति सर्वान्। तुङ्गं गिरिशिखरमधिरूढ जने किलाधःसमभूमिवर्त्तिनो महीरुहाः सर्वे समोन्नता एव प्रतीयन्ते, तेषाम्प्यबन्धुराण्येव। भारतवर्षीय-ब्राह्मधर्मस्य महान् प्रचारकः श्रीप्रतापचन्द्रमजुमदारः कदाचिदादिब्राह्मसमाजस्य दक्षपारचालकं श्रीमहर्षिदेवेन्द्रनाथठाकुर* महोदयमुपगम्य तदीयलेखनाधारफलके संस्थापितं कश्चित् प्रख्यातकृत्तोयग्रन्थमवलोकयामास। महर्षेः कृत्तधर्मं प्रत्यननुरागं प्रागेव विज्ञातवता प्रतापेन तत्र पुस्तकं तन्निरीक्ष्य विस्मितचित्तेनाभूयत। कथमेतत् पुस्तकं भवतां लेखनाधारफलकसमारोपणमर्हति?"—इत्येवमनुयुक्तो महर्षिः परमप्राज्ञः प्रत्युत्तरयामास—"निम्नभूमिचङ्क्रमणवेलायां मया क्षेत्रविभाजकं आलिव्रजा एव केवलं विलोकिता आसन्, इदानीन्तु कियदूर्द्ध्वमारोहतो मे महत्येकाऽऽलिविभागविहीना नैकस्वामिका समभूमिरेव समग्रो भूभागो नयनाध्वनि प्रसारितो वर्त्तते" इति। अध्यात्मजीवनममुत्रतमस्वासादनसञ्जातहृदयौदार्ये विलीनास्तस्य सर्वे साम्प्रदायिका विभेदाः। हिन्दुधर्मप्रसिद्धः श्रीमद्रामकृष्णपरमहंसः कथं ब्राह्मसमाजाय केशवचन्द्रसेनाख्येन सा क्रमविरलसौहार्दनावर्ततेति न किमस्माभिर्लोचनगोचरीकृतम्? ईश्वरे याथार्थ्येन प्रीतिमन्तः पुरुषा जातिसम्प्रदायादिषु नाभिनिवेशमातन्वन्ति, समालिङ्गन्ति च प्रीतिप्रसारितेन बाहुयुगलेन सममेव सर्वान्। सूक्ष्मेक्षणेन त्वयेदं विशदं ज्ञास्यते यद् येन केनाप्याकारेण सर्वैरपि तदेव महद्वस्तु निरूप्यते। एकदाऽहं परमहंसं श्रीमद्रामकृष्णं पृष्टवान्—"हिन्दुधर्म-ब्राह्मधर्मयोः को भेदः?" इति। तेन कथितम्—देवालयेऽत्र प्रत्यहं मया नौबत" सञ्ज्ञकं वाद्यभाण्डमाकर्ण्यते, यत्रैको निरन्तरं वेणुविशेषेणैकमेव स्वरं ध्वनयन्नास्ते, अपरस्तु द्वितीयेन वेणुभेदेन नेकभेदाः श्रुतिसुखाः स्वरसन्ततीराविष्करोति, अन्यश्च कश्चित्तथाविधेनैव वेणुना कमपि प्रकृष्टस्वरभेदमाविर्भावयति। क एतेषां पारस्परिको भेदः? तीरेषु चतुर्षु सोपानसन्तानविमण्डितः कश्चित्तडागो बृहदायतनः कल्प्यताम्, यत्र तटमेकैकमन्योन्यावलक्षणभाषाभाषिणा नरेणाधिष्ठितमा-

*अष्टसप्ततवर्षेभ्यः प्राग्वङ्गेषु सुगृहीतनामधेयेन राजपदवीविभूषितेन श्रीमता राममोहनरायमहाभागेन प्रतिष्ठापितः 'ब्राह्मसमाजः' अद्यावधि कलिकातायामादिर्भारतवर्षीयः साधारणश्चेति समाजत्रयप्रविभक्तो वरीवर्ति। तत्र आदि ब्राह्मसमाजस्यामरणनेतृत्वे दीक्षितः आसीत् पूज्यो महर्षिर्देवेन्द्रनाथः, भारतवर्षीयब्राह्मसमाजस्तु श्रीमता केशवचन्द्रसेनमहोदयेन परिचालितो बभूव, —यस्यैवानुयायित्वेन जातिसहचारितया चरिताख्यायकः प्रथितोऽभूत् श्रीमान् प्रतापचन्द्रमजुमदारः। साधारणब्राह्मसमाजस्य च नेतृत्वं मन्यते बहुपण्डितः शिवनाथशास्त्रिसमाख्यः। जातिभेदः मूर्तिपूजनमेतत्तदानुपूर्विक्रियापारायणञ्च मासपर्यन्तविवर्जनेन तथात्मकत्वादब्राह्मसमाजः किल प्रचलितहिन्दुसमाजस्य विपुलविधिवादात्मानं पृथक्कृत्य वर्तते।

प्राप्तेषु [illegible] [illegible]

[illegible]

कस्मिंश्चिदपि वस्तुनि स्पृहालेव प्रकर्षी [illegible] कमपि समतीतं भाविनं वोपकारं हेतुत्वेनानपेक्षमाणा भक्तिरहैतुकी भवितुमर्हति। नास्त्यत्र 'यतः' 'ततः' इति हेतुसूचिकयोः पदयोः प्रयोगप्रसङ्गः । यथा केनचिद्भक्तवरेण गीतम्—" निष्कारणमेव त्वयि स्निह्यति मे चेतः – प्रीतिर्नाम नैसर्गिकी मे वृत्तिस्त्वयि, प्रकृत्यैव स्वान्तं मे त्वामेवाश्रयतेऽनावगच्छति, प्रीयते च कस्मिंश्चि[illegible] " इति। एतदेव भक्तेरहैतुक्यास्तथ्यं सारभूतमामनन्ति । वस्तुतश्चायमेव भक्तेश्चरमोत्कर्षः ।

अस्ति च भक्तेरधमोऽपरोऽपि प्रकारः कोऽपि, यः किल तत्पदवीं व्यतामेव नार्हति । अथाप्यसौ महाभक्तिसौधाधिरोहणे सोपानतामापद्यते । तत्वतो व्यापारस्यास्य दुष्टत्वेऽपि न केनाप्यत्र निराशेन भवितव्यम् । निम्नतमसोपानसमारम्भेऽपि शिक्षया व्यापृततया सातत्येन च शिखरदेशः समासादयितुं शक्येत ।

उत्तमाधमाधिकारभेदेन भक्तिर्द्विधा विभज्यते, यथा—

(१) रागात्मिका – अहैतुकी – मुख्या ।

(२) [illegible] हैतुकी – गौणी ।

[illegible] तु निकृष्टभक्तेरैकान्तिकाभ्यासेनासौ [illegible] भक्तिं समवाप्य कृतार्थो भवति । यथाऽऽह भक्तिरसामृतसिन्धौ –

"वैधभक्त्यधिकारी तु भावाविर्भवनावधि ।
तत्र शास्त्रं तथा तर्कमनुकूलमपेक्षते ॥" इति ।

ईश्वराय सकृदुद्दाम[illegible]ऽभिलाषविशेषे, तूर्णं प्रीतित्वेन परिणमति, इयमपि पुनः प्रभ[illegible] भक्तिमूर्द्धन्यभूतायां रागात्मिकायां भक्तौ पर्यवस्यति । ईश्वरस्यानवद्यहृद्यालौकिकगुणगणप्रतिपादकानां शास्त्रीयग्रन्थानामालोचनया तद्गुणयुक्तानां [illegible] सम्यक्पर्यालोचनया समुत्पन्नं भगवद्गुणमुख्यं तत्र दृढमनुरागं जनयति । भगवत्प्रसङ्गः किल केनचिच्चमत्कारविशेषेण समनुस्यूतत्वात् स्वत एव हृदयमपि समाकर्षति । वज्रसारहृदया अपि केचिन्नास्तिकास्तन्नाम भावेन विद्रुतान्तरङ्गा [illegible] बिल्यादुन्माद्यन्तः समदृश्यन्त ।

अधमा भक्तिरियं हेतुं कामनाविशेषं कमप्युपादाय प्रवर्त्तते इति 'हैतुकीभक्तिः' उच्यते । 'ईश्वरो मह्यं सुखसम्पदमेतावतीं वितितार, वितरिष्यति च ततोऽधिकम्, – कतिधा स मां विपद्व्रातान् क्लेशसङ्घाताच्चोज्जहार ! – कृपावृत्त्या केन किलोपमातुं शक्यते सः ?' इत्येवं विधानि विचारजातानि समाश्रित्याङ्कुरिता प्रीतिः समुपकृतेरनुस्मरणेन शुभाकाङ्क्षया [illegible], निस्तर्कार्योदयार्थैककल्याणाभिसन्धानवती प्रीतिर्नूनमधमामेव भक्तिकोटिं प्रवेष्टुमर्हति, – या किल केवलमुत्तमायाः कोटेः साधनतया व्यवहरणीया । जन्मतः प्रभृत्येव महति बालभक्ते प्रह्लादे भक्तेरहैतुक्याः सम्यग्विकाशः समजनि । रात्रिन्दिवं स श्रीकृष्णस्य नामानि जग्राह, परं किमर्थमिति न विजज्ञौ । ध्रुवस्तु राज्यलिप्सया भक्तौ प्रववृते । 'ईश्वरः प्रार्थनापरेभ्यो निखिलमभीष्टं ददाति' – इत्येतदनुसन्धानमेव तं मार्गेऽस्मिन् पदं न्यधापयत् । तत्र [illegible] गभीरसमाधिना [illegible] तस्य पुरतो यदा भक्तवत्सलो भगवान् [illegible] वभूव तं वराय न्ययोजयत्, ईश्वरप्रीति[illegible] मनसि तस्य निरूढमेतादृशीमभिजगाम

[illegible]श्रीयमाणचेताः स भक्तिप्रमारम्भाभिप्राय-
मनुस्मारितोऽहं सगद्गद बभाषे –

स्थानाभिलाषी तपसि स्थितोऽहं
त्वां प्राप्तवान् देव ! मुनीन्द्रगुह्यम् ।
काचं विचिन्वन्नपि दिव्यरत्नं
स्वामिन् ! कृतार्थोऽस्मि वरं न याचे ॥'

भक्तिसुधोदयम् ।

अहो ! अपूर्वमिदमवसानम् ! हैतुकी भक्तिरपुनरा-
वृत्त्यै तिरोदधे। अपरश्चायं कश्चिद्भक्तप्रवरो देव्या
जगन्मात्रा प्रत्यक्षीभूय वराय प्रचोदितो न्यगदत् –

'मातः ! किं वरमपरं याचे
सर्वं सम्पादितमिति सत्यम् ।
यत्त्वच्चरणाम्बुजमतिगुह्यं
दृष्टं विधिहरमुखरजुष्टम् ॥"

सर्वानन्दतरङ्गिणी ।

कदाचिदहं हरिद्वारस्थं परमहंसं कामराजस्वा-
मिनं जिज्ञासितवान् – "परमेश्वराद्भवता किम-
भीप्स्यते ?" इति । सोऽवदत् – "आत्मनो मे
तस्मिन् गाढसमासक्तिमृते किमन्यदभिलषणीयं
विद्यते ?" इति । सत्यम्, स्वहृदयस्वामिनि प्रत्य-
गात्मभूते तस्मिन् समाधिगते, भक्तः किमन्यत्
कामयेत ? "मिलिन्दस्यासादितमकरन्दस्य का
खलु सलिले समपेक्षा ?" यावन्मानवास्तमिस्रानुगा
वर्तन्ते, तावदेव स संसारवासनां पुरस्कृत्य भग-
वन्तं पूजयति । ईश्वरप्रेमावलोकेन तु समुद्दीपिते
तस्य हृदयकन्दरे, प्रेममधुरिमाणमास्वादयन् स
भगवन्तमन्तरा किमितरमुपलिप्सेत् ? प्रीतिकारण-
मनुयुक्तस्य तस्य तदा प्रत्युत्तरमादृगेव प्रतिभाति
'प्रीतिप्रवणत्वादेव मामसमे तस्मिन् प्रीतिप्रवणम्'
इति । एवं कामनानिवृत्त्या "हैतुकी" भक्तिः "अहै-
तुकी" सम्पद्यते, ततः [illegible]मोक्षायाः
साधनमात्रमेवेति ।

सत्त्वादिगुणभेदादपि गौणी हैतुकी भक्तिः
सात्त्विकी, राजसी, तामसी चेति त्रिविधा भवति ।
निकृष्टतमायास्तमस्या राजसीमासाद्य पुनस्ताः
क्रमेण सात्त्विकीं समधिकर्तुं शक्या इयमपि परि-
पाकतः पूततमायां "मुख्यायाम् अहैतुक्यां" पर्य-
वस्यति । तथा चाह भगवान्

'अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥

गीतायाम् ९।३०।३

उक्ता त्रिविधा गौणी भक्तिरिदं नामुदाहरणो-
पन्यासमुखेन स्फुटीक्रियते: – पाटच्चरा लुण्ठकाश्च
दुर्गुप्सितस्यात्मनः समीहितस्य साफल्याय सम्प्रार्थ-
नमीश्वरस्य कुर्वन्ति । पुरा किल दस्युनिकायाः
स्वकीयापहारनिर्याणवेलायां कालिदेवीमपूपु-
जन्निति श्रूयते । साम्प्रतमपि बहवो मिथ्याभियोग-
विजयलाभार्थं देवतार्चनं [illegible]
[illegible]न्ते खलु मोहान्धास्तामसजनाः [illegible]
कृत्य समाधनाय, आर्तास्[illegible]
[illegible] परमेश्वरं प्र-
[illegible]
च [illegible]नन्दानुसन्धानमीश्वरं यज-
माना जनाः सात्त्विका ज्ञेयाः । इमे त्रयोऽपि भक्ति-
भेदा बाह्यमुद्देश्यमास्थाय तिष्ठन्ति । मुख्या न तन्तु
परागवस्तुनिरपेक्षतयैवात्मानं लभते । मुख्यायां
भक्तौ किल पारलौकिकसुखायापि स्पृहा नाव-
तिष्ठते ।

प्राकारान्तरेण पुनर्गौणाभक्तावधमापन्नाः आर्त्तो जिज्ञासुरर्थार्थी चेति।

कस्माच्चिद् विपद आपदुद्धरणकामनया करुणामीश्वरस्याभ्यर्थयमान आर्त्त उच्यते। वात्योपहततरङ्गिणीसंस्थितः विपन्नपोतारोही ननु दृष्टान्तत्वेनात्रोदाहर्त्तव्यः। प्रारम्भदशायां नेश्वरे भक्तिमान् परमेश्वरस्य सतत्वमवदानानि चावगन्तुमुत्सुकस्तदानुशीलनमातन्वानो जिज्ञासुराख्यायते। धनतनयसमत्वादिवरविश्राणनाय यो भगवन्तमर्थयते, सोऽर्थार्थी कीर्त्यते।

कथिताः सर्वेऽप्येते खलुभक्तानामधमश्रेणिषु परिगणनीयाः। परं निम्नभूमिकासु कियत्कालमनिशं कृताभ्यासानामुच्चकोटिनिविष्टाया भक्तेर्मुख्यायाः समासादनं सुकरमेव। दुःखाभिभवकाले भगवत्साहाय्यकाभिप्रायेण तदाराधनं विदधाना आर्त्ताश्चेद्भावमेवं संरक्षेयुस्तदा क्लेशातिपातनिरन्तरमपि भगवदाराधनपराः सन्तः क्रमेण मुख्यां भक्तिमभ्युन्नतिमधिगच्छेयुः। ग्रन्थेषु प्रकृतिदेव्याचेश्वरमनुसन्दधाना जिज्ञासवोऽपि क्रमशस्तत्प्रतिनिर्भरमानसाः सम्पद्य गौणीं भक्तिं मुख्यया परिवर्त्तयेयुः। अर्थार्थिनो भक्तस्य मुख्यभक्त्यधिकारित्वपर्य्यवसाने ध्रुव एव प्रकृष्टतममुदाहरणम्।

द्वितीयोऽध्यायः।

## भक्त्यधिकारगुणाः।

श्रीमद्भागवतस्यैकादशे स्कन्धे श्रीकृष्णेन गदितम्

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्।
न निर्विण्णोनातिसक्तो भक्तियोगोऽस्य सिद्धिदः २०।८

यावच्चित्तं सम्यग् द्वापरेणान्धकारि नाल्पमपि भगवदभिमुखं सम्पद्यते, दूरेऽस्तु तावद्भक्तेरुद्भवकथा। नैरन्तर्य्यासम्भवे यथावकाशमन्तराऽपि मनसो भगवत्प्रावण्यं भक्तिसम्पत्तौ बीजभावमापद्यते।

( क्रमशः )

रामस्वामी

---

## भूश्चलैव

पृथिव्या गतिरस्माकं चक्षुरादिभिः कैरपीन्द्रियैर्नानुभूयते। कोऽपि तां चक्षुषा भ्रमन्तीं न पश्यति, न कोऽपि तस्या गतिशब्दं शृणोति, नापि त्वचा तद्गतिः स्प्रष्टुमपि शक्या। अत एव केचन तस्या गतिमत्वमङ्गीकर्तुं नेहन्ते स्म, साम्प्रतमपि बहवो नेहन्ते। भूमेर्गतिमत्वेऽविश्वसन्तो नभोङ्गणस्थानां सूर्यादीनां गतिं परिकल्पयन्ति, तेनैव च मासर्तुदिनरात्रिपरिवर्त्तनानि समर्थयन्ति। अत्र विचारणीयम्, पृथिवीपरिभ्रमणेन दिनरात्रिव्यवस्था समुपपद्यते वा, अथवा सूर्यादीनां प्रत्याहिक्या गत्या। उभयोर्मध्ये कस्य साधुत्वं कस्य चासाधुत्वमिति विवेचनीयम्। कश्चात्र नव्यप्राचीनानां ज्योतिर्विदां सिद्धान्त इत्यपि निरीक्षणीयम्। अत्र लेखे प्रथमं काश्चिद्युक्तय उपन्यस्यन्ते, ततश्च प्रत्यक्षादिप्रमाणैः पृथिव्यागतिमत्त्वं प्रमाणयित्वा पदार्थविद्यासूक्तय उदाहरिष्यन्ते।

(१) यदि पृथिवी स्थिरेतिमत्वा सूर्यादिपदार्थानां प्रात्याहिकी गतिः स्वीकृता भवेत्तर्हि नक्षत्रग्रहोपग्रहादीनां विभिन्नातिस्वीकारात् दिनरात्र्यादीनां व्यवस्था नोपपद्येत्। ये गगनस्थाः सूर्यादय-

श्चतुर्विंशतिहोरायां पृथिव्याः प्रदक्षिणां कुर्वाणाः प्रतीयन्ते, ते न पृथिवीवत्स्थिराः। ततश्च समकालमेव ते पृथिव्याः परिभ्रमणं कर्तुं न शक्नुवन्ति ग्रहा नक्षत्राणि च दूरान्तिकस्थितया मन्दवेगवद्गतिसम्पत्त्या च न तेषां समकालमेव सुशकं परिभ्रमणं स्वीकर्तुम्। अतश्चावश्य स्वीकर्तव्यं पृथिवी चलैवेति। भूमण्डलान्नक्षत्रादयो बहुदूरे तिष्ठन्ति अतश्चैषां गतिवार्ता संख्यया मनसापि च निर्द्देष्टुमशक्या। दूरस्थैर्नक्षत्रैः सकलैरपि दिवसेनैकेनैव भूमण्डलस्य यावता वेगेन प्रदक्षिणीकर्तुं शक्येत, तावता वेगेन निखिलमपि विश्व परस्परसङ्घर्षात् चूर्णीभूत भविष्यति। यतो हि दिवसैकसाध्यप्रदक्षिणायै वेगाधिक्यमपेक्ष्यते। अपेक्षिकनिकटस्थानामपि नक्षत्राणां पृथिवीमण्डलस्य प्रात्याहिकप्रदक्षिणाकृते यावान् वेगोऽपेक्ष्यते, तावतैव वेगेन पृथिवीमण्डलमिदं चूर्णं भविष्यतीति वेगरहस्यविदां मतम्। सूर्यो हि पृथिवीमण्डलात् सार्द्धनवकोटिक्रोशे तिष्ठतीति। इयद्दूरस्थस्य सूर्यस्य दिनेनैकेन पृथिवीप्रदक्षिणवार्ता नितान्त पृथग्जनकल्पनेव विरसा।

(२) सूर्यो यदि प्रतिदिनं पृथिव्याः परिभ्रमणं विदध्यात्तदा स नूनं प्रतिनियतभूमण्डलमध्यभागस्य निरक्षप्रदेशस्य वेष्टनपूर्वकमेव परिभ्रमेत्। अत्र वैज्ञानिका वदन्ति एको जडपदार्थो यदापरं जडपदार्थं प्रदक्षिणीकरोति तदा द्वौ पदार्थौ समतलस्थितौ परस्परं संस्थितौ तिष्ठतः। तदा तावेकरेखास्थाविव प्रतीयेते। इत्थमेकः पदार्थोऽपरं मध्यस्थं स्थिरपदार्थं नियतरेखया परिभ्रमति। इत्थं सूर्यो यदि पृथिवीं परिक्रामेत्तर्हि तद्भ्रमणकक्षयाऽवश्यभूमण्डलमध्यवर्त्तिन्या भवितव्यम्। इत्थं सदैव प्राची सूर्यस्योदयस्थान प्रतीची चास्तस्थानं नियतं स्यात्। परं न तथा सर्वदा दृश्यते। एकस्मिन् वर्षे केवलं दिनद्वयमेव सूर्यो भूमण्डलस्य नियतमध्यभागेन उदित्वा भूत्वा नियतमध्यभागमासाद्यास्तमेति। परन्तु मासेषु च पृथिव्या दक्षिणपश्चिमाशोऽस्तमेति सूर्यः, अपराश्चांशे च पूर्वोत्तर उदयन् पूर्वोत्तरं चास्तं गच्छन् दृश्यते। इत्थं सूर्यस्य प्रात्याहिकगतिस्वीकारे न स्यात्तस्योदयव्यवस्था।

(३) वृहद्वस्तु क्षुद्रं वस्तु न परिक्रामतीति नियमो जडपदार्थानाम्। सूर्यो हि पृथिव्यपेक्षया महान्, अत एव नायं पृथिव्या प्रदक्षिणीकर्तुं न शक्नोति। अपि तु पृथिव्येव तं प्रदक्षिणीकर्तुं शक्नुयात्। यदि न स्वीक्रियेत् पृथिव्या गतिमत्त्वं तदा दिनरात्र्यादिव्यवस्थापि नोपपद्यते। पृथिवी नृत्तासामयपि प्रतिवत्सरं सकृद्भ्रमति, अत एव च ऋतुपरिवर्तनं भवति। मण्डलाकारा यदि पृथिव्याः कक्षा भवेत्तदा ऋतुभेदोऽसम्भव एव स्यात् यतो हि सूर्यं परिभ्रमन्ती पृथिवी यदा सूर्येण सम्बन्धविशेषमासादयति तदैव ऋतुपरिवर्तनं भवति।

(४) बुधः सूर्यादष्टाशात्यधिक दूरं न गच्छति शुक्रोऽप्यष्टचत्वारिंशांशाद्दूरस्थो न भवति। यद्यपि पृथिवीमवलम्ब्यतो परिभ्रमतः, इत्थ सूर्यादष्टादशशतांशमिता दूरता सम्भाव्यते, परं नैव कदाचिदपि तथाऽभवत्।

(५) प्राचीं प्रतीचीं वा गच्छन्तो ग्रहाः कचित् कचिद्दश स्थिरा इव प्रतीयन्ते। इदं तेषां गतिवैचित्र्य, न यथार्थतयावगन्तव्यम्। बुधशुक्रमार्गं दूरतः परित्यज्य पृथिवी सूर्यं परिभ्रमति। ततश्चे-

त्थ प्रतीयते। अस्माकमिन्द्रियागोचरं पृथिव्याः सञ्चरणमपि पृथिवीश्चलैवेति स्वीकारो न स्याने। क्षुद्रो जीवो विपुलपरिणाहे वस्तुनि तिष्ठन् न तदाकृतिं विज्ञातुं प्रभवति। नहि वृक्षस्थिता पिपीलिका वृक्षकम्पं विज्ञातुं शक्नोति। अतश्च नास्माभिः प्रत्यक्षीकर्तुं शक्यते पृथिव्याः प्रात्याह्विकी गतिः। तस्माच्चला पृथिवीति सिद्ध्यति।

वेगवद्यानारूढेन पार्श्वस्थाः स्थिरा अपि वृक्षादयो गच्छन्तीव लक्ष्यन्ते। अयं दृष्टभ्रमकृतो दोष इति नात्र कश्चिदपि सन्देहः।

अत्र केचिद्वदन्ति, पृथिवीपरिभ्रमणात्तत्रस्थाः पदार्थाः कथं न परिभ्रश्यन्त इति

नूनमियं शङ्का केषाञ्चित् कौतूहलं जनयेत् परं सर्व एव पदार्था आकृष्टिनामकेन गुणेन परस्परं सम्बद्धाः। पृथिवीस्थाः सर्व एव पदार्थाः आकृष्टिनामकेन गुणेन पृथिव्या सह समसक्ता स्तिष्ठन्ति। इत्थं न भवति पृथिवीस्थेषु पदार्थेषु पृथिवीभ्रमणकृत ईषदपि विकारः।

यदीयं गतिमती पृथिवी तदा कथञ्च श्रवणविदारणं घोरं शब्दमुत्पादयति इति केचिद्वदन्ति, गमनादिक्रियया कथं शब्द उत्पद्यत इति विचार्यते विषयोऽयं संक्षेपेण। यदा कयोश्चित् पदार्थयोः परस्परमाघातो भवति तदा शब्द उत्पद्यते, वायुव्याप्ते भूमण्डले, वायुना सङ्घर्षः पदार्थान्तराणां जायते, तत एव चोत्पद्यते शब्दः। पृथिवी हि शून्येऽवास्थिता परिभ्रमति, तत्र हि बाधाभावात्कथं शब्दा उत्पद्यन्ताम्।

पृथिवी गच्छन्ती वायुना कथन्नाहन्येत इति केषाञ्चित्कथनं न सम्यक्, यतो न भूवायुः स्थिरः, नापि पृथिवी तन्मध्यतो गच्छति। किञ्च वायुरपि पृथिव्याकर्षणाधीनः। सोऽप्याकृष्टः पृथिव्या सहैव परिभ्रमति। अतश्च न भवति तयोः परस्परमाघातः।

यदि पृथिवी प्रतिविकलं पञ्चसहस्रं क्रोशान् गच्छति, यदा पर्वतशिखराद्, अट्टालिकाशिखराद्वा पातितं वस्तु कुतो न दूरे पतति पर्वतस्याट्टालिकाया वा मूल एव कथं पतति, संयुक्तपदार्थयोरेकक्रियायापरस्यापि पदार्थस्य क्रियानुमता भवति। पोतगमनेन पोताधिरूढस्य पोतसंयुक्तानाञ्च पदार्थानां गमनमनुमतं भवति। स्वाधिष्ठानाच्च्युतं वस्तु यावदाश्रयान्तरं नासादयति तावत् तत्स्वमपि पूर्वाधिष्ठानेनैव सह गच्छति। एतेन तैस्तुष्णां स्थैर्यमिति निवेदयामः।

युक्त्या पृथिव्या गतिमत्त्वं प्रमाण्य साम्प्रतं शब्दप्रमाणेन तत्साधयितुं प्रक्रम्यते।

निमामनभिषिराम्मिन्द्रभूमिं महीमपरां सदने ससत्थ।

अस्तभ्नाद्यां वृषभोऽन्तरिक्षमर्षन्त्वापस्त्वयेह प्रसूता। (ऋग्वेदः)

अत्र मन्त्रे "इदुषिराम्" गतिमतीम् भूमिमित्यनेन स्वतः प्रमाणित भवति पृथिव्या गतिमत्त्वम्।

महत्सधस्थं महती बभूविथ महान् वेगएजथुर्वेपथुष्टे।

महांस्त्वेन्द्रो रक्षत्यप्रमादम्।

सा नो भूमे प्ररोचय हिरण्यस्येव सन्दृशिनो द्विक्षत कश्चन" (अथर्ववेदः)

अयं मन्त्रः पृथिवीमहिमानमुदीरयति, अत्र च पृथिव्या महान् वेगः स्पष्टः प्रकाशितो वर्तते। अचलेति पृथिव्या नामान्तरं पश्यन्तः केऽपि नास्या गतिमत्त्वे विश्वसन्ति। तैरित्थमवधेयम्। अत्र-

क्रान्तानि, परमाकाशकालदिक्षु नास्ति जातिरूपो धर्मः। रूपरसगन्धस्पर्शसंख्याः परिमाणानि पृथक्त्वसंयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषप्रयत्नाश्च गुणाः। अत्र चकाराद्धर्माधर्मसंस्कारादयो गृह्यन्ते। अतश्चतुर्विंशतिगुणाः। तत्र संस्कारान्ताश्चतुर्दशगुणाः पृथिव्याम्, रूपरसस्पर्शसंख्यास्नेहपरिमाणपृथक्त्वसंयोगविभागपरत्वा-परत्वद्रवत्वसंस्कारा एते दशगुणास्तेजसि। स्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा नव वायौ, शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः षडाकाशे, संख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्च कालदिशोः संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्दश जीवात्मनि। संख्यापरिमाणसंयोगविभागपरत्वापरत्वसंस्काराः सप्त गुणा मनसि। ज्ञानेच्छाप्रयत्नसंख्यापरिमाणपृथक्त्वसंयोगविभागा अष्टौ गुणा परमात्मनि।

पृथिव्यप्तेजोवायवो द्विविधाः कार्यकारणभेदात् कारणरूपेणैते नित्याः कार्यरूपेण चानित्याः। आकाशकालदिगात्मानो व्यापकाः मनस्त्वणुरूपं सावयवमनित्यञ्च। एतेऽपि कारणकार्यरूपेण नित्या अनित्याश्च। सावयवाना कार्याणामेषांभेदाः शरीरेन्द्रियविषयाः। पार्थिवशरीरमस्मदादीनाम्, जलीयं वरुणलोकवासिनाम् तैजसमादित्यलोकवासिनाम् वायवीयं शरीरं वायुलोके प्रसिद्धम् नासिकाजिह्वाचक्षुस्त्वगिन्द्रियाणि यथाक्रममिन्द्रियाणि, सप्तरूपाणि, पृथिव्याम् भास्वरं शुक्लं जले अभास्वरं शुक्लं तेजसि मधुराम्ललवणकटुकषायतिक्तभेदात् षडात्मना भिन्ना अपि रसाः पृथिव्याम्, जले तु मधुरो रसः। पञ्चविधानि कर्माणि उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि। नित्यमेकमनेकानुगतं सामान्यम्, नित्यद्रव्याणि परस्परभिन्नानि तानि जातिमत्वेन विशिष्यन्ते नित्यसम्बन्धः समवायः एतद्दर्शने द्वे प्रमाणे, प्रत्यक्षमनुमानञ्चेति संक्षेपः।

अन्येषां संस्कृतग्रन्थकर्तॄणामिव वैशेषिकदर्शनकारस्य कणादस्यापि समयो न शक्यते निश्चेतुम। अयं कणादो महेश्वरप्रसादमधिगम्य तदाज्ञया रचितवान् दर्शनमिदमिति प्रसिद्धा किंवदन्ती। उदयनाचार्येऽपि स्वीकरोतीमाम्, साम्प्रतदर्शनस्यास्य न किमपि प्रत्नभाष्यमुपलभ्यते। लङ्केश्वरेण रावणेन प्रणीतं किमपि भाष्यमिति शाङ्करभाष्यतः स्फुटं प्रतीयते, तत्र हि शङ्कराचार्येण रावणभाष्यमतमेव खण्डितम्। प्रशस्तपादाचार्यविरचितः पदार्थधर्मसंग्रहो भाष्यं वैशेषिकसूत्रस्येति केऽपि वदन्ति, परं नैतत् सम्यक् न सूत्राणि व्याख्यातानि किन्तु सूत्राभिप्राया एव संगृहीता वर्तन्ते, प्रशस्तपादाचार्योऽपि संग्रहनाम्नैवात्मनो ग्रन्थमभिदधाति, न भाष्यनाम्ना, उदयनाचार्योऽपि स्वीकरोत्यर्थममुम्। पर साम्प्रतमुपलभ्यमानेषु ग्रन्थेषु पदार्थधर्मसंग्रहः सर्वेभ्योऽपि प्राचीन इति निःसंशयं वक्तुं शक्यते। उदयनाचार्येण किरणावली श्रीधराचार्येण च न्यायकन्दली नाम्नी टीका विरचिता पदार्थधर्मसंग्रहस्य। इत्थमेव वल्लभाचार्य वर्द्धमानोपाध्याय मथुरानाथशङ्करमिश्राद्यष्टीकाकारा समभवन् दर्शनस्यास्य। विज्ञानभिक्षुणा वैशेषिकवार्तिकमिति किमपि पुस्तकं विरचितम् यस्य साम्प्रतं न सर्वत्र प्रचारः।

देवेश्वर शर्मा (विद्याविनोदः).

सम्राड् जयोजराजस्य विजयकल्याणाभ्यर्थनप्रस्तावे जयपुरे राजकीय श्रीमद्गोविन्दमन्दिरे पठिता ।

## जयोऽर्जशुभाशंसा ।

लक्ष्मीविलासवसतिर्वशतारिसार्थः
सर्वप्रजाहितरतिर्नयसाधितार्थः ।
विद्यालताश्रयतरुः पुरुषार्थभाजः
सम्मोदयत्वयतु पञ्चमजार्जराजः ॥ १ ॥

( अथ पञ्चभिः कुलकम् )

लेशोऽपि येन निहतोऽपरपराभवस्य
काष्ठाऽप्यदर्शि च निजस्य परा भवस्य ।
मुञ्चन्ति यस्य सुभटाः प्रधने जयेन
निघ्नन्ति शत्रुनिकरांश्च धनञ्जयेन ॥ २ ॥
पद्माऽधिवासरुचिरस्य विशालतेजो-
भाजः सुखं तनुभृतः सृजतोऽन्यवृद्धैः ।
लोकप्रभोः प्रसन्नसुहृन्नयनोज्ज्वलस्य
यस्य प्रजापतिपदाऽऽस्पदता स्फुटैव ॥ ३ ॥
विस्तारभाजि जगदाभरणप्रभावे
यस्य प्रशस्य यशसीन्दुविभा दधाने ।
अन्तःस्फुरद्रिपुनृपालकदुर्यशोऽपि
पुष्णाति नित्यमुरुकालकलङ्कलीलाम् ॥ ४ ॥
दण्डप्रचण्डमखिलखण्डनदुष्टदर्पः
सर्वत्रतापनतयाऽऽनतपातितारिः ।
प्रथनन् गुणैः सकलमानसमौक्तिकानि
यश्च क्षमां मनसि पादतले च धत्ते ॥ ५ ॥
तां रोहिणीमिव सतीं द्विजराजराजो
गङ्गामिवाऽमलजलां पयसामधीशः ।
मेरोः सितामपि च रागभृतां दधानः
स्वाङ्के नृपः स विजयश्रियमाशु विन्देत् ॥ ६ ॥
यतःप्रभुर्जेन जयेन सद्यशो-
रमाधराऽऽभादिकमर्जयत्ययम् ।
यशः प्रसारैर्विहसन् कलानिधिं
प्रयात्यतो जार्जपदाभिधेयताम् ॥ ७ ॥
मा मान ईः श्रीधनमुच्यतेरी
मेरीति सिद्धं जनितं समासे ।
यन्मानमेषाम्यविभा धनञ्च
सम्मन्यतेऽतोऽभिहिताऽस्ति मेरी ॥ ८ ॥
श्रीजार्जराजचण्डप्रतापवह्निरहर्निशं ज्वलति ।
चित्रं यदस्य रिपवः शीतार्ता इव विकम्पन्ते ॥ ९ ॥
अर्जुना यशासि वैरिषु कालः
सज्जनेषु गुणवत्सु च रक्तः ।
इत्यनेकसभवर्णधरोऽपि
ह्येष्यमेव विदधाति विवर्णम् ॥ १० ॥
एकदैव जगतीतलेऽखिले
भूभुजोऽस्य नवकीर्तिकामिनी ।
सम्भ्रमत्यपि सुधीवरैः सती
वर्ण्यतेऽयमतिविस्मयो मम ॥ ११ ॥
कुमार्गसंस्थापितदण्डलब्ध-
स्थितिः प्रसिद्धः सकलावनीन्द्रे ।
वृद्धोऽस्य शौरिः खलु धर्मपादः
शौर्यश्रियो गोपतमोविदः ॥ १२ ॥
दिवानिशं जाग्रति जार्जभूपतेः
प्रतापसूर्यं च यशः कलानिधौ ।
विचित्रमेतद् यदरातिमण्डलं
तमः समस्तं परिभूय तिष्ठति ॥ १३ ॥
सुधीरधीः सद्गुरुमानशोभनः
सुधांशुगम्भीरो काचप्रकाशनाक ।
सुविग्रहोऽविग्रहभूत प्रतापवान्
कलानिधिर्जार्जनृपः किमुच्यताम् ॥ १४ ॥
एतस्या मननीयभारतभुवो ये ये सुपुत्रा निज-
स्वामिद्रेमभृतान्तरा रणभुवं याताः समुद्रान्तराम् ।

ते ते जर्मनशर्मधर्मस्वला गौरैः सम सम्मताः
कुर्युः शत्रुमृगेषु सन्ततमया शार्दूलविक्रीडितम्॥१५॥
अस्त्रौघौद्वेलवेलज्ज्वलनजवभव-
उज्वालजालैः कराले।
कालेनाऽऽगत्य दग्धैः प्रतिभटकटकैः
कर्टकैर्वा विशुद्धैः॥
संग्रामग्राममार्गेऽप्यविदितगमन-
श्रान्तमत्यन्तरक्ता।
छिन्देच्छीघ्रं जयश्री रिपुरुधिरशिरा-
स्रग्धरा जार्जराजम्॥ १६॥
प्रमदभृतजनौघै र्लोचनैः पीयमानः
स्मितकरकलिकाभिः कीर्तिभिश्चीयमानः।
शुचिरमभि जयश्रान्यायवाँश्चारुकायः
क्षितिमवनिपजार्जः पातु मेरीसहायः॥ १७॥
रामचन्द्रकविनोदितामिमां
जार्जराजविजयाभिशस्तिकाम्।
सन्निवेश्य मतिमिन्दिरापतौ
धीधनाः! कुरुत कंठसङ्गिनीम्॥ १८॥
—कुशलापरनामा रामचन्द्रशास्त्री

---

## पद्मावती-परिणयचम्पूः

पूर्वतोऽनुवृत्ता

[ श्रीमता महामहोपाध्याय रघुपतिशास्त्रिणा निर्मिता ]

दृष्टाऽदृष्टाधिभावेन साऽऽकाशनृपदारिका।
हारिकाऽखिलसमूहस्य देहप्राणविदारिका॥ २२॥
यदि सा लभ्यतां बाला तदेदं ध्रियतां वपुः।
आयुः पुरुषकारेण मानिनी के विनाऽधनम्॥२३॥
सङ्कुलं भालयत्यावङ्कुकेऽधारि धूर्यम्।
कान्यन्त्यागमं तस्या आगमः श्रोतुमिष्यते॥२४॥
कथयामि कथां दिव्यां शृणुम त्वयतापथाम्।
प्रपद्यतस्तवस्य मे प्राणत्राणाय पण्डिते॥ २५॥

पुरा किल लङ्कामलङ्कारयन्दशशिरा विंशतिबाहुः क्षपाचरस्त्रिदशानबाधिष्ट। तदुपद्रुतानां दिवौकसां व्यसनमपनयन् परःपुरुषो मनुजेषु दशरथनृपतेर्जननमीहमानो जनकजातापरां लक्ष्मीं सीतेति नाम्नीमुपयेमे। विमातृवशवदस्य पितुर्वचनं मानयन् सुरकार्यचिकीर्षया दंडकारण्य पत्न्याऽनुजेन च सह प्रविष्टः परमकारुणिकः प्रभुस्त्रिभुवनत्रासकारकदनुजदैत्यरक्षसां वध प्रतिजज्ञे। मुनिभिरभ्यर्थितो गोदातटे पञ्चवट्यां पर्णशालायामुवास कियन्तं कालम्। तत्र नातिदूरे जनस्थाने खरादयो देवारयो रावणानियुक्ता निवसन्ति स्म, यथाकामं रममाणाऽरण्येषु दशवदनानुजा शूर्पणखानाम राक्षसी यदृच्छया पञ्चवट्यां तमुद्देशमाजगाम,यत्र प्रिययाऽनुजेन समं समक्रीडत राजशेखरो रामचन्द्रः। अभितुकुमारं राजकुमारं मर्दितमार तनुभासा तारं, त्रिभुवनजातवधूनामङ्के वामे दधतं सा॥
वीक्ष्य पर चकमे रतिनायक
सायकदत्तपदा सपदि॥
प्रकटितमायिकरूपकला-
सविधे समधावदसावबला॥२६॥
त्यज कामिनी भज माऽऽनिनीं
वृजजन्मनःफलभागितां
अय लोकसुन्दरसुन्दरी
कुलशेवधावनुरागिताम्।
तव मत्यंतामधराम्
तद्द्वयसंविधानबलादहं
व्यपनीय रन्तुमिहोत्सहे
चिरमोप्सिते जगतीतले॥ २७॥

स एव देवः कुरुतादघानां
प्रत्यूहराशिस्फुरदस्नमघानाम्।
विनाशमाशास्तु भूवराता
च्युता अभिप्रेतमदभ्रभूत्यै ॥ ३ ॥

इत्यनेकधा विचारयन्ती निद्रामभिप्रपेदे। सरस्यां स्वादीयः सलिलसुभगायां सुरसरित्सरस्वत्यास्तस्विन्यां सुमन उदयोत्कोचकलिकाम्। अपश्यत्स्वप्नेऽसौ कुलकुमुदिनीं हंसपृथुकप्रवीनान्तःकाण्डां मृदुतरमृणालादभुतननिम् ॥ ४ ॥

व्यचारयच्चेतसि जातजागरा
व्यलोकयंस्वप्न उदात्तभावनः।
मयैधनीय प्रभुकार्यसिद्धये
विधिस्तदुत्साहमतस्तनोति मे ॥५॥

अथ कोरकितासु कुमुदिनीषु विकचतां कलयतीषु कैरविणीषु कोकशोकापनोदने काले निर्मुक्ताकोच्चितस्तनतःप्रज्वलितच्वोकतोकेषु मलिनिमानमालम्बति क्षपाकरे तमस्काण्ड दालयतुमुदयशिखरिणमारूढ भगवति मरीचिमालिनि निर्वर्तितावश्यकविधिर्बकुलमालिका स्वामिकार्ययोग्यता सती किरातीभूता भूतान्याह्लादयामास। तथाहि। कुन्दकलिकाभिः कबरीबन्ध बन्धूककुसुमदलेनालिकं कर्णिकारैः कर्णौ तिलप्रसूनेन नासां वासांसि नील्या गुञ्जाभिर्वलयान्कुवलयावलीभिरुर इन्दीवरकाञ्च्या कटिं कपर्दिककिङ्किणीभिः पादौ कुङ्कुमाकातुषरसेन चरणतलमेकान्ततः समस्कार। मुखे वीटिका पाणिदेशे कृपाणी
प्रपाणोति यस्या अभीयाय वाणी।
तुरङ्गं समारुह्य गन्तुं प्रवृत्ता
नमस्कृत्य विघ्नेशवाराहविष्णून् ॥ ६ ॥

व्रजन्ती यथाऽऽदिष्टमार्गेण सुभ्र-
रतीत्याटवीमापतच्छम्भुधाम।
यदापोतपाथोधिराधिव्यधायै
स्म निर्माति नेदिष्ठशर्वप्रसादम् ॥ ७ ॥

सस्मार सा स्मारस्ति प्रभुर्यद्धि-
लोकयतां भीमभुवो विभूतिम्।
ऐधिष्ट सङ्क्रान्तुमवातरत्पुन-
र्हृयादय वेदकमद्रमावना ॥ ८ ॥

अयासकोष्टावनावर्वासावतीर्णाबला ततः।
तुरङ्गमायम्यनगे गिरीशगृहमभ्यगात् ॥ ९ ॥

तत्र च स्वर्णमुखर्यां स्रोतस्विन्यां स्नायं स्नायमुत्सर्पतां स्मारं स्मारमुपजल्पतां ध्यायं ध्यायमनुजल्पतां स्वर्गसुखाय वपतां तपतां तनूनपाद्भिर्निरवधौ समाधौ स्वपतां त्रपतां धर्मराड् वेपतां कालः कल्पतां परमयोग इत्यनुगमवतां यमवतां नियमवतां सममवायेनान्तःप्रविशन्ती मध्ये मन्दिरमवलुलोके यायजूकजंजपूकविप्रलोकम्।

एकतो हुतहुताशनहेती-
रन्यतःशिशिरनीरभरोतीः।
ध्यानभावितमनःकृतिकान्तं
साददर्श परतोऽर्धनिशान्तम् ॥१०॥

नत्वा शिवार्चामनुविप्रवृन्दं
प्रणम्य सा पश्चिमकक्षिकायाम्।
विलोकयामास कुमारिकाणां
विकारिकाणां व्रजमेकदेशे ॥ ११ ॥

वरिवस्यन्ति विप्राणां वृन्दं पर्यायतो यतः।
स्वानुरूपक्रियोपेतास्तामनो जगृहुः स्त्रियः ॥१२॥
अनग्निकाभिः सेव्यन्ते यत्राग्निपरिचारकाः।
नग्निकाभिः कृतातिथ्या हसाः परमपावनाः ॥१३॥
पप्रच्छ ता विस्मयेन बकुला मोः कुमारिकाः।
कुतो यूयं कथं यूयं किं यूयं वनवेश्मनि ॥ १४ ॥

आकर्ण्य तद्वचो बाला एकमेवोत्तरं ददुः।
अयि जानीहि निपुणे प्राप्ता अस्मान्वियत्पुरः ॥१५॥
त्वं पुनर्ब्रूहि कं देशं विरहय्य समागताः।
विपिनान्तरमध्यास्य किं चिकीर्षसि कामिनी ॥१६॥
उवाच बकुला बाला भवतीनां समुद्यमम्।
निश्चित्य वकाऽस्मि निज वृत्तं निखिलमादितः १७

अथ ताः सम्माननीयः प्राघुणिको जनो जानाति मिथोऽनुमन्त्र्य व्याजह्रुरयि श्रोतृरसिके श्रूयतामस्मत्सम्बन्धिनी गाथा। अस्ति समस्तसामन्तकिरीटकोटिनिघृष्टपदनखरः सदङ्घ्रोऽपि न बालितनयो धरणीपालोऽपि न कुजातसान्धराकाराऽपि न नभो रामइव कुशलवाचितकथ आकाशराजो नाम जगतीपतिः।

अपेक्षते विसर्गाय नावसान नवा स्वरम्।
यो यस्य नोपसर्गाय क्रियायोगेन भूयते ॥१८॥
अरीतिरागिणीरीतिर्यस्य नोतिरनीतिकृत्।
सर्वमेवाद्भुतं यस्य वनेऽप्यवनशीलता ॥१९॥
यो महीतलमध्यास्यापि पुरन्दरप्रभुत्वं प्रथ

यति। तथाहि।

सदारम्भागमवतीं यस्तनोति सदावनीम्।
स्वरुजयति सत्काति दानवाराभिपातनात् २०

तस्य च शक्रस्येव पौलोमी महाविष्णोरिव लक्ष्मीः शम्भोरिव हिमतनया हृदयानन्ददायिनी धरणीनाम धर्मपत्नी विजयतेतराम्। तयोश्च समस्तविषयसुखं समश्नुवानयोरपत्यहेतवे यत्नवतोर्विधेन वधात्तेनावनीता दुहितृरत्नं प्रेमवनीस्तनयरत्नं च ददुरालोत्, समैधिष्ट चाचिरायैव विनयौदार्यादिसगुणगणैरतीत्य जगतीत्रयवेतनानि चेतनानि।

पद्मावतीपरापद्मा तस्य याऽयोनिजा सुता।
पित्रोर्बालाह्लादयत्येकं सर्वस्य मनुजन्मनः ॥ २१ ॥

अवाप्य यौवनाभ्यर्णवयःप्रत्यापिन वयः।
बिभर्ति सा यल्लावण्य दृष्ट्वावेदनतत्परः ॥ २२ ॥
अद्यत्वे सा गतवती काञ्चित्कलुषितां दशाम्।
दुःखाकरोति पितरौ सुतरां मनोधिक्क्रियाम् ॥२३॥
तस्यास्तापशमनार्थं पार्वत्याः पुरोहिते।
उपादिशन्पुरोजाता अनुभूताः पुरोहिते ॥ २४ ॥
अवाप्य भूपतेराज्ञां विप्रवितरणशालिनः।
अत्र स्मरारिसेवार्थं प्राप्ता अस्मानवाह मेऽ ॥२५॥

केनास्ति दूना किलकामिनी सा
कुतः पुरादूरतरं पुरारिम्।
समर्चितुं प्राप्तवती जनाय
इति हृय भ्रान्तमना यद त्वम् ॥ २६ ॥
शृणु त्वदीयप्रियतार्थेन
प्रयाण्यगार्तिप्रणयेन गीतम्।
यदाकलय्य द्रुमुर्नामस्तिवाले
भविष्यसि प्रीतमना नितान्तम् ॥२७॥
सा नैकदा कुमारी
वसन्तलक्ष्मीविलोकनस्योत्का।
विपिने पितुर्नियोगात्
सम सखीभिर्जगाम तत्र चिरम् ॥ २८ ॥
विजहार सारमार्थ्या
ततः परवृत्त्य सङ्गता सदनम्।
अचिकित्स्यगदाभूता
सवयां तापकारिणी नूनम् ॥ २९ ॥

तथाहि।

चन्द्राच्चन्द्रागाभियाति मन्द्राद्
गीताच्च सङ्ग्रस्यति वारिजाते।
धृतिं न बध्नाति समीरणेऽपि
रणे पिनद्धं च भियाऽविजाते ॥ ३० ॥

तनौ तनिमता मता परमतापभूव्याहृतौ
मितत्वममितत्विष श्रयति तालसालम्बनम्।
जिघृक्षतु सहृ तां चटुलचक्षरम्भोभवे-
निरन्तरपयः स्रुतः कुमनसां न साधीयसी ॥ ॥
भुनक्ति यदनोदनं किमपिकोकशाकोन्मुखी
व्यनक्ति तदनोदन निजमसखीमपर्यास्वपि।
स्वतः समनुकलितप्रियपदा वयस्या यदि
श्रमेण फलितेनता अभियुनक्त्य नामाप्यसौ ॥ ३२ ॥

तादृशीं च तस्या अवस्थामवलोक्य भृशं व्याकुलः पृथिवीपालतान्त्रिकैर्मान्त्रिकैश्चिकित्सकैश्च तां चिकित्सयितुमन्तःपुरपरिजनानाज्ञापयामास। तेषु च मिलितेषु कोऽपि वदेश्येको भूदेव एवमवादीदेव सिद्धस्य शिवलिङ्गस्य सपर्यया स्वस्था भविष्यति भवतः सुतेत्याकलय्य महीमहेन्द्र एतस्मिन्नु देशे वैधेन विधिना सदाशिवं प्रसादयितुं विप्रान् प्रेषयत्तेषां च परिचर्यायां अमुं तदन्तरङ्गसखीजनं च। एतद्ध लिङ्गं परमप्रसिद्धिमहिम्ना कुम्भयोनिना महर्षिप्रवरेण संस्थापितं बहुशोऽनभूतातीन्द्रियचर्चितं राजशेखरेणेति परावश्वासवता तेन विप्रवाक्यमनुस्मरताऽनुष्ठितमित्यस्माकमुदन्तः श्रीमतीचाग्रे प्रमाणमिति कथयित्वोपरतिमगच्छन्। श्रुत्वा च ताभ्य इति वृत्तं किञ्चिद्विचार्यावोच चतुरा श्रीनिवासाभिधानो देवेशो वर्तते पर्वतप्रदेशे यदि स भवतीभिः श्रुतो भवेत्तस्य चास्मि परिचारिका कुतोऽपि कारणादभ्यागताऽस्मि देशममुं तन्मां प्रापयत स्वां राजमहर्षीं समवधारयत च नवकिशोर्याः स्वस्थतामापन्नां प्रकृतिं, हेतुं च तत्रैव वर्ण्यमानं श्रोष्यथेति तयाऽभिहितं समाकर्ण्य साकमेव सुहृद्भूतया सर्वा नगरमभि प्रत्यतिष्ठन्त।

ताभिः सह प्रविष्टा नगरं
नगरन्ध्रनोऽनुचलिता सा।
तासामतिमतिभासां नासां
चक्रे कथाभिरपकृनुकात् ॥ ३३ ॥
विलोकयामास पुरं पुरन्ध्री
यदन्तरुन्मेषधियं नरन्ध्री।
तदापदास्तु बहिरेव तिष्ठस्ता-
लैस्तमालैर्वृतिमाततान ॥ ३४ ॥
कलावनाप्तेऽन्तरनुप्रवेशं
कलावपश्यन्न कलावती सा।
तस्या वयस्या सुपुरः सरस्या
रथ्यासु पथ्यासु जलावलीषु ॥ ३५ ॥

तथाहि। याश्च ऋतमेव विन्दन्ति न कृतम्। तारुण्यभाजां च यासामारुण्यमेवादृश्यत वाचि न कारुण्यम्। हसंगतैःसङ्क्रमयन्त्योऽपि न कन हसंगता अभवन्। यासां च भित्तिषु मणिभित्त एव दृश्यन्ते न माणकभित्तानि। यासु चाश्मलेखिता विपणयो न कश्मलाखिता। याश्च नरप्रचारसम्बाधा न नरकप्रचारसम्बाधाः। याश्चापटयोगैराढ्यन्ते न कपटयोगैः। परागैः पाण्डुयुतयो न पलाण्डुयुतयः। याश्च शैवाचरणा न शैवालवरणाः। यासु च विरतामाव दृश्यते न विरलत इति। अचिन्तयच्च चेतसि धनदालङ्कान्तां परित्यज्यालङ्काधिपतामेव बहुमेने मन्येऽत्राप्येव एव कारणं सुष्ठूकृतं भवेदिति। अथानन्तरं ताभिः सह पुरः प्रस्थिता मध्ये [illegible] सार्थपणनकृपणकोविदवागारम्भसदृम्भ[illegible] लसद्गुम्फ [illegible] रणप्रवणस्थूलाक्षाभिरुक्षाभिरुपकक्षाभिस्त[illegible] कलभावृक्षाभिः सपक्षाभिरिव [illegible]

अभक्षाभिरपि सर्वभक्षाभिः कटीकृतपटीभिर्नि-
कटीभूतभटाभिः शकटाभिव्याहतिभिरुक्षितप्रदेश
कथंचन लब्धप्रवेशं वेशन्तवारिविहाररमणीय
दुरतिक्रमणीयमधिश्रयणीय शृङ्गाटकमाटीकत ।

उचितचितमणीनां ग्रामणीनां तरीय
क्रयणकृतविकार श्रीनिकारं ददानम् ।
धनिकजनकथाभिः सत्पथाभिन्नभाभि-
र्मुखरितबहुमार्गं राजमार्गं ददर्श ॥३६॥

पुरोगताऽपश्यदखर्वगर्व-
स्पृगर्ववृन्दं मणिमन्दुरासु ।
करीन्द्रसन्दोहमथो गिरीश-
भ्रमाङ्कुरोत्थापककन्दरासु ॥ ३७ ॥

कथमपि सत्पथमथ सा
ताभिः सिहनाऽभिवाह्य साश्चर्या ।
राजगृहाभ्यासगता
बभूव चित्रार्पितेव हरिणाक्षी ॥ ३८ ॥

न श्रीरलकाधीशे
दृष्टा सा नापि नाकिनां पत्यौ ।
कल्यौपम्ये विनुयां
कमलाकान्तेऽप्यदृष्टचरिकैव ॥ ३९ ॥

अवरोधप्रवेशेऽपि नावरोधमवाप सा ।
स्वयं सती सतीर्थ्याभिः पद्मायाः सङ्गता पुनः ॥४०॥

पुरः प्रविश्यापश्यत्सा पूर्वपुण्यपणायिताम् ।
पद्मावत्याः पितुः प्राणप्रेयसीं प्रमदोत्तमाम् ॥४१॥

चिन्तयाचक्र आचीर्णचिरचारुचरित्रया ।
व्यलोकि धन्यया तन्वा मया सत्कृतिरत्र या ॥४२॥

गुरुं सुमनसां शिरः कचकलाचितं बिभ्रता
स्वतल्यमभिलाषुके किल विधौ तमोभूमिकम् ।
कुचावतिशुचाऽन्वितौ कमलकोरकोद्दुलितौ
निबद्धनर्यावित्ततः कलितकञ्चुका भाव्यते ॥ ४३ ॥

कांचिमृगयते गतेरविरतं निरलोकीदृशां
दूर तदुदरं दधत्कुचनगीन्द्रपोषं रसे ।
सरोमलतिक सरोमहदगाधमाधत्त किं
निधियु यजनावलीनयनमीनविश्रान्तये ४४

नितम्बजघने घने अनघनेत्रनेत्राध्वर-
क्रियोपचयभाजने जनयतो जने सत्क्रियाम् ।
यदूरुयुगलीलया कदलिकागलद्दर्पिका
चिर दकलीकृता जगति जाड्यमालम्बिता ॥ ४५ ॥

पदे शुभपदे नदेविदर्ता प्रमोदे मुदे
विलोकयतुरापदे जलभुवामरो सम्पदे ।
तथामदुपदेशदे मितगरुत्मतां श्रीमतां
मतान्तरकथान्तरे विततुतां नुतां स्त्रीं नृतिः ॥४६॥

समं गमं याभिरागन्तकेताः समदुलपाणयः ।
उपश्लोकयोचुरग्यांणी देवि पश्य प्रियातिथिम् ॥४७॥

का चेय कुत आयाता किकार्या किं चिकीर्षति ।
किमाख्या किंकुला चाऽस्मीनाम्याभिर्निरणायि तत् ॥४८

दिव्यतां भावयन्तीभिर्नानाहेतुनिदर्शनैः ।
निर्बन्धोऽस्या वचोजालैर्भोजितानितं पाहुतै ॥४९॥

उचितातिथिसत्कारप्रक्रियानन्तरं पुनः ।
भवन्त्यैवागतैकस्या महापुरुषदूतिका ॥ ५० ॥

सा राजराजमहिषी श्रुत्वा तामर्थमानितम् ।
सप्रेमपरिरम्भ पुनस्तामपाङ्गमैक्षत तामनु ॥ ५१ ॥

अत्रागताश्च सुदती भवतीभिः
प्रापिता मदुपकण्ठमसौ या ।
इह मनःप्रियपदातिथिभूता
श्रेयसे किल भविष्यति रात. ५२

तां वाचोयत्नमुदाहरेति, बाढमनुगृह्यतास्मि कि यत्
स्या यत्स्वयमास्याभिरित्रि ...... ना मर्मार्थ
निदर्शनाकमाकारेतो निश्चायानि मेता ... मम नोऽत्र
चप्रचारि, तद्रूण भगवतः, कस्यामि सुतः, कस्मा-

श्च पुण्यतमात्प्रदेशादप्रयाससमायासिकेन चास्माकं सुकृतवैभवेन फलित गलित द्रुमैरेभिः सुमनोभिः समर्चिताः सुमनसः सुमनोभिः सबन्धमुत्पाद्यानृण्य भजन्ते। तदेहि सम्भावयासनादिसपर्य्यानुग्रहेण जातपरिचयमनुं जनं वद विश्रब्धं वत्स्यसि कस्याद्दुर्शायां कृतोऽत्र प्रदेशः स्वामिनीव विहर स्वापहरपथि प्रतातं व्यसनव्यूहम्। मात्रा निर्लौकिकेन तस्या व्याहारेण व्यवहारेण च चित्रायितान्तचित्ता सुचिरं विचार्य प्राचा वद् वि दिष्ट्या वर्द्धसे, देवाधिदेवस्य भगवता रमारमणस्य परिचारिकाऽस्मि भवतीमनुयाचकाधुरगस्य तस्य वाचिकमादाय प्राप्ता पृथिवीपतिपत्नीपादमूलं स्थूलं हि यस्य रूपं त्रयोलोकालोकाश्च स भगवान् कारणवशादधिधरणिरममाणो मध्येऽरण्यानि यदृच्छयोपगतां भवत्याः दुहितरमवलोकयाञ्चकार। ततः प्रभृति सर्वत्राप्रतिहतविक्रमेण पञ्चशरेण तां दशामानीयत स्वामी या चाकथनीया मादृशीभिरनन्तरः स्फुट एवार्थस्तदत्रकरणीये भवती प्रमाणमितिकथां त्वोपरतिमाततान। अत्रान्तरे दिव्याकृतिविलोकनाय प्रधाविताना मवरोधपुरन्ध्रीणां समवाये समागतां मञ्जुघोषां समाहूयाब्रवीद्राजसुन्दरी कश्चिदवधारितो भवत्याऽस्या भाषितसारस्त्वमसि किल पद्मावत्या अपर हृदयमयि रोचते चेत्तुभ्यं तदेषोऽर्थः प्रकाशमायातु नृपसदस्मीतिपर्यनुयुक्ता मञ्जुघोषावादीद् देवि परवान् पितृभ्यां साधारणोऽपि कन्यकाजनः किं पुनः सुकृतसद्माच्छद्मा पद्मावती तदत्र सर्वथैष्टे देवी। अथ यावद्विचारयति राजाधिराजमहिषी तावत्प्रधाविता प्रतिहारी भूमितलन्यस्तमस्तका विज्ञापयांबभूव, देवि, भव सावधाना, भूपतिः पञ्चषैः सखिभिरन्वित इत एवाभिवर्तत इति श्रुत्वा सहसोत्सारितसकलपरिजनाद्वित्राभिः सखीभिः समभ्यपद्यतातिथेयीं सविधाम्।

अनवसरे नरपालः किमागमायेऽद्यतो विचारयत। अथवाऽऽगत एवाय विनैव यत्नं भविष्यति स्पष्टम्॥५३

अथ नरपतिरायात्स्मेरवक्त्रारविन्दः

कनककलितवेत्रप्राहसंशब्द्यमानः।

क नु कृतसुकृतानां राजिराजीवन मे

विहरति हारणाक्षीति ब्रुवन् द्वारभूमौ॥ ५४॥

प्रत्युद्गम्य प्राप्ता प्रणम्य पृथ्वीप्रभुं सुपुण्यपाणिः।

पाद्यादिभिरुपचारैरपूजयद्दैवत परं हि पतिः॥५५॥

नरपतिरपि प्राणप्रिये कृतं बहिरुपचारकल्पनयाऽनया व्यनक्त्येषा बहिर्भावमेव परिचरणीयस्य नन्वस्म्यायत्तीकृता भवत्या, तत्सत्यामन्तरङ्गसंविधानसम्पत्तावनर्थक आयास आश्रितः सहजसुन्दरापाङ्गभङ्गा एव कुसुमदामानि स्मितमेव सुधारसवृष्टिः परमः प्रेमैवापहारः सतीचारित्र्यमेव सर्वगुणप्यायेतिगृणन्सुन्दरीकटाक्षच्छटाप्रक्षालित वृत्तिः प्रियापाणिपद्मप्रापित पीठमध्यातिष्ठत्। परिजनोपनीतेषु चासनेषु राज्ञः परममित्राणि समुपवेश्य महीपतिप्रार्थनया महीयस्या कोणैकदेशगतमासनमलंचकार कुलकामिनी।

कोणैकदेशं भजते सर्वदेशप्रभुप्रिया।

किमेतदिति पप्रच्छ दयितालां महीपतिः॥५६॥

ताश्च मिलत्पाणिपल्लवपुटेव दनपद्मारागं वचांसि पाययन्त्यः प्रावोचन्त्यः, प्रभो परिमितो हि श्रीमतो हृदयप्रदेशे चिरतरवासमुपेयुषी किलास्मत्सखी तमेवाभ्यासमनुरुन्धाना युक्तमनुष्ठितवती स्त्रियोऽप्यबला नाकारभेदं भावयन्ति। राजा तु तासामुक्तिभङ्ग्याऽऽल्हादितान्तःकरणो युक्तं बोऽ-

स्मस्प्रियापरिजनोचितमाभाषणमित्यभिधाय पत्नीमभिमुखीभूय सम्बोधयांचक्रे। अयि प्राणेश्वरि धर्मासनमाध्यारूढेन मया परिजनवदनादश्रावि वाग्यदत्र भवत्या अन्तिकमुपगताऽस्त का चिद्दिव्याङ्गना प्रतिज्ञातं च तया वत्सां पद्मावतीं प्रतिप्रकृति प्रत्यानेतुमिति तामकारणवत्सलां परमुपकारपरां भागधेयेनेव प्रदर्शितपदां प्रतिकृतनोकयोः प्रतीकाराय स्वयमुद्यतां वन्दनीयचरितां सभाजयितु मन सुहृद्भिः समागतोऽस्मि, यो हि बालायाः पद्माशाः प्रियमाचरेत् स्वास्थ्यायोद्यतोभवेत्स मे प्राणस्योऽपि प्रष्ठतमः किं वितीर्य तस्मा आनृण्य लभेयेति सुचिरं विचारयन्नपि नाप्नोमि निश्चय नहि तस्या गरीयसो वस्तु ऋते तामेव त्रिभुवनैकरमणीयाकृति कन्यकाम् ।

इत्थं दुहितृवात्सल्यादाभाष्य नृपपुङ्गवः ।
पुनर्बभाषे भोः सुभ्रूर्वत्सावत्साऽपि मे प्रिया ॥५७॥

दर्शयस्व निधिं धीरेऽनवधिं प्रेमणेवधिम् ।
कृतमेव भवेदत्र साम्प्रतं तद्विदग्धया ॥ ५८ ॥

प्राप्य पुरुषकारेण केवलेन न किञ्चन ।
नियत्या त्वेकयापीह भूयते भूरिभूतये ॥ ५९ ॥

निपीयेत्थ नृपवचो धरणीधीरधारिणी ।
भाविवत्सा वियोगाधिव्याकुला मुकुलायिता ॥६०॥

उवाच च प्रभो सेयं मम प्राघूर्णिकाङ्गना ।
चिकित्सिका कन्यकाया या चिकाऽधोनवाचिका ६१

इत्याभाष्याम्बुजाक्षी तामायातां वनितां पतिम् ।
दर्शयास कालिन्दीकेलिकलावितालकाम् ॥ ६२ ॥

आचख्यौ च हृषीकेशहृदय यदयन्त्रितम् ।
तदयं कामिकोदन्तः कन्यकामनुचुम्बति ॥ ६३ ॥

साऽपि राजीवनयना नयनाटकपण्डिता ।
खण्डिता स्मरनाराचैरितिमत्याऽनुमोयते ॥ ६४ ॥

न विस्मयोऽत्र राजेन्द्र कुमार्याः शैशवोत्सवम् ।
वयः प्राप्ता मते जेन क्रियन्ते कलुषाः किम ॥ ६५ ॥

पुण्यश्लोकाभिसम्ब भाक्तां कथां च निपीय सः ।
चक्षुःश्रोत्रेण हृष्टात्मा सुन्मुखमुदैक्षत ॥ ६६ ॥

तेऽपि विजयतां महाराजो यस्येन्द्रादयो दैवादर्शनाय स्पृहयन्ते, विधिहरावपि प्रमादमभ्यर्थयतः सनकादयो य मृगयन्ते वाङ्मनसे अपि य न यन्ते... यन्तः श्रातागरण्य-स्पृशो यस्य मा मा ... मानयन् मानुष... भूतां ... नामु...तो ... पर ... पुत्रा ... राज्याभिता, यथा ना...न...याज्ञा ... स ... म वान् तथैव पद्मावती, ते यम प मानुरागतसम्बन्धमनुभूत...तां ... सौदार्यशीलसम्पत्त्या चाऽयोत सर्वाः सुपर्वसुन्दरीरप्सरोद्भिरभ्यर्थनायोऽय रोगः स्वयमागतो नात्र विनोद्धार कामनान्या प्रतिपत्तिरिति मप्रणयमाजल्पत् । समहीपतिः सान्त्वसंमते मानिनीमतं समेत्य पुः कामिनीमामन्त्र्य पृच्छेमां बकुलमालां क नु वसन्तीदानीं प्रकटितावतारो रमारमणो भगवांस्तस्यामाधारपमाकन्ददशावतारकलत्र कमलानिलया कमला कन्याम सञ्चिहिता, कथञ्च साऽस्पत्ना सता सपत्नीसंसाम्य सम्भावयेत्कथ वा तादृशी कन्यकाऽस्माभिविज्ञानाः सपत्नीपदाभिमतोऽन्या... राज्यस्त्रीणि ... राजे ... काम यनव्या, कथं वा मन्यते ... तां ... क... नैपुणा वा वत्सा पद्मावत्यां ...

इत्थं वदन्तं भुवनाधिनाथ
जगाद राजीं विनयेन भूयः ।
सवेङ्कटाद्रीविहराश्रदानां
लीलामिमा भो उररीचकार ॥ ६७ ॥

न चन्द्रमश्चन्द्रिकायोर्वियोगं
प्रत्येति विद्वानिह कश्चनापि ।
इतीन्द्राकारणानुभावा-
त्प्रकाशमायास्यति कार्यकाले ॥६८॥

परःसहस्राणि वदन्ति रामा
यदुप्रवीरस्य न तासु भेदः ।
मिथो न तासामपि कल्मषाणि
प्रकाशतेऽसौ महिमा विभूम्नः ॥६६॥

सुता महीपाल धृतावतारा
भवेन्न किं त्वत्कृतनामसारा ।
हारायिता योरसि केशवस्य-
क्षोणीपतेऽत्रास्तु न तेन्तराधिः ॥७०॥

इति कथयति यावद्राजराजप्रिया सा
मनुमनुमनुते स्मद्योसदामीश एतम् ।
शुचिरुचिरपदार्थं व्यञ्जन्नेतनासी-
द्दिवस परिणतिश्रीबोधकस्तूर्यघोषः ॥७१॥

शङ्खा भृशं खोद्गतशब्द एकै-
रापूर्य ताद्धाऽध्वनि दुन्दुभीनाम् ।
ध्वनिप्रवेकैः समपूरि दिव्यो
भुवोघ आसीत्स्वनसंहतीनाम् ॥ ७२ ॥

अथ भगवांस्त्रिलोकीसकलकर्मसाक्षिकस्सहस्रकिरणोऽमुमर्थंक्षीरसागरसुतायै निवेदयितुमिव पयोनिधिं प्रवेष्टुमात्मनो रश्मिव्यूहमवनीतलतत सङ्कुचितं कर्तुमचीकमत । दिशोऽपि प्रकृतेऽर्थेऽनुरागमावेदयन्त्य इव रागं बिभरांबभूवुः । पतत्रिणोऽपि स्वस्वाभिमतुरभिमतप्राप्तिप्रमोदाप्यायिता इवावासेषु स्वास्थ्यायोद्यममाविर्भावयांबभूवुः । पङ्कजकुमुदयोर्निमीलनोन्मीलनाभ्यामुद्योजयन्ति सरांसि लसदधरप्रबलायावलाया युगपदेकादे वन्धुजनविरहबन्धुरस्वचिराभिमतप्रियनमसमागमसुखसम्भावनातिप्रमुदितवृत्तिकत्वे व्यञ्जयन्ति मध्यात्वं व्याप्तयांचक्रुः ।

अलं कामुकस्येयताऽऽयासितेने-
त्यनग्निर्बभूवोपलः सूर्यकान्तः ।
अखिलव्रजः कोऽपि पाषाणजाते
रुदस्त्रीभविष्णुः कृपापारवश्यात् ॥ ७३ ॥

ग्राठणां तादृगवस्थितिं विरहितां मित्रेण दृष्ट्वा धरां कोके कूजति किंकिलाति कलिल दीनांगदीनां गतिम् ।
द्रागासाद्य दरीमुखात्स्वमतनोदन्धं तमोरंहसा
त्रुट्यद्धं न यथा च न प्रभवतो लोकस्य ते नहुषी ॥७४॥

सन्ध्योपमात्दुर्गमनक्षणेसौ
बहिर्दरीद्वारत आपरन्तुम् ।
किमन्धकारो दयितस्तनूजो
न तामसीं धीरसुवं व्यतानीत् ॥ ७५ ॥

क्षणेन जगतीतलं तिमिरलास्यलीलालुल-
द्विलोकितमभूत्तथा ललितलोकलावण्यभूः ।
यथामृगमदप्रभाभरितभूतिभावाऽभवद्
भवेदभवनं न कः पुरुमियां बुभूषन्नपि ॥ ७६ ॥

सहस्रपात्तापमवाप पूर्वं
विश्वं पराभूतिमथान्धकारात् ।
किं वर्ण्यते तद्व्यसनाय भूया-
नार्द्रे क्षते क्षाररसाभिषेकः ॥ ७७ ॥

अथमुरहरनेत्रं पद्मिनी प्राणमित्र
शिवशिरसि चरित्रं यस्य जागर्ति चित्रम् ।
शिशिरकृतिसवित्रं ध्वान्तमालालवित्रं
मुनिनयनपवित्रं शोकवल्लीखनित्रम् ॥ ७८ ॥

किमपि वियति तेजः प्रादुरासीच्चकोरी-
चटुलरसनवृत्तेः प्रार्थनीयं चिराय ।
दशशतनयनाशाकामुकं किङ्करं यत्-
त्रिदशपतिगुरुस्त्रीहावभावावलीनाम् ॥ ७६ ॥

## शारदार्चा

उदारवरवारिदा दरविदारणे द्वारदा ।
दरारिकरसारदा दुरितदारवैशारदा ॥
सदादरदरीवरा दरतु दारुणां वो दरम् ।
सदादरविशारदा दिशतु शंवरं शारदा ॥१॥

सुबोधवधबाधदा विविधबोध्यवेद्या भिदा ।
विरोधबुधबाधदा विधिविधानसन्धानदा ॥
प्रबोधविधबोधदा विदितवेद्यबोधेन्दुदा ।
सदादरविशारदा दिशतु शंवरं शारदा ॥२॥

सुधाविधसुबोधदा सुविधबोधबुद्धीन्दुदा ।
सुधाबुधवधूगविधुतबाधबाधाम्बुदा ॥
दधातु विबुधाधिपां विदितवेद्यसम्पत्तिदा ।
सदादरविशारदा दिशतु शंवरं शारदा ॥३॥

अमन्दमुदमन्दिरा मुदसुनन्दिबोधेन्दिरा ।
सुवन्द्यमुनिचन्दिरा विमदमोदसन्मन्दिरा ॥
अरन्दरदमन्दिरं दरतु मन्दमन्दं मदम् ।
सदादरविसारदा दिशतु शंवरं शारदा ॥४॥

अपारपुरपारदा परिपिपर्तु वो चीरदा :
चराचरविचारदा चरितचारुताचारदा ॥
उदारपरिवारदा दरविदारिसम्भारदा ।
सदादरविशारदा दिशतु शंवरं शारदा ॥५॥

वियन्नलिननीलिमा मलिनचिह्नसन्नीलिमा ।
निरन्वयसमन्वयं नहि निरन्वयेऽयोजनात् ।
सदा दहतु शारदा मलिनतामल बोधदा ।
सदादरविशारदा दिशतु शंवरं शारदा ॥६॥

मनोऽमननमानदा मननमौनसन्मानदा ।
नयानुनयदा मुदा विनयिनीयमाना हृदा ॥
न नूनमनुनायनं मनसि शारदा नो यदा ।
सदादरविशारदा दिशतु शंवरं शारदा ॥७॥

सदा सदसि देशदा विशदवेदविद्यामुदा ।
मुदामदवशंवदा शमदमोपरामादिदा ॥
ददातु वरदा मुदा वरवरं सदा शारदा ।
सदादरविशारदा दिशतु शंवरं शारदा ॥८॥

श्रीहलधरशास्त्री

---

## कैकय्या जन्मस्थानम्

वयं स्वप्राचीनैतिहासिकस्थानानां कियदनभिज्ञा इति नात्र किञ्चिद् वक्तव्यमवशिष्यते । सर्वजनादृतरामायणमहाभारतादि ऐतिहासिकग्रन्थेषु महाभाष्यादिव्याकरणग्रन्थेषु वा यानि ग्रामनगरजनपदनामानि श्रूयन्ते, तेषामधुना कैर्नामभिः परिचयो भवति, क्व च तेषां साम्प्रतं स्थितिरस्तीत्यत्र नाल्पमपि परिस्फुटमस्माकम् । केचिद् इतिहासाध्ययनरता अपि पञ्चापप्रदेशमेव पाञ्चालदेशं परिकल्पयन्ति । यत्र पाञ्चालदेशे द्रौपदी जन्माधिजगाम । नात्र प्रमाणान्युद्धर्तुमिच्छामि । यतोऽयमनवसरस्तस्य । अत्र भरतस्य मातुः कैकेय्या जन्मस्थानभूतस्य केकयदेशस्य कथा सङ्कीर्त्यते ।

इयमयोध्याधिपस्य महाराजदशरथस्य प्रणयिनी भरतस्य च जननीति प्रसिद्धमेव । अस्या अनुरोधादेव भूपतिर्वनवासाय राममाज्ञापयामास । सेयं कैकेयी केकयदेशाधिपस्य तनया आसीत् ।

रामायणे केकयदेश इत्थं वर्णितो दृश्यते ।

यदा हि महाराजदशरथो वनवासाय राममाज्ञाप्य तद्वियोगमसहमानः स्वर्गवासमेव ज्यायांसममन्यत, तदा वशिष्ठप्रमुखैर्मन्त्रिभिर्भरतानयनाय दूतः केकयदेशं प्रेषितोऽभवत् । यतस्तदानीं भरतो मातामहगृह एवासीत् ।

दूता अयोध्यातः प्रस्थाय, द्यामनदीमनुसृत्य, कतिपयाश्च नदींश्च तीर्त्वा गिरिव्रजं केकयदेशं सम्प्राप्नुवन् ।

तथा च

विष्णोः पदं प्रेक्षमाणा विपाशाञ्चापि शाल्मलीम् ।
गिरिव्रजं पुरं शीघ्रमासेदुरभ्रमा ।

( रा० अ० स० ६८ )

भरतोऽप्ययोध्याभिमुखं प्रस्थितः शतद्रु समतरत् ।

शतद्रुमतरच्छ्रीमान् नदीमिक्ष्वाकुनन्दनः ।

( स० ७१२ )

अथ निष्कर्षः—

(१) केकयदेश एव कैकेय्या जन्मस्थानमभूत् ।

(२) अयोध्यातः केकयदेशं गच्छद्भिरवश्य शतद्रु विपाशे नद्यौ सन्तरणीये भवतः ।

(३) विपाशाया अग्रिमपथि बह्व्यो नद्यो नदाश्चापतन्ति ।

(४) केकयदेशः पर्वतीयप्रदेशेऽतिष्ठत्, एतदर्थबोधनायैव मूले गिरिव्रजशब्दः प्रयुक्तो दृश्यते ।

एतान् गुणानभिसमीक्ष्य वर्तमानकाङ्गडा प्रदेश एव प्रत्नः केकयदेश इत्यस्माभिर्निश्चेतुं शक्यते । यतः सन्ति पूर्वोक्तानि सकलान्येव लक्षणान्यत्र । तथाहि—

(१) केकयकाङ्गडाशब्दयोरस्ति वर्णकृत साम्यम् ।

(२) अयोध्यातः काङ्गडादेशं गच्छतो जनस्यावश्य शतद्रुविपाशे समुल्लङ्घनीये भवतः ।

(३) विपाशातोऽग्रे बहवो नदा नद्यश्च वर्णिता दृश्यन्त एव ।

(४) काङ्गडाप्रदेशः पर्वतीयक्षेत्रमित्यत्र नास्ति कोऽपि सन्देहः ।

अतश्च साम्प्रतमेतदसंशयं वक्तुं पार्यते यत् काङ्गडाप्रदेश एव केकयदेश इति । इदं हि गौरव पञ्चाम्बुदेशीयाना, यत्तेषां जन्मभूमिर्भरतलक्ष्मणस्य पुरुषरत्नस्य समुद्भूतौ कारणमभूदिति । भरते च ते सर्व एव महापुरुषोचिता गुणा विद्यन्ते स्म । जना एकपणार्थमपीतरेषां प्राणानपि हर्तुं समुद्यता भवन्ति, विविधैरुपायैरपरान् वञ्चयितुं प्रपञ्चस्य दम्भस्य वा जालमारचयन्ति, सहोदरस्यापि रक्तपातमभिवाञ्छन्ति । एतत्सर्वं धनार्थमेव क्रियते । विचित्रस्य संसारस्य गतिरपि विचित्रैव । भरत पश्यत, यस्य त्यागमाहात्म्यमद्यापि सादर गीयते । महात्मना भरतेन हि स्वयमुपनतं निखिलमपि कोशलराज्याधिपत्य भ्रातुः कृते समुत्सृष्टम् । राज्येन सहैव भोगसुखान्यपि परित्यक्तानि तेन महात्मना । भरतेनोक्तम्, नैतत्साधु यन्मम पूज्यो भ्राता, प्रियो लक्ष्मण आर्या च सीता वने नवोदन्तो दुःख सहन्ताम्, अहञ्चात्र राज्यसुखमनुभवेयम् । धिङ् माम्, धिक् च मे जीवितम् । यतो मत्कृत एव तेषां दुःखोपनिपात इति । यावत् तेषां वने निवासस्तावद् ममापि मुनिचर्या भविष्यति । अत एवायोध्यातोऽनतिदूरवर्तिनि नन्दिग्रामे मुनिचर्या चरन् रामागमनं प्रतीक्षमाणस्तिष्ठति स्म । अपि नाम दृष्टस्तथाविधः कश्चिद् यो भरतेनोपमीयेत् ?

मैत्रेयः

---

## बाह्योन्नत्या न सुखम्

[ प० बालचन्द्रशास्त्री विद्यावाचस्पतिः ]

स्थूलोन्नतिं स्थूलधियो विधातु-
मनल्पयत्नेन सदा यतन्ते ।
यस्याः प्रभावेण विनाशमापु-
र्हासख्यजीवा रणरङ्गभूमौ ॥ १ ॥
विज्ञानशक्तेरिह बुद्धिमन्तः
समुन्नतिं बाष्परथादिकार्यैः ।

खड्गाग्रविच्छेदितमुण्डमाला
बालप्रदानेन च लब्धुमिच्छेत् ॥ १७ ॥
अनेन भावेन निबद्धचित्ता
सद्वित्तमुत्सृज्य च शांति कर्म ।
कर्षन्ति भूमिं तु कबन्धभागैः
सिञ्चन्ति रक्तेन भजन्ति मृत्युम् ॥ १८ ॥
अतोबुधाः स्त्रीषु विधत्त शिक्षां
यथा च ता नैव विदेशजाः स्युः ।
किन्तु स्वमार्गस्य यशोधरस्य-
गाथायकाः स्युर्यु समाजमध्ये ॥ १९ ॥
याभिस्तु दुःख बहुवृद्धिभिश्च
तास्त्याजनीया गुरुदोषबोधैः ।
परन्तु दुःखप्रदमेकमेव
स्वातन्त्र्यमेतत्तु सदैव वर्ज्यम् ॥ २० ॥
जगदीशः सदा प्रार्थ्यः शान्त्यर्थं भूमिमण्डले ।
यः स्वराज्य स्वभक्तेभ्यो दापयिष्यत्यसंशयम् ॥२१॥

---

## श्रीनवरत्नमालिका

कमलासनवल्लभादिसेव्यां
कमलां कल्पसरोजतुल्यनेत्राम् ।
कलये विमलामपाङ्गपातै-
रमलान्भक्तजनान्सदा पुनन्तीम् ॥ १ ॥
सुकृतं न कृतं मयाद्य किञ्चित्-
सुरवन्द्ये ! परशासनैकनन्द्ये ।
परिपूर्णकटाक्षवीक्षणानां
कुरु पात्रं दयया जगज्जनित्रि ॥ २ ॥
कलिकल्मषतूलजालवात्यां
कमनीयां कलशाब्धिकल्पवल्लीम् ।
कलये सततं हृदम्बुजे त्वां
कमलानल्पविभूषणा सुखी स्याम् ॥
सतत कमले ! भवाब्धिमग्नं
शरणं त्वामनिशं प्रपन्नमेनम् ।
करुणारसपूर्णया सुदृष्ट्या
परिपाहि प्रणमन्तमद्य वीक्ष्यम् ॥ ४ ॥
न हि तृप्तिकरी मदीयवृत्ति-
र्न च भक्तिस्तव पादपद्मयोः ।
न कदापि मया वितीर्णमार्ये !
तृणमण्यपि जनेषु किंकरोमि ॥ ५
कृपया परमे ! मुकुन्दकान्ते !
प्रणतार्तं हर पद्मजादिपुण्ये ।
कथमन्यमुपाश्रयामि मात-
स्तव पादौ प्रविहाय मूढचेताः ॥ ६
विभवैरभवाद्विरिञ्चिकान्ता
विविधैस्त्वामनघां सुपूजयन्ती ।
करपल्लववल्लकीविनोदै-
स्सततं त्वद्गुणगुम्भहृष्टचित्ता ॥
कुसुमैरनिशं सुरद्रुमाणां
विबुधेन्द्रस्तव पूजनं तनोति ।
सकलास्त्रिदिवे पुलोमजाद्या-
स्सततं त्वत्प्रियमाचरन्ति काले ॥
कथितं मुनिभिस्सनातनेय-
द्धिमन कीर्तिकरं सुखप्रद च ।
तदिदं निरवद्यपद्यबद्धं
रसिकास्सन्तु निरीक्ष्य सानुरागाः

वि० मि० वेङ्कटरा

---

रामजीलालशर्मणः प्रबन्धेन प्रयागस्थ "हिन्दी प्रेसे" मुद्रिता,
चन्द्रशेखरेण च दारागञ्ज—प्रयागतः प्रकाशिता ।